इति सेना । 'वोपसर्जनस्य' (पा.सू.६.३.८२) इति सभावः । सर्वा सरणशीला सेना यस्येति बहुर्व्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । प्रत्ययलक्षणेनाप्ययं स्वर इष्यते' (का.६.१.१९१) इति वचनात् प्रत्ययलक्षणेन 'सर्वस्य सुपि' (पा.सू.६.१.१९१) इति सर्वशब्द आद्युदात्तः । **इषुधीन्** । इषव एषु धीयन्ते इति इषुधयः । 'कर्मण्यधिकरणे च' (पा.सू.३.३.९३) इति किप्रत्ययः । संहितायां 'दीर्घादटि इत्यादिना नकारस्य रुत्वम् । 'अत्रानुनासिकः पूर्वस्य तु वा' (पा.सू. ८.३.२) इति पूर्वस्वरोऽनुनासिकः । **असक्त** । 'षच समवाये' । 'बहुलं छन्दसि' इति शपो लुक् । **अर्यः** । 'अर्यः स्वामिवैश्ययोः' (पा.सू.३.१.१०३) इति यत्प्रत्ययान्तो निपातितः । 'अर्यस्य स्वाम्याख्या चेत्'(फि.सू-१८)इत्यन्तोदात्तत्वम् । **अजति** । 'अज गतिक्षेपणयोः' । **वष्टि** । 'वश कान्तौ' । अदादित्वात् शपो लुक् । व्रश्चादिषत्वे ष्टुत्वम् । **चोष्कूयमाणः** । 'स्कुञ् आप्रवणे' । 'धातोरेकाचः' इति यङ् । अकृत्सार्वधातुकयोर्दीर्घः । द्विवचने 'शपूर्वाः खयः' (पा.सू-७.४.६१) इति ककारः शिष्यते सकारो लुप्यते । 'कुहोश्चुः' (पा.सू-७.४.६२) इति चुत्वे 'गुणो यङ्लुकोः' (पा.सू-७.४.८२) इति गुणः । सुषामादित्वात् षत्वम् । यडन्तात् लटः शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । भूः । 'गातिस्था' (पा.सू-२.४.७७) इति सिचो लुक् ।। ३ ।।

**सिद्धाञ्जनम्**– तृतीयामृचमाह । **सर्वसेनः** सर्वा सेना यस्य स सम्पूर्णसैन्ययुक्तः सेनापतिः **इषुधीन्** इषवो बाणा एषु धीयन्ते, तान् निषङ्गान् **न्यषक्त** पृष्ठभागे संयोजितवान् । वीरश्रेष्ठ इन्द्रो युद्धाय सन्नद्धो भवतीत्युक्तम् । तथा सन्नाहे सत्येव, सः अर्यः स्वामी गाः पणिभिरपहृतं गोरूपं धनं **समजति** सम्यक् प्रापयति तं यजमानं उपासकं ऋषिं वा । आवश्यकोऽयमध्याहारः उत्तरत्र यस्येति श्रवणात् । **यस्य** भक्तस्य गोधनप्राप्तिं **वष्टि** कामयते तं गाः समजति इति सम्बन्धयितव्यः । अथ इन्द्रं सम्बोधयन्नाह । **अस्मदधि** अस्मासु प्रवृद्ध प्रकर्षेण वृद्धिं प्राप्त, हे इन्द्र, **भूरि** प्रभूतं **वामम्** वननीयं गोधनं **चोष्कूयमाणः** ददानः त्वं **पणिः** व्यवहारी वणिगित्यर्थः **मा भूः** सरल उदारो भवत्यर्थः । अस्मासु रहोयागरतेषु प्रवृद्धत्वात् तवोचित-मौदार्यम् । इषुधीन् संहितायां नकारस्य रुत्वम् । असक्त षच समवाये, छन्दसि शपो लुक् । अजति अज गतिक्षेपणयोः अत्र अन्तर्भावितण्यर्थः । **वष्टि** वश कान्तौ । **चोष्कूयमाणः** स्कुञ् आवरणे, अप्रतिष्कुत इत्यत्र व्याख्यातम् अत्र दानार्थः, यथा 'इन्द्र चोष्कूयसे वसु' (मं-६,सू-४,१-ऋ) ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिन्द्र ।**
**धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ।। ४ ।।**

वधीः । हि । दस्युम् । धनिनम् । घनेन । एकः । चरन् । उपऽशाकेभिः । इन्द्र ।
धनोः । अधि । विषुणक् । ते । वि आयन् । अयज्वानः । सनकाः । प्रऽईतिम् । ईयुः ।।

## ऋग्भाष्यम्

.........वज्रेण घनेन दस्युम् ।
ज्ञानेन वाऽज्ञानगणं धनाढ्यमयज्युं चाप्येक एवान्तरे च ।
चरंश्छाकैः शक्तिभिः सर्वदेवनरादिलोकं यमयञ्जघन्थ ।।

अधिकृत्य त्वां धनुमत्यन्तपुष्टं विष्वग्जग्मुरयजन्तः सदैव ।
मृतिं प्रापुर्दुःखबाहुल्यरूपां सनका लाभे योग्यरूपा अपि स्म ।।

**ऋग्भाष्यटीका– वधीर्हि** । वज्रेण । **हे इन्द्र** एक एव परापेक्षारहितः । **उप** समीपे । सर्वस्यान्तरे । चशब्दाद्बहिश्च । **शाकेभिः** शक्लृशक्तौ घञ् । शाकैः शक्तिभिश्चरन्सर्वदेवनरादिलोकं यमयन्निति यावत् । त्वं **दस्युं** कम् । **धनिनं** धनाढ्यं तन्मात्रेण कथं दस्युत्वम् । अयज्वान इति वक्ष्यमाणत्वादयज्युं चापि । सत्यपि धने त्वामयजमानमिति यावत् । **घनेन** मूर्तेनातिदृढेन वज्रेणेति शेषः । वधीरवधीर्जघन्थ । यद्वा **घनेन** ज्ञानेन दस्युमज्ञानगणमवधीः । तस्य धनित्वं धनाकाङ्क्षाजनकत्वम् । अस्यैव विवरणं यस्मात्ते पुरुषा धनोः पुष्ट्यर्थस्य धिनोतेरूपमेतत् । षष्ठी च द्वितीयार्थे । धनुमत्यन्तपुष्टं त्वामधि अधिकृत्य **अयज्वानः** सदैवायजन्तो विषुणक् विष्वक् । **व्यायन्** जग्मुः । देवतान्तरादिकं पूजयन्ति स्म । तस्मात्ते **प्रेतिमीयुर्मृतिं** प्रापुः । सर्वसाधारणं मरणं कथमस्य फलमित्यत उक्तं **दुःखेति** । कथम्भूताः सनकाः षणिर्लाभार्थः । ततो ण्वुल् मोक्षादिलाभे योग्यस्वरूपा अपि स्म मुक्तियोग्या अपि परमेश्वरं त्यक्त्वाऽन्यान्पूजयन्तो नरकाद्यनर्थं प्राप्नुवन्ति । किं पुनरयोग्या इति ।। ४ ।।

**मन्त्रार्थमञ्जरी–** हे इन्द्र । **एकः हि** एक एव, परापेक्षारहितः । **उपशाकेभिः** उप समीपे सर्वस्यान्तरे बहिश्च शाकेभिः 'शक्लृ शक्तौ' घञ्, शाकैः, शक्तिभिः । **चरन्** सर्वदेवनरादिलोकं

यमयन्निति यावत् । **त्वम् दस्युम्** । को वादस्युः ? **धनिनम्** धनाढ्यम् । तन्मात्रेण कथं दस्युता ? इति चेत् **'अयज्वानः'** इति वक्ष्यमाणमिह द्वितीयान्ततयाप्यन्वेति, सत्यपि धने त्वाम् अयज्वानम् इति यावत् । **घनेन** मूर्तेन, अतिदृढेन । वज्रेण इति शेषः । **वधीः** अवधीः, जघन्थ । यद्वा घनेन ज्ञानेन । दस्युम्, अज्ञानगणम् । वधीः, अवधीः । तस्य (दस्योः) धनित्वं धनाकाङ्क्षाजनकत्वम् । पूर्वार्धोक्तस्यैव विवरणम्– 'धनोः' इत्यादि । धनोः इति षष्ठी द्वितीयार्थे, 'धन पुष्टौ' धनुं पुष्टम्, अत्यन्तपुष्टिमन्तम् त्वाम् **अधि** अधिकृत्य । **अयज्वानः**, सदैवायजन्तः । **विषुणक्** विष्वक् । **वि आयन्** जग्मुः, देवतान्तरम् पूजयन्ति स्म । तस्मात् ते । **प्रेतिम् ईयुः** मृतिं दुःखबाहुल्यरूपां प्रापुः इत्यर्थः । कथं भूताः ? सनकाः, 'षण लाभे' ण्वुल्, मोक्षादिलाभे योग्यस्वरूपा अपि, मुक्तियोग्या अपीति यावत्, परमेश्वरं त्यक्त्वान्यान्पूजयन्तो नरकाद्यनर्थं प्राप्नुवन्ति, किं पुनर्योग्याः ? इति ।। ४ ।।

**स्कन्द–** ते वि आयन् इति तच्छब्दश्रुतेर्यच्छब्दोऽत्राध्याहार्यः । उत्तरार्धर्चस्थैश्च भूयोभिर्बहुवचनान्तैः सामानाधिकरण्यात् दस्युम् घनिनम् इति बहुवचनस्य स्थाने एकवचनम् । यान् वधीः हि हिशब्दः पदपूरणः । इतवानसि **दस्युम्** दस्यून् शत्रून् **धनिनं** धनवतः **घनेन** निष्ठुरेण वज्रेण एक एव चरन् पर्यटन् । न च केवलेन वज्रेण । किन्तर्हि । **उपशाकेभिः** शक्यन्ते यैर्दस्यवो हन्तुं ते शाकाः शक्तयः । उपशब्दस्तु धात्वर्थानुवादी । शक्तिभिश्च । हे इन्द्र ! अथवा अङ्गिरसोऽत्र उपशाका अभिप्रेताः । चरन्नित्येतदपेक्षा च सहयोगलक्षणा तृतीया । एक एवावधीः अङ्गिरोभिः सह पर्यटन्नित्यर्थः । अङ्गिरसो हि 'इन्द्रो विदुरङ्गिरसश्च धीराः' (ऋ.१०,१०८,१०) इति घोरत्वादिदर्शनात् इन्द्रात् किञ्चिन्न्यूनशक्तयः । अत एषां तत्सदृशशक्तित्वादिन्द्रापेक्ष उपशाकव्यपदेशः । इन्द्रस्य च सखायोऽङ्गिरसः । सखिभिश्च सह पर्यटनमप्युपपन्नम् । धनोः अधि धनुशब्दः अपठितोऽपि अन्तरिक्षनाम । धन्वशब्दस्य वा (तु.निघ.१,३) अन्तरिक्षनाम्नः छान्दसमिदं सम्प्रसारणं नकारलोपश्च । अन्तरिक्षस्योपरि विषुणक् विष्वक् इतश्चेतश्च **ते वि आयन्** विगता नष्टाः । नष्टा अपि सन्तः **अयज्वानः सनकाः** सनकशब्दस्य पुराणवचनस्येदं रूपम् । चिरन्तना अयष्टारः । जन्मन एव प्रभृति यागवर्जिता इत्यर्थः । **प्रेतिम्** प्रयाणं मरणम् **ईयुः** गताः । नष्टा अपि सन्तस्त्वया मारिता एवेत्यर्थः ।।

**वेङ्कटमाधव– वधीः हि** त्वं वज्रेण उपक्षपयितारं धनवन्तं वृत्रम् **एकः** एव **चरन्** सहायभूतैः

मरुद्भिः सह । तत्र तव धनुषः सकाशात् विष्वक् ते वृत्रसहायाः विविधं गताः । अयजमानाः प्रत्नाः ते मरणं गताः ।। ४ ।।

**मुद्गल–** हे **इन्द्रः घनिनम्** बहुधनोपेतम् **दस्युम्** चोरं वृत्रम् **धनेन** कठिनेन वज्रेण **वधीः हि** त्वं हतवान् खलु **उपशाकेभिः** समीपवर्तिभिः शक्तियुक्तैः मरुद्भिः सहितो भूत्वा एकः **चरन्** प्रहर्तुं स्वयमेक एव गच्छन् । यद्यपि मरुतः समीपे वर्तन्ते, तथापि ते प्रोत्साहयन्ते, न तु वृत्रं प्रहरन्ति । प्रहर्ता तु स्वयमेक एव । **धनोः अधि** इन्द्रसम्बन्धिनो धनुष उपरि विषुणक् विविधं नाशमुद्दिश्य **ते** वृत्रानुचराः **विः आयन्** विविधमागच्छन् । आगत्य च **अयज्वनः** यज्वविरोधिनः सन्तः **सनकाः** एतन्नामका वृत्रानुचराः **प्रेतिम् ईयुः** मरणं प्राप्ताः ।। ४ ।।

**सायण–** हे 'इन्द्र **धनिनं** बहुधनोपेतं **दस्युं** चोरं वृत्रं **धनेन** कठिनेन वज्रेण **वधीः हि** त्वं हतवान् खलु । धनित्वं वाजसनेयिनोऽपि स्पष्टमामनन्ति । वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन् इति । **उपशाकेभिः** समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितो भूत्वा **एकश्चरन्** । प्रहर्तुं स्वयमेक एव गच्छन् । यद्यपि मरुतः समीपे वर्तन्ते तथापि ते प्रोत्साहयन्त्येव न तु वृत्रं प्रहरन्ति । प्रहर्ता तु स्वयमेक एव । तथा च ब्राह्मणे समाम्नातं– 'मरुतो हैनं नाजहुः प्रहर भगवो वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्तः' (ऐ.ब्रा.३.२०) इति । धनोरधि इन्द्रसम्बन्धिनो धनुष उपरि **विषुणक्** विविधं नाशमुद्दिश्य यद्वा विष्वक् सर्वतः' ते वृत्रानुचराः व्यायन् विविधमागच्छन् । आगत्य च **अयज्वानः** यज्वविरोधिनः सन्तः **'सनकाः** एतन्नामका वृत्रानुचराः **प्रेतिमीयुः** मरणं प्राप्ताः । वधीः । 'हन हिंसागत्योः' । 'लुङि च' (पा.सू-२.४.४३) इति वधादेशः । स च अदन्तः । तस्य 'आतो लोपः' इति लोपे सति स्थानिवद्भावात् । 'अतो हलादेः' (पा.सू-७.२.७) इति वृद्ध्यभावः । 'इट ईटि' (पा.सू-८.२.२८) इति सिचो लोपः । आगमानुदात्तत्वे धात्वकारस्योदात्तत्वम् । धनेनं एकः । 'ईषा अक्षादिषु छन्दसि प्रकृतिभावमात्रं वक्तव्यम्' (पा.सू-६.१.१२७) इति संहितायां प्रकृतिभावः । अनुनासिकश्छान्दसः । उपशाकेभिः । उपशक्तं कुर्वन्तीति उपशाकाः । 'शक्लृ शक्तौ' । अस्मात् हेतुमण्ण्यन्तात् पचाद्यच् । थाथादिस्वरेणोत्तरपदान्तोदात्तत्वम् । विषुणक् । विषुपूर्वात् नशेः सम्पदादिलक्षणः क्विप् । 'नशेर्वा' (पा.सू.८.२.६३) इति कुत्वम् । यद्वा । विषुपूर्वस्य अश्नतेर्नुडागमः । सनका इत्यसुराणां नाम । 'षणु दाने' । सन्वन्ति ददतीति सना दातारः ।

पचाद्यच् । सनान् कायन्ति शब्दयन्तीति सनकाः । 'आतोऽनुपसर्गे कः' । 'आतो लोप इटि च' इति आकारलोपः । कृदुत्तरपदप्रकृतिस्वरत्वम् । **प्रेतिम्** । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । ईयुः । एतेः उसिपरत्वात् 'इणो यण्' इति यणादेशे 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् इकारस्य द्विवचनम् । 'दीर्घ इणः किति' (पा.सू.७.४.६९) इत्यभ्यासस्य दीर्घत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्**– चतुर्थीमृचमाह । हे इन्द्र त्वं **धनिनम्** बहुधनं **दस्युम्** चोरं वृत्रं **घनेन** दृढेन वज्रेण **वधीर्हि** हतवान् खलु । कीदृशस्त्वम् ? **उपशाकेभिः** समीपवर्तिभिः शक्तियुक्तैः सहितः **एकः** अद्वितीयः **चरन्** शत्रुमध्ये सञ्चरन् 'वधीः' इति सम्बन्धः । अथ किं वृत्तम् ? ते तव इन्द्रस्य **धनोः** धनुषः **अधि** उपरि **विषुणक्** विष्वक् सर्वतः **अयज्वानः** यज्ञविरोधिनः **सनकाः** एतन्नामकाः वृतानुचराः **व्यायन्** विविधमागताः, आगत्य च **प्रेतिम्** मृतिं ईयुः प्रापुः । वधीः हन्तेर्लुङि वधादेशः । उपशाकेभिः उपशक्तं कुर्वन्तीति उपशाकाः, शक्लृ शक्तौ । विषुणक्- विषुपूर्वस्य अञ्चतेर्नुडागमः । सनकाः अवयवार्थः सन्दिग्धः । सायणस्तु 'सनन्ति ददतीति सनाः दातारः तान् कायन्ति शब्दयन्तीति सनकाः' इति ।

अस्यामृचि वृत्रो धनीत्युक्तम् । तस्य धनस्य स्वरूपं ब्राह्मणान्येवमाहुः वृत्रस्यान्तः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन्निति । प्रभूते तमःशरीरे सर्वावरके वृत्रे ज्ञान-बलैश्वर्यादितिरस्करणप्रतिरोधबन्धनकरे असुरे सर्वं ज्योतिरादिकं गूढं सुप्तप्रायं भवति, तत्प्रणाशे अन्तर्लीनानि नष्टप्रायाणि तेजोबलादीनि निर्गतानि विकासमाप्नुवन्तीति गूढार्थसिद्धान्त-समुन्मेषोऽत्रावधेयः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**परा॑ चिच्छी॒र्षा व॑वृजु॒स्त इ॒न्द्राऽय॑ज्वानो॒ यज्व॑भिः॒ स्पर्ध॑मानाः । प्र यद्दि॒वो ह॑रिवः स्थातरुग्र॒ निर॑व्र॒ताँ अ॑धमो॒ रोद॑स्योः ॥ ५, १ ॥**

**परा॑ । चि॒त् । शी॒र्षा । व॒वृ॒जुः॒ । ते । इ॒न्द्र॒ । अय॑ज्वानः । यज्व॑ऽभिः । स्पर्ध॑मानाः । प्र । यत् । दि॒वः । ह॒रि॒ऽवः॒ । स्था॒तः॒ । उ॒ग्र॒ । निः । अ॒व्र॒तान् । अ॒ध॒मः॒ । रोद॑स्योः ॥**

## ऋग्भाष्यम्

**अयज्वानोऽन्ये वक्ष्यमाणास्तु ये ते सन्त्यासुरा यज्वभिः स्पर्धमानाः ।**
**शिरांस्यपि स्वानि सन्तत्यजुस्ते सद्भिः स्पर्धामात्रसम्पूरितार्थाः ।**
**तानव्रतान्स्वर्गतः खात्पृथिव्या निरधमस्त्वं स्थैर्यवानिन्द्रियेशः ।। ५,१ ।।**

**ऋग्भाष्यटीका– पराचित्** । अत्राप्ययज्वान इति श्रवणात्पूर्वोक्ता एवेति प्रतीतिं ताव-न्निराकरोति । **अयज्वान इति** । ये वक्ष्यमाणा अयज्वानस्ते तु पूर्वोक्तेभ्योऽन्ये तेषां सनकत्वात् एतेषां महादोषोक्तेः । तर्हि के ते । ये आसुरा असुरस्वभावाः सन्ति । एवं तात्पर्यमभिधाय यज्वभिरित्यादिना व्याख्याति । यद्वोक्तं विवेकं प्रदर्शयन्नेवायज्वानोऽन्य इत्यादिनैव व्याख्याति । हे इन्द्र ये तु ते पूर्वोक्तेभ्योऽन्ये वक्ष्यमाणा आसुरा अयज्वानः सन्ति ते यज्वभिः स्पर्धमानाः सन्तः **शीर्षा** शीर्षाणि । चित् अपि । स्वानि शिरांस्यपि । परावव‍ृजुः सन्तत्यजुः । स्पर्धानिमित्तं स्वशिरस्त्यागमपि न गणयन्ति । सद्भिः सह स्पर्धामात्रेण सम्पूरितार्थाः प्राप्तप्रयोजना इति भावः । ततः किम् । **हे हरिवः** हरयोऽश्वा इन्द्रियाणि वाऽस्य सन्तीति हरिवान् तस्येयं सम्बुद्धिः । **स्थातः** स्थिर उग्र । इन्द्रियेशः स्थैर्यवान् । दैत्यानामुग्रस्त्वमिति यावत् । यद्यस्मादेवं भूतास्ते तस्मादव्रतान्व्रतेन त्वत्पूजनेन हीनांस्तान् दिवः स्वर्गतः । **रोदस्योः** रोदसीभ्याम् । खादन्तरिक्ष-लोकात्पृथिव्याश्च निरधमः निराकृतवानसीति ।। ५, १ ।।

**मन्त्रार्थमञ्जरी–** हे **इन्द्र** । ये तु ते पूर्वोक्तेभ्योऽन्ये, वक्ष्यमाणा असुराः । अयज्वानः सन्ति ते यज्वभिः स्पर्धमानाः सन्तः **शीर्षाचित्** शीर्षाणि चित्, स्वशिरांस्यपि । **परा** ववृजुः, संतत्यजुः, 'स्पर्धानिमित्तं स्वशिरस्त्यागमपि न गणयन्ति, सद्भिः सह स्पर्धामात्रेण प्राप्तप्रयोजनाः' इति भावः । 'ततः किम्?' इत्यत उच्यते हे **हरिवः**, हरयोऽश्वा इन्द्रियाणि वास्य सन्तीति हरिवान्, तस्य सम्बुद्धिः । **स्थातः**, स्थिर । उग्र । इन्द्रियेशः, स्थैर्यवान्, दैत्यानामुग्रः त्वम्' इति यावत् । **यत्**, यस्मात् । एवं भूतास्ते तस्मात् **अव्रतान्**, व्रतेन त्वत्पूजनेन हीनान् । तान् दिवः, स्वर्गतः । **रोदस्योः**, रोदसीभ्याम्, अन्तरिक्षलोकात्पृथिव्याश्च । प्र निः अधमः, निराकृतवानसि । इति ।। ५ ।। प्रथमो वर्गः ।। १ ।।

**स्कन्द–** केन पुनः प्रकारेण प्रेतिमीयुः । उच्यते– **चित्** परा चित् इति शब्दः पदपूरणः । **शीर्षा** स्वानि शिरांसि त्वया छिन्नानि सन्ति **परा ववृजुः** परावर्जितवन्तः । भूमौ पर्यस्तवन्तः

इत्यर्थः । हे **इन्द्र ! अयज्वानः यज्वभिः** त्वदाश्रितैस्सह **स्पर्धमानाः** । कदा । उच्यते– **प्र यत्** । प्रशब्दः **अधमः** इत्याख्यातेन सम्बन्धयितव्यः । यत् यदा **दिवः हरिवः स्थातः** । दिव इत्येतत् स्थातरित्येतेन सम्बन्धयितव्यः । हे दिवः स्थातः ! द्युलोकस्याधिष्ठातः ! हरिवः ! उग्र ! अप्रसह्य ! प्र **निः अव्रतान्** अधमः प्रकर्षेण निरधमः अपकालितवानसि अव्रतान् अकर्मणः अयष्टॄन् । रोदस्योः द्यावापृथिव्योस्सकाशात् । लोकद्वयादपीत्यर्थः । अथवा प्र यदिव इति यच्छब्दः प्रथमा, इन्द्रप्रतिनिर्देशः । अधम इत्यपि लडर्थे लङ् । यस्त्वमव्रतानयष्टॄन् मनुष्यान् द्वयोरपि निर्धमसि, स वधीर्हि दस्युमिति ॥ ५,१ ॥

**वेङ्कटमाधव– परा ववृजुः** शीर्षाणि । **ते इन्द्र !** आसन् पराङ्मुखा युद्धात् । **अयज्वानः यज्वभिः स्पर्धमानाः** । यदा त्वं **दिवः** स्थापयितः ! **हरिवः !** उद्गूर्ण ! प्रातिष्ठथाः शत्रून् प्रति, तदानीम् अयजमानान् तान् द्यावापृथिव्योः **निः अधमः** ॥ ५,१ ॥

**मुद्गल– हे इन्द्र ! ते** वृत्रानुचराः **शीर्षा** स्वकीयानि शिरांसि **परा चित्** पराङ्मुखान्येव कृत्वा **ववृजुः** गतवन्तः । कीदृशास्ते । **अयज्वानः** स्वयं यागरहिता **यज्वभिः** यागानुष्ठातृभिः सह **स्पर्धमानाः** । **हे हरिवः** । हरिनामकाश्वयुक्त **! स्थातः !** स्थितियुक्त ! युद्धे पलायन-रहित ! **उग्र !** शौर्ययुक्त ! इन्द्र **! यत्** यदा **दिवः** अन्तरिक्षात् **रोदस्योः** द्यावापृथिव्योः सकाशाच्च **अव्रतान्** व्रतरहितान् वृत्रानुचरान् निः प्र अधमः निःशेषेण धमनं कृतवानसि । तदानीं त्वदीयमुखवायुना नुन्नाः सन्तो ववृजुरिति पूर्वत्रान्वयः ॥ ५,१ ॥

**सायण–** हे **इन्द्र ते** वृत्रानुचराः **शीर्षा** स्वकीयानि शिरांसि **परा चित्** पराङ्मुखान्येव कृत्वा **ववृजुः** गतवन्तः । कीदृशास्ते । **अयज्वानः** स्वयं यागरहिताः प्रत्युत **यज्वभिः** यागानुष्ठातृभिः सह **स्पर्धमानाः** । हे **हरिवः** ! हरिनामकाश्वयुक्त **स्थातः** ! स्थितियुक्त युद्धे पलायनरहित उग्र शौर्ययुक्तेन्द्र **यत्** यदा **दिवः** अन्तरिक्षात् **रोदस्योः** द्यावापृथिव्योः सकाशाच्च **अव्रतान्** व्रतरहितान् वृत्रानुचरान् **निः प्र अधमः** निःशेषेण धमनं कृतवानसि तदानीं त्वदीयमुखवायुना **नुन्नाः** सन्तो ववृजुरिति पूर्वत्रान्वयः । **शीर्षा** । 'शेश्छन्दसि बहुलम्' (पा.सू-६.१.७०) इति शेर्लोपः । ववृजुः । 'वृजी वर्जने' । 'असंयोगाल्लिट् कित्' (पा.सू-१.२.५) इति कित्त्वाद्गुणाभावः । **अयज्वानः** । यजतेः 'सुयजोर्ङ्वनिप्' (पा.सू-३.२.१०३) इति भूते ङ्वनिप्प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । नञ् समासे अव्ययपूर्वपदप्रकृति-

स्वरत्वम् । **दिवः** । 'ऊडिदम्' (पा.सू-६.१.१७१) इति विभक्तेरुदात्तत्वम् । **हरिवः** । हरी अस्य स्त इति हरिवान् । 'छन्दसीरः' (पा.सू-८.२.१५) इति मतुपो वत्वम् । सम्बुद्धौ 'मतुवसोः...' (पा.सू-८.३.१) इति रुत्वम् । **अव्रतान्** । बहुव्रीहौ 'नञ्सुभ्याम्...' (पा.सू-६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम् । 'दीर्घादटि' (पा.सू-८.३.९) इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' (पा.सू-८.३.३) इति सानुनासिक आकारः । अधमः । 'ध्मा शब्दाग्निसंयोगयोः । लङि सिपि शपि 'पाघ्रा.....' (पा.सू-३.१.१३७) इत्यादिना धमादेशः ।।

**सिद्धाञ्जनम्–** हे **इन्द्र हरिवः** हरिनामक अश्वयुक्त, **स्थातः** ! स्थितिमन्, तव घर्षको नास्ति तस्मात् स्थिरोऽसीत्यर्थः, **उग्र** शूर, **यत्** यदा त्वं **दिवः** अन्तरिक्षात् **रोदस्योः** द्यावापृथिव्योः सकाशात्, त्रैलोक्यादित्यर्थः **अव्रतान्** व्रतरहितान् धर्म्यकर्मशून्यान् वृतानुचरान् **निष्प्राधमः** निःशेषेण त्वन्मुखवायुना धूतान् अकरोः । तदा **यज्वभिः** यजनशीलैः पुण्यपुरुषैः सह **स्पर्धमानाः** संघर्षं कुर्वाणाः **अयज्वानः** यागरहिताः यज्ञविरोधिनः **ते** वृत्रसम्बन्धिनः **शीर्षा** शीर्षाणि, शिरांसि **पराचित्** पराञ्चि कृत्वा, पराङ्मुखा भूत्वा **ववृजुः** जग्मुः, पलायिता इत्यर्थः । शीर्षा शेर्लोपः, छन्दसि । ववृजुः वृजी वर्जने, कित्त्वात् लिटि गुणाभावः । **अधमः** ध्मा शब्दाग्निसंयोगयोः, लङ् ।। ५,१ ।।

**।। इति प्रथमाष्टके तृतीयाध्याये प्रथमो वर्गः ।।**

## श्रीद्यादेवविरचिता नीतिमञ्जरी

यज्वनां ये स्पर्धिनस्तेषामिन्द्र एव शास्ता इत्याह–

**यज्वभिर्नास्तिको भूत्वा स्पर्द्धा कुर्यान्न बुद्धिमान् ।**
**स्पर्धमाना अयज्वानो हता वृत्रेण ते सह ।। १४ ।।**

बुद्धिमान्नरः नास्तिको भूत्वा यज्वभिः यज्ञकर्तृभिः सह स्पर्द्धां तेषां निन्दां च न कुर्यात् । तन्निवारणार्थं वेदमूलेन दृढयति । यो वै दीक्षितानां पापं कीर्तयति तृतीयम् एषां पाप्मनो हरतीति सामवेदे दृष्टत्वात् । पूर्वं ये अयज्वानः स्वयमयष्टारो यज्ञाद्विषः पणयस्ते याज्ञिकैस्सह स्पर्धमाना इन्द्रेण हताः । तस्माद्यज्वनिन्दाऽनिष्टकरी भवति ।

तदर्थेयमृक्–

**परा चिच्छीर्षा ववृजुस्त इन्द्रा यज्वानो यज्वभिः स्पर्धमानाः ।**
**प्रयद्दिवो हरिवः स्यातरुग्र निरव्रताँ अधमो रोदस्योः ।। (ऋ०१.३३.५)**

हिरण्यस्तूपस्त्रिष्टुभा इन्द्रं स्तौति । आभिप्लविके पञ्चमे विनियुक्तम् । एतायामोपगव्यन्त इन्द्रमिति । (ऋ०१.३३) निष्कैवल्यमिति ।

**हे हरिवः** हरिनामकाश्वयुक्तेन्द्र । **हे स्थातः** स्थितियुक्त, युद्धे पलायनरहित **उग्र** शौर्ययुक्त **यत्** यदा **दिवोऽन्तरिक्षात् रोदस्योः** द्यावापृथिव्योः सकाशाच्च अव्रतान् व्रतमिति ज्योतिष्टोमादिकं कर्म तद्रहितान् **निः प्राधमः** निःशेषेण धमनं वधं कृतवान् असि । धमतीति वधकर्माणः (निघण्टु २।१९) । तदानीं ते **अयज्वानः** स्वयं यागरहिताः प्रत्युत **यज्वभिः** सह यागानुष्ठानकर्तृभिः सह स्पर्धमानाः **शीर्षा** शीर्षाणि स्वकीयानि शिरांसि **परावव‍ृजुः** तत्यजुः । 'वृजी वर्जने' असंयोगाल्लिट् कित् (पा०१.२.५) इति कित्त्वाद् गुणाभावः । त्वया हताः सन्तः शीर्षाणि त्यक्त्वा मृता इत्यर्थः । अतो यज्वनो निन्दां न कुर्यादिति प्रसिद्धम् । शीर्षाबहुवचनस्य डादेशः (पा०७.१.३९) । ववृजुस्ते इति विसर्जनीयस्य षत्वे प्राप्ते 'त्वात इत्यनुदात्तयोः' (ऋ०प्रा०५.३२) इत्यनुदात्तत्त्वाभावान्न । स्यातः 'स्यातर्जरितः' इति रेफः । (ऋ०प्रा०१.११५)

## ऋक्संहिता पदपाठसहिता

**अयुयुत्सन्ननवद्यस्य सेनामयातयन्त क्षितयो नवग्वाः ।**
**वृषायुधो न वध्रयो निरष्टाः प्रवद्भिरिन्द्राच्चितयन्त आयन् ।। ६ ।।**

अयुयुत्सन् । अनवद्यस्य । सेनाम् । अयातयन्त । क्षितयः । नवऽग्वाः ।
वृषाऽयुधः । न । वध्रयः । निःऽअष्टाः । प्रवत्ऽभिः । इन्द्रात् । चितयन्तः । आयन् ।। ६ ।।

## ऋग्भाष्यम्

**यदा नवग्वा ऋषयोऽसुरेन्द्रैरुपद्रुताः शरणं वासुदेवम् ।**
**प्रापुस्तमोभिस्तामसैर्वाऽघसङ्घैः सम्पीडिता अयुयुत्संस्तदा तैः ।**
**सेनां च विष्णोर्निरयातयंस्ते वधाय तेषां हरिभक्त्यादिकान्वा ।**
**गुणान्समर्था इव योधाः स्वशत्रुवधैकशीला अपि नष्टाः प्लवद्भिः ।**
**गुणैर्विष्णोः स्वैर्गुणैर्वा प्रसादादीशस्य संकालयन्तो ह्यगच्छन् ।। ६ ।।**

**ऋग्भाष्यटीका– अयुयुत्सन्** । इतिहासगर्भत्वादितिहासं सूचयन् व्याख्याति ।। यदेति ।। नवग्वानाम ऋषयः क्षितयः प्रजाः । बाह्यैः 'असुरेन्द्रैरुपद्रुता यदेन्द्रं शरणं प्रापुः' । यद्वा । तदुपलक्षिताः सज्जनास्तमोभिरज्ञानसंशयविपर्ययैस्तामसैस्तमोगुणकार्यैरघसंघैर्वा 'सम्पीडिता यदा वासुदेवं शरणं प्रापुः' तदा तच्छरणप्राप्त्युपोद्बलितास्तैरसुरेन्द्रैस्तमःप्रभृतिभिर्वा सह **अयुयुत्सन्** योद्धुमैच्छन् ।

यद्वा । वासुदेवमिन्द्रान्तर्गतं स्वान्तर्गतं चेत्युभयत्र योजना । युयुत्सवस्ते मुनयस्तेषामसुराणामज्ञानादीनां वा वधायानवद्यस्य निर्दोषस्येन्द्रान्तर्यामिणो विष्णोः । सेनां चतुरङ्गिणीम् । स्वान्तर्गतस्य विष्णोः सेनां हरिभक्त्यादिकान् गुणान्वा । अयातयन्त निरयातयन् प्रेरितवन्तः । तदा **वृषायुधो** न वृषशब्दः श्रेष्ठवाची युध इति च क्विबन्तः । कर्मधारयः समासः । समर्था योधा इव **वध्रयः** तच्छीले कर्तरि रिप्रत्ययः । स्वशत्रुवधैकशीला अपि ते असुरादयः **प्रवद्भिः** प्लवद्भिः आशुगतिभिः विष्णोर्गणैः परिवारैः स्वैर्भक्त्यादिर्गुणैर्वा निमित्तैः **निरष्टाः** अतिशयेन व्याप्ताः अशूव्याप्तौ पलायन्तो दिशो भेजुः नष्टाः पलायमाना अदर्शनं गताः तेषु पलायितेष्वैन्द्रागणा **इन्द्रात्** इन्द्रस्य ईशस्य प्रसादात् चितयन्तः तानसुरान् सङ्कालयन्तः पुनर्द्रावयन्त **आयन्** अगच्छन् हि ।। ६ ।।

**मन्त्रार्थमञ्जरी– न वग्वाः** नवग्वा नाम ऋषयः । **क्षितयः** प्रजाः । बाह्यैरसुरेन्द्रैरुपद्रुता यदेन्द्रं शरणं प्रापुः, यद्वा नवग्वोपलक्षिताः सज्जना अज्ञानसंशयविपर्ययैरघसंघैर्वा सम्पीडिता यदा वासुदेवं शरणं प्राप्ताः, तदा तच्छरणप्राप्त्युपोद्बलितास्तैरसुरेन्द्रैरज्ञानप्रभृतिभिः सह अयुयुत्सन्, योद्धुमैच्छन् । युयुत्सवस्ते मुनयः (सज्जना वा) तेषामसुराणामज्ञानादीनां वा वधाय **अनवद्यस्य** निर्दोषस्य, इन्द्रान्तर्यामिणो विष्णोः । **सेनाम्** चतुरङ्गिणीम् । स्वान्तर्गतस्य विष्णोः सेनां हरिभक्त्यादिकान्गुणान्वा । **अयातयन्त** निरयातयन्, प्रेरितवन्तः । तदा वृषयुधः न, वृषशब्दः श्रेष्ठवाची, 'युधः' इति क्विबन्तः, कर्मधारयः, समर्था रोधा इव । **वध्रयः** ताच्छील्ये कर्तरि रिप्रत्ययः, क्रिन्प्रत्ययः स्वशत्रुवधैकशीलाः । अपि ते असुरादयः । **प्रवद्भिः** प्लवद्भिः, आशुगतिभिर्विष्णोर्गणैः परिवारैः, स्वैर्भक्त्यादिगुणैर्वा, निमित्तैः । **निरष्टाः**, अतिशयेन व्याप्ताः, 'अशू व्याप्तौ' पलायन्तो दिशो भेजुः, पलायमाना अदर्शनं गताः । तेषु पलायितेषु (ऐन्द्रा गणाः) इन्द्रात्, इन्द्रस्येशस्य प्रसादात् । चितयन्तः, तानसुरान्संकालयन्तः, पुनर्द्रावयन्तः । **आयन्** आगच्छन् । हि ।। ६ ।।

**स्कन्द–** एकवाक्यताप्रसिद्धयर्थं यत्तच्छब्दावत्राध्याहार्यौ । ये असुरा **अयुयुत्सन्** योधयितुमिष्टवन्तः **अनवद्यस्य** प्रशस्यस्येन्द्रस्य सेनाम्, तान् कांश्चित् **अयातयन्तः** यातयतिर्वधकर्मा (तु.निघ.२,१९) । स्वार्थिकश्चात्र णिच् । हतवन्तः । णिच्छ्रुतिसामर्थ्याद्वा इन्द्रेण घातितवन्तः । के । **क्षितयः** मनुष्याः । कतमे । **नवग्वाः** 'अङ्गिरसो नः पितरो नवग्वा' (ऋ.१०,१४,६) इति सामानाधिकरण्यदर्शनादङ्गिरसोऽत्र नवग्वा इत्युच्यन्ते । ते किल तपस्यन्तो नवभिर्मासैः सिद्धिं गताः । ते कांश्चिदयातयन्तः । केचित्तु **वृषायुधः न वध्रयः निरष्टाः** वृषः प्रजननसमर्थो बलवान् वृषभः । तेन सह ये युध्यन्ते ते वृषायुधः । नशब्द उपमायाम् । वध्रयः प्रजननासमर्था दुर्बला बलीवर्दाः । निर्गता अष्टाभ्यो निरष्टाः पतितदशनाः अत्यन्तवृद्धाः बलीवर्दाः । ये वध्रयो निरष्टाश्च वृषेण सह युयुत्सन्ते यथा ते ताडिता अत्यन्तपराङ्मुखा नश्येयुः, तद्वत् । **प्रवद्भिः** प्लवमानैरत्यन्तशीघ्रगतिभिरश्वैरथैर्वा **इन्द्रात् चितयन्तः** जानन्तः । किम् । सामर्थ्यादिन्द्रस्य पराक्रमम् । अथवा 'चित सञ्चोदने' इत्यस्य चितयन्त इति रूपम् । चोदयन्तोऽश्वान् **आयन्** अगमन् नष्टा इत्यर्थः । अथवा निरष्टा इत्येतत् 'अशू व्याप्तौ' इत्येतस्य रूपम् । प्रवद्भिरित्येतेन च सम्बध्यते । प्रवद्भिरित्येतच्च अङ्गिरोविषयम् । यथा वृषेण सह युयुत्समाना वध्रयस्तेन व्याप्ता नश्येयुः, एवं निरष्टा निश्चयेन व्याप्ताः प्रवद्भिः प्लवमानैरत्यन्तशीघ्रगतिभिः अङ्गिरोभिः यस्यानुचराणामृषीणामीदृशः पराक्रमः स स्वयमसह्यपराक्रमः इत्यङ्गिरपराक्रमादेवेन्द्रस्य पराक्रमं जानन्तश्चोदयन्तो वाश्वान् स्थानप्राप्तादेवेन्द्राद् आयन् गता नष्टाः । ये इन्द्रस्य सेनामयुयुत्सन् ते केचिद्धताः केचिन्नष्टा इति समस्तार्थः ।। ६ ।।

**वेङ्कटमाधव– अयुयुत्सन्** अवद्यरहितस्य **सेनाम्** अव्रताः । अथैनमिन्द्रम् **न वग्वाः क्षितयः** युद्धार्थं निरगमयन् अथ ते **वृषायुधः** छिन्नवृषणा इव वार्धक्यात् उत्सृष्टाः साण्डेन युध्यमाना प्रकर्षगमनवद्भिरश्वैः बलवानयमिन्द्र इति जानन्तो युद्धात् प्रतिगताः ।। ६ ।।

**मुद्गल– अनवद्यम्य** गर्हणीयदोषरहितस्य इन्द्रस्य **सेनाम्** प्रति **अयुयुत्सन्** वृत्रस्यानुचराः युद्धमैच्छन् । तदानीम् **नवग्वाः** नवनीयगतय स्तोतव्यचरित्राः **क्षितयः** मनुष्याः अङ्गिरप्रभृतयः **अयातयन्तः** युद्धार्थम् इन्द्रम् नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः । इन्द्रः योद्धुं गते सति **निरष्टाः** तेनेन्द्रेण निराकृताः वृत्रानुचरा **चितयन्तः** स्वकीयामशक्तिं ज्ञापयन्तः **इन्द्रात्** इन्द्रस्य सकाशात् **प्रवद्भिः** प्रवणैः पलायितुं सुशकैः मार्गैः **आयन्** दूरं गतवन्तः । दृष्टान्तः । **वृषायुधः** वृषेण

सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः **वध्रयः न** नपुंसका इव । ते यथा प्रबलेन निराकृता भवन्ति तद्वत् ।। ६ ।।

**सायण– अनवद्यस्य** गर्हणीयदोषरहितस्येन्द्रस्य **सेनां** प्रति **अयुयुत्सन्** वृत्रस्यानुचरा योद्धुमैच्छन् । तदानीं **नवग्वाः** नवनीयगतयः स्तोतव्यचरित्राः । यद्वा । अङ्गिरसां सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा । 'नवग्वासः सुतसोमास इन्द्रम्' (ऋ.सं.५.२९.१२) इत्यादिषु तथाभिहितत्वात् । **क्षितयः** मनुष्या अङ्गिरःप्रभृतयः । 'क्षितयः कृष्टयः' (नि.२.३.६) इति तन्नामसु पाठात् । **अयातयन्त** । युद्धार्थमिन्द्रं नानाविधैर्मन्त्रैः प्रोत्साहितवन्तः । इन्द्रे योद्धुं गते सति निरष्टाः तेनेन्द्रेण निराकृता वृत्रानुचराः **चितयन्तः** स्वकीयामशक्तिं ज्ञापयन्तः '**इन्द्रात्** इन्द्रस्य सकाशात् '**प्रवद्भिः** प्रवणैः पलायितुं सुशकैर्मार्गैः **आयन्** दूरे गतवन्तः । तत्र दृष्टान्तः । **वृषायुधः** वृषेण सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः **वध्रयः न** नपुंसका इव । 'निसर्गषण्डो वध्रिश्च' इत्यादिस्मृतिषु प्रयोगात् । ते यथा प्रबलेन दूरे निराकृता भवन्ति तद्वत् । **अयुयुत्सन्** । 'युध संप्रहारे' । सनि 'हलन्ताच्च' (पा.सू.१.२.१०) इति सनः कित्त्वाद्गुणाभावः । 'एकाच उपदेशेऽनुदात्तात्' (पा.सू. ७.२.१०) इति इट्प्रतिषेधः । व्यत्ययेन परस्मैपदम् । सेनाम् । इनेन सह वर्तते इति सेना । 'वोपसर्जनस्य' (पा.सू.६.३.८२) इति सहशब्दस्य सभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **अयातयन्त** । 'यती प्रयत्ने' । 'हेतुमति च' (पा.सू.३.१.२६) इति णिच् । **क्षितयः** । 'क्षि निवासगत्योः' । क्षियन्ति गच्छन्तीति क्षितयो मनुष्याः । 'क्तिच्क्तौ च संज्ञायाम्'(पा.सू.३.३.१७४) इति क्तिच् । **नवग्वाः** । नवभिर्मासैर्निर्गच्छन्तीति नवग्वाः । गमेः औणादिको ड्वप्रत्ययः । यद्वा । क्विपि 'गमः क्वौ' (पा.सू.६.४.४०) इत्यनुनासिकलोपे 'ऊ च गमादीनामिति वक्तव्यम्' इति अकारस्य ऊकारः । जसि 'ओः सुपि' (पा.सू.६.४.८३) इति यणादेशः । दीर्घश्छान्दसः । **वृषायुधः** । 'क्विप् च' इति क्विप् । 'क्विप् च' इत्यत्र 'सोपपदेभ्यो निरुपपदेभ्यः' (का.३.२.७६) इत्युक्तत्वादत्र सोपपदेभ्यः क्विप् । 'अन्येषामपि दृश्यते' (पा.सू. ६.३.१३७) इति पूर्वपदस्य संहितायां दीर्घः । **निरष्टाः** । 'अशू व्याप्तौ' । भावे निष्ठा । 'यस्य विभाषा' (पा.सू. ७.२.१५) इति इट्प्रतिषेधः । व्रश्चादिना षत्वे ष्टुत्वम् । नित्या च बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वम् । यद्वा । निरस्ता इत्यत्र सकारस्य षत्वं छान्दसम् । तदानीम् अस्ता इत्येतत् कर्मणि

निष्ठेति 'गतिरनन्तरः' (पा.सू. ६.१.४९) इति गतेः प्रकृतिस्वरत्वम् । प्रवद्भिः । 'वन षण संभक्तौ' । अस्मात् प्रपूर्वात् क्विप् । 'गमादीनामिति वक्तव्यम्' इत्यनुनासिकलोपः । ततः तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **चितयन्तः** । 'चिती संज्ञाने' । अस्मात् ण्यन्तात् लटः शतृ । शप् । 'अनित्यमागमशासनम्' इति वचनात् लघूपधगुणाभावः ।। ६ ।।

**सिद्धाञ्जनम्–** षष्ठीमृचमाह– **अनवद्यस्य** निर्दोषस्येन्द्रस्य **सेनां** सैन्यं प्रति **अयुयुत्सन्** योद्धुमैच्छन् वृत्रबान्धवा इति शेषः । तथा तेषां युद्धेच्छामात्रे सति, न तु युद्धे प्रवृत्ते, **नवग्वाः** एतन्नामकाः अङ्गिरसः **क्षितयः** मनुष्याः, इन्द्रं **अयातयन्त** प्रयत्नवन्तमकुर्वन् प्रोत्साहितवन्त इत्यर्थः । तदा इन्द्रे युद्धाय प्रोत्साहिते सन्नद्ध एव, तेन **निरष्टाः** निराकृता वृत्रानुचराः **इन्द्रात्** इन्द्रस्य स्थानात् दूरे **प्रवद्भिः** प्रवणैर्मार्गैः **चितयन्तः** स्वीयामशक्तिं ज्ञापयन्तः **आयन्** गतवन्तः पलायिता इत्यर्थः । के इव ? **वृषयुधः** वृष्णा सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वन्तः **वध्रयो न** षण्डा इव । प्रबलनेन्द्रेण दूरीकृता दुर्बला वृत्रबान्धवाः पलायिता इत्यर्थः ।

**अयुयुत्सन्** युध संप्रहारे, सनि व्यत्ययेन परस्मैपदम्, **अयातयन्त** यती प्रयत्ने, हेतुमण्णिचि लङ् । नवग्वाः 'नवभिर्मासैर्गच्छन्तीति नवग्वाः गमेरौणादिको ड्वप्रत्ययः, यद्वा क्विप् इत्यादि-प्रक्रियामभिमन्यते सायणः । नवग्वाः दशग्वाश्च अङ्गिरसः पूर्वे पितरः बलविजये वृत्रतमोभेदने इन्द्रसाहाय्यं कुर्वन्तो गाः अविन्दन्निति बहुधा वेदेषु प्रसिद्धौ सत्यां नवभिः रश्मिपर्यायगोभिर्युक्ता नवग्वाः, तथा दशग्वाश्चेति वक्तव्यम् । **वृषायुधः** संहितायां षकारस्य दीर्घः । निर्-अष्टाः अशू व्याप्तौ, भावे निष्ठा । **प्रवद्भिः** प्रपूर्वात् वनतेः क्विप् । **चितयन्तः** चिती संज्ञाने अस्मात् ण्यन्तात् शतृ, गुणाभावः छान्दसः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**त्वमेतान्रुदतो जक्षतश्चायोधयो रजस इन्द्र पारे ।**
**अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ।। ७ ।।**
त्वम् । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजसः । इन्द्र । पारे ।
अव । अदहः । दिवः । आ । दस्युम् । उच्चा । प्र । सुन्वतः । शंसम् । आवः ।। ७ ।।

## ऋग्भाष्यम्

**रक्षोगणान्भक्षयतो मुनींश्च सम्पीडितान् रुदतश्च त्वयैव ।
अयोधयो रजसोऽन्ते सुसत्त्ववृद्धिर्यदा जगतः स्यात्तदैव ।
पुंदोषान्वा गुणभक्षान्नृसत्त्ववृद्धौ दिवो ज्ञानतोऽवादहश्च ।
अज्ञानदस्युं स्तुवतः संस्तुतिं च प्रावोऽरक्षः.....................।। ७ ।।**

**ऋग्भाष्यटीका– त्वमेतान्** । रक्षोगणान् हे इन्द्र त्वं त्वयैव सम्पीडितान् सम्पीडितत्वादिति यावत् । रुदतश्च जक्षतो मुनीन्भक्षयतश्च । जक्षभक्षहसनयोः । एतान् नरभक्षकत्वेन प्रसिद्धान् रक्षोगणान् रजसो रजोगुणस्य पारेऽन्ते जगतः सुसत्त्ववृद्धिर्यदा स्यात्तदैवायोधयो योधितवानसि । जगत इत्युक्त्या बाह्यं सत्त्वमिति सूचयति । यद्वा । रुदतः शोच्यान् । जक्षतो गुणभक्षकानानन्दादिगुणाच्छादकानेताननुभवसिद्धान्पुंदोषानज्ञानादीन् **रजसः पारे**ऽन्ते । नृसत्ववृद्धौ आध्यात्मिकसत्वगुणवृद्धौ सत्यामयोधयः । किञ्च । **दस्युं** तान्दस्यून् राक्षसान्दिवः स्वर्गादासम्यक् **अवादहः** अवाक्षिप्तवानसि । दहतिरत्र सामर्थ्यात्क्षेपार्थः । सङ्ग्रामे हत्वा स्वर्गादपि निराकृतवानसीति । यद्वा दिवो निराकृत्य नरके वादह इति बहिः स्पष्टम् । अध्यात्मं तु **दस्युम्** अज्ञानदस्युम् । सर्वदोषोपलक्षणमेतत् । गुणभक्षत्वादज्ञानादिकान्दस्यून् वो ज्ञानतो ज्ञानं दत्वाऽसम्यगवादहो दग्धवानसीति । तेन रक्षसामज्ञानादीनां च विनाशेन **सुन्वतः** । सुन्वतां सवनमिति शेषः । **स्तुवतः** स्तुवतां **उच्चा** उच्चैः **शंसं** स्तुतिं संस्तुतिं च । **प्रावः** प्रकर्षेणारक्षः । विघ्ननिवारणे हि तद्रक्षितं भवति ।। ७ ।।

**मन्त्रार्थमञ्जरी–** हे **इन्द्र त्वम्** । त्वयैव । सम्पीडितान् सम्पीडितत्वादिति यावत् । रुदतः । जक्षतः च, मुनीन्भक्षयतश्च, 'जक्ष भक्षहसनयोः' । **एतान्** नरभक्षकत्वेन प्रसिद्धान्रक्षोगणान् । **रजसः** रजोगुणस्य । **पारे** अन्ते । जगतः सुसत्त्ववृद्धिर्यदा । स्यात्तदैव **अयोधयः** योधितवानसि । यद्वा **रुदतः** शोच्यान् । **जक्षतः च** गुणभक्षकान्, आनन्दादिगुणाच्छादकान् । **एतान्** अनुभवसिद्धान्, पुंदोषानज्ञानादीन् । **रजसः** । **पारे** अन्ते । आध्यात्मिकसत्त्वगुणवृद्धौ सत्याम् **अयोधयः** । किं च, **दस्युम्** दस्यून्, तान्राक्षसान् । **दिवः** स्वर्गात् । **आ** सम्यक् । **अव अदहः** अवक्षिप्तवानसि, दहतिः अत्र सामर्थ्यात्क्षेपार्थः, सङ्ग्रामे हत्वा स्वर्गादपि निराकृतवानसि इति भावः । यद्वा दिवो निराकृत्य नरक **अवादहः**

इति स्पष्टम् । अध्यात्मं तु **दस्युम्** गुणभक्षकत्वादज्ञानादिदोषाख्यदस्यून् । **दिवः** ज्ञानतः, ज्ञानं दत्वा । आ, सम्यक् । अव अदहः, दग्धवानसि । इति (तेन) रक्षसामज्ञानादीनां च विनाशेन । **सुन्वतः** बहुवचनार्थे(सवनम्) इति शेषः । सवनं सुन्वतां कुर्वताम् । **स्तुवतः** स्तोत्रं कुर्वताम् । **उच्चा** उच्चैः । **शंसम्** स्तुतिम् । च । **प्र आवः** प्रकर्षेणारक्षः, विघ्नविनिवारणे हि तद्रक्षितं भवति ।। ७ ।।

**स्कन्द– त्वम् एतान्** असुरान् मेघान् वा **रुदतः जक्षतः** च जक्ष भक्षहसनयोः । रुदतो हसतश्च । सर्वास्ववस्थासु वर्तमानानित्यर्थः । **अयोधयः** योधितवानसि । **रजसः** लोकनामैतत् (तु.या.४.१९) । अन्तरिक्षलोकस्य द्युलोकस्य वा । **हे इन्द्र! पारे** अन्ते अवस्थितान् । भयादन्तरिक्षस्य दिवो वा अन्तान् नष्टानपि सत इत्यर्थः । किञ्च **अव अदहः** अवशब्दः अधोभागे । दहतिरप्यत्र सामर्थ्यान्निर्धमनार्थः । अधो निरधम निर्धमसि वा । **दिवः** द्युलोकात् । आकारस्तु पदपूरणः । **दस्युम्** शत्रुम् **उच्चा** उच्चैरप्यवस्थितम् । किञ्च **सुन्वतः स्तुवतः** च यजमानस्य **शंसम्** कामम् । **प्रावः** प्रकर्षेण रक्षितवान् तर्पितवान् वाऽसि ।। ७ ।।

**वेङ्कटमाधव– त्वम् एतान्** अव्रतान् **रुदतः** हसतः च पृथिव्याः 'पारे अन्ते अवस्थितान् योधितवानसि इन्द्र ! तदानीम् उच्छ्रितात् **दिवः** असुरम् अध नीतवानसि । **सुन्वतः स्तुवतः** च प्रार्थनां प्रकर्षेण अरक्षः ।। ७ ।।

**मुद्गल– हे इन्द्र! त्वम् रुदतः** रोदनं कुर्वत **जक्षतः** भक्षणं कुर्वतः **च एतान्** विविधानपि वृत्रानुचरान् **रजसः पारे** अन्तरिक्षस्य परमागे **अयोधयः** युद्धमकरोः । युद्धेन मारितवानित्यर्थः । **दस्युम्** उपक्षपयितारं वृत्रम् **दिवः आ** द्युलोकादानीय **उच्चा** उत्कर्षेण **अव अदहः** दग्धवानसि । वृत्रं सपरिवारं विनाश्य तत ऊर्ध्वम् **सुन्वतः** सोमाभिषवं कुर्वत **स्तुवतः** स्तोत्रं कुर्वतो यजमानस्य **शंसं** स्तुतिम् **प्र आवः** प्रकर्षेण रक्षितवानसि ।। ७ ।।

**सायण–** हे **इन्द्र त्वं रुदतः** रोदनं कुर्वतः **जक्षतः** भक्षणं हसनं वा कुर्वतः **च एतान्** द्विविधानपि वृत्रानुचरान् **रजसः पारे** अन्तरिक्षस्य परभागे । रजःशब्दोऽन्तरिक्षवाची, 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इत्युक्तत्वात् । **अयोधयः** युद्धमकरोः युद्धेन मारितवानित्यर्थः । **दस्युम्** उपक्षयितारं वृत्रं **दिवः** 'आ द्युलोकादानीय उच्चा उत्कर्षेण **अवादहः** दग्धवानसि ।

वृत्रं सपरिवारं विनाश्य तत ऊर्ध्वं **सुन्वतः** सोमाभिषवं कुर्वतः **स्तुवतः** स्तोत्रं कुर्वतो यजमानस्य **शंसं** स्तुतिं **प्र आवः** प्रकर्षेण रक्षितवानसि । रुदतः : 'रुदिर् अश्रुविमोचने' । लटः शतृ । अदादित्वात् शपो लुक् । प्रत्ययस्वरेणान्तोदात्तत्वम् । 'शतुरनुमः.....' (पा.सू-६.१.१७३) इति शस उदात्तत्वम् । **जक्षतः** । 'जक्ष भक्षहसनयोः' । पूर्ववत् शपो लुक् । 'जक्षित्यादयः षट्' (पा.सू.६.१.६) इति अभ्यस्तसंज्ञा । अतः 'अभ्यस्तानामादिः' (पा.सू-६.१.१८९) इत्याद्युदात्तत्वम् । **सुन्वतः** । सुनोतेः शतरि 'स्वादिभ्यः श्नुः' । 'हुश्नुवोः....' (पा.सू-६.४.८७) इत्यादिना यणादेशः । 'शतुरनुमः' (पा.सू-६.१.१७३) इति विभक्तेरुदात्तत्वम् । **स्तुवतः** । 'टुञ् स्तुतौ' । अदादित्वात् शपो लुक् । उवङादेशः । पूर्ववत्स्वरः ॥ ७ ॥

**सिद्धाञ्जनम्**– सप्तमीं ऋचमाह– **हे इन्द्र त्वम् रुदतः** विलपतः **जक्षतः** च हसतश्च **एतान्** वृत्रसम्बन्धिनः रोदनं कुर्वतः हसनं कुर्वतो वा द्विधाऽपि वर्तमानान् **रजसः** अन्तरिक्षस्य **पारे** दविष्ठे परभागे **अयोधयः** युद्धेन हतवानसि । **दस्युम्** वृत्रं **उच्चा** उच्चः दिवः **आ** द्युलोकादानीय, (त्रैलोक्यमेवाक्रान्तं वृत्रेण तत्र उच्चैः द्यौरप्याक्रान्ता तस्मात् तत आनीतवानित्युक्तम्) **अवादहः** दग्धवानसि । ततः परं **सुन्वतः** सोममभिषुण्वतः **स्तुवतः शंसम्** स्तोत्रं स्तुवतः स्तुतिं कुर्वतः, यजमानान् स्तोतॄन् **प्रावः** प्रकर्षेण रक्षितवानसि । सपरिवारवृत्रवधात्परं रक्षां अदाः सोमयाजिभ्यो भक्तेभ्यः । रुदतः- रुदिर् अश्रुविमोचने, लटः शतृ । जक्ष भक्षहसनयोः, लटः शतृ । सुन्वतः गतम् ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुम्भमानाः ।**
**न हिन्वानासस्तितिरुस्त इन्द्रं परि स्पशो अदधात्सूर्येण ॥ ८ ॥**

**चक्राणासः । परिऽनहम् । पृथिव्याः । हिरण्येन । मणिना । शुम्भमानाः ।**
**न । हिन्वानासः । तितिरुः । ते । इन्द्रम् । परि । स्पशः । अदधात् । सूर्येण ॥ ८ ॥**

## ऋग्भाष्यम्

..............**बन्धनं ये जनानाम् ।**

**कुर्वन्ति हेम्ना मणिभिश्शोभमाना ।**
**दैत्यादयो दृढदोषा धनैर्वा ।**
**ते प्रेरयन्तोऽपि परस्वरेण नैवातरन्वासुदेवं कथञ्चित् ।**
**सहैव सूर्येण च देवसङ्घांश्चरानज्ञातानदधाद्वासुदेवः ।**
**दैत्यानां वा तमसां वृत्तदृष्टौ.... ॥ ८ ॥**

**ऋग्भाष्यटीका– चक्राणासः** । बन्धनम् । ये दैत्यादयः । **पृथिव्याः** पृथिवीस्थितानां जनानाम् । **परीणहं** 'णह बन्धने' भावे सम्पदादित्वात्क्विप् । न हि वृतीत्यादिनोपसर्गस्य दीर्घः । परितो बन्धनम् । **चक्राणासः** भृशं कुर्वाणाः कुर्वन्ति । निरपराधान्प्राणिनः कारागारेषु निबध्य ततोपहृतेन **हिरण्येन** हेम्ना । **मणिना** मणिभिश्च । **शुम्भमानाः** शोभमानाः सन्ति । अध्यात्मन्तु दृढदोषाहिरण्येन मणिना शुम्भमाना इति तैस्तैर्धनैः प्रलोभ्य जनानां संसारे बन्धनं कुर्वन्तीति । त एवमकुतोऽभयंमन्याः हिन्वानासः 'हिगतौ वृद्धौ च' । अन्तर्णीतण्यर्थस्येदं रूपम् । इतरेतरं गमयन्तो वर्धयन्तो वा । परस्परेण प्रेरयन्तोऽपि । परस्परेणेत्यव्ययम् । इतरेतरसाहाय्यवन्तोऽपीन्द्रं वासुदेवं कथंचिन्न तितिरुः नैवातरन् । यद्यपीह दुर्दमास्ते तथापीश्वरेण परत्र दण्ड्यन्त एवेति भावः । नन्वीश्वरस्तद्वृत्तं ज्ञात्वा दण्डयेत् । तज्ज्ञानमेव तस्य कथं सर्वज्ञत्वात् । किं चेन्द्रो वासुदेवो बहिर्दैत्यानामन्तस्तमसामज्ञानादीनां वृत्तदृष्ट्यै वृत्तदर्शनार्थम् । सूर्येण सहैव सूर्यसहितान्स्पशः अज्ञातचरान्देवसंघान्पर्यदधात् परितः स्थापितवान् । तथाचोक्तम् । 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्' इति । तथा सूर्योऽग्निः खंमरुद्भावः सोमः सन्ध्याहनी दिशः । कालः स्वयं धर्म इति ह्येते धर्मस्य साक्षिण इति ॥ ८ ॥

**मन्त्रार्थमञ्जरी–** दैत्यादयः । **पृथिव्याः** पृथिवीस्थितानां जनानाम् । **परीणहम्** 'णह बन्धने' भावे सम्पदादित्वात्क्विप्, 'नहिवृतिवृषिव्यधिरुचि सहितनिषु क्वौ' इत्युपसर्गस्य दीर्घः, परितो बन्धनम् । **चक्राणासः** चक्राणाः, भृशं कुर्वाणाः । निरपराधान्प्राणिनः कारागारेषु निबध्य ततोऽपहृतेन हिरण्येन । **मणिना** मणिभिः । च **शुम्भमानाः** शोभमानाः सन्ति । अध्यात्मं तु ये दृढदोषाः । **हिरण्येन मणिना शुम्भमानाः** । तैस्तैर्धनैः प्रलोभ्य **पृथिव्याः** पृथिवीस्थितानाम् जनानाम् । **परीणहम्** संसारे (परितः) बन्धनम् । **चक्राणासः** कुर्वन्ति । इति । ते,

एवमकुतोभयं मन्याः । हिन्वानासः, 'हि गतौ वृद्धौ च' अन्तर्णीतण्यर्थस्येदं रूपम्, इतरेतरं गमयन्तो वर्धयन्तो वा, परस्परं सहायवन्तोऽपि । **इन्द्रम्** वासुदेवम् । **न तितिरुः**, नैवातरन्, यद्यपीह दुर्मदास्तथापीश्वरेण परत्र दण्ड्यन्त एव इति भावः । 'तद्वृत्तज्ञाने खलु दण्डनम्, तदेव कथमीश्वरस्य ? इत्यतः 'सर्वज्ञत्वात्' इति परिहारे सत्यप्यन्यदप्युच्यते (इन्द्रः) वासुदेवः । बहिर्दैत्यानामन्तरज्ञानादीनां वृत्तदर्शनार्थम् सूर्येण (सहैव) सूर्यसहितान् । **स्पशः** अज्ञाताँश्चारान्, देवसंघान् । **परि अदधात्** परितः स्थापितवान्, तथा चोक्तं भारते– 'आदित्यचन्द्रावनिलोऽनलश्च । द्यौर्भूमिरापो हृदयं मनश्च । अहश्च रात्रिश्च उभे च संध्ये । धर्मश्च जानाति नरस्य वृत्तम्' इति ॥ ८ ॥

**स्कन्द– चक्राणासः** कुर्वन्तः **परिणहम् पृथिव्याः** 'णह बन्धने' । सर्वतो बध्यते येन पृथिवी स पृथिव्याः परिणाहः । खातप्राकारादिकम् । दुर्गाणि कुर्वन्त इत्यर्थः । **हिरण्येन मणिना शुम्भमाना** शोभयन्तः । किम् । सामर्थ्यात् स्वशरीराणि । स्वाभिः कृतरक्षाभिधाना आस्थावन्तश्च सन्तः इत्यर्थः । न **हिन्वानासः तितिरुः ते** हिनोतिर्वृद्ध्यर्थः । तिरतिः शक्नोत्यर्थः । शक्नोतेश्च कर्मभूतधात्वन्तरानुशङ्गस्य नित्यत्वात् प्रतियोद्धुमिति वाक्यशेषः । ते इत्यसुराणां प्रतिनिर्देशः । सर्वप्रकारं वर्धमाना असुरा नैवाशक्नुवन् प्रतियोद्धुमित्यर्थः । कम् । इन्द्रम् । कस्मात् । उच्यते । यस्मात् तत्पुरेषु **परि स्पशः अदधात्** पर्यदधात् सर्वतो निहितवान् इन्द्रः स्पशो बाधकान् । न केवलम् स्वयमेव किं तर्हि । सूर्येण अन्यैरपि देवैः सह सम्मन्त्र्येत्यर्थः । यस्माच्चारचक्षुर्मन्त्रशक्तिर्युक्तश्चेत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** कुर्वाणा आच्छादन महत्तया **पृथिव्याः** हिरण्मयेन अलङ्कारेण शोभमाना **ते इन्द्रम्** प्रति गच्छन्त **न** तीर्णवन्तः । सोऽयम् **सूर्येण** सह परित रश्मीन् निहितवान् ॥ ८ ॥

**मुद्गल–** ये वृत्रानुचराः **पृथिव्याः** भूमेः **परीणहम्** आच्छादन सर्वतो व्याप्तिम् **चक्राणासः** कुर्वाणाः **हिरण्येन** हिरण्ययुक्तेन **मणिना** कण्ठबाह्वादिगतेन मण्याद्याभरणेन **शुम्भमानाः** शोभमानाः **हिन्वानासः** वर्धमानाः सन्तो वर्तन्ते, ते तथाविधा वृत्रानुचराः इन्द्रम् युद्धायोद्यन्तम् **न तितिरुः** जेतुं न समर्था आसन् । तदानीं स इन्द्रः **स्पशः** बाधकान् वृत्रानुचरान् **सूर्येण** आदित्येन **परि अदधात्** व्यवहितान् अकरोत् ॥ ८ ॥

**सायण–** ये वृत्रानुचराः **पृथिव्याः** भूमेः **परीणहम्** आच्छादनं सर्वतो व्याप्तिं **चक्राणासः** कुर्वाणाः **हिरण्येन** हिरण्ययुक्तेन **मणिना** कण्ठबाह्वादिगतेन मण्याद्याभरणेन **शुम्भमानाः** शोभमानाः **हिन्वानासः** वर्धमानाः सन्तो वर्तन्ते **ते** तथाविधा वृत्रानुचराः **इन्द्रं** युद्धायोधन्तं **न तितिरुः** जेतुं न समर्थाः आसन् । तदानीं स इन्द्रः **स्पशः** बाधकान् वृत्रानुचरान् 'सूर्येण आदित्येन **परि अदधात्** परिहितान् व्यवहितानकरोत् । तथा च ब्राह्मणम्– आदित्यो ह्येवोद्येन पुरस्ता-द्रक्षांस्यपहन्ति' (तै.सं.२.६.६.३) इति । **चक्राणासः** । करोतेः 'छन्दसि लिट्' इति वर्तमाने लिटः कानच् । ततोऽसुक् । 'चितः' इत्यन्तोदात्तत्वम् । **परीणहम्** । परिणहनं परीणत् । परिपूर्वात् नाह्यतेर्भवि क्विपि 'नहिवृति......' (पा.सू-६.३.११६) इत्यादिना पूर्वपदस्य दीर्घः । पृथिव्याः । 'उदात्तयणो.....' (पा.सू-६.१.१७४)इति विभक्तेरुदात्तत्वम् । हिन्वानासः । 'हि गतौ वृद्धौ च' । ताच्छीलिकः चानश् । तितिरुः । तिरतिर्गत्यर्थः ।। ८ ।।

**सिद्धाञ्जनम्– पृथिव्याः** भूमेः **परिणहम्** परितो बन्धनवदवस्थितं आच्छादनं **चक्राणासः** कुर्वाणाः, **हिरण्येन** हिरण्मयेन **मणिना** गात्रगतेनाभरणेन शुम्भमानाः दीप्यमानाः हिन्वानासः सत्वरं गच्छन्तः (इन्द्रं प्रति योद्धुं ) **ते** वृत्रानुचराः तथाविधा अपि **इन्द्रम्** युद्धायोद्यतं **न तितिरुः** जेतुं नाशक्नुवन् । तदा इन्द्रः **स्पशः** वृत्रसम्बन्धिनो गूढप्रणिधीन्, पृथिवीं सर्वतस्तमसा व्याप्य आच्छाद्य स्वयं शोभमानान् तान् **सूर्येण** उत्तमेन ज्योतिषा **पर्यदधात्** आच्छादितवान् । आच्छादकानेव आच्छादितवान् । आच्छादकानेव आच्छादितवान् । **चक्राणासः** करोतेः छन्दसि लिटः कानच्, ततो सुक् । **परिणहम्** परिपूर्वात् बन्धनार्थात् नह्यतेर्भवि क्विप्, परिणट् । **हिन्वानासः** हि गतौ वृद्धौ च, ताच्छीलिकः चानश् । **तितिरुः** तिरतिर्गत्यर्थः ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**परि यदिन्द्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीम् ।**
**अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ।। ९ ।।**

**परि । यत् । इन्द्र । रोदसी इति । उभे इति । अबुभोजीः । महिना । विश्वतः । सीम्।**
**अमन्यमानान् । अभि । मन्यमानैः । निः । ब्रह्मऽभिः । अधमः । दस्युम्। इन्द्र ।।९।।**

## ऋग्भाष्यम्

.....पर्यभुङ्थाः सह यद्रोदसी च ।
स्वमहिम्ना विश्वतः सम्यगेव ।
तदभक्तान्निरधमो भक्तसङ्घैः ।। ९ ।।

**ऋग्भाष्यटीका–** **परि यत्** । पर्यभुङ्क्थाः । हे इन्द्र त्वम् । **यत्** यस्मात् **महिना** स्वमहिम्ना । **विश्वतः** सर्वदा । **सीं** सम्यगेवानुपचारेण । **रोदसी** द्यावापृथिव्यौ । उभे मिलिते सहैव । एककालमेव वा **पर्यबुभोजीः** । छान्दसं द्विर्वचनम् । पर्यभुङ्थाः । **हे इन्द्र** परमैश्वर्योपेत । तत्तस्मात्त्वाम् **अमन्यमानान्** त्वामजानतो **दस्युं** दस्यूनभक्तान् **मन्यमानैः** त्वां जानद्भिः । ब्रह्मभिर्ब्राह्मणैर्भक्तसङ्घैः **निरधमो** निराकृतवानसि । यस्मात्त्वं महासमर्थोऽतस्त्वदीया अपि त्वदाश्रयेण विरोधिनां निरासे समर्था इति । एक इन्द्रशब्दः संज्ञा । द्वितीयः परमैश्वर्यवचनः । इन्द्रेन्द्रेत्यादराद्वा द्विर्वचनम् ।। ९ ।।

**मन्त्रार्थमञ्जरी–** हे इन्द्र (त्वम्) यत्, यस्मात् । **महिना** स्वमहिम्ना । **विश्वतः** सर्वदा । **सीम्** सम्यगेव, अनुपचारेण । **रोदसी** द्यावापृथिव्यौ । **उभे** मिलिते । सहैव, एककालमेव । **परि अबुभोजीः**, छान्दसं द्विवचनम्, पर्यभोजीः पर्यभुङ्क्षः । हे इन्द्र, परमैश्वर्योपेत । तत् तस्मात् । त्वम् **अमन्यमानान्** त्वामजानतः । **दस्युम्** दस्यून्, अभक्तान् । अभि मन्यमानैः, त्वां जानद्भिः । **ब्रह्मभिः** ब्राह्मणैः, भक्तसङ्घैः । **निः अधमः** निराकृतवानसि, यस्मात्त्वं महान्समर्थोऽतस्त्वदीया अपि त्वदाश्रयेण विरोधिनां निरासे समर्थाः इति भावः । एकः इन्द्रशब्दः संज्ञापरः, द्वितीयः परमैश्वर्यपरः, 'इन्द्र! इन्द्र!!' इत्यादराद्वा द्विर्वचनम् ।। ९ ।।

**स्कन्द–** **यत्** इति प्रथमा । व्यत्ययेन तु नपुंसकम् । यस्मादर्थे वा । यस्त्वं यस्मात् वा **हे इन्द्र** । **रोदसी उभे परि अबुभोजी** 'भुज पालनाभ्यवहारयोः' । परिपालयसि भुङ्क्षे वा । **महिना** महाता वीर्येण । **विश्वतः** सर्वतः । **सीम्** इति तु पदपूरणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स तस्माद्वा **अमन्यमानान्** मन्यतिरर्चतिकर्मा (तु.निघ.३,१४) । अस्तुवतः **अभि मन्यमानैः** अभिष्टुवद्भिः । केन । **ब्रह्मभिः** ऋग्यजुः सामलक्षणैः । **निः अधमः** धमतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । ण्यन्तश्चापकालयतेरर्थे वर्तते । स्वस्मात् स्थानादपकाल-

यसीत्यर्थः । कान् । **दस्युम्** अमन्यमानानिति बहुवचनसामानाधिकरण्यात् बहुवचनस्य स्थाने इदमेकवचनम् । दस्यून् अनभिष्टुवत् शत्रून् **हे इन्द्र!** इदि परमैश्वर्ये । अत्यन्तेश्वरः ।। ९ ।।

**वेङ्कटमाधव– इन्द्र** ! त्वं माहात्म्येन आद्यान् शत्रून् हत्वा द्यावापृथिव्यौ उभे अपि **सर्वतः** परि अबुभोजीः निःसपत्नमभुङ्क्थाः । तदानीमङ्गिरोभिः प्रयुज्यमानैः **अमन्यमानान्** अव्रतान् अभि मन्यमानैः मन्त्रैर्दिवः शत्रून् **निः अधमः** ।। ९ ।।

**मुद्गल– हे इन्द्र! यत्** यदा **रोदसी उभे** द्युलोकभूलोकावुभौ **महिना** त्वदीयेन महिम्ना **विश्वतः सीम्** सर्वतः परिगृह्य **परि अबुभोजी** परितो भुक्तवानसि । तदानीं त्वम् **अमन्यमानान्** मन्त्रार्थम् अनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् **अभि मन्यमानैः** अस्मदीया एते यजमाना रक्षणीया इति अभिमानं कुर्वद्भिः **ब्रह्मभिः** मन्त्रैः **दस्युम्** चोरं वृत्रादिरूपमसुरम् **निः अधमः** निःसारितवानसि ।। ९ ।।

**सायण– हे इन्द्र यत्** यदा **रोदसी उभे** युलोकभूलोकावुभौ **महिना** स्वदीयेन महिम्ना **विश्वतः सीं** सर्वतः परिगृह्य **परि अबुभोजीः** परितो भुक्तवानसि तदानीं त्वम् **अमन्यमानान्** मन्त्रार्थमनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् **अभि मन्यमानैः** अस्मदीया एते यजमाना रक्षणीया इत्यभिमानं कुर्वद्भिः **ब्रह्मभिः** मन्त्रैः **दस्युं** चोरं वृत्रादिरूपमसुरं **निः अधमः** निःसारितवानसि । 'धमतिर्गतिकर्मा' (निरु-६.२) इति यास्कः । **अबुभोजीः** । 'भुज पालनाभ्यवहारयोः' । लङि सिपि 'बहुलं छन्दसि' (पा.सू-२.४.९७) इति विकरणस्य श्लुः । 'बहुलं छन्दसि' (पा.सू-७.१.९७) इति ईडागमः । अडुदात्तः । यद्वृत्तयोगादनिघातः । महिना महिम्ना । महच्छब्दात् पृथ्वादिलक्षणो भावे इमनिच् । 'टेः' इति टिलोपः । तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेणोदात्तत्वम् । मलोपःछान्दसः । अमन्यमानान् । मन्यन्ते जानन्तीति मन्यमानाः । 'मन ज्ञाने' । 'दिवादिभ्यः श्यन्' (पा.सू-३.१.६९) । श्यनो नित्त्वा-दाद्युदात्तत्वम् । समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । संहितायां रुत्वानुनासिकावुक्तौ ।।९।।

**सिद्धाञ्जनम्–** नवमीमृचमाह । **हे इन्द्र, यत्** यदा त्वं **रोदसी** द्यावापृथिव्यौ **उभे** द्वे अपि विश्वतः **सीम्** सर्वतश्च **महिना** तव महिम्ना परिगृह्य **पर्यबुभोजीः** पर्यभुङ्क्थाः, तदा **अभि मन्यमानैः** त्वां अभिलक्ष्य अनुध्यायद्भिः त्वद्विषयिकां मतिं कुर्वद्भिः पुरुषैः द्वारा

**अमन्यमानान्**, त्वद्विषयकध्यानशून्यान् अभक्तान् **निरधमः** निस्सारितवानसि । तथा हे इन्द्र, **ब्रह्मभिः** मन्त्रैः स्तोतृभिः ऋषिभिः प्रयुक्तैरिति शेषः **दस्युम्** वृत्रं निरधमः इति सम्बन्धः । अत्र सायणीयं तात्पर्यं तु मन्त्रार्थमनुध्यातुमशक्तानपि (अमन्यमानान्) केवलमन्त्रपाठकान्, 'अस्मदीया एते' इति 'अभिमन्यमानैः' मन्त्रैः दस्युं अधमः इति ।। **अबुभोजीः** अभुङ्क्थाः, छान्दसः । **महिना** महच्छब्दात् इमनिच्, मलोपः छान्दसः । **मन्यमानान्** मन ज्ञाने ।।९।।

## ऋक्संहिता पदपाठसहिता

**नये दिवः पृथिव्या अन्तमापुर्न मायाभिर्धनदां पर्यभूवन् ।**
**युजं वज्रं वृषभश्चक्र इन्द्रो निर्ज्योतिषा तमसो गा अदुक्षत् ।। १०,२ ।।**
**न । ये । दिवः । पृथिव्याः । अन्तम् । आपुः । न । मायाभिः। धनऽदाम् । परिऽअभूवन् ।**
**युजम् । वज्रम् । वृषभः । चक्रे । इन्द्रः । निः । ज्योतिषा । तमसः । गाः । अधुक्षत् ।।**

## ऋग्भाष्यम्

**ये दस्यवो द्युपृथिव्योरशेषभोगेच्छवो धनदं चेश्वरं तम् ।**
**जिगीषवः स्वीयमायाभिरेव नैवोदापुर्द्वयमेतत्कदाचित् ।**
**युक्तं ज्ञानं वज्रमेवायुधं वा दस्यून्हंन्तुं कृतवान्देवदेवः ।**
**निजेनैव ज्योतिषा भक्तहृद्गतमोगूढान्यदुहन्निश्चयेन ।**
**ज्ञानानि विष्णुर्यत्तदज्ज्ञानमुग्रम् ।। १०,२ ।।**

**ऋग्भाष्यटीका– नये दिवः** । अत्र पूर्वार्धस्थपदानां य इत्यनेन सम्बन्धे त एवमिति वक्तव्यं नास्तीति न्यूनता स्यादित्यतो य इत्यतः परमध्याहार्यं प्रदर्श्य यत् श्रुतेः सिद्धेन त इत्यनेनान्विततया व्याख्याति । ये दस्यव इति । ये दस्यवो दैत्याः । स्वीयमायाभिरेव स्वछद्मभिरेव द्युपृथिव्योरशेषभोगेच्छवो द्यावापृथिवीसम्बन्धि समस्तभोगेच्छवो धनदं च तमिन्द्रमीश्वरं जिगीषवस्त इत्येतावानध्याहारः । नैवेत्यादिकं सङ्क्षेपतो व्याख्यानम् । दिवः स्वर्गस्य पृथिव्याश्चान्तमेकदेशमपि नापुः । **मायाभिः चिदपि** धनदां धनस्य दातारमिन्द्रम् । **न पर्यभूवन्** । नाजैषुः । तत्किं सहायवान् बहुभिरपि न पराजीयते । **वृषभो** वर्षिता श्रेष्ठो वेन्द्रो देवदेवो दस्यून्हन्तुमिति शेषः । **वज्रं** विष्णुज्ञानमेव । प्रसिद्धस्त्वायुधमेव । **युजं** युक्तम् ।

**चक्रे** कृतवान् । किञ्चेन्द्रो ज्योतिषा स्वप्रभावेन । गास्तमसो गिरिगुहांधकाराग्निरदुक्षत् निष्क्रामयित्वाऽधुक्षदिति । बहिः **स्पष्टम्** । विष्णुस्तु निर्निश्चयेन ज्योतिषा स्वविषयं निश्चयात्मकं ज्ञानमुत्पाद्य । **गाः** ज्ञानानि । तमस इति वचनसामर्थ्याद्भक्तहृद्गततमोगूढानि तस्मात्तमसः **अदुक्षत्** अदुहत् अधुक्षत् । आवरणनिरासेन व्यक्तानि कृतवान् । ननु तमो नाम ज्ञानाभावः स कथं ज्ञानानि गूहयेत् । तथात्वे वा कथं ज्ञानेन निवर्तेतेत्यत आह ।। **यदिति** ।। यदुग्रं मूलाविद्याख्यं भावरूपमज्ञानं तदिह तमोविवक्षितम् । तत्स्वरूपज्ञानावरणं प्रमाणज्ञाननिवर्त्यं चेति भावः ।।

**मन्त्रार्थमञ्जरी–** ये, दस्यवः दैत्याः, स्वकीयच्छद्मभिरेव द्युपृथिवीसम्बन्धिसमस्तभोगेच्छवः, इन्द्रं जिगीषवः ते दैत्याः । **दिवः** स्वर्गस्य । **पृथिव्याः** च अन्तम्, एकदेशम् । अपि न आपुः । **मायाभिः** चित् छद्मभिरपि । **धनदाम्** धनस्य दातारम्, इन्द्रम् । **न पर्यभूवन्** नाजैषुः तत्किं सहायवान्बहुभिरपि न पराजीयते ? 'न' इत्युच्यते **वृषभः** वर्षिता, श्रेष्ठो वा । इन्द्रः दस्यून्हन्तुम् इति शेषः । **वज्रम्** स्वायुधमेव, विष्णुपक्षे ज्ञानम् । **युजम्** युक्तम् । **चक्रे** कृतवान् । किं च, इन्द्रः **ज्योतिषा** स्वभावेन । गाः । **तमसः** गिरि गुहान्धकारात् । **निः अधुक्षत्** निष्क्रम्याधुक्षत्, दुग्धवान् । विष्णुपक्षे निः, निश्चयरूपेण । **ज्योतिषा** ज्ञानेन, स्वविषयं निश्चयात्मकं ज्ञानमुत्पाद्य । **गाः** ज्ञानानि, 'तमसः' इत्युक्तिसामर्थ्यात् भक्तहृद्गततमोगूढानि । तस्मात् तमसः । **अधुक्षत्** दुग्धवान्, आवरणनिरासेन व्यक्तानि कृतवान् ।। १०,२ ।।

**स्कन्द– ये** अपि असुरा दिवः **पृथिव्याः च अन्तम्** न आपुः न प्राप्नुवन्ति । द्यावापृथिव्योरेकदेशवर्तिन इत्यर्थः । न अपि **मायाभिः** प्रज्ञाभिः **धनदाम्** इन्द्रम् **पर्यभूवन्** परिभवन्ति । इन्द्रात् प्रज्ञया न्यूना इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि सह **युजम्** सम्बद्धम् **वज्रम् वृषभः** वर्षिता चक्रे चन्द्रः । तानपि वज्रेण हतवानित्यर्थः । हत्वा च **ज्योतिषा** सौरेण वैद्युतेन वा **तमसः** यत्र गुहादौ तमोरूपे स्थापितास्ततस्तेषामसुराणां स्वभूताः **गाः निः अधुक्षत्** निर्दुग्धवान् निष्कासितवानित्यर्थः । अथवा ये इति मेधानां प्रतिनिर्देशः । गा अधुक्षदित्यपि गोशब्द उदकनामा । येऽपि मेघा द्यावापृथिव्योरेकदेशवर्तिनः इन्द्राच्च न्यूनप्रज्ञास्तानपि वज्रेण हतवान् । हत्वा च वैद्युतेन ज्योतिषा तदीयात् तमसः अपो **निरधुक्षत्** क्षारितवान् ।। १० ।।

**वेङ्कटमाधव–** या आप **दिवः पृथिव्याः अन्तम् न आपुः** । **न** कर्ममि धनस्य दातारमिन्द्रं परितोऽभवन् । तासां जयार्थं सहायम् **वज्रम्** वर्षितः इन्द्रः **चक्रे** । ततः **ज्योतिषा: गाः** अप **तमसः** मेघात् **निः अधुक्षत्** दस्युं हत्वेति ॥ १० ॥

**मुद्गल–** **ये** जलविशेषाः दिव द्युलोकात् **पृथिव्याः अन्तम्** भूमे स्थानम् **न आपुः** प्राप्ता । मेघरूपमापन्नेन वृत्रेण निरुद्धत्वान् । अत एव भूमिप्राप्त्यभावात् धनदाम् धनप्रदां भूमिम् **मायाभिः** सस्योपकारादिभिः कर्मभिः **न पर्यभूवन्** परितो न व्याप्ता । जलपानस्याभिवृद्ध्याद्युपकारं न चक्रुरित्यर्थः । तदानीमयम् **इन्द्रः वृषभः** कामानां वर्षिता मेघभेदनाय **वज्रम् युजम्** स्वहस्तयुक्तम् चक्रे । ततः **ज्योतिषा** द्योतमानेन वज्रेण **तमसः** अन्धकाररूपात् मेघात् **गाः** गमनशीला-न्युदकानि **निः अधुक्षत्** निःशेषेण दुग्धवान् । मेघं भित्वा जलं दृष्टवानित्यर्थः ॥ १० ॥

**सायण–** '**ये** जलविशेषाः **दिवः** द्युलोकात् **पृथिव्याः अन्तं** भूमेः स्थानं **न आपुः** न प्राप्ताः । मेघरूपमापन्नेन वृत्रेण निरुद्धत्वात् । अत एव भूमिप्राप्त्यभावात् **धनदां** धनप्रदां भूमिं **मायाभिः** सस्योपकारादिभिः कर्मभिः **न पर्यभूवन्** परितो न व्याप्ताः । जलपानसस्याभि-वृद्ध्याद्युपकारं न चक्रुरित्यर्थः । तदानीमयम् **इन्द्रः** मेघभेदनाय **वज्रं युजं** स्वहस्तयुक्तं **चक्रे** । ततः **ज्योतिषा** द्योतमानेन वज्रेण **तमसः** अन्धकाररूपान्मेघात् । **गाः** गमनशीलान्युदकानि **निः अधुक्षत्** निःशेषेण दुग्धवान् । मेघं भित्वा जलं वृष्टवानित्यर्थः । दिवः । 'ऊडिदम्' इति षष्ठ्याः उदात्तत्वम् । आपुः । 'आप्लृ व्याप्तौ' । लिटि उसि रूपम् । यद्वत्तयोगादनिघातः । **पर्यभूवन्** । अत्रापि यच्छब्दस्यानुषङ्गात् निघाताभावः । **युजम्** । 'युजिर् योगे' । 'ऋत्विक्' इत्यादिना किन् । 'अनित्यमागमशासनम्' इति वचनात् नुमभावः । अधुक्षत् । 'दुह प्रपूरणे' । लुकि 'शलः इगुपधादनिटः क्सः' (पा.सू-३.१.४५) इति च्लेः क्सादेशः । 'दादेर्धातोर्घः' (पा.सू.१.२.३२) इति घत्वम् । 'एकाचो बशः' (पा.सू.८.२.३७) इत्यादिना भष्भावः । संहितायां भष्भावाभावश्छान्दसः ॥ १० ॥

**सिद्धाञ्जनम्–** दशमीमृचमाह । **ये** वृत्रनिरुद्धाः अब्विशेषाः **दिवः** द्युलोकात् **पृथिव्याः** भूमेः **अन्तम्** स्थानं **नापुः** न प्राप्ताः । ये च ते वृनमायावशंवदाः वृत्राभासाः भूत्वा **मायाभिः** कपटप्रज्ञाभिः वृत्रकर्मभिर्वा **धनदाम्** धनस्य ज्योतिर्बलादिगोरूपधनस्य दातारं इन्द्रं **न पर्यभूवन्** परितो न व्याप्ताः, भुवं न प्राप्ताः वृत्रनिरोधात्, दिवस्पतिं वा न व्याप्ता मायाबलेनेत्यर्थः ।

तदानीं तान् विमोच्य गाश्च लब्ध्वा दुग्धवानिन्द्र इत्याह । **इन्द्रः वृषभः** वर्षिता **वज्रम् आयुधं युजम्** युक्तं **चक्रे** कृतवान् । तथा स्वयुक्तेन वज्रेण **ज्योतिषा** स्वीयेन **तमसः** वृत्रस्य मृतशरीरभूतात् तमसः (अपादानम्) **गाः** गुहान्धकारबन्धिताः **गाः निरधुक्षत्** निश्शेषेण दुग्धवान् । **युजम्** युजिर् योगे, ऋत्विगित्यादिना किन् । **अधुक्षत्** 'दुह प्रपूरणे', लुङः दादेर्धातोर्घः इति घत्वम्, छान्दसः संहितायां भष्भावाभावः ।

अत्र सायणः यदा आपः अन्तरिक्ष एव निरुद्धा भूमिं न प्राप्ताः, धनप्रदां भूमिं सस्योपकारादिकर्मभिः न व्याप्ताः तदा इन्द्रः मेघं भित्वा जलं वृष्टवान् इति व्याचष्टे । अस्यानुकूलाः पदार्था एवमुक्ताः तमस अन्धकाररूपात् मेघात्, गाः 'गमनशीलानि उदकानि' इति । तथा 'धनदां भूमिं' इत्यादि च चिन्त्यम् । अपां बन्धविमोचने गावश्च विमुक्ताः इति बहुशः मन्त्रवर्णाः भवन्ति, कथं तर्हि गाव एव आप इति कथ्यते ? सूक्तान्ते तात्पर्यविचारे क्रियमाणे सर्वोऽप्येवंविधः क्लेशो निर्धुतः स्यात् ॥ १० ॥

**॥ इति प्रथमाष्टके तृतीयाध्याये द्वितीयो वर्गः ॥**

## ऋक्संहिता पदपाठसहिता

**अनु स्वधामक्षरन्नापो अस्याऽवर्धत मध्य आ नाव्यानाम् ।**
**सध्रीचीनेन मनसा तमिन्द्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥ ११ ॥**

**अनु । स्वधाम् । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानाम् ।**
**सध्रीचीनेन । मनसा । तम् । इन्द्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥ ११ ॥**

## ऋग्भाष्यम्

**यस्य कर्माण्यक्षरन्सौख्यमेव ।**

**यो वेदवाचां सृतिनावात्मकानां मध्येऽवर्धदयथा ज्ञानरूपः ।**
**समीचीनज्ञानतोऽहंस्तमीश ओजिष्ठेन हतिरूपेण सम्यक् ॥ १७ ॥**

**मोक्षप्रकाशार्थमथापि नावा तरणीयानां मध्यतोऽपां वृधं तम् । अहिं वै ॥११॥**

**ऋग्भाष्यटीका–** अनुस्वधाम् । एकवाक्यतासिद्धये यच्छब्दाध्याहारेण व्याख्याति

।। यस्येति ।। यस्यास्येन्द्रस्य । **आपः** कर्माणि । **स्वधां** सौख्यमेवान्वक्षरन् । सन्ततमदुः । यदीयव्यापारज्ञानादिना परमानन्दावाप्तिर्भवति स एवम्भूत इन्द्र ईश । योऽयथाज्ञानरूपो विरोधी । **नाव्यानां** स्वार्थे यत्प्रत्ययः । नावांसं सृतिनावात्मकानां संसारसागरतरणोपायानां वेदवाचां मध्येऽवर्धत । मिथ्याज्ञानमपि ह्यन्यथाव्याख्याताद्वेदादेव भवति । तमोजिष्ठेन वीर्यवता । **हन्मना** करणे मनिन् । (हेति) हतिरूपेण अनर्थनिबर्हणेन । सध्रीचीनेन मनसा समीचीनज्ञानतः । आसम्यगहन् । किमर्थम् । **अभि द्यून्** । अभितो द्यौः प्रकाशः प्रसिद्धिर्येषां पुरुषार्थानां तानुद्दिश्य-मोक्षप्रकाशार्थम् । अनेनैकस्मिन्नेव मोक्षे व्यत्ययेन बहुवचनम् । नित्यसिद्धत्वान्मोक्षस्य प्रकाश एव प्राप्तिरित्युक्तं भवति । अथापि प्रसिद्धेन्द्रपक्षे नाव्यानां नौवयोधर्मेत्यादिना नावस्तार्ये यत् । नावातरणीयानामगाधानामपामिति शेषः । मध्यतो वृधं वृद्धं तमहिमिति व्याख्येयम् । अन्यत्समानम् । उपलक्षणमेतत् । सध्रीचीनेन मनसा निर्भयेन हृदयेन । **हन्मना** युद्धेनेत्यपि व्याख्यातव्यम् । अस्य प्रसिद्धताद्योतनार्थो वैशब्दः ।। ११ ।।

**मन्त्रार्थमञ्जरी–** यस्य **अस्य** इन्द्रस्य । **आपः** कर्माणि । **स्वधाम्** सौख्यम् । **अनु अक्षरन्** संततमदुः, यदीयव्यापारज्ञानादिना परमानन्दावाप्तिर्भवति । सः एवं भूतः । **इन्द्रः** ईशः यः अयथार्थज्ञानरूपो विरोधी । **नाव्यानाम्** स्वार्थे यत्प्रत्ययः, नावाम्, सृतिनावात्म(त्मि)कानां संसारतरणोपायानां वेदवाचाम् । **मध्ये अवर्धत** मिथ्याज्ञानमप्यन्यथाव्याख्याताद्वेदाद्भवति । तम् । **ओजिष्ठेन** वीर्यवता । **हन्मना** करणे मनिन्, हतिरूपेणानर्थनिबर्हणेन । सध्रीचीनेन **मनसा** समीचीनेन ज्ञानेन । **आ** सम्यक् । **अहन्** हतवान् । किमर्थम् ? **अभि द्यून्** अभितो द्यौः प्रकाशः प्रसिद्धिर्येषां पुरुषार्थानां तानुद्दिश्य, मोक्षप्रकाशार्थम्, एकस्मिन्नपि मोक्षे व्यत्ययेन बहुवचनम्, नित्यसिद्धत्वान्मोक्षस्य प्रकाश एव प्राप्तिः इत्युक्तं भवति । इन्द्रपक्षे तु **नाव्यानाम्** नावा तरणीयानाम् । अपाम् इति शेषः । मध्ये यः अवर्धत । **तम्** अहिम् । इति तथा '**सध्रीचीनेन मनसा**, निर्भयेण हृदयेन । **हन्मना** आयुधेन ।' इति च व्याख्येयम् । अन्यत्समानम् ।। ११ ।।

**स्कन्द–** अनुशब्दो लक्षणे कर्मप्रवचनीयः । 'स्वधा' (निघ.१,१२) इति उदकनाम । यत् पूर्वपतितमुदकं तत् प्रति **अक्षरन्** क्षरितवस्यः क्षरन्ति वा **आपः अस्य** इन्द्रस्य स्वभूताः प्रसादेन वा । अनुपक्षीणायामेव पूर्ववृष्टौ पुनरपि अवर्षन् वर्षितव्या इत्यर्थः । अथवा अन्विति

पश्चाद्भावे । 'स्वधा' (निघ.२,७) इत्यप्यन्ननाम । अस्येत्येतच्च स्वयाम् इत्येतेन सम्बध्यते । अस्य इन्द्रस्य स्वभूतां हविर्लक्षणां स्वधामनु तदीयस्य हविषः पश्चात् । यदाऽस्मै हविर्दीयते तद्दानानन्तरमित्यर्थः । अक्षरन् । किमक्षरन् । आपो वृष्टिलक्षणाः । कथं पुनर्मेघेन निरुद्धाः सत्योऽक्षरन् । **अवर्धत मध्ये आ** आ इत्येषः अवेत्येतस्य स्थाने । **सध्रीचीनेन मनसा** तम् इति तच्छब्दात् यच्छब्दोऽत्राध्याहार्यः । यो मेघो वृष्टिनिरोधाभिप्रायेणावर्धत मध्येऽवस्थितानामपाम् अव अधः । कियतीनाम् । **नाव्यानाम्** नावा तार्याणाम् । अत्यन्तबह्वीनामित्यर्थः । सध्रीचीनेन सह अञ्चति गच्छतीति सध्रीचीनो वज्रः तेन सध्रीचीनेन सहगामिना वज्रेण । केन सहगामिना । मनसा । यत्रैव मनो गच्छति तत्रैव गन्त्रा । यत्र मनसा इष्यते तत्र निपततेत्यर्थः । तं मेघम् इन्द्रः । कीदृशेन वज्रेण । **ओजिष्ठेन** बलवत्तमेन **हन्मना** हन्त्रा मेघानाम् । **अहन्** हतवान् । '**अभि द्यून्** दिवसान् प्रति । येषु वार्षिकेष्वहस्सु हन्तुं योग्यस्तेष्वित्यर्थः ।।११।।

**वेङ्कटमाधव–** वृत्रे हते इन्द्रस्य '**आपः स्वधाम् मधु अक्षरन्**' । अयश्चेन्द्रो नावा तार्याणामपाम् **मध्ये अवर्धत** । सहायभूतेनानुगुणेन धृष्टेन **मनसा** बलवत्तमेन हननसाधनेन हतवान् असुरं दिवसेषु तेष्विति ।। १२ ।।

**मुद्गल–** **आपः** जलानि **अस्य** इन्द्रस्य **स्वधाम्** अन्नं व्रीह्यादिरूपम् **अनु** अनुलक्ष्य **अक्षरन्** **मेघाद्** वृष्टा अम्भवत् । तदानीमयं वृत्रः **नाव्यानाम्** नावा तरणयोग्यानां बह्वीनाम् अपाम् **मध्ये आ** समन्तात् **अवर्धन्त** वृद्धिं प्राप्तः । प्रभूतजले वर्तमानोऽपि न ममार, किन्तु अभिवृद्ध एव । तदानीम् **इन्द्रः सध्रीचीनेन** सह गच्छता **मनसा** युक्तम् **तम्** वृत्रम् **ओजिष्ठेन** अतिबलयुक्तेन **हन्मना** हननसाधनेन वज्रेण **अभि द्यून्** कतिचिद्दिवसान् अभिलक्ष्य **अहन्** तेषु दिवसेषु हतवान् । जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेन्द्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिज्ञाय हतवानित्यर्थः ।। ११ ।।

**सायण–** **आपः** जलानि **अस्य** इन्द्रस्य **स्वधाम्** अन्नं व्रीह्यादिरूपमनुलक्ष्य **अक्षरन्** मेघाद्वृष्टा अभवन् । तदानीमयं वृत्रः **नाव्यानां** नावा तरणयोग्यानां बह्वीनामपां **मध्ये आ** समन्तात् **अवर्धत** वृद्धिं प्राप्तः । प्रभूतजले वर्तमानोऽपि न ममार किन्तु अभिवृद्ध एव । तदानीम् '**इन्द्रः सध्रीचीनेन** सहगच्छता **मनसा** युक्तं **तं** वृत्रम् **ओजिष्ठेन** अतिबलयुक्तेन **हन्मना** हननसाधनेन वज्रेण **अभि द्यून्** कतिचिद्दिवसानभिलक्ष्य अहन् तेषु दिवसेषु हतवान् ।

जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेन्द्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिज्ञाय सं हतवानित्यर्थः ।

अक्षरन् । 'क्षर संचलने' । **नाव्यानाम्** नावा तार्याणाम् । 'नौवयोधर्म'(पा. सू.४.४.९१) इत्यादिना यत् । 'वान्तो यि प्रत्यये' (पा.सू.६.१.७९) इति आवादेशः । अनावः' (पा.सू. ६.१.२१३) इति पर्युदासात् 'तिरस्वरितम्' इति प्रत्ययस्वरितत्वम् । सध्रीचीनेन । सहाञ्चतीति सध्र्यङ् । 'सहस्य सध्रिः' (पा.सू.६.३.९५) इति सध्र्यादेशः । 'विभाषाञ्चेरदिक् स्त्रियाम्' (पा.सू.५.४.८) इति स्वार्थे खप्रत्ययः । तस्य 'आयन्...' (पा.सू.७.१.२) इत्यादिना ईनादेशः । 'अचः' (पा.सू.६.४.१३८) इति अकारलोपे 'चौ' (पा.सू.६.३.१३८) इति दीर्घत्वम् । खादेशस्य उपदेशिवद्वचनात् ईकार उदात्तः । ओजिष्ठेन । ओजोऽस्यास्तीति ओजस्वी । 'अस्मायामेधा' (पा.सू.५.२.१२१) इति विनिः । तत आतिशायनिकः इष्टन् । 'विन्मतोर्लुक्' (पा.सू.५.३.६५) इति विनो लुक् । 'टेः' इति टिलोपः । नित्त्वादाद्युदात्तत्वम् । **हन्मना** । हन्यतेऽनेनेति हन्म । 'अन्येभ्योऽपि दृश्यन्ते' इति दृशिग्रहणात् करणेऽपि मनिन् । नित्त्वादाद्युदात्तत्वम् । तृतीयैकवचने अल्लोपे प्राप्ते 'न संयोगाद्वमन्तात्' (पा.सू.६.४.१३७) इति प्रतिषेधः ।। ११ ।।

**सिद्धाञ्जनम्– अस्य** इन्द्रस्य **स्वधाम् अनु** स्वधापदवाच्यं स्वधारणसामर्थ्यरुपं स्वभावं अनुरुध्य, इन्द्रविभवसम्पोषकतत्स्वभावानुरोधनेत्यर्थः **आपः अक्षरन्** स्यन्दमाना आसन् । तत्रापि तथा इन्द्रानुकूलासु प्रवाहिणीषु अप्सु, **नाव्यानाम्** नावा तार्याणामपां मध्ये अधः पतितोऽपि वृत्रः **आ** समन्तात् **अवर्धत** वृद्धिं प्राप्तः । तदा इन्द्रः **सध्रीचीनेन** सह गच्छता **मनसा** यत्रेन्द्रः स्थितस्तत्रैव गच्छता मनसा युक्तं **तम्** वृत्रं ओजिष्ठेन बलिष्ठेन **हन्मना** हननसाधनेन वज्रेण **अभि द्यून्** कतिपयदिवसान् अभिलक्ष्य **अहन्** हतवान् । स्वधाम् गतम् (१.६.४) । नाव्यानाम् अपां, गभीरत्वप्रभृतत्वद्योतनायेदं अपां विशेषणम्, अधः पतित्वा मग्नस्य वृत्रस्य उन्मज्जनं सुकरमिति गम्यम् । सध्रीचीनेन सहस्य सध्रिरादेशः, सह अञ्चतीति सध्र्यङ्, ततः खप्रत्ययः स्वार्थे, तस्य ईनादेशः । **ओजिष्ठेन** ओजोऽस्यास्तीति ओजस्वी, आतिशायनिक इष्ठन् विन्मतोलुक् इति विनः टिलोपः । **हन्मना** हन्यते अनेनेति हन्म करणे मनिन् । द्यून् अभिद्युरिति अहर्नाम अभि कर्मप्रवचनीयम् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

न्यविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ।। १२ ।।
नि । अविध्यत् । इलीबिशस्य । दृळ्हा । वि । शृङ्गिणम् । अभिनत् । शुष्णम् । इन्द्रः ।
यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुम् । अवधीः । पृतन्युम् ।।

## ऋग्भाष्यम्

........इळिनो भूस्थिताः स्युस्तत्राविशन्नसुरो नाम तस्य ।।

इळीबिशस्तस्य दृढानि यानि बलादीनि न्यहनत्तानि देवः ।
तमसो वा भृङ्गिणं शोषकं च वृषरूपं दैत्यमहन्नथो वा ।।

कामं यावच्छक्तितो विक्रमाद्वा वेगेन वा शत्रुमथो पृतन्युम् ।
जघन्थ वज्रेण सुबोधतो वा न शक्तिसामस्त्यमिहोदितं हरेः ।।

अनन्तशक्तिर्हि हरिः सदैव कुत एव शत्रुस्तदमुष्य कोऽपि ।
अतो यथा शक्त्यभियुध्यमानं शत्रुं जघन्थेति महानिहार्थः ।। १२ ।।

**ऋग्भाष्यटीका–** न्या विध्यत् । इलिनः । भूस्थिता मनुष्याः इलिनः स्युः इला भूः साऽस्त्येषामाश्रय इति व्रीह्यादित्वादिनिः । तत्र तेष्वाविशन्यो सुरस्तस्येलिबिश इति नाम । इलिनो विशतीति इगुपधलक्षणः कः । उपपददैर्घ्यं वस्य बत्वं च छान्दसम् । इन्द्रो देवस्तस्येलीविशस्यासुरस्य । दृळ्हा यानि दृढानि । बलादीनीति शेषः । तानि । **न्यविध्यत्** अहनत् अनाशयत् । **इलीविशस्य** इत्यस्य तमसोऽज्ञानस्येति वार्थः । तदपि हि मानुषान्प्रविष्टम् । अन्यद्विष्णौ समानम् । किञ्च इन्द्रः **शुष्णं** शुषेर्नक् शोषकम् । जनानां दुःखहेतुम् । **भृङ्गिणं** वृषरूपं च दैत्यम् । **व्यभिनत्** अहन् । अथोवा अध्यात्मम् । विष्णुः कामं व्यभिनदित्यर्थः । कामातुरा अपि शुष्यन्तीति सोऽपि शुष्णः । वृष इवादम्य इति भृङ्गी च । परोक्षतःस्तुत्वाऽपरोक्षतः स्तौति । **हे मघवन् यावत्तरः** यावान् स्वस्य वेगोऽस्ति तावता वेगेन । **यावदोजः** यावच्छक्तितो वा स्वस्य विद्यमानाद्विक्रमाद्वा । ओजः शब्दस्योभयार्थत्वात् । **पृतन्युं** युध्यन्तम् । अथो अन्यमपि शत्रुं वज्रेणावधीर्जघन्थ । वज्रेणेत्यस्य सुबोधत इति वार्थः ।

अत्र हे मघवन्विष्णो । यावत्तरो यावांस्ते वेगोऽस्ति तावता समस्तेन । यावदोजो यावती शक्तिरस्ति तया समस्तया । यावद्वीर्यमस्ति तेन समस्तेन । शत्रुं क्रोधादिकम् । अवधीरिति शत्रुवधे हरेः शक्त्यादिसामस्त्यप्रयोगोऽप्यर्थः प्रतीयते । यावदवधारण इति स्मरणात् । तां प्रतीतिं निराकरोति । **नेति** । शक्तिसामस्त्यमिति वेगादेरप्युपलक्षणम् । कुतो नेत्यत आह ।। अनन्तेति ।। हि यस्मात्तत्तस्मात् । यस्मिन्समस्तं शक्त्यादिकं प्रयुञ्जीतेति शेषः । यत एवमतः पूर्वोक्त एवार्थ इत्युपसंहारव्याजेनोक्तं विवृणोति ।। अत इति ।। महान्प्रमाणाविरुद्धस्तदनुसारी च । इन्द्रेऽप्येवमेव योजना ।। १२ ।।

**मन्त्रार्थमञ्जरी–** **इन्द्रः** प्रसिद्धेन्द्रः । इलीबिशस्य, इळा भूमिरेषामस्त्याश्रयत्वेनेतीळिनो भूमिस्था मनुष्याः, व्रीह्यादित्वादिनिः, तान्विशतीतीळीविशः, 'इगुपधज्ञाप्रीकिरः कः' इति कः, उपपददैर्घ्यं ळस्य लत्वं वस्य बत्वं च च्छान्दसम्, तस्यासुरस्य । **दृह्ळा** दृढा, दृढानि । यानि बलादीनि इति शेषः । (तानि) नि **अविध्यत्** अनाशयत् । विष्णुश्चेत् **इलीबिशस्य** मनुष्यगताज्ञानादेः । बलादीनि **नि अविध्यत्** नि अविध्यत् इत्यर्थः । किं च, इन्द्रः । **शुष्णम्** शुषेः नक्, शोषकम्, जनानां दुःखहेतुम् । **शृङ्गिणम्** वृषरूपं च दैत्यम् । **वि अभिनत्** अहन् । विष्णुश्चेत् शृङ्गिणम् कामम् । वि अभिनत् इत्यर्थः, कामातुरा अपि शुष्यन्तीति सोऽपि शुष्णो वृषभ इवादम्य इति शृङ्गी च । परोक्षतः स्तुत्वाऽपरोक्षतः स्तौति हे मघवन् । यावत् तरः, यावान्स्वस्य वेगोऽस्ति तावता वेगेन । **यावत् ओजः** यावच्छक्तिर्यावद्विक्रमस्तावता । अथान्यम् पृतन्युम् युध्यन्तम् । अपि शत्रुम् वज्रेण । **अवधीः** जघन्थ । 'वज्रेण' इत्यस्य 'सुज्ञानेन' इति चार्थः ।। १२ ।।

**स्कन्द–** कस्य चित् तावत् **नि अविध्यत्** निष्कृष्य विद्धवान् । कस्य । **इलीबिशस्य** इलीविशो मेघः । कथम् । 'इळा' (निघ.२,७) इति अन्ननाम । बिशशब्दो बिस्यतेः । बिस्यतिश्च भेदनकर्मा वृद्धिकर्मा वा । एवं ह्याह– बिसं बिस्यतेर्भेदनकर्मणो वृद्धिकर्मणो वा' (या.२.२४) इति । अथवा 'पिस्यति, बिस्यति, मिस्यति'(निघ.२,१४) इति गतिकर्मसु पाठात् बिस्यतिर्गत्यर्थः । बीजरूपमन्नमुद्भिनत्ति वर्द्धयति उदकरूपो वा भूत्वा गच्छतीति इळाबिसः । इळाबिस सन्निलीबिश उच्यत । छान्दस ईकारः शकारश्च । अथवा इळा-शब्दोऽत्रान्नहेतुत्वादुदके वर्तते । बिशशब्दोऽप्येकदेशलोपेन बिलशयशब्दस्यार्थे । अन्नहेतोरुदकस्य

बिलेषु शेते तान्यप्यावृत्य तिष्ठतीति इलीविशो मेघ तस्य । दृळ्हा दृढानि दुर्व्वधानि । कानि । सामर्थ्यात् उदकनिर्गमनबिलानि । कश्चित्तु **शृङ्गिणम्** दीप्तिमन्तं मेघम् **वि अभिनत्** विविधं भिन्नवान् । विदारितवानित्यर्थः । कीदृशम् । **शुष्णम्** बलनामैतत् (निघ.२,९) । सामर्थ्या-च्चात्रान्तर्णीतमत्वर्थः । बलवन्तम् । कः । **इन्द्रः** । कस्यचिन्मेघस्य बिलान्युद्घाटितवान् । कश्चित्तु शतशर्करं भग्नवानित्यर्थः । अथवा **'शुष्णं पिप्रुं कुयवं वृत्रम्'** (ऋ.१,१०३,८) इत्यादिषु दर्शनात् शुष्णो नामासुरः । तं विविधं भिन्नवान् विदारितवान् मारितवान् इत्यर्थः । शुष्ण-सम्बन्धाच्च इलिबिशोऽप्यसुर एव । तस्य स्वभूतानि दृढानि पुराणि निरविध्यत् । व्यध ताडने । निर्भिद्य ताडितवान् । हतवानित्यर्थः । परोऽर्धर्च प्रत्यक्षकृतो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । **यावत् तरः** शरीरसामर्थ्यलक्षणं बलम् **हे मघवन् !** धनवन् । **यावत्** च **ओजः** सेनालक्षणं बलम् । यावदित्युद्देशात् तावदित्यध्याहार्यः । तावता सर्वेण युक्तस्त्वम् । वज्रेण शत्रुम् अवधीः अस्मदीयं वा जहि **पृतन्युम्** सङ्ग्रामकामम् ॥ १२ ॥

**वेङ्कटमाधव– निः अविध्यत्** उदकस्य निर्गमनद्वारमावृत्य शयानस्य दृढानि द्वाराणि मेघस्य । तेजस्विनं शुष्णासुरञ्च वि **अभिनत् इन्द्रः** । **यावत्** वेगः **यावत्** च बलं मघवन् तत् सर्वमादाय पृतनाकामम् **शत्रुम्** शुष्णम् **अवधीः** ॥ १२ ॥

**मुद्गल– इलीबिशस्य** इळायाः भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि **दृळ्हा** दृंहितानि असुरेण निरुद्धानि प्रभूतानि उदकानि इन्द्रः **नि अविध्यत्** नितरां विद्धवान् । तत ऊर्ध्वम् **शृङ्गिणम्** गोमहिष्यादिशृङ्गसमानैः आयुधैरुपेतम् **शुष्णम्** जगतः शोषकं वृत्रम् **वि अभिनत्** विविधं ताडितवान् । **हे मघवन्** इन्द्र! तव **यावत् तरः** यावत्तेजोऽस्ति **यावत् ओजः** यावद् बलमस्ति तेन सर्वेण युक्तस्त्वम् **पृतन्युम्** पृतनां युद्धमिच्छन्तम् **शत्रुम्** वृत्रम् **वज्रेण अवधीः** हतवान् ॥ १२ ॥

**सायण– इलीविशस्य** इलाया भूमेर्बिले शयानस्य वृत्रस्य सम्बन्धीनि । 'इलाबिलशयस्य' (निरु.६.१९) इति यास्कः । **दृळ्हा** दृंहितानि असुरेण निरुद्धानि प्रभूतान्युदकानि **इन्द्रः न्यविध्यत्** नितरां विद्धवान् । यद्वा । दृळ्हानि प्रबलानि सैन्यानि नितरां विद्धवान् । तत ऊर्ध्वं **शृङ्गिणं** गोमहिषादिशृङ्गसमानैरायुधैरुपेतं **'शुष्णं** जगतः शोषकं वृत्रं **वि अभिनत्** विविधं

ताडितवान् । हे **मघवन्** धनयुक्तेन्द्र तव **यावत्तरः** यावान् वेगोऽस्ति **यावदोजः** यावद्बलमस्ति तेन सर्वेण युक्तस्त्वं **पृतन्युं** पृतनां युद्धमिच्छन्तं **शत्रुं** वृत्रं **वज्रेण अवधीः** हतवानसि ।

**अविध्यत्** । 'व्यध ताडने' । श्यनि 'ग्रहिज्या......' इत्यादिना सम्प्रसारणम् । 'तिङ्ङतिङः' इति निघाते 'उदात्तस्वरितयोर्यणः' इति संहितायाम् अडागमस्य स्वरितत्वम् । **इलीबिशस्य** । पृषोदरादित्वात् अभिमतरूपस्वरसिद्धिः । **दृळ्हा** । 'दृंहेर्निष्ठायां' 'दृढः स्थूलबलयोः' (पा.सू.७.२.२०) इति निपात्यते । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **अभिनत्** । **'भिदिर् विदारणे'** । लङि 'रुधादिभ्यः श्नम्' । 'इतश्च' (पा.सू.३.४.१००) इति इकारलोपे 'हल्ङ्याभ्यो....' इति तिलोपः । **शुष्णम्** । 'शुष शोषणे' । शोषयतीति शुष्णः । तृषिशुषिरसिभ्यः किच्च' (उ.सू.३.३९२) इति नप्रत्ययः । 'नित्' इत्यनुवृत्तेरा-द्युदात्तत्वम् । **अवधीः** । 'लुङि च' (पा.सू.२.४.४३) इति हन्तेर्वधादेशः । **पृतन्युम्** । पृतना-शब्दात् क्यचि 'कव्यध्वरपृतनस्य' इति अन्त्यलोपः । 'क्याच्छन्दसि' इति उप्रत्ययः ।।१२।।

**सिद्धाञ्जनम्– इलीबिशस्य** इलाबिलशयस्य, तस्मादेतदाख्यस्य असुरस्य **दृळ्हा** दृढानि, अभेद्यानि वासस्थानानि इन्द्रः **न्यविध्यत्** नितरां विद्धवान् । **शृङ्गिणम्** आयुधस्थानीयविषाणयुक्तं, दर्पात् शरीरैकदेशेन दृढप्रहारकुशलं **शुष्णम्** रसशोषकं, अत एव एतदाख्यं असुरं **व्यभिनत्** विविधं मर्दितवान् । मघवन् धनयुक्त इन्द्र, **यावत् तरः** तव यावान् वेगः **यावत् ओजः** यावद्बलं तत्सर्वं प्रयुज्य त्वं **पृतन्युम्** पृतनामिच्छन्तं युद्धेच्छुम् **शत्रुम्** वृत्रं **वज्रेण अवधीः** हतवानसि । इलीबिशः शुष्णश्च वृतान्नान्याविति मत्वा तदनुसारेण सायणव्याख्या चलति । 'शुष्णमवातिरः' (१.११.७) इत्यत्र व्याख्याऽवधेया । इलीबिशस्यपृषोदरादित्वात् अभिमतरूपसिद्धिः । पृतन्युम् पृतनाशब्दात् क्यचि छन्दसि उप्रत्ययः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**अभि सिध्मो अंजिगादस्य शत्रून् वि तिग्मेनं वृषभेणा पुरोंऽभेत् ।**
**सं वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमंतिरच्छाशंदानः ।। १३ ।।**

**अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेनं । वृषभेणं । पुरः । अभेत् ।**
**सम् । वज्रेण । असृजत् । वृत्रम् । इन्द्रः । प्र । स्वाम् । मतिम् । अतिरत् । शाशंदानः ।।**

## ऋग्भाष्यम्

**ससर्वतः सिद्धियुतः सदैव जिगाय जीवारिगणान्पुरश्च ।**
**संसाररूपा अभिनद्वृषेण प्राणेन तिग्मेन विरोधिनः प्रति ।**
**संयोजयामास वज्रेण वृत्रं ज्ञानेन वाऽज्ञानममुष्य हत्यै ।**
**मतिं च स्वामदिशत्स्वप्रजाभ्यः सशाशदानः सुसुखी सर्वदैव ।। १३ ।।**

**ऋग्भाष्यटीका– अभिसिध्मः** । स सर्वतः । अभिसर्वतः सर्वस्मिन्देशे सदैव वा । सिद्धियुतः सिद्धेर्भावे क्विप् । ततो मत्वर्थे मः । स परमेश्वरोऽस्य जीवजातस्य शत्रून् जीवारिगणान्कामादीन् **अजिगात्** अजयत् जिगाय । अलाक्षणिकं छान्दसम् । किञ्च । विरोधिनः प्रति तिग्मेन क्रूरेण । **वृषभेण** वृषेण जीवश्रेष्ठेन प्राणेन । प्राणिनां संसाररूपाः पुरो व्यभेत् अभिनत् । संसाररूपं लिङ्गं हि प्राणिनां पुरमिव । तच्च प्राणोपदेशादि द्वारेश्वरो भिनत्ति । इन्द्रस्त्वस्य लोकस्य शत्रून्दैत्यानजयत् । **वृषभेण** वर्षणाङ्गेन तिग्मेन तीक्ष्णेन वज्रेण शम्बरस्य पुरोऽभिनदिति स्पष्टम् । किञ्चेन्द्रो वृत्रं वज्रेण **समसृजत्** संयोजयामास । अमुष्य वृत्रस्य हत्या इति शेषः । न हि दारुसंयोगं विना कुठारेण तद्यते । ईश्वरस्तु वृत्रमज्ञानं वज्रेण ज्ञानेन संयोजयामास । समानविषयं चकारेति व्याख्येयम् । अमुष्यहत्या इत्यत्रापि समम् । किञ्च । **शाशदानः** अतिशयितं शं शशं तस्यादनो भोक्ता शशादनः । व्यत्ययेन शाशदानः । सदैव सुसुखी स इन्द्रः । **स्वां** स्वविषयां **मतिं** प्रातिरत् । अदिशत् दत्तवान् । स्वप्रजाभ्य इति शेषः ।। १३ ।।

**मन्त्रार्थमञ्जरी– अभि सिध्मः** अभितः सर्वतः सर्वस्मिन्देशे सर्वदैव वा सिध्मः सिद्धियुतः, 'षिध गत्याम्' इत्यतो भावे क्विप्, ततो मत्वर्थे मप्रत्ययः । (सः) परमेश्वरः । **अस्य** जीवजातस्य । **शत्रून्** कामादीन् । **अजिगात्** अजयत्, यकारस्य गाभावो जकारस्य जित्वं च च्छान्दसम् । किं च, विरोधिनः प्रति **तिग्मेन**, क्रूरेण । **वृषभेण** जीवश्रेष्ठेन, प्राणेन । प्राणिनां संसाररूपाः पुरः । **वि अभेत्** अभिनत्, विकरणलोपश्छान्दसः, संसाररूपं हि लिङ्गं प्राणिनां पुरमिव, तच्च प्राणोपदेशादिद्वारेणेश्वरो भिनत्ति । इन्द्रस्तु- **अस्य** लोकस्य । **शत्रून्** । **अजिगात्** अजयत् । **वृषभेण** वर्षणस्याङ्गेन । **तिग्मेन** तीक्ष्णेन । **वज्रेण** शम्बरस्य पुरः । **वि अभेत्** अभिनत् । इति ज्ञेयम् । किं च, इन्द्रः वृत्रम् वज्रेण । सम् असृजत्, संयोजयामास । अमुष्य

वृत्रस्य हत्यर्थम् इति शेषः । न हि दारुसंयोगं विना कुठारेण तच्छिद्यते । ईश्वरस्तु वृत्रम्, अज्ञानम् । **वज्रेण** ज्ञानेन । **सम् असृजत्** संयोजयामास, मानविषयं करोति । अज्ञानहत्यर्थम् इति व्याख्येयम् । किं च, **शाशदानः**, अतिशयितं शंसुखं शशम्, तस्यादनो भोक्ता, कर्तरि ल्युट्, शशादनः, व्यत्ययेन शाशदानः, सदैव सुसुखी । सः इन्द्रः । **स्वाम्**, स्वविषयाम् । **मतिम्** । प्र अतिरत्, अदिशत्, दत्तवान् । स्वप्रजाभ्यः इति शेषः ।। १३ ।।

**स्कन्द– सिध्मः** साधयितेन्द्रः **अभि अजिगात्** अभिगतवान् । किम् । **अस्य** एवेन्द्रस्य **शत्रून्** । अथवा सिध्म इति वज्र उच्यते । साधयिता वज्रः अभ्यजिगादस्येन्द्रस्य शत्रून् । अभिगतेन च तेन वज्रेण **तिग्मेन** तीव्रेण **वृषभेण** वर्षित्रा तेषां शत्रूणां स्वभूताः पुरः नगराणि **वि अभेत्** विविधं भिन्नवान् । विनाशितवानित्यर्थः । किञ्च **सम् वज्रेण असृजत्** समसृजत् संसर्जितवान् । सम्बन्धितवानित्यर्थः । कम् । **वृत्रम्** असुरम् । कः । **इन्द्रः । प्र स्वाम् मतिम् अतिरत्** मतिमिति मन्यतेरर्चतिकर्मणो रूपम् । अतिरदित्यपि तिरतिर्वृद्ध्यर्थः । आत्मीयां स्तुतिं प्रकर्षेणावर्धयत् । **शाशदानः** पुनःपुनरसुरान् तत्पुराणि च शातयन् । यो हीदृशं कर्म पुनः पुनः करोति स तत्कर्मसम्बद्धा आत्मीयस्तुतीः वर्धयति । अथवा मतिरिति प्रज्ञैवोच्यते । स्वप्रज्ञामवर्धयदिति । यो हि यन्नित्यं करोति तस्य तत्र प्रज्ञाकौशलं वर्धते ।। १३ ।।

**वेङ्कटमाधव–** साधयिता कर्मणामिन्द्रः **अस्य** शुष्णस्य शातयितव्यान् सहायान् **अभि अजिगात्,** वि अभिनच्च वज्रेण कामानां वर्षित्रा पुराणि । **वज्रेण वृत्रम्** सम् अयोजयत् इन्द्रः । अवर्धयत् **स्वाम् मतिम्** शत्रुपुराणि शातयन् ।। १३ ।।

**मुद्गल– अस्य** इन्द्रस्य **सिध्मः** साधको वज्रः **शत्रून् अभि** इन्द्रवैरिणोऽभिलक्ष्य **अजिगात्** गतवान् । स च इन्द्रः **तिग्मेन** तीक्ष्णेन **वृषभेण** श्रेष्ठेन आयुधेन तेन **वज्रेण पुरः** वृत्रस्य पुराणि **वि अभेत्** विविधं भिन्नवान् । ततः स इन्द्रः वज्रेण स्वकीयेन **वृत्रम् सम् असृजत्** संयोजितवात्, संयोज्य च **शाशदानः** वृत्रं हिंसन् **स्वाम् मतिम्** स्वकीयां हर्षोपेताम् बुद्धिम् **प्र अतिरत्** प्रकर्षेण वर्धितवान् ।। १३ ।।

**सायण– अस्य** इन्द्रस्य **सिध्मः** साधको वज्रः **शत्रून् अभि** इन्द्रवैरिणोऽभिलक्ष्य **अजिगात्** गतवान् । जिगातिर्गतिकर्मा । गाति जिगाति' (नि.२.१४.११३) इति गतिकर्मसु पाठात् ।

स च इन्द्रः तिग्मेन तीक्ष्णेन **वृषभेण** श्रेष्ठेनायुधेन तेन **वज्रेण पुरः** वृत्रस्य पुराणि **वि अभेत्** विविधं भिन्नवान् । ततः सः **इन्द्रः वज्रेण** स्वकीयेन वृत्रं **सम् असृजत्** संयोजितवान् । संयोज्य च **शाशदानः** वृत्रं हिंसन् **स्वां मतिं** स्वकीयां हर्षोपेतां बुद्धिं **प्र अतिरत्** प्रकर्षेण वर्धितवान् ।

**सिध्मः** । 'षिधु संराद्धौ' । अस्मात् औणादिको मक् । कित्त्वादगुणः । प्रत्ययस्वरः । अजिगात् । 'गा स्तुतौ' । अत्र तु गत्यर्थः । जुहोत्यादित्वात् श्लुः । द्विर्भावे 'बहुलं छन्दसि' इत्यभ्यासस्य इत्वम् । **तिग्मेन** । 'युजिरुचितिजां कुश्च' (उ.सू.१.१४३) इति मक् । कुत्वम् । **वृषभेण** । 'ऋषिवृषिभ्यां कित्' (उ.सू.३.४०३) इत्यनेन अभच् । **अभेत्** । 'भिदिर् विदारणे' श्नमि प्राप्ते व्यत्ययेन शप् । तस्य 'बहुलं छन्दसि' इति लुक् । लघूपधगुणे 'हल्ङ्याभ्यः....' इति लोपः । यद्वा । लुङि च्लेलुक् । **अतिरत्** । प्रपूर्वस्तिरतिर्वर्धनार्थः । यद्वा । तरतेर्व्यत्ययेन शः । 'ऋत इद्धातोः' इति इत्वम् । **शाशदानः** । 'शद्लृ शातने' । अस्मात् यङन्तात् शानच् । तस्य 'छन्दस्युभयथा' इति आर्धधातुकत्वात् अतोलोपयलोपौ । सार्वधातुकत्वात् 'अभ्यस्तानामादिः' (पा.सू.६.१.१८९) इत्याद्युदात्तत्वम् ।। १३ ।।

**सिद्धाञ्जनम्– अस्य** इन्द्रस्य **सिध्मः** साधको वज्रः **शत्रून् अभि** असुरानभिलक्ष्य **अजिगात्** अगच्छत् । स इन्द्रः **तिग्मेन** तीक्ष्णेन **वृषभेण** प्रहारवर्षिणा वज्रेण पुरः शत्रुपुराणि **व्यभेत्** विविधं भिन्नवान् । ततः इन्द्रः **वृत्रम्** असुरं **वज्रेण** स्वीयेनायुधेन **समसृजत्** संयोजितवान् । तेन कर्मणा **शाशदानः** वृत्रं हिंसन् **स्वां मतिं** स्वाभीष्टसिद्धिरूपां बुद्धिं **प्रातिरत्** प्रकर्षेण साधितवान् ।। अजिगात्–जिगातिर्गतिकर्मा । अभेत् भिदिर् विदारणे श्नमि व्यत्ययेन शप्, तस्य लुक् छन्दसि । अतिरत्- तरतेः व्यत्ययेन शः, ऋत इत् धातोरिति ईत्वम् । शाशदानः– शद्लृ शातने, तस्मात् यङन्तात् शानच् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् ।**
**शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ।। १४ ।।**

आवः । कुत्सम् । इन्द्र । यस्मिन् । चाकन् । प्र । आवः । युध्यन्तम् । वृषभम् । दशऽद्युम् ।
शफऽच्युतः । रेणुः । नक्षत । द्याम् । उत् । श्वैत्रेयः । नृऽसह्याय (नृऽसाह्याय)। तस्थौ ।।

## ऋग्भाष्यम्

कुत्सं दशद्युं च मुनिं नृपं च यस्मिंस्थितः स्वात्मरूपं सुभक्त्या ।
अदर्शयस्तोषितो यः स्वतन्त्रश्चाकन्नुक्तः कर्मयतः स्वतन्त्रे ।।

वृषरूपस्यास्य नृपस्य युध्यतः शफच्युतो रेणुरुन्नक्षत द्याम् ।
श्वेता वाणी वायुभार्या सुतोऽस्याः श्वैत्रेयोऽयं युधतो ह्युदस्थात् ।।

वृषः श्वैत्रेयो धर्म एवाथ कुत्सनामाध्यात्मे कुत्सितोत्सारणात्स्यात् ।
धर्मरेणुः स्वर्गमात्राभिगामी साक्षाद्धर्मो मोक्षफलोपगः स्यात् ।। १४ ।।

**ऋग्भाष्यटीका– आवः कुत्सम्** । अत्र कुत्संदशद्युमिति पदद्वयाभिधेयमाह । कुत्समिति । यथासंख्यं व्याख्यानम् । यस्मिन्नित्येतत्साकाङ्क्षमत आह ।। अस्मिंस्थित इति ।। इन्द्रस्य सर्वत्र स्थितत्वाद्धचर्थमेतदित्यतोऽभिप्रायमाह ।। स्वात्मेति ।। यस्य सुभक्त्या तोषितस्त्वं स्वात्मरूपमदर्शयः । चाकन्नित्येतद्व्याख्याति ।। य इति ।। यः स्वतन्त्रः स चाकन्नुक्तः कथमित्यत आह ।। कर्मेति ।। करोतेः शत्रन्तस्य चाकन्निति छन्दसि रूपम् । कुर्वन्निति क्रियाश्रय उच्यते । कर्मापरपर्याया क्रिया च कर्तरि वर्तते । कर्ता च स्वतन्त्रः । यत एवमतो युक्तमुक्तम् ।

ततश्चायमर्थः । **हे इन्द्र** चाकन्कुर्वंस्त्वं यस्मिन्कुत्से स्थितस्तं **कुत्सं** नाम मुनिमावः अरक्षः । युध्यन्तं **वृषभं** वृषरूपं दशद्युं नाम नृपं च **प्रावः** प्रकर्षेणारक्ष इति । तस्यैव युद्धमुत्तरार्धे प्रपञ्च्यते । तदपि त्वदधीनमिति सूचयितुम् । तत्र वृषरूपस्यास्य युध्यतो नृपस्येति । युध्यन्तं वृषभमित्युक्तानुवादः प्रागव्याख्यातत्वात्कृतः । शफच्युतः खुरोत्थितः । **द्याम्** अन्तरिक्षम् **उन्नक्षत उदनक्षत** उदगच्छत् । कदा श्वेता वाणी कथम् । वायुभार्या वायुर्हि श्वा । तेनेताश्वेतेति । अस्याः श्वेतायाः सुतः श्वैत्रेयः । स्त्रीभ्यो ढक् । रेफार्थस्तु वक्ष्यते । अयं दशद्युर्यदा नृषाह्याय नृणां प्रतिभटानां पुंसां साह्यं सहनमभिभवः तस्मै । 'तयोरेव कृत्यक्तखलर्थाः' इति भावे कृत्यः । यद्यपि 'ऋहलोर्ण्यत्' इति प्राप्तस्य ण्यतोऽपवादः 'शकिसहोश्च' इति यद्विहितस्तथापि 'कृत्यल्युटो बहुलम्' इति वचनाच्छन्दसि ण्यदपि भवति । युधतो युद्ध्यतोऽभिभवितुमिति शेषः । **उत्तस्थौ** उदस्थात् । अनेनोदित्युपसर्गस्योभयत्रापि सम्बन्ध इत्युक्तं भवति । हीत्यस्येतिहासस्य प्रसिद्धतां द्योतयति । अथाध्यात्मे । 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अम्भावाभावः । धर्म एव श्वैत्रेयो

वृषः दशद्युश्चेत्यपि वक्तव्यम् । कुत्सितोत्सारणात्कुत्सनामा च स्यात् । भिन्नाभिधेयता-व्युदासायैवशब्दः । शफच्युत इत्यादेस्तात्पर्यं धर्मरेणुरित्यादि । अल्पो धर्मः । प्रवृत्तिलक्षण इति यावत् । स्वर्गमात्राभिगामी स्वर्गमात्रसाधनम् । साक्षाद्धर्मो निवृत्तिलक्षणः । मोक्षफलोपगः परम्परया तत्साधनं तदन्तर्भूतफलो वा स्यात् ।

तथा चैवं योजना । **हे इन्द्र** परमेश्वर । **कुत्सम्** कुदिति निपातः कुत्सितार्थः । सृगतौ अन्तर्णीतण्यर्थात् डः । कुत्सितं पापमुत्सारयतीति क्रियारूपं भक्तानां धर्मं त्वमावः । चाकंस्त्वं यस्मिंस्त्वज्ज्ञानं यदधीनं तम् । पापेन सह युध्यन्तम् । दशसु दिक्षु द्यौः प्रकाशो यस्य तं **दशद्युं** वृषभं धर्मनामैवैतत् । अदृष्टरूपं धर्मं च । **प्रावः** । धर्मस्वरूपमेव प्रपञ्चयति । **शफच्युत** इव तत्सम्बन्धी तज्जातीयो रेणुर्द्यामुन्नक्षत । श्वैत्रेयो वाणीपुत्रो वेदप्रतिपाद्यो मुख्यो धर्मस्तु नृषाह्याय नृणां ज्ञानिनां साहाय्यायोत्तस्थाविति ।। १४ ।।

**मन्त्रार्थमञ्जरी–** हे इन्द्र । **चाकन्** करोतेः शतृप्रत्यये छान्दसे द्विर्वचनेऽभ्यासस्य चुत्वम् आत्त्वे धात्वृकारस्य लोपे च 'चाकन्' इति सिद्धेः, क्रियाश्रयः, स्वतन्त्र इति यावत् । त्वम् यस्मिन्, कुत्से । स्थितः इति शेषः, यस्य सुभक्त्या तोषितस्त्वं स्वात्मरूपमदर्शय इति यावत् । तम् कुत्सम्, कुत्सनामानं मुनिम् । **आवः** अरक्षः । **युध्यन्तम्** । **वृषभम्** वृषरूपम् । **दशद्युम्** दशद्युनामकं नृपम् । च **प्र आवः** प्रकर्षेणारक्षः इति । तस्यैव युद्धमुत्तरार्धेन प्रपञ्चयते, 'तदपीशाधीनम्' इति सूचयितुम् **शफच्युतः**, सुरोत्थितः । रेणुः । **द्याम्** अन्तरिक्षम् । **उत् नक्षत** उदनक्षत्, उदगच्छत्, 'णह बन्धने' इत्येतत्पूर्वाल्लङर्थे लेटि तस्याडागमे सिपि 'हो ढः' इति हस्य ढत्वे 'षढोः कः सि' इति कत्वे 'इण्कोः' इति षत्वे च रूपसिद्धेः । कदा ? यदा श्वैत्रेयः, वाणीसुतः, दशद्युः । नृषाह्याय, नृणां प्रतिभटपुंसां साह्याय सहनाय, अभिभवाय, युध्यतः प्रतिभटानभिभवितुमिति यावत् । उत् **तस्थौ** उदस्थात् । तदा इति । 'उत्' इत्यस्योभय-त्रान्वयः ।

श्वा वायुः तेनेता श्वेता वाणी, सा च सा रमत इति रा च श्वेत्रा, उपपदान्तलोपः, 'तस्याः सुतः' इत्यर्थे 'स्त्रीभ्यो ढक्' 'श्वैत्रेयः' इति रूपम् । 'नृऽसाह्याय' इत्यत्र 'शकिसहोश्च' इति यत्प्रत्ययेन भाव्यम्, तथापि 'कृत्यल्युटो बहुलम्' इति बहुलग्रहणाच्छन्दसिण्यदपि भवतीति भावे ण्यत्प्रत्ययः, 'तयोरेव कृत्यक्तखलर्थाः' इत्युक्तेः इति ज्ञेयम्, 'नृऽसह्याय' इति

त्वध्यापकपदपाठः । अध्यात्मं तु **हे इन्द्र** परमेश्वर । कुत्सम्, 'कुत्' इति निपातः कुत्सितार्थः, 'सृ गतौ' अन्तर्णीतण्यर्थाड्डः, कुत्कुत्सितं पापं सारयत्युत्सारयतीति कुत्सं क्रियारूपं भक्तानां धर्मम् । त्वम् आवः, अरक्षः । चाकन्, स्वतन्त्रः । त्वम् यस्मिन्, यदधीनम् इत्यर्थः । त्वज्ज्ञानम् इति शेषः, त्वद्विषयकं ज्ञानं यदधीनं यद्धर्माधीनम् । तम् पापेन सह युध्यन्तम् । **दशद्युम्** वृषभम्, धर्मनाम चैतत्, अदृष्टरूपं धर्मम् । च प्र आवः । 'को धर्मः?' इत्यतः 'प्रवृत्तनिवृत्तभेदेन द्विविधो धर्मः, तत्र प्रवृत्तः स्वर्गमात्राभिगामी, निवृत्तस्तु मोक्षगामी' इति भावेन धर्मस्वरूपं प्रपञ्चयति शफच्युतः शफच्युत इव अ मुख्यधर्मजातीयः । **रेणुः** अल्पास्थिरफलकत्वाद्रेणुरिव स्थितो धर्मः । द्याम्, स्वर्गम् । **उत् नक्षत** उदनक्षत्, उदगच्छत् । **श्वैत्रेयः**, वाणीपुत्रः, वेदप्रतिपाद्य इति यावत्, मुख्यो धर्मः । तु **नृषाह्याय** नृणां ज्ञानिनां साह्याय । **उत् तस्थौ**, स्यात् इति ।। १४ ।।

**स्कन्द– आवः कुत्सम्** अरक्षस्त्वं कुत्सनामानम् ऋषिम् । **यस्मिन्** कुत्से यागं कुर्वति **चाकन्** कामितवानसि सोमं स्तुतीश्च । न च केवलं कुत्सम् । किं तर्हि । **प्र आवः** प्रकर्षेणारक्षः **युध्यन्तम्** युध्यमानम् **वृषभम्** नामापरं राजानम् **दशद्युम्** बहुदीप्तिम् । केन प्रकारेण । उच्यते । **शफच्युतः** शफेभ्यः प्रच्युतः **रेणुः** पांसुः **नक्षत** नक्षतिर्गतिकर्मा व्याप्तिकर्मा वा । गतवान् व्याप्तवान् वा **द्याम्** द्युलोकम् । **उत् श्वैत्रेयः** उच्छब्धः **तस्थौ** इत्याख्यातेन सम्बन्धयितव्यः । 'शु' (निघ.२,१५) इति क्षिप्रनाम । इण् गतौ । शु इत्रा श्वित्रा आशुगामिनी जगतः प्रकृतिः । तस्या अपत्यं श्वैत्रेयो वायुः । स च नृषाह्याय शत्रुमनुष्याभिभवनाय उत्तस्थौ उत्थितः । शत्र्वभिभवार्थं युद्धवेलायां महान्तं रेणुं वात्याश्च अकरोदित्यर्थः ।। १४ ।।

**वेङ्कटमाधव–** रक्षितवानसि **कुत्सम् इन्द्र! यस्मिन्** कुत्से स्तुतीः कामितवानसि **प्र आवः** च **युध्यन्तम्** स्तुतीनां वर्षितारम् **दशद्युम्** नाम । युद्धे शफैरच्युतः **रेणुः** अन्तरिक्षम् **नक्षत** । प्रवृद्धम् आसीत् युद्धम् । अथ श्वित्रायाः पुत्रो दशद्युस्त्वयोपबृंहितः शत्रूणामभिभवाय कस्मिंश्चिद् ह्रदे भयात् प्रविष्टस्ततः उत्तस्थौ । अस्योत्तरा भूयसे निर्वचनाय 'आवः शमम्' इति ।।१४।।

**मुद्गल– हे इन्द्र!** कुत्सम् एतन्नामकं गोत्रप्रवर्तकम् ऋषिम् **आवः** रक्षितवानसि । **यस्मिन्** कुत्से **चाकन्** स्तुतिं कामयमानः वर्तसे, तं कुत्समिति पूर्वत्रान्वयः । तथा **दशद्युम्** एतन्नामकं दशसु दिक्षु दीप्यमानमृषिम् **प्र आवः** प्रकर्षेण रक्षितवानसि । कीदृशम् । **युध्यन्तम्** स्वकीयैः

शत्रुभिः सह युद्धं कुर्वन्तम् **वृषभम्** गुणैः श्रेष्ठम् । **शफच्युतः** त्वदीयाश्वस्य शफात् पठितः **रेणुः** धूलिः **द्याम्** द्युलोकम् **नक्षत** प्राप्नोति । **श्वैत्रेयः** श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहात् **नृसह्याय** नृभिः पुरुषैः सोढव्याय **उत तस्थौ** जलादुत्थितवान् ।।१४।।

**सायण–** **हे इन्द्र कुत्सम्** एतन्नामकं गोत्रप्रवर्तकमृषिम् **आवः** रक्षितवानसि । **यस्मिन्** कुत्से **चाकन्** स्तुतिं कामयमानो वर्तसे । तं कुत्समिति पूर्वत्रान्वयः । तथा **दशद्युम्** एतन्नामकं दशसु दिक्षु दीप्यमानमृषिं **प्रावः** प्रकर्षेण रक्षितवानसि । कीदृशम् । **युध्यन्तं** **स्वकीयैः** शत्रुभिः सह युद्धं कुर्वन्तं वृषभं गुणैः श्रेष्ठम् । **शफच्युतः** स्वदीयाश्वस्य शफात् पतितः **रेणुः** धूलिः **द्यां** द्युलोकं **नक्षत** प्राप्नोति । **श्वैत्रेयः** श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहात् नृसह्याय नृभिः पुरुषैः सोढव्याय **उत् तस्थौ** जलादुत्थितवान् । **चाकन्** । 'चक तृप्तौ' । अस्मात् ण्यन्तात् शतृ । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् णिलोपः शब्भावश्च । प्रत्ययस्वरेणान्तोदात्तत्वम् । यद्वा । 'कमु कान्तौ' इत्यस्मात् यङ्लुगन्तात् लङि सिपि अभ्यासस्य नुगभावश्छान्दसः । 'दीर्घोऽकितः' इति दीर्घत्वम् । सिलोपे 'मो नो धातोः' (पा.सू.८.२.६४) इति मकारस्य नकारः । धातुस्वरः । यद्वृत्तयोगादनिघातः । **युध्यन्तम्** । व्यत्ययेन परस्मैपदम् । **दशद्युम्** । दीव्यतेः प्रकाशार्थात् सम्पदादिलक्षणः क्विप् । 'च्छ्वोः शूठ्' (पा.सू.६.४.१९) इति ऊठ् । दशसु दिक्षु द्यूः यस्यासौ दशद्युः । छान्दसं ह्रस्वत्वम् । यद्वा । द्युशब्दः अहर्नामसु पठितः (नि.१.९.२) । तेन प्रवृत्तिनिमित्तभूतः प्रकाशो लक्ष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **शफच्युतः** । शफेन च्युतः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **नक्षत** । 'नक्ष गतौ' । व्यत्ययेनात्मनेपदम् । **श्वैत्रेयः** । श्वित्राया अपत्यम् । 'श्वित्रेभ्यो ढक्' (पा.सू.४.१.१२०) । **नृसह्याय** । 'शकिसहोश्च' (पा.सू.३.१.९९) इति कर्मणि यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । 'पूर्वपदात्' (पा.सू.८.३.१०६) इति षत्वम् । संहितायां दीर्घश्छान्दसः ।। १४ ।।

**सिद्धाञ्जनम्–** चतुर्दशीमृचमाह । **हे इन्द्र**, त्वं **यस्मिन्** विषये **चाकन्** सन्मङ्गलं कामयमानो भवसि तं **कुत्सम्** नाम्ना कुत्सं **आवः** अरक्षः । **युध्यन्तम्** युद्धं कुर्वन्तं **वृषभम्** वर्षितारं श्रेष्ठं वा वशद्युम् एतन्नामकं **प्रावः** प्रकर्षेण रक्षितवानसि । **शफच्युतः** त्वदीयाश्वस्य शफात् गलितः **रेणुः** धूलिः **धाम्** द्युलोकं नक्षत गच्छति । **श्वैत्रेयः** श्वित्राख्यायाः पुत्रः(अप्सु

निमग्नः)नृसह्याय नृभिः वलिभिः पुरुषः सोढव्याय उत्तस्थो उत्थितः, अब्धो निर्गम्य उद्गतवान् । **चाकन्** 'कमु कान्तौ' अस्माद् यङ्लुगन्तात् लङि, 'चक तृप्तौ' इत्यस्माद्वा शतरि छान्दसं रूपं इति प्रक्रियामाहुः पूर्वे । **युध्यन्तम्** व्यत्ययेन परस्मैपदम् । **नक्षतम्** 'णक्ष गतौ व्यत्ययेन आत्मनेपदम् । **नृसह्याय** शकिसहोश्चेति कर्मणि यत् ।।

कुत्स-दशद्यु-श्वैत्रेयाणामनुग्रहं कृतवान् इन्द्र इत्यत्रोक्तम् । तर्हि ऐतिहासिकाः पुरुषास्तेऽभ्युपगन्तव्याः । तथा बहब ऋषयो राजानश्च श्रूयन्ते मन्त्रेषु । तन्नाम्नां गूढान्यर्थान्तराणि अन्वयवार्थानुसारीणि ग्राह्याणि । विशेषतः प्रसिद्धाः कुत्स कक्षीवत् शुनःशेपादयः अन्तर्यागाध्वनि सिद्धानुभूतिप्रतिष्ठाप्रतिमानभूताः भवन्ति । यथा बन्धत्रयनिर्मोक्षसिद्धेः प्रतिष्ठा शुनःशेपे, यथा वा भगवतः श्रीकृष्णस्य अर्जुन इव इन्द्रस्य कुत्से सख्यम् । ईदृशसाहचर्यसख्यादेः प्रतिष्ठा कुत्से । एवमन्यत्रापि बोध्यम् ।

अथ कुत्सादीनां अत्र श्रुतीनां निर्वचनं पश्यामः । 'करोतेः कृन्ततेर्वा' इति पूर्वे । चिन्त्यमिदम् । देवद्वेषिणां शत्रूणां वा कुत्सनात् अधःकरणात् कुत्स इत्युत्पश्यामः । दशद्युम् अप्रसिद्ध ऋषिः । दशसु दिक्षु प्रकाशोऽस्येति प्राहुः । **श्वैत्रेयः**-श्वित्राया अपत्यम् । श्वित्रा श्वेता निष्प्रभा निष्कला वा केयमिति न विदिता तत्त्वतः । इतिहासे वा न प्रसिद्धा । स्याद्वा प्रभाहीना रुग्णेव प्रकृतिः, यस्यां सम्भूतः पुरुषो ज्योतिर्बलादिसम्पादनात् प्राक् जीवनधारणसमर्थासु अप्सु समाहितो भूत्वा, इन्द्रानुग्रहात् प्रभाववान् निर्गतोऽभीः संवृत्तः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गाम् ।।**
**ज्योक्चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ।। १५,३,३३ ।।**

आवः । शमम् । वृषभम् । तुग्र्यासु । क्षेत्रऽजेषे । मघऽवन् । श्वित्र्यम् । गाम् । ज्योक् । चित् । अत्र । तस्थिऽवांसः । अक्रन् । शत्रुऽयताम् । अधरा । वेदना । अकः इत्यकः ।।

## ऋग्भाष्यम्

शमात्मकं वृषभं धर्ममेवाप्यरक्षस्त्वं तुग्रियास्वप्यधीश ।
तुग्र्याख्या स्यात्संततिर्दीर्घकाला मुक्तिक्षेत्रविजयायैव धर्मम् ।।

**श्वेतासुतं रमणाद्रेफ उक्तस्तमरक्षस्त्वं त्वयि ये तस्थिवांसः ।**
**ज्योतिश्चक्रुर्निजरूपं विमुक्त्या ज्ञानान्यरीणामधराणि चाकरोः ।। १५,३,१ ।।**

**ऋग्भाष्यटीका– आवः शमम्** । शमात्मकम् । हे **मघवन्** अधीश शमं न केवलं क्रियाऽदृष्टात्मकम् । किन्तु भक्तानां शमात्मकमपि वृषभं धर्ममेव । त्वमावोऽरक्षः । न केवलं भक्तानाम् । किं नाम तुग्र्यास्वपि । का तुग्र्येत्यत आह– तुग्र्यास्वेति ।। ततो भक्तानां सन्ततिष्वपि धर्ममरक्ष इत्यर्थः । कथं सन्ततिस्तुग्र्या । दीर्घकाला । अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति शाब्दाः । अत्र वरिष्ठार्थो गृह्यते । वरिष्ठ इति च विशेष्यापेक्षः । तथा च कालो विवक्ष्यते । वरिष्ठो दीर्घः कालस्तुग्रः । साक्षाद्वा दीर्घकालस्तुग्रः । तत्र भवार्थे तुग्राद्धनिति घन् । विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च सन्ततिर्लभ्यत इति भावः । वृषभमित्युक्तत्वाद्गामिति पुनरुक्तिरित्यतोऽनुवादोऽयमित्यभिप्रायेण क्षेत्रेत्यादि व्याख्याति । त्वं तं **श्वित्र्यं** श्वेतासुतं गांधर्मं यदरक्षस्तत्क्षेत्रजेषे मुक्तिक्षेत्रविजयायैव । न तु क्षुद्रविषयलाभार्थम् । क्षियन्त्यत्रेति क्षेत्रमवस्था मुक्तिश्च । तत्क्षेत्रं च । 'जि जये' तुमर्थे से इति से । ततः षष्ठीसमासः । श्वित्र्यमिति कथमित्यतः किञ्चिद्व्युत्पादयति ।। रमणाद्रेफ उक्त इति ।। अकारशिरस्क इति शेषः । शुना इता श्विता । शकंध्वादित्वात्पररूपम् । सा च सा रमणाद्रा च श्वित्रा । अत्रापि पररूपत्वम् । तस्या अपत्यमित्यर्थे ढ्यः । किं च अत्र त्वयि ये पुरुषास्तस्थिवांसो ज्ञाननिष्ठा युक्तास्ते चिदपि । **ज्योक्** दीप्तिवचनोऽयं निपातः । ज्योगामयावीति यथा । ज्योतिरक्रन् चक्रुः । देदीप्यमानमकुर्वन्किं निजरूपम् । कथम् । विमुक्त्या ये त्वान्तत्वतो जानन्ति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति । किं सर्वेऽपि नेत्युच्यते । शत्रूयतां शत्रुवदाचरताम् । न हि परमेश्वरस्य साक्षाच्छत्रुरस्ति । अरीणामयोग्यानाम् । वेदना वेदनानि ज्ञानानि । अधराधराणि । फलादपभ्रष्टान्येवाकरोः । इन्द्रपक्षे दशद्युर्नृप एव वृषभः । शमोपेतत्वाच्छमः । क्षेत्रं तु भूमण्डलम् । शेषं समानम् ।। १५,३,१ ।।

**मन्त्रार्थमञ्जरी–** हे **मघवन्,** अधीश । **शमम्** न केवलं क्रियादृष्टात्मकम्, किं तु भक्तानां शमात्मकम् । अपि **वृषभम्** धर्मम् । एव त्वम् **आवः** अरक्षः । न केवलं भक्तानाम् किं नाम **तुग्र्यासु** अपि भक्तानां संततिष्वपि । वृषभम् आवः त्वं तम् । **श्वित्र्यम्** श्वित्र्याख्यं वाणीसुतम्, वेदबोध्यमिति यावत् । **गाम्** धर्मम् । यदरक्षस्तत् **क्षेत्रजेषे** मुक्तिरूपक्षेत्रविजयायैव,

मुक्तिप्राप्त्यर्थमेव, न तु क्षुद्रविषयलाभार्थम् । किं च, **अत्र**, त्वयि ये पुरुषाः । **तस्थिवांसः**, ज्ञाननिष्ठायुक्ताः । ते **चित्** तेऽपि । ज्योग्दीप्तिवचनोऽयं निपातः, 'ज्योगामयावी(वि)' इति यथा, **ज्योक्** अक्रान्, निजं रूपं विमुक्त्या देदीप्यमानमकुर्वन्, ये त्वां तत्त्वतो जानन्ति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति इति भावः । किं सर्वेऽपि ? 'न' इत्युच्यते शत्रूयताम्, अयोग्यानाम् । **वेदना** वेदनानि । **अधरा** अधराणि फलादपभ्रष्टान्येव । **अकः** अकरोत् ।

इन्द्रपक्षे तु दशद्युर्नृप एव **वृषभः**, शमोपेतत्वाच्छमः, क्षेत्रं तु भूमण्डलम् । शिष्टं समम् । अत्र 'तुग्र्यासु' इत्यादेः प्रक्रिया तु दीर्घकालस्तुग्रः, तत्र भवार्थे 'तुग्राद्घन्' इति घन्प्रत्ययः, तस्ये यादेशे 'यस्येति च' इत्यलोपे रूपम् 'तुग्रियासु' इति शाखान्तरे, 'तुग्र्यासु' इति बह्वृचाः तत्र विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च संततिलाभः । क्षीयन्तेऽत्रेति क्षेत्रम्, 'क्षि क्षये' इत्यतो वा 'क्षि निवासगत्योः' इत्यतो वा ष्ट्रन्प्रत्ययो गुणश्चेति 'क्षेत्रम्' इति रूपम्, मुक्त्याख्यावस्था, 'जि जये', 'तुमर्थे सेसेनसे' इति सेप्रत्ययः, गुणः षत्वम्, 'क्षेत्रस्य जेषे' इति षष्ठीसमासः । **श्वित्र्यम्** इत्यत्र श्वा वायुः, तेनेता श्विता, शकन्ध्वादित्वात्पररूपम्, सा च सा रमणाद्रा च श्वित्रा, उपपदान्तलोपः, तस्यापत्यार्थे घः । 'अग्रन्' इति करोतेः शविकरणस्य लङि च्छान्दसं रूपम् । 'अकः' इति करोतेः लङि शब्विकरणस्य रूपम् ।। १५ ।।

**स्कन्द– आवः शमम्** शान्तात्मकम् **वृषभम्** नाम राजानम् **तुग्र्यासु** 'तुग्र्या' (निघ.१.१२) इति उदकनाम । सप्तमीनिर्देशाच्च स्थितमिति वाक्यशेषः । अप्सु स्थितम् । अद्भ्य उत्तारितवानसीत्यर्थः । किमर्थम् । **क्षेत्रजेषे** क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्य उत्तारितः पृथिवीं जेष्यतीत्येवमर्थम् । **हे मघवन् !** कीदृशम् । **श्वित्र्यम् गाम्** गन्तारं देवान् शत्रन् वा प्रति । **ज्योक् चित्** ज्योगिति निपातश्चिरवचनः । चिच्छब्दः पदपूरणः । 'एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभं चिरम् **अत्र** पृथिव्याम् **तस्थिवांसः** स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुरा वा **अक्रन्** । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपणे वर्तते । अप्सु प्रक्षिप्तवन्तः । यं पृथिव्यां चिरं प्रतिष्ठिता अपि सन्तः शत्रवोऽसुरा वा राज्योच्छेदनमयादप्सु प्रक्षिप्तवन्तः इत्यर्थः । उत्तार्य च **शत्रूयताम्** शत्रुभावं कामयमानानां तेषां यानि स्वभूतानि वेदनानि अपठितमपि धननामैतत् । धनानि तानि **अधरा** अधराणि तस्य अधोवर्तीनि **अकः** कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोरित्यर्थः ।।

**श्वेतासुतं रमणाद्रेफ उक्तस्तमरक्षस्त्वं त्वयि ये तस्थिवांसः ।**
**ज्योतिश्चक्रुर्निजरूपं विमुक्त्या ज्ञानान्यरीणामधराणि चाकरोः ।। १५,३,१ ।।**

**ऋग्भाष्यटीका– आवः शमम्** । शमात्मकम् । हे **मघवन्** अधीश शमं न केवलं क्रियाऽदृष्टात्मकम् । किन्तु भक्तानां शमात्मकमपि वृषभं धर्ममेव । त्वमावोऽरक्षः । न केवलं भक्तानाम् । किं नाम तुग्र्यास्वपि । का तुग्र्येत्यत आह– तुग्र्यास्वेति ।। ततो भक्तानां सन्ततिष्वपि धर्ममरक्ष इत्यर्थः । कथं सन्ततिस्तुग्र्या । दीर्घकाला । अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्द इति शाब्दाः । अत्र वरिष्ठार्थो गृह्यते । वरिष्ठ इति च विशेष्यापेक्षः । तथा च कालो विवक्ष्यते । वरिष्ठो दीर्घः कालस्तुग्रः । साक्षाद्वा दीर्घकालस्तुग्रः । तत्र भवार्थे तुग्राद्घनिति घन् । विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च सन्ततिर्लभ्यत इति भावः । वृषभमित्युक्तत्वाद्गामिति पुनरुक्तिरित्यतोऽनुवादोऽयमित्यभिप्रायेण क्षेत्रेत्यादि व्याख्याति । त्वं तं **श्वित्र्यं** श्वेतासुतं गांधर्मं यदरक्षस्तत्क्षेत्रजेषे मुक्तिक्षेत्रविजयायैव । न तु क्षुद्रविषयलाभार्थम् । क्षियन्त्यत्रेति क्षेत्रमवस्था मुक्तिश्च । तत्क्षेत्रं च । 'जि जये' तुमर्थे से इति से । ततः षष्ठीसमासः । श्वित्र्यमिति कथमित्यतः किञ्चिद्व्युत्पादयति ।। रमणाद्रेफ उक्त इति ।। अकारशिरस्क इति शेषः । शुना इता श्विता । शकंध्वादित्वात्पररूपम् । सा च सा रमणाद्रा च श्वित्रा । अत्रापि पररूपत्वम् । तस्या अपत्यमित्यर्थे ढ्यः । किं च अत्र त्वयि ये पुरुषास्तस्थिवांसो ज्ञाननिष्ठा युक्तास्ते चिदपि । **ज्योक्** दीप्तिवचनोऽयं निपातः । ज्योगामयावीति यथा । ज्योतिरक्रन् चक्रुः । देदीप्यमानमकुर्वन्किं निजरूपम् । कथम् । विमुक्त्या ये त्वान्तत्वतो जानन्ति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति । किं सर्वेऽपि नेत्युच्यते । शत्रूयतां शत्रुवदाचरताम् । न हि परमेश्वरस्य साक्षाच्छत्रुरस्ति । अरीणामयोग्यानाम् । वेदना वेदनानि ज्ञानानि । अधराधराणि । फलादपभ्रष्टान्येवाकरोः । इन्द्रपक्षे दशद्युर्नृप एव वृषभः । शमोपेतत्वाच्छमः । क्षेत्रं तु भूमण्डलम् । शेषं समानम् ।। १५,३,१ ।।

**मन्त्रार्थमञ्जरी–** हे **मघवन्,** अधीश । **शमम्** न केवलं क्रियादृष्टात्मकम्, किं तु भक्तानां शमात्मकम् । अपि **वृषभम्** धर्मम् । एव त्वम् **आवः** अरक्षः । न केवलं भक्तानाम् किं नाम **तुग्र्यासु** अपि भक्तानां संततिष्वपि । वृषभम् आवः त्वं तम् । **श्वित्र्यम्** श्वित्र्याख्यं वाणीसुतम्, वेदबोध्यमिति यावत् । **गाम्** धर्मम् । यदरक्षस्तत् **क्षेत्रजेषे** मुक्तिरूपक्षेत्रविजयायैव,

मुक्तिप्राप्त्यर्थमेव, न तु क्षुद्रविषयलाभार्थम् । किं च, **अत्र**, त्वयि ये पुरुषाः । **तस्थिवांसः**, ज्ञाननिष्ठायुक्ताः । ते **चित्** तेऽपि । ज्योग्दीप्तिवचनोऽयं निपातः, 'ज्योगामयावी(वि)' इति यथा, **ज्योक्** अक्रान्, निजं रूपं विमुक्त्या देदीप्यमानमकुर्वन्, ये त्वां तत्त्वतो जानन्ति ते मुक्ताः सन्तो दीप्तस्वरूपा भवन्ति इति भावः । किं सर्वेऽपि ? 'न' इत्युच्यते शत्रूयताम्, अयोग्यानाम् । **वेदना** वेदनानि । **अधरा** अधराणि फलादपभ्रष्टान्येव । **अकः** अकरोत् ।

इन्द्रपक्षे तु दशद्युर्नृप एव **वृषभः**, शमोपेतत्वाच्छमः, क्षेत्रं तु भूमण्डलम् । शिष्टं समम् । अत्र 'तुग्र्यासु' इत्यादेः प्रक्रिया तु दीर्घकालस्तुग्रः, तत्र भवार्थे 'तुग्राद्घन्' इति घन्प्रत्ययः, तस्ये यादेशे 'यस्येति च' इत्यलोपे रूपम् 'तुग्रियासु' इति शाखान्तरे, 'तुग्र्यासु' इति बह्वृचाः तत्र विशेष्याकाङ्क्षायां स्त्रीलिङ्गप्रयोगाद्योग्यतया च संततिलाभः । क्षीयन्तेऽत्रेति क्षेत्रम्, 'क्षि क्षये' इत्यतो वा 'क्षि निवासगत्योः' इत्यतो वा ष्ट्रन्प्रत्ययो गुणश्चेति 'क्षेत्रम्' इति रूपम्, मुक्त्याख्यावस्था, 'जि जये', 'तुमर्थे सेसेनसे' इति सेप्रत्ययः, गुणः षत्वम्, 'क्षेत्रस्य जेषे' इति षष्ठीसमासः । **श्वित्र्यम्** इत्यत्र श्वा वायुः, तेनेता श्विता, शकन्ध्वादित्वात्पररूपम्, सा च सा रमणाद्रा च श्वित्रा, उपपदान्तलोपः, तस्यापत्यार्थे घः । 'अग्रन्' इति करोतेः शविकरणस्य लङि च्छान्दसं रूपम् । 'अकः' इति करोतेः लङि शब्विकरणस्य रूपम् ।। १५ ।।

**स्कन्द– आवः शमम्** शान्तात्मकम् **वृषभम्** नाम राजानम् **तुग्र्यासु** 'तुग्र्या' (निघ.१.१२) इति उदकनाम । सप्तमीनिर्देशाच्च स्थितमिति वाक्यशेषः । अप्सु स्थितम् । अद्भ्य उत्तारितवानसीत्यर्थः । किमर्थम् । **क्षेत्रजेषे** क्षेत्रशब्देनात्रैकदेशवचनेन समस्ता पृथिवी लक्ष्यते । पृथिवीजयाय । अद्भ्य उत्तारितः पृथिवीं जेष्यतीत्येवमर्थम् । **हे मघवन् !** कीदृशम् । **श्वित्र्यम् गाम्** गन्तारं देवान् शत्रन् वा प्रति । **ज्योक् चित्** ज्योगिति निपातश्चिरवचनः । चिच्छब्दः पदपूरणः । 'एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽत्राध्याहार्यः । यं वृषभं चिरम् **अत्र** पृथिव्याम् **तस्थिवांसः** स्थिताः प्रतिष्ठितास्तच्छत्रवोऽसुरा वा **अक्रन्** । करोतिरिह क्रियासामान्यवचनः सामर्थ्यात् प्रक्षेपणे वर्तते । अप्सु प्रक्षिप्तवन्तः । यं पृथिव्यां चिरं प्रतिष्ठिता अपि सन्तः शत्रवोऽसुरा वा राज्योच्छेदनमयादप्सु प्रक्षिप्तवन्तः इत्यर्थः । उत्तार्य च **शत्रूयताम्** शत्रुभावं कामयमानानां तेषां यानि स्वभूतानि वेदनानि अपठितमपि धननामैतत् । धनानि तानि **अधरा** अधराणि तस्य अधोवर्तीनि **अकः** कृतवानसि । शत्रुधनानि तस्यायत्तान्यकरोरित्यर्थः ।।

**वेङ्कटमाधव–** बलाभावाच्छान्तम् वृषभम् उदकेषु भयाद् गतम् पृथिवीजयार्थं श्वित्राया अपत्यं दशद्युम् आवः । चिरं तस्मिन् स्थिताः शत्रवः कृतवन्तो युद्धम् । अथ तेषां शत्रुत्वमिच्छताम् उपद्रवाणि अधराणि चकारेति ।। १५ ।।

**मुद्गल– हे मघवन्!** धनवन्! **इन्द्र! श्वित्र्यम्** श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषम् **आवः** रक्षितवानसि । किमर्थम् । **क्षेत्रजेषे** शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् । **शमम्** त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तम् **वृषभम्** गुणैः श्रेष्ठम् **तुग्र्यासु गाम्** जलेषु गतं मग्नमित्यर्थः । **अत्र** अस्माभिः सह युक्ते युद्धे **ज्योक् चित्** चिरकालमपि **तस्थिवांसः** अवस्थिताः सन्तः **अक्रन्** वैरिणः शत्रुत्वमकुर्वन् । **शत्रूयताम्** शत्रून् आत्मन इच्छतां तेषाम् **अधरा वेदना** निकृष्टानि दुःखानि त्वम् **अकः** कुरु ।। १५ ।।

**सायण–** हे **मघवन्** धनवन्निन्द्र **श्वित्र्यं** श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषम् **आवः** रक्षितवानसि । किमथम् । **क्षेत्रजेषे** शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थम् । कीदृशम् । **शमं** त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शान्तं **वृषभं** गुणैः श्रेष्ठं **तुग्र्यासु** गां जलेषु गतं मग्नमित्यर्थः । ''तुग्र्या बुर्बुरम्' (नि.१.१२.२१) इति उदकनामसु पठितत्वात् । अत्र अस्माभिः सह युद्धे **ज्योक् चित्** चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः **अक्रन्** ये वैरिणः शत्रुत्वमकुर्वन् । **शत्रूयतां** शत्रूनात्मन इच्छतां तेषाम् **अधरा वेदना** निकृष्टानि दुःखानि त्वम् अकः कुरु । तुग्रशब्दोऽन्तरिक्षवचनः । तत्र भवास्तुग्रियाः । 'तुग्राद्धन्' (पा.सू.४.४.११५) इति घन् । तस्य इयादेशः । इकारलोपश्छान्दसः । नित्वादाद्युदात्तत्वम् । **क्षेत्रजेषे** । 'जेषृ णेषृ प्रेषृ गतौ' । अस्मात् सम्पदादिलक्षणः क्विप् । क्षेत्रस्य जेट् क्षेत्रजेट् । समासान्तोदात्तत्वम् । 'अन्तोदात्तादुत्तरपदात्' (पा.सू.६.१.१९९) इत्यादिना विभक्तेरुदात्तत्वम् । **श्वित्र्यम्** । श्वित्रायां भवः । 'भवे छन्दसि' इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । **तस्थिवांसः** । तिष्ठतेः क्वसुः । 'वस्वेकाचाद्घसाम्' इति इडागमः । **अक्रन्** । करोतेर्लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । **शत्रूयताम्** । शत्रूनात्मन इच्छन्तीति शत्रूयन्तः । 'सुप आत्मनः क्यच्' इति क्यच् । तदन्तात् शतृ । तस्य लसार्वधातुकानुदात्तत्वे एकादेशस्वरेणोदात्तत्वम् । तस्य च पूर्वत्रासिद्धत्वं नेष्यते (पा.सू.८.२.६.१) इत्युक्तत्वात् शत्रन्तमन्तोदात्तत्वमिति शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वम् । **अधरा वेदना** इत्युभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । अकः । करोतेर्लुङि 'मन्त्रे घस' इत्यादिना च्लेर्लुक् । गुणः ।। १५ ।।

**सिद्धाञ्जनम्– हे मघवन्** धनवन्निन्द्र, **शिवत्र्यम्** शिवत्रायां पूर्वोक्तस्वरूपायां भवं पुरुषं **आवः** रक्षितवानसि । कीदृशम् ? **क्षेत्रजेषे** पार्थिवं क्षेत्रं स्थानं जित्वा स्वीयं विधातुं **तुग्र्यासु** प्रेरणबलवाहिनीषु अप्सु अवस्थायापि शमम् व्याकुलताशून्यं शान्तं **वृषभम्** पुंबलश्रेष्ठं **गाम्** चित्प्रकाशरश्मिरूपम्, एवंभूतं श्वित्राभवं जीवमात्मानं 'आवः' इति सम्बन्धः । अत्र अस्मिन् 'श्वित्र्ये' विषये **ज्योक्चित्** चिरकालमपि तस्थिवांसः अवस्थिताः सन्तः अक्रन् शत्रुत्वं अकुर्वन् वैरिणः । तथा **शत्रूयताम्** शत्रुत्वमिच्छता **अधरा** निकृष्टानि **वेदना** दुःखानि **अकः** अकरोः । **तुग्र्यासु** तुग्रशब्दाद् घन् घस्य इयादेशः, इत्वलोपश्छान्दसः । **क्षेत्रजेषे** जेषृ गती, अस्मात् सम्पदादिलक्षणः क्विप्, जेट्, क्षेत्रस्य जेट् क्षेत्रजेट् तस्मै । **श्वित्र्यम्** भवे छन्दसि यत् । **अक्रन्** करोतेर्लुङ च्लेर्लुक्, छान्दसम् । **शत्रूयताम्** शत्रुमात्मन इच्छन्तीति शत्रूयन्तः, क्यच्, तदन्तात् शतृ । **अधरा वेदना** शेर्लोपः छन्दसि । **अकः**– करोतेः लुङ्, च्लेर्लुक्, छान्दसम् ।

सायणीये–तुग्र्यासु जलेषु गां गतं मग्नमित्यर्थः इति पदार्थे भेदः । तात्पर्ये अन्वये च व्याख्या भिद्यत एव । तत्र कारणमिदं भवति । श्वैत्रेयः न केवलं ऐतिहासिकः । स नित्यः कश्चन अर्थः स्यात् । तथा श्वित्राशब्दः पूर्वर्चि व्याख्यातायां गृहीतः । तुग्र्याः उदकनामसु पठितत्वात् अप्सु इति पूर्वव्याख्यानम् । बलप्रेरणप्रापणाद्यर्थात् तुञ्जतेर्निष्पन्नस्तुग्र्यशब्द इति गृहीत्वा अप्पर्यायत्वेऽपि, अप्छब्दो गूढार्थद्योतकसङ्केतरूपो व्याख्यातः ।

।। इति **प्रथमस्य तृतीये तृतीयो वर्गः** ।।

आङ्गिरसस्य हिरण्यस्तूपस्य ऐन्द्रं सूक्तद्वयं व्याख्यातम् । ममासतस्तस्य रहस्यार्थोपपाकं तात्पर्यं पर्यालोच्येह संदृभ्यते । यद्यपि सूक्तद्वयेऽपि इन्द्रप्रभावो वर्णितः, तथापि 'इन्द्रस्य नु वीर्याणी' इति सूक्ते वृत्रवधादपां विमोचनस्य प्राधान्यं लक्ष्यते, 'एतायाम्' इति सूक्ते तु वृत्रवधादपां उत्सर्जनेन सह गवां अधिगमः, वृत्रानुचराणां निग्रहः, कुत्सादीनामनुग्रहश्च वर्णिताः । इतिहासकथानां वेदेषु परोक्षवचनत्वाभ्युपगमात् वृत्रादिशब्दानां सङ्केतत्वमवधाय ध्येयो रहस्यार्थः । पर्वतः आपः समुद्रः गावः उषः सूर्यः वृत्रवलपणयः इत्यादयः बहिः सङ्केतरूपा अन्तर्गूढार्था बोध्याः । वृत्रकथासु अन्यत्र च ऋक्संहितायां प्रयुक्तानां पर्वतादिमुख्यपदार्थरहस्यं प्रथममुद्घाटयितव्यम् ।

अद्रिः, पर्वतः, शिलोच्चयः सङ्केतो भवति भूगर्भात्प्रभृति नाकपृष्ठावधि, अवस्थितस्य त्रैलोक्य-सद्भावस्य सर्वस्यापि ब्रह्माण्डस्य, रहोयागरतानां पिण्डाण्डस्यापि अन्नप्राणमनस्तत्वात्मकत्रिकस्य चेति बोध्यम् । अत्युन्नतोऽयं विश्वसंस्थानपर्वतः पर्ववान्, इममेव ऋषय आरोहन्ति क्रमशः प्रस्थादुपरि प्रस्थं सानोः सानुमारुहत् ।

अदितिः– अखण्डस्वरूपिणी प्रकृतिः, अघ्न्या गौः, इन्द्रादीनां देवानां ज्योतिषां प्रसूः । दितिः खण्डिता प्रकृतिः, अस्याः सूनवो दस्यवो दानवा वृत्रादयः तमसस्पुत्राः । ज्योतिः सत्यं ऋतं ऊर्ध्वमवस्थितम्, नित्यं 'अहो' भवति । तमः अनृतं अधोऽवस्थित 'रात्रिः' भवति । अनयोः ज्योतिषः तमसश्च मध्ये त्रैलोक्यमवस्थितम् । यथा ज्योतिषः पुत्राणां आदितेयानां ऊर्ध्वमावासो देवानाम्, तथा तमसस्पुत्राणां दैतेयानां पर्वतस्य मूले निवासः । पर्वतस्य पादे गहा बिलं वा वासस्थानमात्रं दानवानां वृत्रादीनाम् । तेषां कर्माणि त्रैलोक्याक्रमणानि भवन्ति । अत एव देवानां दैत्यानां च युद्धम् ।

अथ गावः चिद्रश्मयः, अदितेर्बृहत्या अंशाः, तस्मादादितेयाः । आपः चित्प्रभाववाहिन्यः, इमाश्च सप्त सिन्धवो भवन्ति, सप्तसंख्या तु सप्ततत्त्वात्मकविश्वसत्तासम्बन्धिनी, यतः सप्तस्वपि धामसु भूरादिषु प्रवहन्ति चित्क्रियाशक्तयः । समुद्रश्च अखण्डनिरवधिकामृतसत्त्वस्य सङ्केतः, स ऊर्ध्वो भवति वेदान्तिसंमतसच्चिदानन्दस्थानीयः । अन्यश्च समुद्रः अधःस्थानः जडगतः अचित्तिरेव सः । तं 'अप्रकेतं सलिलम्' इति दृष्टवान् परमेष्ठी । जडाद् अस्मात्समुद्रादुत्थितः सृष्टो वा त्रैलोक्यलक्षणः पर्वतः । तत्र अरणशील उद्यमी चित्क्रियां अपृछब्दलक्षितां, चिद्रश्मि गोपदप्रतिपादितां, चिदानन्दरसं सोमशब्दलक्षितं च प्राप्य सत्यं उत्तमं ज्योतिः अमृतं प्राप्तुं प्रयतते । देवसाहाय्येनैवायमुद्यमः सफलः स्यात् । तस्माद् यजति देवान् । स्वीयसर्वानुभूतिरसं सोमपदवेदनीयं निष्कृष्य, संस्कृतं तं देवेभ्यो ददाति । देवानां राजा वीरस्तेन बलवान् जातः कर्तव्यं करोति यजमानाय ।

दिव्याः स्रवन्त्य आपः वृत्रेण निरुद्धाः, तथा गावश्च पणिभिरपहृत्य तेषां मुख्येन बलेनाधि-ष्ठिते बिले गुहास्थले बन्धिताः । एताश्च विमोचयितव्याः । अत्रेदमवधेयम् । इमाश्च सिन्धवः परमात्समुद्रात् स्रवन्त्यः दिव्याः, न भौमाः, वृत्रेण अपां आवरकेण प्रतिरुद्धाः । आसां भूप्राप्तिं रुन्धन्तं असुरं ज्वलता वज्रेण हतवान् इन्द्रः । तेन हननेन अपां विमोचनं निरवहत् । पर्वतमूर्धनि

द्वारमकरोत् । तेन मार्गेण आपः प्रावहन् । एषा सारतो वृत्रवधादपां विमोचनकथा बहुभ्यः सूक्तेभ्योऽवगम्यते । अवधार्य चेदम् । यद्यपि अद्रिः पर्वतो वा सङ्केतोऽस्माभिर्विवृतः तथापि पर्वतो मेघपर्यायो वेदे न विस्मार्यः, तत्र मेघस्य अबावरकत्वविवक्षा ज्ञेया ।

अथ गा अधिकृत्य । दस्यवश्चोराः पणयो व्यवहारिणः एषां मुख्यो बलः, बलयिता गवाम् । सोऽद्रिबिलवासी । तमसि गुहायां गोत्रजं गूहते । अङ्गिरोभिः सह इन्द्रो गत्वा तं विजित्य गाः निस्तरेत् । कथमिदं कर्म स करोति ? नष्टं गोधनं अधिगन्तुं यजमानस्य यज्ञः साधनम् । तत्र उपकारिणोऽङ्गिरसः देवर्षयः, पूर्वं मनुष्याः एव भूत्वा देवभावं प्राप्ता वा, मन्त्रमुच्चारयन्त इन्द्रस्य साहाय्यमाचरन्ति । सोमपानेन बलवान् भवति मघवा । गुहां प्रविश्य अद्रिबिलं भित्त्वा वा गा विमोच्य उद्गमयति । अत्र देवशुनी सरमा सहजावबोधचक्षुः गोगुप्तिस्थानं गत्वा दृष्ट्वा च इन्द्रादीनां प्रथमं दर्शयति । ततः परं गोलाभ इत्यन्यत्र सूक्ते वर्णितम् ।

इदं च सार्वकालिकमिन्द्रकृत्यम् । अस्मै कर्मणे सर्वथा प्रभुरिन्द्रः । यद्यपि स प्रथममिदं गोलाभपरिनिष्ठितं गवेषणं पूर्वऋषिभिरङ्गिरोभिर्द्वारा निर्वर्त्य तेषु एतां गोलब्धिरूपां सिद्धिं प्रतिमानभूतां विधाय प्रतिष्ठापितवान् लोकानुग्रहाय, तथापि मानुषे लोके अस्य स्वीयकृत्यस्य अद्याप्यावृत्तिमादधानः अनवरतगवेषणपरो गोधनमुक्तलक्षणं लम्भयन्नेव राजति राजा त्रैलोक्यदेवानाम् ।।

अथेदानीं सूक्तद्वयऋचां तात्पर्यग्रहः सुकरः स्यात् । एतावत्युक्तेऽपि सन्दिग्धार्थाः सन्त्येव काश्चन ऋचः । ताश्च समालोचनीयाः । प्रथमं द्वात्रिंशसूक्तऋचां निरीक्षणं भवति । ऋ. १. इन्द्रस्य वीरकर्मकीर्तने वृत्रहननादपां निष्पीडनं नदीनां भेदनं चोक्ते इदं च प्रागुक्तं विवृतम् । ऋ.२. स्वर्लोकीयेनेन्द्रवज्रेण वृत्रे हते 'अञ्जः समुद्रं अवजग्मुरापः' इत्युक्तम् । अत्र 'अञ्जः' ऋजुना मार्गेण, 'अव' जग्मुः अधो गताः आपः इत्युक्तम् । ऊर्ध्वस्थानादृजु यथा तथा अधोगतं जडं अचित्तिसमुद्रं प्राप्ताः, येन ताभिरद्भिः चित्क्रियाशक्तिवाहिनीभिः पोषितो नवीकृतः फलितो भवति अन्नमयादिशरीरवान् यजमानः । समुद्रं प्रति भौमानां अपां नदीनां वर्षजलानां वा गमनं तिरश्चीनं, न तु ऋजुगमनं, अधोगमनं वा भवति । ऋ. ३. 'त्रिकद्रुकेषु' ज्योतिर्गौ रायुरिति त्रिषु आभिप्लविकेषु अहस्सु सुतं सोमं इन्द्रः पिबतीति याज्ञिकाः ज्योतिगौरायुरिति त्रयाणां यानि स्थानानि पात्राणि तत्र सुतं सोमं इन्द्रः पीत्वा बलवान् वृत्रं जघान । ज्योतिः पिण्डाण्डे

परमं धीस्थानम्, गौः अत्र वाक् स्यात्, आयुः प्राणः । इदं च ज्योतिरादित्रिकस्य याज्ञिकोक्तस्य अस्मदीयं विवरणम् । केवलमन्त्रवर्णाधारेण त्रिकद्रुकशब्दस्य अन्यथा भवति अर्थविवृतिः । कद्रुः पिङ्गलो बभ्रुर्वा वर्णः लतादिषु परिपक्वः । तेन सोमो लक्ष्यते वेदे । तस्मात् त्रिषु सोमपात्रेषु पृथिव्यादित्रिके देहे प्राणे मनसि सुतः सोमः इन्द्रेण स्वीक्रियते । तेन प्रवृद्धबलो वृत्रहा भवति । त्रिकद्रुकेषु चेतनं देवासो यज्ञमात्मनः । 'तमिद्वर्धन्तु नो गिरः' (८.१२.२१) । अत्र देवाः चेतनं ज्ञानसाधनं यज्ञं 'त्रिकद्रुकेषु विस्तारितवन्तः, इत्युक्तम् । त्रिकद्रुकाः त्रिलोकी त्रिपात्रीति गृहीते सुगमं तात्पर्यम् । 'त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत् सोममपिबत्' (२.२२.१) अत्रापि अस्मद्विवरणस्योपपत्तिर्द्रष्टव्या ।।

ऋ.४. वृत्रहतेः परं वृत्रानुयायिनां मायाविनां ध्वंसेन उषसं द्यां सूर्यं च अजनयदिन्द्रः । वृत्रवधस्य युगपत् फलानि प्रागुपन्यस्तानि स्मार्याणि । अधस्तात् अचित्तिसमुद्रादेव सूर्यस्योदयो जन्म । तथा दिवः उषसश्च । उत्तमं सत्यं ज्योतिः सूर्यः । अन्यच्च तदनुरोधेनावधार्यम् । 'वि गोभिरद्रिमैरयत्' (१.७.३) इति प्राग् व्याख्यातम् । ऋ. ७. 'अपात् अहस्तः' अहिः सर्पः स्वभावतः अपाणिपादोऽपि, छिन्नबाहुः सर्वथा छिन्नाङ्ग इति पूर्वमन्त्रोक्त्यनुसारेण ग्रहणेऽदोषः । ऋ. ८. नदं नेत्यृचि 'मनो रुहाणां अति यन्त्यापः' इत्यस्य तात्पर्यमवधेयम् । तमोमूर्तेरसुरस्य वृत्तस्याधःपतने तेन पूर्वं निरुद्धाः आपः विमोचिता अधुना तमतिक्रम्य ऊर्ध्वं मनोभुवं आरोहन्ति, न तु तिरश्चीनतया प्रवहन्ति । ताश्चित्क्रियाधाराः एतावन्तं कालं तमसाऽवृताः पर्वते पर्वतेन वा जडेनावरकेण वा बन्धिताः अन्नप्राणमयप्रस्थोपरि गत्वा मनोभुवं फलितां कर्तुं उद्गताः प्रवहन्ति ।।

ऋ.९. दानुः वृत्रमाता, दितिरित्युच्यते । उभयोरवयवार्थः समानः । दाप् लवन इत्यस्मान्निष्पन्नौ । अखण्डात्मिकायाः इन्द्रादिदेवमातुरदितेः विपरीता दितिः खण्डात्मिका वृत्राद्यसुरमाता । वृत्रे हन्यमाने स्वस्या बाहुप्रसारेण वज्रप्रहारं परिहर्तुं स्थिता तन्माता । तदानीं माता उपरि अधस्तात् वृत्रः हत एव । सेयं खण्डिता खण्डात्मिका सर्वभूतविभागभेदमूलभूता अपरा प्रकृतिः वृत्रमाता उपरि, तज्जातो घनीभूततमोमूर्तिरधस्ताच्च निश्चेष्टं अभवताम् । अनेन तमसोऽगाधदुष्प्रवेशअदृश्यता लक्ष्यते । तं अन्तर्धारयन्त्याः जडतमःप्रकृतेः दृश्यता च गम्यते । ऋ. १०. स वृत्रः 'दीर्घं तम आशयत्' मृतिप्रायां दीर्घनिद्रामास्थितः, सुप्तो निश्चेष्टोऽभूत्,

तस्य शरीरं 'निण्यं' अपां मध्ये अऽन्तर्हितम् । ऋ. १४. अत एव वा इन्द्रस्य वृत्रं हतवतोऽपि भीतिर्जाता कुत्रापि निलीनः पुनर्निर्गतः स्याद्वेति । वृत्रः अधोगतो न दृष्टः, वृत्रमातैव सुप्ता निश्चेष्टा लक्षिता । इदं च भयकारणं इन्द्रस्येत्यस्मदूहः । वृत्रवधपापाद् भीतिरिति कथा पुराणेषु प्रसिद्धा, तत्र नास्माकमादर इति किमु वक्तव्यम् ? ३.१५. 'अरान् न नेमिः परि ता बभूव' इत्युपमया सर्वं जगत् परितो वृत्वा शक्त्या परिमाणेन च महानिन्दस्तस्य स्थितिकृत् आधारश्च भवतीति ऋषेर्दृष्टिवैशाल्यं द्योत्यते ।

'एतायाम्' इति सूक्ते विशेषतोऽवधेया विषयाः व्याख्यायां अङ्गिरोविचारे अन्यत्र चोपन्यस्ताः । गोकामानामामन्त्रणपूर्वकं सूक्तमारभत ऋषिः । ऋ. ६. 'नवग्वाः इन्द्रं अयातयन्त' इत्यत्र अङ्गिरसः स्वमन्त्रबलैरिन्द्रं उद्योजितवन्त इत्युक्तमवधेयम् । अद्रिं रुजन्नङ्गिरसो रवेण इत्यादिमन्त्रवर्णैरिदं च सङ्गच्छते । वृत्रे हते, अदृश्यतां गते, दीर्घस्वापमास्थितेऽपि तदीयानुचराः न युद्धान्निवृत्ता इति बहुधा कीर्त्यतेऽस्मिन् सूक्ते । तेन तमोनाशे निर्वर्तितेऽपि तच्छेषो व्याप्रियत एव कश्चित्कालमिति बोध्यम् । एवमन्येषामसुराणां यथा संहारः कृतः, तथा कुत्सादीनां प्रतिमानभूतपुरुषाणां रक्षणं च कृतं भगवतेन्द्रणेति सूक्तसमाप्तिः । अन्ये च विस्तरास्तत्र तत्र व्याख्याता इत्यलं दिङ्मात्रप्रदर्शनेन ।

अथ सप्तमेऽनुवाके 'त्रिश्चिन्नो अद्य' इति चतुर्थं द्वादशर्चं सूक्तम् । हिरण्यस्तूप एव ऋषिः अश्विनौ देवता । 'क त्री चक्रा' इति नवमी 'आ नो अश्विना' इचि द्वादशी च त्रिष्टुभौ, शिष्टा जगत्यः ।।

।। इति प्रथमाष्टके तृतीयाध्याये तृतीयो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ३४)

१२ हिरण्यस्तूप आङ्गिरसः । अश्विनौ । जगती; ९,१२ त्रिष्टुप् ।

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ।। १ ।।

त्रिः । चित् । नः । अद्य । भवतम् । नवेदसा । विऽभुः । वाम् । यामः । उत । रातिः ।

अश्विना । युवोः । हि । यन्त्रम् । हिम्याऽईव । वाससः । अभिऽआयंसेन्या । भवतम् । मनीषिऽभिः ।। १ ।।

## ऋग्भाष्यम्

आरभ्य चाद्यैव दिवा निशायांतदन्तरे च त्रिरपि स्म सर्वदा ।
अस्माकमेव भवतं यतोऽन्यो वेत्ता न तावित्युदितौ नवेदसौ ।।

गौणं तदन्यत्र हरौ तु मुख्यतो व्यापी तु मार्गो युवयोश्च दानम् ।
अशेषदेशेषु गतेरशेषदातृत्वतश्चैव युवोर्हि यन्त्रम् ।।

वासोयन्त्रं यद्वदयत्नतः स्याद्धिम्या हिनोतेस्तन्तुविक्षेपणी हि ।
तद्वद्बुद्धिप्रेरकाऽयत्नतो वा मायार्थसेनौ भवतं मनीषिभिः ।।

सहैव देवैः.............. .............. ।। १ ।।

**ऋग्भाष्यटीका– त्रिश्चित्** । द्वादशर्चमाश्विनं सूक्तम् । आरभ्य च । हे **नवेदसा** नवेदसौ अश्विनौ । **अद्य** आरभ्यैव चेति शेषः । सङ्कुचितप्रार्थने कारणाभावादिति स्मशब्दः । **त्रिश्चित्** । त्रिरपि दिवानिशायां तदन्तरे सन्ध्ययोश्च सर्वदेति यावत् । युवां नोऽस्माकमेव भवतम् । सर्वतोऽप्यस्मासु कृपां कुरुतम् । नवेदसावित्यस्यार्थमाह ।। यत इति ।। यतः कारणात्ताभ्यामन्यो वेत्ता न । इति तस्मात्तौ नवेदसावित्युदितौ । विदेरसुन् । न विद्यते वेदा याभ्यामिति विगृह्य समासः । सर्वतोऽप्यधिकज्ञानिनाविति तात्पर्यम् । 'नभ्राण्नपान्नवेदा....' इति नञः प्रकृतिभावः । किमेतद्व्याख्यानं देवतान्तरे हरौ च समानमित्यपेक्षयामाह ।। गौणमिति ।। कथंभूतौ ययोर्वा-युवयोस्तु । यामो यान्त्यनेनेति मार्गो विभुर्व्यापी । रातिरुतदानं च विभु । कथं मार्गदानयो-र्विभुत्वमित्यत आह ।। अशेषेति ।। यथासंख्यं सम्बन्धः । देशेष्वित्यतः पर एवशब्दः । किञ्च । **युवोः** युवयोर्यंत्र्यन्ते नियंम्यन्तेऽनेनेति **यन्त्रं** नियमनम् । **वाससो** हिम्येव हि । वासोयन्त्रं हिम्याख्यं यद्वदयत्नतो महाप्रयत्नेन विना वाससो निष्पादकं स्यात्तथेत्यर्थः । का हिम्येत्यत आह ।। हिम्येति ।। तन्तवो विक्षिप्यन्तेऽनयेति तन्तुविक्षेपणी तुरी । हिनोतेस्तंतुषु गतेर्हिम्या । हि गतौ । ततो म्यक् । हीति रूढोऽयं शब्द इत्याह । प्रागविवृतत्वाद्दार्ष्टान्तिकं विवृणोति ।। तद्वदिति ।। प्रेरका प्रेरकौ । एवं भूतौ युवां मनीषिभिर्ज्ञानिभिर्देवैः सहैवाभ्यायं सेन्यौ ।

अयगतौ घञ् । अभ्यायोऽभ्यागमनम् । सेनया युक्तौ सेन्यौ । अभ्यायाय सेन्यौ । छान्दसो मुम् । यद्वाऽभ्यायार्थसेनाऽभ्यायसेना तया युक्तावभ्याय सेन्यौ । आयार्थसेनौ । अस्मान्प्रत्यागन्तुं स्वसेनोपेतौ भवतम् ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'त्रिश्चिन्नो' इति द्वादशर्चं वर्गद्वयात्मकमाश्विनं चतुस्त्रिंशं सूक्तम् । तत्र नवमीद्वादश्यौ त्रिष्टुभौ, शिष्टा जगत्यः हे **नवेदसा**, नवेदसौ, सर्वतोऽधिकज्ञानौ, न विद्यतेऽन्यो वेदाः वेदिता याभ्यामिति विग्रहः, नञ्पूर्वाद्विदेः असुन्, 'न भ्राण्नपान्नवेदा' इति नलोपाभावः । **अश्विना** अश्विनौ । अद्य आरभ्यैव च इति शेषः । **त्रिः चित्** त्रिरपि, दिवा निशायां संध्ययोश्च, सर्वदेति यावत् । युवाम् नः, अस्माकम् । एव **भवतम्** सर्वतोऽप्यस्मासु कृपां कुरुतम् । कथं भूतौ ? ययोः वाम्, युवयोः । तु **यामः** यात्यनेनेति व्युत्पत्त्या मार्गः । विभुः, व्यापी, अशेषदेशेषु गतेः । रातिः **उत** दानं च । **(विक्षुः), विभुः** अशेषदातृत्वात् इति भावः । किं च, **युवोः** युवयोः । **यन्त्रम्** यम्यते नियम्यतेऽनेनेति यन्त्रं नियमनम् । वाससः । **हिम्येव** तन्तुविक्षेपणी तुरी यथा इत्यर्थः, किमुक्तं भवति ? तुरी यथा वाससोऽति-प्रयत्नेन विना निष्पादिका तद्वदयत्नेन सर्वबुद्धिप्रेरकौ । युवाम् **मनीषिभिः** ज्ञानिभिः, देवैः सह । एव **अभ्यायंसेन्या** अस्मान्प्रत्यागन्तुं सेनायुक्तौ । **भवतम्** । **हि** । अभिपूर्वादयतेः घञ्प्रत्ययेऽ-भ्यायोऽभ्यागमनम्, सेन्या सेन्यौ सेनायुक्तौ, सेनाशब्दात् 'युक्तः' इत्यर्थे यत्, अवर्णलोपः, अभ्यायायाभ्यागमनाय स्वसेनायुक्तौ इति शब्दावयवार्थः, 'अभ्यायम्' इति च्छान्दसो नुम् ।।

**स्कन्द–** **'तत् आश्विनम्'** । ये एते ऐन्द्रे सूक्ते उक्ते, ताभ्यां परमिदमाश्विनम् । **त्रिः चित्** त्रिःशब्दोऽत्र सर्वत्र त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुकृत्वः इत्यस्यार्थे । बहुकृत्वः । चिच्छब्दस्तु पदपूरणः । **नः** अस्मान् **अद्य भवतम्** भवतिरिह प्राप्त्यर्थः । प्राप्नुतम् । **हे नवेदसा** । मेधाविनौ ! बहुकृत्वोऽद्यास्मत्समीपमागच्छतमित्यर्थः । किं कारणम् । उच्यते । यस्मात् **विभुः** गमनसमर्थः । **याम्** युवयोः **यामः** यान्त्यनेनेति यामो रथ इहोच्यते । 'अक्ष वीळो वीळित वीळयस्व मा यामादस्मादव जीहिषो नः' (ऋ.३,५३,१९) इति यथा । **उत रातिः** उतशब्दोऽप्यर्थे । रातिशब्दोऽपि कर्मसाधनो देयवचनः । देयमपि विभु हे अश्विनौ ! यदागत्यास्मभ्यं धनं दास्यथः तदपि प्रभूतमित्यर्थः । **युवोः हि यन्त्रम्** हिशब्दो यस्मादर्थे । यस्माच्च युवयोः स्वभूतं यन्त्रमपि विभु । येन यन्त्रेण युवां शत्रून् हथः, तदपि सर्वगमन

प्रतिबन्धकम् । **हिम्येव वाससः अभ्यायंसेन्या भवतम्** 'हिमा' (निघ.१,७) इति रात्रिनाम । तत्र भवा हिम्या उषाः । उवास इत्यपठितमप्यहर्नाम । **'आद्रात्री वासस्तनुते सिमस्मै'** (अ.१,११५,४) इति यथा । अभ्यायंसेन्येत्यभ्याङ्पूर्वस्य यंसेन्यशब्दस्य कर्तरि प्रत्ययः । यथा उषाः अह्नः अभि तथा अस्मान् आभिमुख्येन यन्तारौ भवतम् । कस्य । सामर्थ्यात् रथस्य । यथोषा नियमेन अहरुत्पत्त्या अभिमुखं करोति, एवं युवां नियमेन रथमस्मदभिमुखं कुरुतम्, येनासौ अस्मत्समीपमागच्छतीत्यर्थः । अथवा अभ्यायंशब्दः क्विबन्तः । सेनाया अभ्यायन्तारौ अभ्यायं सेनौ । 'राजदन्तादिषु परम्' (पा.२,२,३१) इति परनिपातः । अभ्यायं सेनावेव अभ्यायं सेन्यौ । स्वार्थिकोऽत्र यत्प्रत्ययः । स्वसेनाया अस्मानाभिमुख्येन यन्तारौ भवतमित्यर्थः । मा च केवलौ । किं तर्हि । **मनीषिभिः** मेधाविभिः सह । कैः । त्रयस्त्रिंशता देवैः । कुत एतत् । 'आ नासत्या त्रिभिरेकादशैरिह' (ऋ.१,३४,११) इति दर्शनात् । अथवा हिम्येव वाससः उष्यते अस्यामिति वासो रात्रिः । अहर्वचनेन वा वासःशब्देन रात्रिर्लक्ष्यते । रात्र्यापि स्वसम्बन्धितमो लक्ष्यते । यथा उषाः शार्वरस्य तमसः तद्वदित्यर्थः । चतुर्थोऽपि पादो भिन्नं वाक्यं पूर्ववच्च व्याख्यातव्यम् ।। १ ।।

**वेङ्कटमाधव– त्रिः चित्** अस्माकम् **अद्य भवतम्** प्राज्ञौ । विभवति युवयोः गमनमनेकेषु दानं च । युवयोः हि युगलं रात्र्येव अह्नः सुश्लिष्टम् । तौ युवामस्मान् प्रति गन्तारौ **भवतम्** देवैः ।। १ ।।

**मुद्गल–** 'त्रिश्चिन्नो अद्य' इति द्वादशर्चं चतुर्थं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । अश्विनौ देवता । 'क्व त्री चक्रा' इति नवमी, 'आ नो अश्विना' इति द्वादशी च त्रिष्टुभौ । शिष्टा जगत्यः ।

हे **नवेदसा अश्विना !** मेधाविनौ अश्विदेवौ । **अभ्यायंसेन्या** अभित आयच्छमानसेनार्हौ युवाम् **मनीषिभिः** मेधाविभिर्ऋत्विग्भिः स्तुतौ सन्तौ **त्रिः चित्** त्रिवारमपि **अद्य** अस्मिन् कर्मणि **नः** अस्मदर्थम् **भवतम्** आगच्छतम् । अत्र त्रिरिति वचनं सवनत्रयापेक्षम् । **वाम्** युवयोः **यामः** गमनसाधनभूतो रथः **विभुः** व्याप्तः । **उत** अपि च **रातिः** दानं विभुरिति शेषः । **युवोः** युवयोरुभयोः **यन्त्रम्** परस्परनियमनरूपः सम्बन्धविशेषोऽस्ति खलु । अतः **भवतम्** आगच्छतम् । दृष्टान्तः । **वाससः** सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य **हिम्येव** हिमयुक्तया रात्र्येव । यथा रात्र्या सह दिवसस्य सम्बन्धः कदाचिदपि नापैति तद्वत् ।। १ ।।

**सायण–** 'त्रिश्चिन्नो अद्यः' इति चतुर्थं सूक्तं द्वादशम् । 'ऋषिश्चान्यस्मादृषेः' इति परिभाषया आङ्गिरसो हिरण्यस्तूप ऋषिः । अश्विनौ देवता । 'क त्री चक्रा' इति नवमी आ नो अश्विना' इति द्वादशी च त्रिष्टुभौ । शिष्टाः त्रिष्टुबन्तपरिभाषया जगत्यः । 'त्रिश्चिद्वादशाश्विनं नवम्यन्त्ये त्रिष्टुभौ' इत्यनुक्रमणिका । प्रातरनुवाके आश्विने ऋतौ जागते छन्दसि इदं सूक्तम् । 'अथाश्विनः' इति खण्डे सूत्रितं त्रिश्चिन्नो अद्येळे द्यावापृथिवी इति जागतम्' (आश्व. श्री.४.१५) इति । आश्विने शस्त्रेऽप्येतत् सूक्तं, 'प्रातरनुवाकन्यायेन' (आश्व.श्री.६.५) इत्यतिदिष्टत्वात् ।

हे **न वेदसा अश्विना** मेधाविनौ अश्विदेवौ । नवेदा इति मेधाविनाम, 'नवेदाः कविः मनीषी' (नि.३.१५.९) इति तन्नामसु पठितत्वात् । तादृशौ युवां त्रिश्चित् त्रिवारमपि **अद्य** अस्मिन् कर्मणि नः अस्मदर्थं **भवतम्** आगतौ भवतम् । अत्र त्रिः इति वचनं सवनत्रयापेक्षम् आदरातिशयद्योतनार्थं वा । 'त्रिषत्या हि देवाः' (तै.ब्रा.३.२.३.८) इति श्रुत्यन्तरात् । **वां** युवयोः **यामः** गमनसाधनभूतो रथः **विभुः** व्याप्तः । **उत** अपि च **रातिः** दानं विभुरिति शेषः । '**युवोः** युवयोरुभयोः **यन्त्रं हि** परस्परनियमरूपः सम्बन्धविशेषोऽस्ति खलु । तत्र दृष्टान्तः । **वाससः** सूर्यरश्म्याच्छादनयुक्तस्य वासरस्य **हिम्येव** हिमयुक्तया रात्र्येव । यथा रात्र्या सह दिवसस्य सम्बन्धः कदाचिदपि नापैति तद्वत् । युवामुभौ **मनीषिभिः** मेधाविभिर्ऋत्विग्भिः । मनीषीति मेधाविनाम, मनीषी मन्धाता' (नि.३.१५.११) इति तन्नामसु पठितत्वात् । 'अभ्यायंसेन्या अभितो नियन्तव्यौ अनुग्रहवशात् तदधीनौ भवतम् । अद्य । 'निपातस्य च' इति संहितायां दीर्घः । **नवेदसा** । विपरीतं नं वित्तः इति नवेदसौ । 'विद ज्ञाने' इत्यस्मात् औणादिकोऽसुन् । नञ्समासे 'नभ्राण्नपात्...' इत्यादिना नकारस्य प्रकृतिभावः । 'सुपां सुलुक्' इति आकारः । आमन्त्रितनिघातः । **यामः** । यायते गम्यतेऽनेनेति यामो रथः । 'अर्तिस्तुसु....' इत्यादिना मन् । नित्वादाद्युदात्तत्वम् । यद्वा । 'यम उपरमे' इत्यस्मात् कर्मणि घञ् । वृषादिषु पाठादाद्युदात्तत्वम् । **रातिः** । 'रा दाने' इत्यस्मात् भावे क्तिन् । 'मन्त्रे वृष' इत्यादिना तस्योदात्तत्वम् । **युवोः** । 'सुपां सुपो भवन्ति' इति षष्ठीद्विवचनस्य षष्ठीद्विवचनादेशः । अत आदेशविषयत्वात् 'योऽचि' (पा.सू.७.२.८९) इति यत्वं न भवति । 'शेषे लोपः' इति टिलोपे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । अन्त्यलोपपक्षे तु एकादेशस्वरेण । **हिम्या इव** । हिमेति रात्रिनाम, 'ऊधः पयः हिमा' (नि.१.७.२२) इति तन्नामसु पठितत्वात् । 'हनेर्हि च'

(उ.सू.१.१४४) इति मक् । हन्ति पद्मानीति हिमम् । अर्शआद्यच् । हिमा रात्रिः । तत उत्तरस्य तृतीयैकवचनस्य 'सुपां सुलुक्.....' इति ड्यादेशः । ततः टिलोपे उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । **वाससः** । 'वस आच्छादने' । वासयति प्रकाशेनाच्छादयति इति अहर्वासः । **अभ्यायंसेन्या** । अभ्याङ् इत्युपसर्गद्वयोपसृष्टात् 'यम उपरमे' इत्यस्मात् औणादिकः सेन्य-प्रत्ययः । 'सुपां सुलुक्' इति आकारः ।। १ ।।

**सिद्धाञ्जनम्– हे नवेदसा** ज्ञातारो कालविभागस्य काले कर्तव्यस्येति वा शेषः, **अश्विना** हे अश्विनौ, **अद्य** इदानीं **नः** अस्मदर्थं **त्रिः चित्** त्रिवारमपि **भवतम्** युवा सन्निहितौ भवतम् । अत्र 'त्रिः' इति सवनत्रयापेक्षं 'अश्विनोरागमनं प्रार्थितं याज्ञिकपक्षे । अन्तर्यजने तु सर्वत्र अस्मिन् सूक्ते त्रिसंख्या भूरादिलोकत्रयं तत्सदृशं अन्तःस्थानत्रयं देहप्राणमनस्त्रयं तत्तदुचित-निष्ठानियमानुसारप्राप्तं कालविभागं देशविभागं वा द्योतयतीति बोध्यम् । अत्र त्रिरिति अन्तर्यजन-विधानाधीनं दिव्यं समयभेदं बोधयेत् । तथा अश्विनोः समयानुसारेणागमनं सन्निधानं सुलभ-मित्याह । **वाम्** युवयोः **यामः** यानसाधनभूतो रथः **विभुः** सर्वतो व्याप्तः, **उत** अपि च **रातिः** दानं स्वीयसन्निधेरिति शेषः, विभुरिति सम्बन्धः । **युवोः** युवयोः **यन्त्रम् हि** उभयोर्नियमनं अस्ति खलु । तत्र दृष्टान्तमाह । **वाससः** वासरस्य **हिम्या इव** रात्र्या इव, यथा दिवसस्य रात्र्या सह सम्बन्धो नित्यो नियमितः तद्वत् । तथा परस्परनियमनसम्पन्नो युवां **मनीषिभिः** धीमद्भिः देवताविषयकमेधाशालिभिः **अभ्यायंसेन्या** अभितो नियन्तव्यौ भक्तिबलेन युष्मदनुग्रहवशात् सान्निध्यं कर्तुं स्वयं तद्वशवर्तिनौ **भवतम्** ।

नवेदसा– 'न भ्राण् नपान्नवेदा...' इत्यादिना नञः प्रकृतिभावे प्राप्ते, न वेदः ज्ञानं यस्येति विग्रहो वक्तव्यः । अत एव 'विपरीतं न वित्तः इति नवेदसौ' इति सायणः । अन्यत्र न वेदो यस्य न इति नञ् द्वयं विग्रहे प्रयुज्य कथञ्चित् समर्थयति । अवयवार्थः सन्दिग्ध एव । कविर्मनीषीति तन्नामसु पठितत्वात् । **नवेदः**- शब्दप्रयोगस्थलेषु ज्ञानाद्यर्थस्य सङ्गतेश्च । नवेदाः ज्ञाता, निरीक्षक इत्याद्यर्थे ग्राह्यः । यामः यायते गम्यतेऽनेनेति यामः, मन् । **युवोः** छन्दसि यलोपः, टिलोपश्च । **हिम्या इव**- हिमा रात्रिनाम, ततस्तृतीयैकवचनस्य ड्यादेशः । **वाससः** वस आच्छादने वासयति प्रकाशेनेति अहर्वासः । **अभ्यायंसेन्या** अभि आङ् इति उपसर्गद्वय-पूर्वकात् यम उपरम इति धातोः औणादिकः सेन्यप्रत्ययः ।

**'हिम्येव वाससः'** इत्यत्र हिमयुक्तया रात्र्या सह(शैत्यबाधानिवारणाय)वाससः आच्छादनस्य वस्त्रस्येव इति नव्यानां एके । एते च मन्यन्ते- हेमन्तरात्रौ आच्छादनं यथा आश्रयन्ते जनाः, तथा अश्विनौ वयमाश्रयामहे इति ऋषेर्विवक्षेति । बहुशब्दाध्याहारनिष्पादनीयोऽयं भावः । नैतद्युक्तम् । अत्र अश्विनोरुभयोः 'यन्त्रम्' नियन्त्रणं नियमनरूपः संबन्धः अहोरात्रवदित्युक्तम् । यद्यपि तौ पृथक् जातौ भवतः 'नाना जातौ' (५.७३.४), तथापि नासे अक्षिणी हस्तौ दम्पती इत्यादिवत् समानकार्यप्रवृत्तो नियतसम्बन्धौ नित्यद्वन्द्वभूतौ इति विश्रुतौ वेदे । तदेवेह प्रतिपादितं' हिम्येव वासस' इति दृष्टान्तेन । अश्विनावधिकृत्य माधुच्छन्दसे तृचे विचारितम् ।।१,३।।

## ऋक्संहिता पदपाठसहिता

**त्रय॑ः प॒वयो॑ मधु॒वाह॑ने॒ रथे॒ सोम॑स्य वे॒नामनु॒ विश्व॒ इद्वि॑दुः ।**
**त्रय॑ःस्क॒म्भास॑ः स्कभि॒तास॑ आ॒रभे॒ त्रिर्नक्तं॒ या॒थस्त्रिर्व॑श्विना॒ दिवा॑ ।। २ ।।**

त्रय॑ः । प॒वय॑ः । म॒धु॒ऽवाह॑ने । रथे॑ । सोम॑स्य । वे॒नाम् । अनु॑ । विश्वे॑ । इत् । वि॒दुः॑ ।
त्रय॑ः । स्क॒म्भास॑ः । स्क॒भि॒तास॑ः । आ॒ऽरभे॑ । त्रिः । नक्त॑म् । या॒थः । त्रिः । ऊँ॒ इति॑ ।
अ॒श्वि॒ना॒ । दिवा॑ ।। २ ।।

## ऋग्भाष्यम्

**.............पवयश्चायुधानि सोमस्य पानं चेतनत्वाद्विदुस्ते ।**
**वज्रः खड्गः शर इत्यायुधानि त्रिवेणवः स्तंभनामान एव ।**
**दिवा निशायां त्रिस्त्रिरेवानुयाथः कर्मारंभार्थं लोकसिद्ध्यर्थमञ्जः ।**
**चक्रं गदाशरइत्यायुधानि वेदास्त्रयो वासुदेवस्य च स्युः ।**
**रथः स्वीयो ज्ञानिनां वा शरीरं प्राणादयः स्तम्भनान्यस्य चापि ।। २ ।।**

**ऋग्भाष्यटीका– त्रयः** । पविशब्दो यद्यपि वज्रवाची तथापि सादृश्यादायुधमात्रेऽत्र प्रयुक्त इत्याह । पवयश्चेति । चस्त्वर्थः । आयुधान्येवेत्येव शब्दार्थे वा । सोमस्येत्येतदनुपपन्नतया प्रतीतं घटयति ।। सोमस्येति ।। चेतनत्वाच्चेतनाधिष्ठितत्वात् । ते पवयः स्तम्भाश्च । त्रयः पवय इत्युक्तम् । कानि तानि त्रीण्यायुधानीत्यत आह ।। वज्र इति ।। अत्र वज्र इत्यादितो निर्देशाद्वज्रसहचरितत्वात् त्रयाणामपि पवित्वमित्यपि सूचितम् । त्रयस्कंभास इत्युच्यते । के

त इति तत्राह ।। त्रिवेणव इति ।। त्रयश्च ते वेणवश्चेति विशेषणसमास एवायं न द्विगुः । कुन्तादयस्त्रयो वेणव एव स्तम्भनामानः । आरभ इत्यादि व्याचष्टे ।। दिवेति ।। तथा चायमर्थः । हे अश्विनौ भवदीये मधुवाहने मधु सोमं प्रत्यूह्वेते भवंतौ येन तस्मिन्नथे त्रयः पवयस्त्रयः स्कंभासः स्कंभास्तंभाश्च स्कभितासः स्कभिताः स्तंभिताः स्थापिताः सन्ति । ते विश्व इत् सर्व एव । सोमस्य वेनाम् । वीगतिप्रजनकान्त्यसनखादनेषु । अस्मान्नप्रत्ययः । खादनं च पानं पानक्रियां वा पीयत इति रसं वाऽनुविदुः । एवं भूतेन रथेन । युवामारभे । सम्पदादित्वात्क्विप् । प्राणिनां यज्ञादिकर्मारम्भार्थं कर्माणि कारयितुमिति यावत् । यद्वांजो लोकसिद्ध्यर्थं कृतकर्मणां स्वर्गादिलोकप्राप्त्यारम्भार्थं नक्तं निशायां त्रिर्दिवा च त्रिरेवानुयाथः । बहिष्टे विष्णौ आयुधान्याह ।। चक्रमिति ।। अध्यात्ममाह ।। वेदा इति ।। बहिरध्यात्मं च रथं क्रमेणाह ।। रथ इति। स्वीयो वैष्णवः । त्रयःस्तम्भाः बहिः प्रसिद्धाः । अध्यात्ममाह ।। प्राणादय इति ।। कस्यांचिद्धारणायां द्वयोर्विलोपेन त्रय एव प्राणादयः शिष्यन्ते । यथोक्तम् । त्रित्वे हुत्वाथ पञ्चत्वमिति । यद्वा सत्स्वपि वागादिषु प्राधान्यात्पञ्चानां मुक्तिर्यथा तथा पञ्चस्वपि त्रयाणामिति । स्तम्भा इति वक्तव्ये तद्व्याख्यानाय स्तम्भनानीत्युक्तम् । अस्य देहस्यापि शब्देनैवमन्यदपि व्याख्येयमिति समुच्चिनोति । अध्यात्मं मधुशब्दो मोक्षार्थः । सोमस्य मनसो वेनाङ्गतिमिति च ।। २ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विना** अश्विनौ । भवदीये मधुवाहने **रथे** मधु सोमं प्रत्यूह्वेते भवन्तौ येन तस्मिन्नथे । **त्रयः पवयः** वज्रखङ्गशररूपत्रीण्यायुधानि, वज्रसाहचर्यात्खङ्गशरयोरपि पवित्वं ज्ञेयम् । **त्रयः** । **स्कम्भासः**, स्कम्भाः स्तम्भाः, कुन्तादयस्त्रयो वेणवः । च **स्कभितासः**, स्कम्भिताः, स्तम्भिताः, स्थापिताः सन्ति । ते **विश्वे इत्** सर्व एव । सोमस्य । **वेनाम्** 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' इत्यतो नप्रत्ययः, खादनं च पानम्, पानक्रियां वा रसं वा । **अनु** विदुः पव्यादिशब्दितवज्रादीनां चेतनाधिष्ठितत्वात् 'विदुः' इति युज्यते । एवं भूतेन रथेन युवाम् **आरभे** सम्पदादित्वाद्भावे क्विप्, प्राणिनां यज्ञादिकर्मारम्भार्थम्, कर्माणि कारयितुमिति यावत्, यद्वा कृतकर्मणां स्वर्गादिलोकप्राप्त्यारम्भार्थम् । **नक्तम्** निशायाम् । **त्रिः** दिवा च **त्रिः अनु** याथः, अनुगच्छथः । उ बहिष्ठविष्णुरूपविषये तु हे **अश्विना** अश्विनौ । भवदीये मधुवाहने, सुखकरवाहनरूपे । **रथे** अधिदेवरथे । त्रयः पवयः, 'चक्रम्, गदा, शरः' इति त्रीण्यायुधानि । त्रयः स्कम्भासः, त्रयो वेणवः, प्रसिद्धाः । शिष्टं समम् । अध्यात्मं तु मधुवाहने, मधु मोक्षं

प्रत्युह्यत इति मोक्षसाधने । **रथे** भक्तदेहाख्ये । त्रयः पवयः, त्रयो वेदाः । त्रयः स्कम्भासः, प्राणानां पञ्चत्वे प्राधान्यात् त्रयः प्राणाः इत्यर्थः । सोमस्य **वेनाम्** मनसो गतिम् । अन्यत्समानम् ।। २ ।।

**स्कन्द–** त्रयः पवयः पवयोऽत्र हिरण्मयानि मधुभाजनानि 'हिरण्यया वां पवयः प्रुषायन्' (ऋ.१,१८०,१) इति मन्त्रान्तरे दर्शनात् । ते मधुपूर्णाः त्रयः पवयः युवयोः स्वभूते मधुवाहने रथे । आगच्छतोः श्रमात् पिपासितयोः युवयोः अस्ति रथे वेयं मध्वित्यर्थः । **सोमस्य** चोपरि **वेनाम्** कान्तिम् युवयोरिच्छामित्यर्थः । विश्वे इत् विदुः इत् एवार्थे । सर्व एव यजमाना जानन्ति आगच्छतोः । आगताभ्यां युवाभ्यां सोमाभिलापितां जानन्तः सर्व एव यजमानाः सोमं दास्यन्तीत्यर्थः । त्रयः स्वम्भासः स्तम्भाः स्कभितासः प्रतिबद्धाः । क्व । सामर्थ्यात् रथे सदसि वा । किमर्थम् । **आरभे** आरम्भणाय अवष्टम्भनाय । आगच्छतोरागतयोर्वा श्रान्तयोः रथे सदसि वा अवष्टम्भनस्तम्भा अपि विद्यन्तः एवेत्यर्थः । एतज्ज्ञात्वा **त्रिः** बहुकृत्वः **नक्तम्** रात्रौ **याथः** यातमस्मत्समीपम् । **त्रिः** उ उकार एवार्थे । बहुकृत्व एव । हे अश्विनौ ! **दिवा** ।। २ ।।

**वेङ्कटमाधव–** त्रीणि मधुपात्राणि सन्ति मधुवाहने भवतोः रथे । **सोमस्य** कान्तां सूर्याम् **अनु** तस्याः स्वयंवरे सर्वे एव देवास्तं रथं प्रत्यक्षेण अजानन् । तस्मिन् तिस्रः स्थूणाः अवष्टम्भनार्थं स्थापिताः । तौ युवां रात्रावस्मान् **त्रिः** आगच्छतम् अह्नि च ।। २ ।।

**मुद्गल– मधुवाहने** मधुद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्ते अश्विनोः सम्बन्धिनि **रथे पवयः** वज्रसमाना दृढाः चक्रविशेषाः **त्रयः** त्रिसङ्ख्याकाः सन्ति । इत् इत्थं चक्रत्रयसद्भावप्रकारम् **विश्वे** सर्वे देवाः **सोमस्य** चन्द्रस्य **वेनाम्** कमनीयां भार्याम् **अनु** उपलक्ष्य यात्रायाम् **विदुः** जानन्ति । यदा सोमस्य वेनया सह विवाहः तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्य अश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः । तस्य रथस्योपरि **स्कम्भासः** स्तम्भविशेषाः त्रयः त्रिसङ्ख्याकाः स्कभितासः स्थापिताः । किमर्थम् । **आरभे** आरब्धुम् अवलम्बितुम् । यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तावलम्बनभूताः स्तम्भा इत्यर्थः । हे **अश्विना!** अश्विनौ! युवां तादृशेन रथेन **नक्तम्** रात्रौ **त्रिः याथः** त्रिवारं गच्छथः । तथा **दिवा** दिवसेऽपि **त्रिः** याथः । रात्रावहनि च रथमारुह्य पुनः पुनः क्रीडथ इत्यर्थः ।। २ ।।

**सायण–** मधुवाहने मधुरद्रव्याणां नानाविधखाद्यादीनां वहनेन युक्तेऽश्विनोः सम्बन्धिनि **रथे** **पवयः** वज्रसमाना दृढाश्चक्रविशेषाः 'त्रयः त्रिसंख्याकाः सन्ति । **इत्** इत्थं चक्रत्रयसद्भावप्रकारं **विश्वे** सर्वे देवाः **सोमस्य** चन्द्रस्य **वेनां** कमनीयां भार्यामभिलक्ष्य यात्रायां **विदुः** जानन्ति । यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्य अश्विनौ गच्छत इति सर्वे देवा जानन्तीत्यर्थः । तस्य रथस्योपरि स्कम्भासः स्तम्भविशेषाः त्रयः त्रिसंख्याकाः स्कभितासः स्थापिताः । किमर्थम् । **आरभे** आरब्धुम् अवलम्बितुम् । यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तालम्बनभूताः स्तम्भा इत्यर्थः । हे **अश्विना** युवां तादृशेन रथेन **नक्तं** रात्रौ **त्रिः याथः** त्रिवारं गच्छथः । तथा **दिवा** दिवसेऽपि **त्रिः** याथः । रात्रावहनि च रथमारुह्य पुनःपुनः क्रीडथ इत्यर्थः ।। मधुवाहने । मधु वाह्यतेऽनेनेति मधुवाहनः । करणे ल्युट् । विदुः । वेत्तेर्लटि विदो लटो वा' इति झेः उसादेशः । स्कम्भासः । 'टभि स्कभि गतिप्रतिबन्धे' । स्कम्भन्ते प्रतिबद्धा भवन्तीति स्कम्भाः । पचाद्यच् । स्कभितासः । स्कम्भुः सौत्रो धातुः । अस्मात् निष्ठायां 'यस्य विभाषा' इति इट्प्रतिषेधे प्राप्ते ग्रसितस्कभित इत्यादिना इडागमो निपातितः । आरभे । 'रभ राभस्ये' । अस्मात् आङ्पूर्वात् सम्पदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** द्वितीयामृचमाह– **मधुवाहने** मधु सोम्यं मधु देवानां अशनं प्रसिद्धं, तद्वाह्यतेऽनेनेति मधुवाहनः तद्युक्त इत्यर्थः तस्मिन् रथे अश्विनोः रथे त्रयः त्रिसंख्याकाः भूरादित्रिस्थानसदृशाः **पवपः** वज्रदृढाः चक्रविशेषाः सन्ति । **सोमस्य** विश्वसत्तास्थिरांशभूत-रसात्मनः सोमस्य राज्ञः **वेनाम् अनु** कमनीयां कान्तां भोग्यभूतां आनन्दमयीं उत्तमज्योतिर्भुवं अनुलक्ष्य प्रयाणे **विश्वे** सर्वेऽपि देवाः विदुः इत् जानन्त्येव, सोमस्य वेनामनु उक्तलक्षणस्य रथस्य गमनं इति शेषः । अत्र सोमस्य चन्द्रस्य भार्यया वेनया सह विवाहे अश्विनोर्गमनमुक्तमिति मन्यते सायणः । न क्वाप्येषा कथा श्रूयते ब्राह्मणाख्यायिकासु पुराणकथासु वा । अथ सोम इह चन्द्रश्चेत् गन्धर्वस्य ध्रुवे पदे (१.२२.१४) इत्था चन्द्रमसो गृहे इत्यादिमन्त्रप्रतिपादितं तत्त्वमवधेयम् । रथगमनसाधनं त्रिचक्रमुक्तम् । आलम्बनार्थाः त्रयः स्तम्भा रथे प्रोच्यन्ते । **त्रयः स्कम्भासः** स्तम्भाः आरभे आलम्बितुं **स्कभितासः** स्थापिताः रथस्योपरि इति शेषः । हे **अश्विना** अश्विनौ, युवां त्रिः त्रिवारं **नक्तम्** रात्रौ **याथः** गच्छथः, **त्रिः** त्रिवारं **दिवा**

अहनि याथः गच्छथः । उ पादपूरणे । अविद्याच्छन्ना तमोव्याप्ता रात्रिः अधस्तनत्रलोक्यावस्थानं लक्षयति अहस्तु नित्यप्रकाशं ऊर्ध्वं तैलोक्यमिति त्रिवेकः । नक्तोषासा इत्यत्र व्याख्या (१.१३.७) तत्ववोधाय कल्पेत । स्कम्भासः, स्कभितासः स्कम्भुः सौत्रो धातुः, द्वितीयस्य इडागमो निपातितः । आरभे-रभ राभस्ये, भावे क्विप् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतम् ।**
**त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतम् ।। ३ ।।**
**समाने । अहन् । त्रिः । अवद्यऽगोहना । त्रिः । अद्य । यज्ञम् । मधुना । मिमिक्षतम् ।**
**त्रिः । वाजऽवतीः । इषः । अश्विना । युवम् । दोषाः । अस्मभ्यम् । उषसः । च । पिन्वतम् ।।**

## ऋग्भाष्यम्

**वैषम्यहीने सुखभाजनेऽह्नि विमुक्तिकालेऽखिलदोषनाशकौ ।**
**स्वभक्तानां शोधयन्तं च यज्ञं त्रिरस्माकं युद्धजिता इषश्च ।**
**सुखानि वा मोक्षगतानि नोऽलमहोरात्रं क्षरतं सर्वदैव ।। ३ ।।**

**ऋग्भाष्यटीका–** समाने । वैषम्य । हे अश्विनौ समाने वैषम्यहीने सुखदुःखवत्त्वलक्षणेन वैचित्र्येण रहिते किं तु केवलं सुखभाजने । अहन्नह्नि । विमुक्तिकाल इति यावत् । त्रिः सर्वदा । अवद्यगोहनौ दोषाच्छादकौ अखिलदोषनाशकौ । युवाम् । प्रसिद्धाश्विपक्षे समानमहर्यज्ञे प्रसिद्धम् । तत्राखिलक्रियाभ्रेषनाशकाविति व्याख्येयम् । अथ स्वभक्तानां युवयोर्भक्तानाम् अस्माकम् । यज्ञं त्रिस्त्रिवारम् । मधुना मधुत्वहेतुना हस्तेन । मिमिक्षतं स्पृशतम् । हस्तस्पर्शेन शोधयतम् । चशब्दो वक्ष्यमाणसमुच्चये । किं च युवं युवामस्मभ्यम् । नो दोषाः रात्रौ उषसश्च उषसि च ततः परस्मिन्दिने च अहोरात्रम् । त्रिः सर्वदैव । वाजवतीर्युद्धवतीर्युद्धजिता । इषोन्नानि । यद्वा मोक्षगतानि सुखानि । तान्यपि ह्याध्यात्मिकयुद्धलब्धानि । पिन्वतं दानकर्मायम् अलं क्षरतम् ।। ३ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विना** अश्विनौ । **समाने** सुखदुःखवता लक्षणेन वैचित्र्यहीने, केवलं

सुखभाजने । **अहन्** अह्नि, विमुक्तिकाल इति यावत् । **त्रिः** सर्वदा । अवद्यगोहना अवद्यगोहनौ, दोषाच्छादकौ, अखिलदोषनाशकौ । युवाम् प्रसिद्धाश्विपक्षे समाने अहन्, यज्ञे । त्रिः । अवद्यगोहना । अखिलक्रियादोषनाशकौ इति व्याख्येयम् । **अद्य** स्वभक्तानाम् युवयोर्भक्तानाम्, अस्माकम् । यज्ञम् । **त्रिः** त्रिवारम् । **मधुना** मधुत्वहेतुना हस्तेन । **मिमिक्षतम्** स्पृशतम्, हस्तस्पर्शेन । शोधयतम् । किं च, **युवम्** युवाम् । अस्मभ्यम् । दोषाः रात्रौ । उषसः च, उषसि च, ततः परस्मिन्दिने च, अहोरात्रम् । **त्रिः** सर्वदा । एव वाजवतीः, युद्धजिताः । इषः, अन्नानि, मोक्षगतानि सुखानि वा, तान्यपि ह्याध्यात्मिकयुद्धलब्धानि । **पिन्वतम्** पिधातुर्दर्शने वर्तते, श्नुविकरणं शब्विकरणं चेति द्विविकरणम्, लोट्, अलं क्षरतम् इत्यर्थः ।।

**स्कन्द– अहन् त्रिः** इत्यनयोः कारकक्रियाविशेषणयोः **अवद्यगोहना** इत्यनया आमन्त्रित-स्थया क्रियया सम्बन्धः । पराङ्गवद्भावस्तु न भवति, त्रिश्शब्दस्य अव्ययस्य प्रतिषेधात् । समाने अहन्नित्यनयोः त्रिःशब्देन व्यवधानात् । समाने अहन् एकस्मिन्नेवाहनि त्रिः बहुकृत्वः अवद्य-गोहनौ । गर्ह्यस्य तमसो गूहयितारौ । स्वेन ज्योतिषा अपहन्तारावित्यर्थः । **त्रिः** बहुकृत्वः **अद्य** अस्मदीयं **यज्ञम् मधुना** उदकेन **मिमिक्षतम्** सिञ्चतम् । **त्रिः** बहुकृत्वः **वाजवतीः** बलवतीः **इषः** अन्नानि हे अश्विनौ! **युवम्** युवाम् **अस्मभ्यम् पिन्वतम्** । सततं दत्तमित्यर्थः ।।

**वेङ्कटमाधव–** एकस्मिन् अहनि **त्रिः** आगतौ हे अवद्यानि विनाशयन्तौ । **त्रिः अद्य** अस्माकम् **यज्ञम् मधुना** सिञ्चतम् । तथा रात्रीः उषसः च बलयुक्तानि अन्नानि युवाम् **अस्मभ्यम् त्रिः** दुग्धम् ।। ३ ।।

**मुद्गल– अश्विना** । हे अश्विनौ देवौ! **युवम्** युवाम् उभौ **समाने अहन्** एकस्मिन्ननुष्ठानदिने **त्रिः अवद्यगोहना** त्रिवारमनुष्ठानगतानां दोषाणाम् संवरणकारिणौ भवतम् । **अद्य** अस्मिन्दिने **यज्ञम्** यज्ञगतं हविः **मधुना** मधुररसेन **त्रिः मिमिक्षतम्** त्रिवारं सिञ्चतम् । किञ्च **दोषाः उषसः** च रात्री दिवसांश्च रात्रिषु दिवसेषु च नैरन्तर्येण **वाजवतीः** बलकारिणीः **इषः** अन्नानि **अस्मभ्यम् त्रिः** त्रिवारम् **पिन्वतम्** सिञ्चतम् । प्रयच्छतमित्यर्थः ।। ३ ।।

**सायण– हे अश्विना** अश्विनौ देवौ 'युवं युवामुभौ **समाने अहन्** एकस्मिन्ननुष्ठानदिने त्रिरवद्यगोहना त्रिवारमनुष्ठानगतानां दोषाणां संवरणकारिणौ भवतम् । **अद्य** अस्मिन् दिने 'यज्ञं

यज्ञगतं हविः मधुना मधुररसेन **त्रिः मिमिक्षतं** त्रिवारं सिञ्चतम् । किं च **दोषाः उषसश्च** रात्रीर्दिवसांश्च रात्रिषु दिवसेषु च नैरन्तर्येण वाजवतीः बलकारिणीः **इषः** अन्नानि **अस्मभ्यं पिन्वतं** सिञ्चतं प्रयच्छतमित्यर्थः । अहन् । 'सुपां सुलुक्' इति सप्तम्याः लुक् । अवद्यगोहना । 'गुहू संवरणे' । अवद्यस्य गृहयितारौ । नन्द्यादित्वात् ल्युः । 'उदुपधाया गोहः' (पा.सू. ६.४.८९) इति प्राप्तस्य उत्वस्य अभावश्छान्दसः । **मिमिक्षतम्** । 'मिह सेचने' । सनि 'एकाच उपदेशेऽनुदात्तात्' इति इट्प्रतिषेधः । 'हलन्ताच्च' इति सनः कित्त्वात् लघूपधगुणाभावः । द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । वाजवतीः । 'उगितश्च' इति ङीप् । **पिन्वतम्** । 'पिवि मिवि णिवि सेचने'। इदित्वात् नुम् । कर्तरि शप् ।। ३ ।।

**सिद्धाञ्जनम्–** तृतीयामृचमाह । हे **अश्विना** अश्विनौ, **युवम्** युवाम् **समाने अहन्** एकस्मिन्नेव दिने अन्तर्यजने चलति **त्रिः** त्रिवारं **अवद्यगोहना** अवद्यानां यजनगतदोषाणां गोहनौ गूहयितारौ, दोषापनोदकारिणी इत्यर्थः । त्रिवारं देहत्रयापेक्षया स्यात् । अद्य इदानीं **यज्ञम्** अस्मदीयं यजनं **त्रिः** त्रिवारं **मधुना** दिव्येन रसेन **मिमिक्षतम्** सिञ्चतम्, रसार्द्रं क्रियतामस्मदन्तर्यजनम् । किञ्च दोषाः **रात्रीः** उषसः च दिवसांश्च, निरन्तरं अहोरात्रमित्यर्थः **त्रिः** त्रिवारं **वाजवतीः** समृद्धिमतीः **इषः** प्रबलप्रेरणाः **अस्मभ्यम् पिन्वतम्** सिञ्चतम् ।। मिमिक्षतम्- मिह सेचने, सनः कित्त्वाल्लघूपधगुणाभावः । पिन्वतम्– पिवि सेचने, इदित्त्वात् नुम् ।।३।।

## ऋक्संहिता पदपाठसहिता

**त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतम् ।**
**त्रिर्नान्द्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतम् ।। ४ ।।**

त्रिः । वर्तिः । यातम् । त्रिः । अनुऽव्रते । जने । त्रिः । सुप्रऽअव्ये । त्रेधाऽइव । शिक्षतम् । त्रिः । नान्द्यम् । वहतम् । अश्विना । युवम् । त्रिः । पृक्षः । अस्मे इति । अक्षराऽइव । पिन्वतम् ।। ४ ।।

## ऋग्भाष्यम्

यद्वर्तनं सर्वलोकेषु तच्च त्रिकालगं युवयोरेव सर्वम् ।
भक्ते जने सुष्ठु रक्ष्ये सुभक्ते त्रिधेव कालानुगते सुशिक्षतम् ।
सुखं वहेतं च युवां तु नः सदा पुष्टिं च नित्यां क्षरतं वर्णवच्च ।। ४ ।।

**ऋग्भाष्यटीका– त्रिर्वर्तिः** । यद्वर्तनम् । **हे अश्विना** अश्विनौ । **युवं** युवाम् । यद्वर्तिः सर्वलोकेषु वर्तनम् । न केवलं सामान्यम् । किन्तु । यच्च त्रिः त्रिकालगं तत्प्रति यातं याथः । अतीतानागतवर्तमानं सकलं प्राणिनां कर्म प्रवर्तयितुं सर्वत्र सन्निहितौ स्थः । तत्सर्वं युवयोरेवेति यावत् । किञ्च अनुव्रते भक्ते जने विषये । त्रिःसर्वदा **शिक्षतं** शिक्षयथः । **सुप्राव्ये सुष्टु** रक्ष्ये सुभक्ते विषय इति यावत् । कथम्भूते । **त्रेधेव** कालानुगते कालत्रयभाविनि कालसम्बन्धनिमित्तमेव त्रैविध्यं न तु वस्तुत इतीवशब्दः । त्रिः सर्वदा । **शिक्षतं** अतिशयेन शिक्षयथः । एवम्भूतौ युवामस्मे अस्मभ्यं नस्तु त्रिः सर्वदा नांद्यंनन्दतीति नन्दस्तस्य भावं सुखं च **वहतं** वहेतं प्रापयेतम् । **पृक्षः** पुष्टिं च । त्रिस्त्रिकालगां नित्यां पिन्वतं क्षरतम् । **अक्षरेव** अक्षराणीव वर्णवदेव । यथा वैदिकामन्त्राः सर्वमभिमतं ददति तथैव ।। ४ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विनौ** अश्विना । युवां यत् वर्तिः, सर्वलोकेषु वर्तनम् । न केवलं सामान्यम्, किं तु यच्च त्रिः त्रिकालगम् । तत्प्रति **यातम्** याथः, अतीतानागतवर्तमानं सर्वप्राणिनां कर्म प्रवर्तयितुं सर्वत्र संनिहितौ स्थः, तत्सर्वं युवयोरेवेति यावत् । किं च, **अनुव्रते** भक्ते । **जने** विषये । **त्रिः** सर्वदा । **शिक्षतम्** शिक्षयथः । **सुप्राव्ये** सुष्ठु रक्ष्ये, सुभक्ते विषय इति यावत् । कथम्भूते ? 'त्रेधेव, कालानुगते, कालत्रयभाविनि 'कालसम्बन्धिनिमित्तमेव त्रैविध्यम्, न तु वस्तुतः' इतीवशब्दः । त्रिः सर्वदा **शिक्षतम्** सुशिक्षतम्, अतिशयेन शिक्षयथः । एवं भूतौ **युवम्** युवाम् । **अस्मे** अस्मभ्यम् नस्तु । **त्रिः** सदा । **नान्यम्** नन्दतीति नन्दः, तस्य भावं च सुखम् । वहतम्, प्रापयतम् । **पृक्षः** पुष्टिम् । च त्रिः, त्रिकालगाम् । नित्यम् । **पिन्वतम्** क्षरतम् । **अक्षरेव** अक्षराणीव, वेदवर्णवदेव, यथा वैदिका मन्त्राः सर्वमभिमतं ददति, तथैव इति ।। ४ ।।

**स्कन्द–** त्रिः वर्तिः त्रिः बहुकृत्वः वर्तिः वर्तन्या प्रसिद्धेन मार्गेण यातम् । क । त्रिः अनुव्रते जने अनुव्रतशब्दः आपन्नभक्तवचनः प्रसिद्धो लोके । बहुकृत्वो भक्ततामापन्ने मादृशे जने । नित्यं भक्तस्य मादृशस्य मनुष्यस्य समीपं गच्छतमित्यर्थः । गत्वा च त्रिः सुप्राव्ये सुष्ठु प्रावयति प्रतर्पयति यो देवताः स सुप्रावी यष्टा तस्मै सुप्राव्ये बहुकृत्वो यष्ट्रे । त्रेधेव शिक्षतम् । त्रिधाशब्दः त्रिशब्दस्य बहुत्वमात्रप्रतिपत्त्यर्थत्वात् बहुवचनस्यार्थे । इवशब्दः अस्त्युप-मार्थस्य सम्प्रत्यर्थे प्रयोगः' (तु.या.७,३१) इति पदपूरणः । शिक्षतिर्दानकर्मा (तु.निघ.३,२०)

बहुप्रकारं दत्तम् । किम् । सामर्थ्यात् धनम् । किञ्च त्रिः नान्यम् टुनदि समृद्धौ । बहुकृत्वः पुत्रादिसंमृद्धिम् वहतम् प्रापयतम् । हे अश्विनौ ! युनां पुत्रादिसमृद्धिमपि दत्तमित्यर्थः । किञ्च त्रिः, पृक्षः अन्ननामस्वेतत् पठितम्(तु.निघ.२,७)'पक्वाः पृक्षो भरन्त वाम्' (ऋ.५,७३,८) इत्यादिषु बहुवचनान्तसामानाधिकरण्यदर्शनात् बहुवचनान्तं द्रष्टव्यम् । बहुकृत्वोऽन्नानि । **अस्मे** अस्मभ्यम् **अक्षरेव पिन्ततम् 'अक्षरम्'** (निघ.१,१२) इत्युदकनाम । उदकानीव पिन्वतम् । यथा मेघः अन्यो या कश्चित् प्रभूतान्युदकानि दद्यादेवं प्रभूतान्यन्नानि बहुकृत्वोऽसाम्यं दत्त-मित्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** त्रिः मार्गं गच्छतम् । त्रिः अनुकूलकर्मणि **जने** आगच्छतम् । **त्रिः** सुष्ठु परिरक्षणीये । तथा **त्रेधा** च दत्तम् । इव इति पूरणम् । त्रिः अस्माकं हर्षजननं धनम् बहतम् । त्रिः अन्नम् अस्मासु उदकानीव पर्जन्यः पिन्वतम् ।। ४ ।।

**मुद्गल– हे अश्विना !** अश्विनौ ! **युवम्** युवाम् **त्रिः वर्तिः यातम्** अस्मदीयवर्तनसाधनं गृहं त्रिर्यातम् । त्रिवारं प्राप्नुतम् । तथा **अनुव्रते** अस्मदनुकूलव्यापारयुक्ते **जने त्रिः** यातं त्रिवारं तदनुग्रहाय गच्छतम् । **त्रिः सुप्राव्ये** त्रिवारं सुष्ठु प्रकारेण भवद्भ्यां रक्षणीये । प्रवर्तमानान् अस्मान् त्रेधेव त्रिभिरेव प्रकारैः शिक्षतम् । पुनःपुनरनुष्ठानमुपदेष्टव्यमित्यर्थः । तथा **नान्यम्** नन्दनीयं सन्तोषकरं फलम् **त्रिः वहतम्** प्रापयतम् । अस्मै अस्मासु पृक्षः अन्नम् **त्रिः पिन्वतम्** त्रिवारं प्रयच्छतम् । दृष्टान्तः । अक्षरेव अक्षराण्युदकानि तानि पर्जन्यो यथा प्रयच्छति तद्वत् ।।

**सायण–** हे **अश्विना युवं त्रिवर्तिर्यातम्** अस्मदीयवर्तनसाधनं गृहं त्रिर्यातं त्रिवारं प्राप्नुतम् । तथा **अनुव्रते** अस्मदनुकूलव्यापारयुक्ते **जने त्रिः** यातं त्रिवारं तदनुग्रहाय गच्छतम् । **त्रिः सुप्राव्ये** त्रिवारं सुष्ठु प्रकर्षेण भवद्भ्यां रक्षणीये प्रवर्तमानानस्मान् **त्रेधेव त्रिभिरेव** प्रकारैः **शिक्षतम्** । पुनः पुनरनुष्ठानमुपदेष्टव्यमित्यर्थः । तथा **नान्द्यं** नन्दनीयं सन्तोषकरं फलं **त्रिः वहतं** प्रापयतम् । 'अस्मे अस्मासु **पृक्षः** अनं **त्रिः पिन्वतं** त्रिवारं प्रयच्छतम् । तत्र दृष्टान्तः । **अक्षरेव** । अक्षराण्युदकानि । अक्षरा स्रोतः तृप्तिः (नि१.२.३२) इति तन्नामसु पाठात् । तानि पर्जन्यो यथा प्रयच्छति तद्वत् ।। वर्तिः । वर्ततेऽत्रेति वर्तिर्गृहम् । 'हृषिपिरुहिवृति' (उ.सू.४.५५८) इत्यादिना इप्रत्ययः । 'सुपां सुलुक्' इति द्वितीयैकवचनस्य सु आदेशः । सुप्राव्ये । उपसर्गद्वयोपसृष्टात् अवतेः कर्मणि ण्यत् । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः ।

तित्स्वरितम्' इति स्वरितत्वम् । शिक्षतम् । 'शिक्ष विद्योपादाने' । नान्द्यम् । ण्यदन्तः । पृक्षः । 'पृची सम्पर्के' । असुनि सुडागमः । अस्मे । 'सुपां सुलुक्' इति शेआदेशः । अक्षरा इव । अभुवते व्याप्नुवन्तीति अक्षराण्युदकानि । औणादिकः क्सरप्रत्ययः । शेर्लोपः ।।४।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्वनौ, **युवम्** युवां **वर्तिः** वर्तनं, अस्मद्वसतिं **त्रिः यातम्** त्रिवारं प्राप्नुतम् । तया **अनुव्रते जने** अनुकूलव्यापारपरे जने **त्रिः** यातमिति सम्बन्धः । दैव्यं कर्मैव अनुकूलव्यापारः तद्युक्ते जने अनुग्रहः क्रियताम् । त्रिः त्रिधा सुप्राव्य सुष्ठु प्रकर्षेण अवितुं रक्षितुं योग्ये कर्मणि अन्तर्यजने विषये त्रेधा इव त्रिप्रकारैरिव **शिक्षतम्** अस्मान् शिक्षयतं (अन्तर्भावितण्यन्तः) रहोविद्यां नः प्रापयतमित्यर्थः । नान्द्यम् नन्दनीयं, प्रीतिकरं फलं **त्रिः वहतम्** प्रापयतम् । **अस्मे** अस्मासु **त्रिः** त्रिवारं पृक्षः प्रीणनं दिव्यं रसं **पिन्वतम्** सिञ्चतम् । कानीव ? **अक्षरेव** अक्षराणि उदकानि यथा पर्जन्यो वर्षति तद्वत् । अक्षरा उदकनाम । वर्तिः वर्ततेऽत्रेति वर्तिः । सुप्राव्ये सुप्रपूर्वकादवतेः कर्मणि ण्यत् । नान्द्यम् ण्यदन्तः । पृक्षो पृची सम्पर्के प्रीणनेऽपि वर्तते, असुनि सुडागमः । प्रीणयतृत्वादत्रं पृक्षो भवति सायणीये कुक्षिसम्पर्चनाद्वा ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिर्नो॑ र॒यिं व॑हतमश्विना यु॒वं त्रिर्दे॒वता॑ता त्रिरु॒ताव॑तं॒ धियः॑ ।**
**त्रिःसौ॑भग॒त्वं त्रिरु॒त श्रवां॑सि नस्त्रि॒ष्ठं वां॒ सूरे॑ दुहि॒ता रु॑हद्रथ॑म् ।। ५ ।।**

त्रिः । नः॒ । र॒यिम् । व॒ह॒त॒म् । अ॒श्वि॒ना॒ । यु॒वम् । त्रिः । दे॒वऽता॑ता । त्रिः । उ॒त । अ॒व॒त॒म् । धियः॑ । त्रिः । सौ॒भ॒ग॒ऽत्वम् । त्रिः । उ॒त । श्रवां॑सि । नः॒ । त्रि॒ऽस्थम् । वा॒म् । सूरे॑ । दु॒हि॒ता । आ । रु॒ह॒त् । रथ॑म् ।। ५ ।।

## ऋग्भाष्यम्

**वित्तं च नित्यं देवततिं च नित्यं धियं च शुभ्रां नित्यमेवावतं नः ।**
**कीर्तिं सौभाग्यं रक्षतं नः सदैव कालत्रये युष्मदीयं रथं च ।**
**पुत्री सूर्यस्यारुहद्भक्तदेहे ज्ञानोदयो वा भगवत्प्रसादात् ।। ५ ।।**

**ऋग्भाष्यटीका–** त्रिर्नो रयिम् । वित्तं च । **हे अश्विनौ** युवां नोऽस्मभ्यम् । त्रिर्नित्यम् । **रयिं** वित्तं च । **वहतं** प्रापयतम् । **देवताता** देवततिं च । त्रिर्नित्यं वहतम् । देवाः सर्वदा यथाऽस्मत्पूजास्वीकारायागच्छेयुस्तथा कुरुतम् । सुभग एव सौभगस्तस्य भावः सौभगत्वं सौभाग्यम् । **नो**ऽस्मभ्यम् । त्रिः सदैवावतम् । श्रवांस्युत कीर्तिं च । न त्रिः सदैवावतम् । कथं भूतौ । सूरेः सूर्यस्य दुहिता पुत्री उषा **त्रिष्ठं** कालत्रये भवम् । **वां रथं** युष्मदीयं रथमारुहत् । तथाभूतौ । अध्यात्मं तु वां भगवतोर्युवयोः प्रसादात् । सूरेर्विदुषो गुरोर्दुहिता बुद्धिस्त्रिकाले भवं रथमारुहत् । भक्तदेहे ज्ञानोदयो भवतीति ।। ५ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विना** अश्विनौ । **युवम्** युवाम् । **नः** अस्मभ्यम् । **त्रिः** नित्यम् **रयिम्** वित्तम् । **वहतम्** प्रापयतम् । **देवताता** देवततिम् । च **त्रिः** नित्यम् । **वहतम्** देवाः सदा यथास्मत्पूजास्वीकारायागच्छेयुस्तथा कुरुतम् । **उत** अन्यच्च । **धियः** बुद्धीः शुद्धां धियम् । च **त्रिः** नित्यमेव । **अवतम्** रक्षतम् । सुभग एव सौभगः स्वार्थिकोऽण्, तस्य भावः सौभगत्वम्, सौभाग्यम् । **नः** अस्मभ्यम् । **त्रिः** सदा । एव अवतम् श्रवांसि **उत** कीर्तिं च । नः । **त्रिः** सदा । एव अवतम् कथं भूतौ ? सूरे, सूरस्य सूर्यस्य । **दुहिता** पुत्री उषाः । **त्रिष्ठम्** कालत्रये भवम् । **वां रथं** युष्मदीयं रथम् । **आ रुहत्** । तादृशौ इत्यर्थः । अध्यात्मं तु **वाम्** भगवतोर्युवयोः । प्रसादात् **सूरे** सूरेः, विदुषो गुरोः । **दुहिता** बुद्धिः । **त्रिष्ठम्** त्रिकाले भवम् । **रथम् आरुहत्**, भक्तदेहे ज्ञानोदयोऽभवत् इति ।। ५ ।।

**स्कन्द–** **त्रिः** बहुकृत्वः **नः** अस्मभ्यम् **रयिम्** धनम् **वहतम्** प्रापयतं दत्तं हे अश्विनौ! युवाम् । क्व । **त्रिः देवताता** यज्ञनामैतत् (तु.निघ.३,१७) त्रिरावृत्ते यागे पुनःपुनः यजद्भ्योऽस्मभ्यम् इत्यर्थः । **त्रिः उत अवतम् धियः** उतशब्दोऽप्यर्थे । धिय इत्यस्माच्च परो द्रष्टव्यः । धियोऽपि त्रिरजतम् । कर्माण्यपि प्रज्ञा वा अस्मदीया बहुकृत्वो रक्षतमित्यर्थः । किञ्च **त्रिः सौभगत्वम्** बहुकृत्वः सौभाग्यं सुधनतां वा । किम् । साकाङ्क्षत्वात् योग्यत्वाच्च व्यवहितस्यापि वहतमित्यस्यानुषङ्गः । वहतं दत्तम् । **त्रिः उत श्रवांसि 'श्रवः'** (निघ.२,७) इत्यन्ननाम । कीर्तिपर्यायो वा । अन्नान्यपि कीर्तिं वा बहुकृत्वो वहतम् । **कस्मै** । नः **अस्मभ्यम्** । किञ्च **त्रिष्ठम् वाम्** इत्यादि । अत्रेति हासमाचक्षते– 'सूर्यस्य दुहितरं देवा वरयामासुः । ते ऊचुः– आजिं धावाम, यो नो जेष्यति तस्येयं भविष्यतीति । तामश्विनौ

जिग्यतुः । सा जिताऽश्विनो रथमारुरोह इति । तदेतत् **त्रिष्टं वाम्** इत्यादिनोच्यते । 'त्रिबन्धुरेण त्रिवृता रथेन त्रिः चक्रेण सुवृता यातमर्वाक्' (ऋ.१,११८,१) 'क्व भी चक्रा त्रिवृतः (ऋ. १,३४,९) इत्यादिषु दर्शनादश्विनोः त्रिचक्रो रथः । स त्रिषु चक्रेषु स्थितत्वात् लोकत्रयस्थत्वात् च त्रिष्ठः । तं त्रिष्ठम् युवयोः स्वभूतम् । **सूरे दुहिता** सूरशब्दः सूर्यपर्यायः । षष्ठ्यर्थे सप्तमी । तत्प्रभवत्वाच्च उषसो दुहितृव्यपदेशः । सूर्यस्य दुहिता उषाः । **आ रुहत्** आरूढवती **रथम्** । तत् कक्षीवान् वक्ष्यति– **'आ वां रथं दुहिता सूर्यस्य'** (ऋ.१,११६,१७) इति ।। ५ ।।

**वेङ्कटमाधव– त्रिः** अस्मभ्यं धनम् **वहतम्** । **त्रिः** यज्ञे दत्तम् । अपि च कर्माणि रक्षतम् । **त्रिः** सौभाग्यम् । **त्रिः उत** अन्नानि । त्रिभिश्चक्रैर्यस्तिष्ठति तं युवयोः रथं सूर्ये स्वयंवरार्थं गतयोस्तस्य दुहिता आ रुरोह ।। ५ ।।

**मुद्गल– हे अश्विना** । अश्विनौ । **युवम्** युवाम् **नः अस्मान् रयिम्** धनम् **त्रिः वहतम्** त्रिवारं प्रापयतम् । **देवताता** देवतातौ देवैर्युक्ते कर्मणि **त्रिः** त्रिवारम् आगच्छन्तमिति शेषः । **उत** अपि च धियः अस्मद्बुद्धीः **त्रिः** त्रिवारं रक्षतम् । **सौभगत्वम्** सौभाग्यम् **त्रिः** वहतमिति शेषः । **उत** अपि च **श्रवांसि** अन्नानि **नः** अस्मभ्यम् **त्रिः** वहतम् । **वाम्** युवयोः सम्बन्धिनम् **त्रिष्टम्** चक्रत्रयेऽवस्थितम् **रथम् सूरे** सूर्यस्य **दुहिता** पुत्री **आ रुहत्** आरूढवती ।। ५ ।।

**सायण–** हे **अश्विना युवं नः** अस्मान् **रयिं** धनं **त्रिः वहतं** त्रिवारं प्रापयतम् । देवताता देवतातौ देवैर्युक्ते कर्मणि **त्रिः** त्रिवारमागच्छतमिति शेषः । उत अपि च धियः अस्मद्बुद्धीः त्रिः त्रिवारं रक्षतम् । **सौभगत्वं** सौभाग्यं **त्रिः** वहतमिति शेषः । **उत** अपि च **श्रवांसि** अन्नानि **नः** अस्मभ्यं **त्रिः** वहतम् । **वां** युवयोः सम्बन्धिनं त्रिष्ठं चक्रत्रयेऽवस्थितं **रथं सूरे** सूर्यस्य **दुहिता** पुत्री । दुहिता दुर्हिता दूरं हिता (निरु.३.४) इति यास्कः । सा आरूढवती । देवताता । सर्वदेवात्तातिल्' (पा.सू.४.४.१४२) इति स्वार्थिकः तातिल्प्रत्ययः । तेन देवतातिशब्देन देवसम्बन्धो यज्ञो लक्ष्यते । 'देवताता मखः' (नि.३.१७.१०) इति तन्नामसु पठितत्वात् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । 'सुपां सुलुक्' इति सप्तम्या डादेशः । निष्ठम् । त्रिषु चक्रेषु तिष्ठतीति त्रिष्ठः । 'सुपि स्थः' (पा.सू.३.२.४)इति कः । 'अम्बाम्ब' (पा.सू.८.३.९७) इत्यादिना सकारस्य षत्वम् । **सूरे** । 'षू प्रेरणे' । सुसूधागृधिभ्यः कन्' (उ.सू.२.१८२) इति कन् । नित्त्वादाद्युदात्तः । विभक्तिव्यत्ययः । आ रुहत् । 'कृमहरुहिम्य छन्दसि' (पा.सू.३.१.५९) इति च्लेः अङादेशः ।। ५ ।।

**सिद्धाञ्जनम्–** **हे अश्विना** अश्विनौ, **युवम्** युवाम् **रयिम्** धनं **त्रिः** निवारं **नः** अस्मान् वहतम् प्रापयतम् । **देवताता** देवतातौ (स्वार्थिकः तातिल् प्रत्ययः) देवसदसीत्यर्थः त्रिः त्रिवारं आगच्छतमित्यध्याहारः । उत अपि च विः धियः **बुद्धीः** **अवतम्** प्रवर्धयत, **सौभगत्वम्** सौभाग्यमपि च त्रिः वहतम् । **उत** अपि च **श्रवांसि** दिव्यावेशश्रवणानि **नः** अस्मभ्यं **त्रिः** बहतम् । वाम् युवयोः विष्ठम् विचक्रावस्थितं **रथम्** **सूरे** सूर्यस्य (विभक्तिव्यत्ययः) दुहिता पुत्री **आरुहत्** आरूढवती । अश्विनोर्भार्या सूर्या तद्रथमारोहतीति प्रसिद्धम् । आश्विनतत्त्वविचारे चोपन्यस्तम् । त्रिष्ठम्-त्रिषु तिष्ठतीति, सस्य षत्वम् । सूरे षू प्रेरणे, क्रन् प्रत्ययः । दुहिता-दुर्हिता दूरे हितेति यास्कः, दुह धातोर्निष्पन्नो दुहितृशब्दः, दोग्धि पितरौ दुहिता ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः।**
**ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ।। ६, ४ ।।**

त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊँ इति । दत्तम् । अत्ऽभ्यः । ओमानम् । शम्ऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतम् । शुभः । पती इति ।। ६, ४ ।।

## ऋग्भाष्यम्

**सर्वेषु कालेष्वपि भेषजानि नः सर्वलोकप्रभवानि दत्तम् ।**
**अद्भ्यः सुखायैव सुखं ममैव स्वल्पस्य युष्मत्पुत्रकस्याथ दत्तम् ।**
**पती शुभस्याथ सुतस्य शंयोर्मदीयस्यैवावहतं सुखं वा ।। ६,४ ।।**

**ऋग्भाष्यटीका–** त्रिर्नो अश्विना । पूर्वार्धं संक्षेपतो व्याख्याति ।। सर्वेष्विति ।। अद्भ्य इत्येतत् दिव्यानि पार्थिवानि इत्येतत्तुल्यं पुनस्त्रिशब्दश्रवणादिति प्रतीतिनिरासायोक्तम् । अद्भ्यः सुखायैवेति । यथा चैवं योजना । हे अश्विनौ अद्भ्यः उ सुखायैव । नोऽस्मभ्यम् । त्रिः सर्वेष्वपि कालेषु । दिव्यानि दिवि भवानि । भेषजा भेषजानि दत्तम् । त्रिःपार्थिवानि पृथिव्यां भवानि च दत्तम् । तथा त्रिरंतरिक्ष्याण्यपि दत्तमिति शेषः । अपां लोकत्वाभावात् ये देवा स इत्यत्रेवापूच्छब्दस्यान्तरिक्षलोकोपलक्षणत्वे तु न विरोधः । तत्र पञ्चमीबहुवचनमेतत् ।

उत्तरार्धव्याख्यानं सुखमिति । अथान्यच्च । न केवलं सुखसाधनानि भेषजानि । किं तु शुभस्पती पारस्करादित्वात्सुट् । युवां शयोः कंशंभ्यामिति मत्वर्थे युस् । भेषजजनितैहिकसुखवतः । चतुर्थ्यर्थे षष्ठी । सूनवे युष्मत्पुत्रकस्य । **ममकाय** स्वल्पस्य ममैव । अस्मदश्चतुर्थ्या ममादेशः छान्दसः । अल्पार्थे चाकजित्युक्तं भवति । ओमानम् ओतामानेष्वित्युक्तप्रकारेणानुभवगोचरम् । त्रिधातु त्रिष्वपि कालेषु धीयत इति नित्यम् । शर्म सुखं मुक्तिगतम् । **वहतं** प्रापयतं दत्तम् । अथ सुतस्येत्यादिना प्रकारान्तरेण व्याचष्टे । अथवेति सम्बन्धः । पूर्वं ममकाय सूनव इति सामानाधिकरण्येन व्याख्यातम् । इदानीं तु वैय्यधिकरण्येनेति विशेषः । **ममकाय** मामकाय । अणि वृद्ध्यभावः छान्दसः ।। ६,४ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विना** अश्विनौ । **अद्भ्यः** सुखाय । उ एव । **नः** अस्मभ्यम् । **त्रिः** सर्वेष्वपि कालेषु । **दिव्यानि** दिवि भवानि । **भेषजा** भेषजानि । **दत्तम्** त्रिः । **पार्थिवानि** पृथिव्यां भवानि च दत्तम् । **तथा** त्रिः आन्तरिक्षाणि च दत्तम् इति शेषः । न केवलं सुखसाधनानि भेषजानि, किं तु (शुभपती) **शुभस्पती** पारस्करादित्वात्सुट्, अध्यापकास्तु 'शुभः । पती इति' इति पदद्वयं वदन्ति । युवाम् शंयोः, 'कंशंभ्यां बभयुस्तितुतयसः' इति मत्वर्थे युस्, भेषजजनितैहिक सुखवतः, चतुर्थ्यर्थे षष्ठीयम् । सूनवे, युष्मत्पुत्राय । **ममकाय** स्वल्पाय मह्यम्, अस्मदश्चतुर्थ्यां ममादेशश्च च्छान्दसः, अल्पार्थे चाकच् । यद्वा युष्मत्पुत्राय सूनवे, मह्यम् । **ममकाय** मामकाय, मदीयाय इत्यर्थः, अणि वृद्ध्यभावश्छान्दसः । **ओमानम्** 'ओता मानेषु' (ऋ०.भा०) इत्युक्तप्रकारेणानुभवगोचरम् । **त्रिधातु** त्रिकालेषु धीयत इति नित्यम् । **शर्म** सुखम्, मुक्तिगतम्, वहतम्, प्रापयतम्, दत्तम् ।। ६ ।।

**स्कन्द–** **त्रिः** बहुकृत्वः **नः** अस्मभ्यम् **अश्विना** । अश्विनौ ! **दिव्यानि भेषजा** दिव्यानि भेषजानि व्याधिनिवृत्तिकराण्यौषधानि । **त्रिः पार्थिवानि त्रिः** उ त्रिरेव **दत्तम् अभ्यः** अन्तरिक्षात् । **'आपः'** (निघ.१.३) इति ह्यन्तरिक्षनाम । लोकत्रयेऽपि यानि भेषजानि तान्यस्मभ्यं बहुकृत्वो दत्तमित्यर्थः । किञ्च **ओमानम्** सर्वोपस्करपालनसमर्थम् । **शंयोः** चतुर्थ्यर्थे षष्ठी । शंयवे सुखकामाय **ममकाय** मामकीनाय **सूनवे** पुत्राय । **त्रिधातु** धीयन्ते प्राणिनां देहेष्विति धातवः शरीरस्थितिहेतवोऽन्नरसाः । देवपितृमनुष्योपभोग्यैरन्नरसैस्त्रिभिरप्युपेतम् । शर्म गृहनामैतत् (तु.निघ.३,४) । गृहम् **वहतम्** प्रापयतं दत्तम् । शुभः **पती** । उदकस्य स्वामिनौ!

अथवा शंयोरिति सुखेच्छोपादानादिष्यमाणस्य याचितव्यत्वात् शं च दत्तमित्यर्थः, न गृहम् । ओमानमित्यपि अवतेस्तृप्तिकर्मणः । अवनं पालनं वा । त्रिधात्वित्यपि त्रयाणां धातूनां समूहः । अवनपालनयोरन्यतरत् देवपितृमनुष्योपभोग्यमन्नरसत्रयसमूहं सुखं च दत्तमित्यर्थः । अथवा त्रिधात्विति शर्मण एव विशेषणम्, नार्थान्तरप्रतिनिर्देशः । धातुशब्देन तु शीतोष्णवर्षकालास्त्रय उच्यन्ते । त्रिषु कालेषु भवं त्रिधातु शर्म । कालत्रयेऽपि सुखं दत्तमित्यर्थः ॥ ६ ॥

**वेङ्कटमाधव–** **त्रिः** अस्मभ्यम् अश्विनौ! दिवि भवानि भेषजानि **दत्तम्** । **त्रिः पार्थिवानि** **त्रिः** च आन्तरिक्षाणि । **शंयोः** बार्हस्पत्यत्य यज्जगतः रक्षकं सुखं तत् त्रिगुणम् उदकपती ! **सूनवे** मदीयाय आवहतम् ॥ ६ ॥

**मुद्गल–** हे **अश्विना** ! अश्विनौ ! **नः** अस्मभ्यम् **दिव्यानि** द्युलोकवर्तीनि **भेषजा** औषधानि **त्रिः दत्तम्** । तथा **पार्थिवानि** पृथिव्यामुत्पन्नान्यौषधानि **त्रिः दत्तम्** । **अद्भ्यः** उ अन्तरिक्षसकाशादपि औषधानि **त्रिः** दत्तम् । **शंयोः** एतन्नामकस्य बृहस्पतिपुत्रस्य सम्बन्धिनम् **ओमानम्** सुखविशेषं **ममकाय सूनवे** मदीयाय पुत्राय दत्तम् । **हे शुभस्पती** । शोभनस्यौषधजातस्य पालकौ ! द्युवाम् **त्रिधातु** वातपित्तश्लेष्मधातुत्रयशमनविषयम् **शर्म** सुखम् **वहतम्** प्रापयतम् ॥ ६ ॥

**सायण–** हे **अश्विना** **नः** अस्मभ्यं **दिव्यानि** द्युलोकवर्तीनि **भेषजा** औषधानि **त्रिः दत्तम्** । तथा **पार्थिवानि** पृथिव्यामुत्पन्नान्यौषधानि **त्रिः** दत्तम् । **अद्भ्यः** उ अन्तरिक्षसकाशादप्यौषधानि **त्रिः** दत्तम् । आपः इत्यन्तरिक्षनाम, 'आपः पृथिवी भूः' (नि.१.३.८) इति तन्नामसु पाठात् । **शंयोः** एतन्नामकस्य बृहस्पतिपुत्रस्य । ते शंयुं बार्हस्पत्यमब्रुवन् (तै.सं.२.६.१०.१) इति ब्राह्मणान्तरात् । तस्य सम्बन्धिनम् **ओमानं** सुखविशेषं **ममकाय सूनवे** मदीयाय पुत्राय **दत्तम्** । **हे शुभस्पती** शोभनस्यौषधजातस्य पालकौ युवां **त्रिधातु** वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखं **वहतं** प्रापयतम् । **दिव्यानि** । दण्डादित्वात् (पा.सू. ५.१.६६) यप्रत्ययः । **भेषजा** । भिषज् चिकित्सायाम् । 'पुंसि संज्ञायाम्' इति घः । **शंयोः** । शमु उपशमे । क्विप् । शम् । यु अमिश्रणे । अस्मात् विच् । कृदुत्तरपदप्रकृतिस्वरः । **त्रिधातु** । सितनिगमिमसिसच्यविधाञ्कृशिभ्यस्तुन् (उ.सू.१.६९) । **अद्भ्यः** । 'उडिदम्' इत्यादिना

विभक्तेरुदात्तत्वम् । **ओमानम्** । अवतेः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । 'ज्वरत्वर.....' इत्यादिना अकारवकारयोः ऊठ् । सार्वधातुकार्धधातुकलक्षणो गुणः । यदि 'ज्वरत्वर..' इत्यत्र 'अनुनासिके च' (पा.सू.६.४.१९)इति नानुवर्तते तर्हि पूर्वेणैव सूत्रेण वकारस्य ऊडादेशो भविष्यति । **शुभस्पती** । 'शुभ दीप्तौ' । सम्पदादिलक्षणः क्विप् । 'षष्ट्याः पतिपुत्रः' इति संहितायां विसर्जनीयस्य सत्वम् । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– हे अश्विना** अश्विनौ, **नः** अस्मभ्यं **दिव्यानि** द्युस्थानानि **भेषजा** औषधानि **त्रिः** त्रिवारं **दत्तम्** प्रयच्छतम् । **पार्थिवानि** पृथिवीस्थानानि औषधानि **त्रिः** दत्तम् । तथा **अद्भ्यः** उ आप्यस्थानादन्तरिक्षादपि औषधानि **त्रिः** दत्तम् । हे **शुभस्पती** शोभनस्य सर्वस्य पालकौ **ममकाय** मदीयाय **सूनवे** पुत्राय **शंयोः** बार्हस्पत्यस्य ऋषेः **ओमानम्** रक्षात्मकं सुखं दत्तम् । तथा **त्रिधातु** त्रयाणां अन्नप्राणमनसां धारकं (त्रयो धातवो धारकाः यस्मिन् तत्) **शर्म** शरणं सुखं वा **वहतम्** प्रापयतम् । **ओमानम्** अवतेः । **शुभस्पती** व्याख्यातम् ।

शंयुः ऐतिहासिकः । शं शान्तिसुखमात्मन इच्छन्तीति शंयुः, शान्तिसुखप्रतिष्ठाया निदर्शनभूत ऋषिः । तोक-तनय-अपत्य-प्रजा-पुत्रादिशब्दाः रहस्यार्थपक्षे यजमानस्य ऋषेः दिव्यसमृद्धिविसरा रहोविद्यासन्तानमहिम्ना प्रजासु प्राप्तप्रतिष्ठा इति बोध्यम् । भेषजानि नानाविधार्तिहराणि । 'त्रिधातु' वातादिधातुत्रयशमनविषयमिति भैषज्यपक्षमाचक्षते सायणः । अस्याप्यन्तर्भावो भवतु नाम । नेदं धातुत्रयं वातादिकमात्रं, मन्त्रान्तरेषु विधातुशब्दार्थमन्यथैवाचष्टे । मा भूदिह विस्तरः ।

।। इति प्रथमाष्टके तृतीयाध्याये चतुर्थो वर्गः ।।

## ऋक्संहिता पदपाठसंहिता

**त्रिर्नो॑ अश्विना यज॒ता दि॒वेदि॑वे॒ परि॑ त्रि॒धातु॑ पृथि॒वीम॑शायतम् ।**
**ति॒स्रो ना॑सत्या रथ्या परा॒वत॑ आ॒त्मेव॒ वात॒ः स्वस॑राणि गच्छतम् ।। ७ ।।**
त्रिः । न॒ः । अ॒श्वि॒ना॒ । य॒ज॒ता । दि॒वेऽदि॑वे । परि॑ । त्रि॒ऽधातु॑ । पृ॒थि॒वीम् । अ॒शा॒य॒त॒म् ।
ति॒स्रः । ना॒स॒त्या॒ । र॒थ्या॒ । प॒रा॒ऽवत॑ः । आ॒त्माऽइ॑व । वात॑ः । स्वस॑राणि । ग॒च्छ॒त॒म् ।।

**ऋग्भाष्यटीका–** त्रिर्नो अश्विना यजता । अयं वर्गः शिष्यमतिपरीक्षार्थं न व्याख्यातो भाष्यकृतेति सम्प्रदायविदः । तथापि यथा श्रुतं यथामति व्याख्यास्यामः । हे **अश्विना दिवे दिवे** । **त्रिः** कालत्रये । युवां **नो**ऽस्माकम् । **यजतौ** याज्यौ । भवतमिति शेषः । यौ **त्रिधातु** त्रिकालम् । 'सितनिगमि..' इत्यादिना धत्त इति धातुः कालः । पृथिवीं **पर्यशायतं** पर्यशाययतम् । स्थापितवन्तौ स्थः । हे **नासत्या** परावतो दूरतोऽप्यागन्तुमिति शेषः । तिस्रो लोकत्रयसम्बन्धिन्यो **रथ्या** रथ्याः । युवयोः सुगमाः सन्ति । तस्माज्जगतोऽन्तरात्मा वात इव । **स्वसराणि** सर्वेषु दिनेषु । **गच्छतम्** आगच्छतम् ।। ७ ।।

**मन्त्रार्थमञ्जरी–** पञ्चमो वर्गो भाष्यकृता शिष्यबुद्धिशिक्षार्थं न व्याख्यातः इति सम्प्रदायविदः, टीकाकृता तु व्याख्यातः । **हे अश्विना** अश्विनौ । **दिवेदिवे** । **त्रिः** कालत्रये । **युवाम् नः**, अस्माकम् । **यजता** याज्यौ, यजतेः कर्मण्यतच्प्रत्ययः । भवतम् इति शेषः । यौ **त्रिधातु** त्रिकालम्, 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इत्युणादिसूत्रेण दधातेः तुन्प्रत्ययः, धत्त इति धातुः कालः । **पृथिवीम्** । **परि अशायतम्** स्थापितवन्तौ स्थः । **हे नासत्या** नासत्यौ । **परावतः** दूरतः अपि आगन्तुम् इति शेषः । **तिस्रः** लोकत्रयसम्बन्धिन्यः । **रथ्या** रथ्याः, रथमार्गाः । युवयोः सुगमाः सन्ति तस्मात् आत्मेव वातः जगतोऽन्तरात्मा वात इव । **स्वसराणि** सर्वेषु दिनेषु । **गच्छतम्** आगच्छतम् ।। ७ ।।

**स्कन्द– त्रिः** बहुकृत्वः **नः** अस्मान् हे अश्विनौ ! **यजता** नेदमामन्त्रितम्, अननुदात्तत्वात् । प्रत्यक्षकृतश्चायं मन्त्रः । अतः यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यौ यजता यष्टव्यौ यागार्हौ **दिवेदिवे** अहन्यहनि तौ **परि त्रिधातु पृथिवीम्** त्रिधात्विति पृथिवीसामानाधिकरण्यात् व्यत्ययेन नपुंसकता । पृथिवीशब्देनापि समस्तभूमण्डलवचनेनैकदेशोऽत्र लक्ष्यते । त्रिभिरपि रसैरूपेतां निवासभूमिम् । परि **अशायतम्** अश्नोतेरिदं ण्यन्तस्य छान्दसं रूपम् । पर्यशायतं परिप्रापयतम् । दत्तमस्मभ्यमित्यर्थः । अथवा न इति षष्ठी पृथिवीविशेषणार्था । पृथिवी च वेदिरभिप्रेता । अशायतमित्यपि प्रकृत्यन्तरस्यैवाश्नोते रूपम् । अस्माकं स्वभूतां वेदिलक्षणां पृथिवीं परि अशायतम् अश्नुवाथाम् । सर्वतो व्याप्नुतमित्यर्थः । अथवा अशायतमिति शेते रूपम् । शेतिश्च स्थानार्थः । शुद्धोऽप्याङ्पूर्वार्थे द्रष्टव्यः । सर्वत आतिष्ठतम् । अवष्टभ्य तिष्ठतमित्यर्थः । त्रिधात्विति धातुशब्दो यद्यन्नरसवचनः ततः पूर्ववत् पृथिवी विशेषणम् । त्रिभी

रसैरूपेतां वेदिलक्षणां पृथिवीमिति । अथ धातुशब्दः कालवचनः । ततः क्रियाविशेषणम् । त्रिषु पूर्वाह्णमध्यन्दिनापराह्णलक्षणेषु कालेषु भवं त्रिधातु अशायतम् । सर्वासु यागवेलासु-अशायतमित्यर्थः । किञ्च **तिस्रः** अपि अस्मदीया ऐष्टिकपाशुकसौमिकलक्षणा वेदीः । हे नासत्या! नासत्यनामानौ ! यद्यपि चाश्विनोरन्यतरस्येदं नामधेयं तथापि साहचर्यादुभयोर्व्यपदेशः । रथ्या! रथस्य वोढारौ ! यज्ञान् प्रति प्रापयितारौ! रथे वा साधू ! **परावतः** दूरनामैतत् (तु.निघ.३, २६) । तात्स्थ्याच्चात्र ताच्छब्द्म् । दूरस्था अपि **आत्मेव वातः** आत्मशब्देनात्र आत्म-सम्बन्धात् मन उच्यते । वात इत्यपि लुप्तेवशब्दम् उपमानमेव द्वितीयम् । मन इव च वात इव च । यथा वायुमनसी शीघ्रं गच्छतः तद्वत् । **स्वसराणि** अहर्नामैतत् (तु.निघ.१,९) । सप्तम्यर्थे चात्र प्रथमा । यजनीयेष्वहस्सु शीघ्रं गच्छतम् । अथवा आत्मेति वातस्यैव विशेषणम् न पृथगुपमानम् । वातो हि सर्वस्यात्मा, सर्वशरीराणां पाञ्चभौतिकत्वात् । यथा सर्वस्यात्मा वातः शीघ्रं गच्छति तद्वच्छीघ्रं गच्छतमिति । अनयोश्चार्धर्चयोः पूर्वेण निवासभूमिप्राप्तिराशास्यते, परेण यागकालेषु वेदिगमनमित्यस्यां तावत् कल्पनायामपौनरुक्त्यमेव । यदा तु पूर्वेण वेदि-व्याप्तिरुक्ता, तदा परेण वेदिगमनमुच्यते । गमनोत्तरकालं व्याप्तिः पूर्वेणेत्येवमपौनरुक्त्यम् । वाक्यभेदाद्वा अर्धर्चयोस्तुल्यार्थत्वेऽप्यपौनरुक्त्यमेवेति ॥ ७ ॥

**वेङ्कट–** अश्विनौ! यजनीयौ अह्नः **त्रिः** अस्मात् वेदिभूताम् **पृथिवीम्** बर्हिषा त्रिधातुना **परि अशायतम्** परितः स्तारितवन्तौ । **त्रिधातु** तिस्रो वेदीः नासत्यौ ! रथ्यौ ! दूरात् आगच्छतम् । व्याप्त इव वायुः अहानि । यथा वायुर्दिवसेषु सञ्चरति ॥ ७ ॥

**मुद्गल– हे अश्विना** ! अश्विना ! **दिवेदिवे** प्रतिदिनम् **यजता** यष्टव्यौ युवा नः अस्मदीयाम् पृथिवीम् वेदिरूपां भूमिम् परि सर्वतः प्राप्य त्रिधातु कक्ष्यात्रययुक्ते आन्तीर्णे बर्हिषि त्रिः त्रिवारम् । अशायनम् शयनं कुरुतम् । हे नासत्या । सत्यवन्तौ! रथ्या । रथ्यौ! रथस्वामिनौ । तिस्रः त्रिसङ्ख्याका ऐष्टिकपपाशुकसौमिकरूपाः वेदीः परावतः दूरदेशात् द्युलोकात् गच्छतम् । दृष्टान्तः । **स्वसराणि** शरीराणि **आत्मेव वातः** वया प्राणिनामात्मभूतः प्राणवायुः तदीयानि शरीराणि गच्छति तद्वत् ॥ ७ ॥

**सायण–** हे अश्विना दिवेदिवे प्रतिदिनम् । दिवेदिवे 'द्यविद्यवि' (नि.१.९.११) इति अहर्नामसु पठितत्वात् । 'यजता यष्टव्यौ युवां नः अस्मदीयां पृथिवीं वेदिरूपां भूमिं परि

सर्वतः प्राप्य त्रिधातु कक्ष्यात्रययुक्ते आस्तीर्णे बर्हिषि **त्रिः** त्रिवारम् **अशायतं** शयनं कुरुतम् । हे **रथ्या** रथ्यौ रथस्वामिनौ तिस्रः त्रिसंख्याकाः ऐष्टिकपाशुकसौमिकरूपा वेदीः **गच्छतम्** । तत्र दृष्टान्तः । स्वसराणि शरीराणि **आत्मेव वातः** । यथा प्राणिनामात्मभूतः प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत् । यजता । यजतेः 'भृमृदृशि.....' (उ.सू.३.३९०) इत्यादिना अतच् । 'चितः' इत्यन्तोदात्तत्वम् । **त्रिधातु** । त्रेधा धीयते निधीयते इति त्रिधातु । 'सितनिगमि....' (उ.सू.१.६९) इत्यादिना धात्रः तुन् । नित्त्वादाद्युदात्तत्वम् । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । 'सुपां सुलुक्' इति सप्तम्या लुक् । **अशायतम्** । अदादित्वात् शपो लुक् । अशयातामित्यस्य ह्रस्वदीर्घयोर्व्यत्यासः । **नासत्या** । सत्सु साधू सत्यौ । न सत्यौ असत्यौ । न असत्यौ नासत्यौ । 'सत्यावेव नासत्यावित्यौर्णवाभः' (निरु.६.१३) इति यास्कः । 'नभ्राण्नपान्' इत्यादिना नञः प्रकृतिभावः । **रथ्या** । रथार्हौ स्वामिनावित्यर्थः । 'छन्दसि च' (पा.सू.५.१.६७) इति यप्रत्ययः । **स्वसराणि** । सरन्ति गच्छन्तीति सरा इन्द्रियाणि । स्वकीयाः सरा येषां शरीराणाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– हे अश्विना** अश्विनौ, **दिवेदिवे** अहरहः **यजता** यजनीयौ युवां **नः** अस्मदीयां **पृथिवीम्** जागरितस्थानां अन्नमयक्षेत्रभूतां भूमिं, तत्सदृशीं चितिं, **परि** परितः **त्रिः** प्राप्य **त्रिधातु** त्रयो धातवः धारकाः कक्ष्यात्रयभूताः अन्नमयाद्याधारतत्त्वत्रयात्मकाः यस्मिन् कर्मणि तत् **अशायतम्** अशयातां, शयनं कुरुतम् । हे **रथ्या नासत्या** रथस्वामिनौ अश्विनौ, **तिलः** उक्तलक्षणां त्रिकक्ष्यायुक्तां पृथिवीमित्यर्थः **परावतः** परस्मात् स्थानादत्यन्तदूरात् **गच्छतम्** प्राप्नुतम् । तत्र दृष्टान्तः **आत्मा इव** आत्मभूतः **वातः** प्राणवायुः **स्वसराणि** स्ववासस्थानानि यथा गच्छति तद्वत् । आत्मा जीवः प्राणात्मा यथा स्वीयं शरीरं प्रविशति तथा अश्विनौ परमाद्धाम्नः आगत्य त्रिकक्ष्यायुक्तं पार्थिवस्थानमस्मदीयं वेदिस्थानीयं शरीरं प्रविशतामिति प्रार्थना । यजता यजतेः अतच् प्रत्ययः । **अशायतम्** अशयातां, ह्रस्वदीर्घयोर्व्यत्ययः । रथ्या-रथार्हौ, यप्रत्ययः । नासत्या, स्वसराणि, व्याख्यातौ प्रथमानुवाके ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**त्रिरश्विना सिन्धुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतम् ।**
**तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितम् ।। ८ ।।**

त्रिः । अश्विना । सिन्धुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतम् । तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकम् । रक्षेथे इति । द्युऽभिः । अक्तुऽभिः । हितम् ॥ ८ ॥

**ऋग्भाष्यटीका– त्रिरश्विना** । हे अश्विनौ युवाम् । सिन्धुभिर्नदीभिः सप्तमातृभिश्च सह । वेद्युत्तरेत्युक्तास्तिस्रः **पृथिवीः** प्रत्यागच्छतम् । यतो युवां प्रति त्रयः सवनत्रयसम्बन्धिनः । **आहवाः** आह्वानानि क्रियन्ते । तथा त्रेधा हविश्च कृतम् । यौ दिवोऽप्युपरि । **प्रवा** प्रवौ । प्रकृष्टगतिमन्तौ । वागतिगन्धनयोः विच् । यौ च नाकं स्वर्गं द्युभिर्दिनैः दिनेषु अक्तुभीरात्रिभिः रात्रिषु च । हितं यथा तथा । **रक्षेथे** रक्षथः ॥ ८ ॥

**मन्त्रार्थमञ्जरी– हे अश्विना** अश्विनौ । युवाम् त्रिः । **सिन्धुभिः** नदीभिः । सप्तमातृभिः । च सह । वेद्युत्तरा इत्युद्युक्ताः तिस्रः पृथिवीः प्रत्यागच्छतम् यतो युवां प्रति त्रयः, सवनत्रय-सम्बन्धिनः । **आहावाः** आह्वानानि । क्रियन्ते यथा त्रेधा । **हविः कृतम्** हविश्च कृतम् । दिवः अपि उपरि । **प्रवा** प्रकृष्टगतिमन्तौ, 'वा गतिगन्धनयोः' विच् । यौ **च नाकम्** स्वर्गम् । **द्युभिः** दिनैः दिनेषु । **अक्तुभिः** रात्रिभिः रात्रिषु । च **हितम्** यथा भवति तथा । **रक्षेथे** ॥

**स्कन्द– त्रिः** बहुकृत्वः हे अश्विनौ ! **सिन्धुभिः सप्तमातृभिः** स्यन्दनात् सिन्धवः सोमा उच्यन्ते । सप्त छन्दांसि मातृभूतानि अभिषवद्वारेण वा निर्मातृणि येषां ते सप्तमातरः सोमा एव । उभयत्र इत्थम्भूतलक्षणे तृतीया । छन्दोभिरभिषुतैः सोमैः सम्बद्धाः । **त्रयः आहावाः** कूपादेः सन्निधौ प्रभूतोदकं गवादीनां निपानमाहाव इति प्रसिद्धं लोके । तत्स्थानीयाः त्रयः । किम् । सामर्थ्यात् कृतशब्दः परस्ताच्छ्रुतोऽनुषक्तव्यः । युष्मदर्थं कृताः । केन सामर्थ्यादस्माभिः । कतमे पुनस्ते । पूतभृदाधवनीयद्रोणकलशाः । बहुकृत्वोऽस्माभिर्युष्मदर्थं सर्वैः छन्दोभिरभिषुतानां सोमानां पूर्णा आहावस्थानीयाः पूतभृदाधवनीयद्रोणकलशाः त्रयोऽप्युपकल्पिता इत्यर्थः । न च केवलाः । किं तर्हि । अन्यदपि पुरोडाशादि सवनविभागेन **त्रेधा हविः कृतम्** । किञ्च **तिस्रः पृथिवीः उपरि प्रवा दिवः** पृथिवीशब्देनात्र साहचर्यात् सर्वे लोका उच्यन्ते । उपरीत्येतत् दिव इत्यनेन सम्बध्यते । **प्रवेति** । प्रवातिर्गतिकर्मा (तु.निघ.२,१४) । न चेदमामन्त्रितम्, अननुदात्तत्वात् । **रक्षेथे** इति मध्यमपुरुषसंयोगात् । अयमप्यर्धर्चः प्रत्यक्षकृतः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता कल्प्या । यौ युवां त्रीनपि लोकानुपरि च द्युलोकस्य प्रवा गन्तारौ

तौ नाकं स्वर्गं स्वेन व्यापारेण रक्षेथे । न च केवलम् । किन्तर्हि । **द्युभिः अक्तुभिः** 'द्युः' (निघ.१,९) इत्यहर्नाम । अक्तुः (निग.१,७) इति रात्रिनाम । उभयत्र च सहयोगलक्षणा तृतीया । अहोभिः रात्रिभिश्च सह । कीदृशम् । **हितम्** उपकारकं सर्वप्रजानाम् ।। ८ ।।

**वेङ्कटमाधव–** सप्तादित्यरश्मयो मातरो यासां नदीनां ताभिः अश्विनौ! **त्रिः** कृतम् । एतद्विशदमाह– **त्रय इति** । कूपस्य समीपं प्रभूतोदकं निपानमाहावः । त्रयः **आहावाः** कृताः । एतदेव स्पष्टमाह– **त्रेधा इति** । द्रोणकलश आधवनीयः पूतभृत् (तु.तै.३,२,१,२) इति त्रय आहावास्तेषु त्रेधा सोमः कृतः । एवं कृते **तिस्रः** वेदीः अभि प्लवनेन **दिवः** आगच्छतम् युवाम् अहोरात्रैः **निहितम्** आदित्यम् **रक्षेथे** ।। ८ ।।

**मुद्गल– हे अश्विना !** अश्विनौ! **सप्तमातृभिः** सप्तसङ्ख्याकाः गङ्गादिनद्यः मातरः उत्पादिका येषां जलविशेषाणां ते सप्तमातरः । तैः **सिन्धुभिः** स्वन्दनस्वभावैः जलैर्वसती-वरीनामभिः **त्रिः** सोमात्रिसंख्याकाः द्रोणकलशाधवनीयपूतभृदाख्या निष्पन्ना इति शेषः । तेषु त्रिषु पात्रविशेषेषु **त्रेधा** त्रिभिः प्रकारैः सवनत्रयगतैः **हविः कृतम्** सोमाख्यं हविः सम्पादितं द्रव्यं वर्तते इति शेषः । **तिस्रः पृथिवीः उपरि** त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वम् **प्रवा** प्रवन्तौ गच्छन्तौ युवाम् **दिवः नाकम्** द्युलोकसम्बन्धिनमादित्यम् रक्षेथे । कीदृशं नाकम् । **द्युभिः** अहोभिः **अक्तुभिः** रात्रिभिश्च **हितम्** स्थापितम् । अहनि सूर्य उदेति रात्रावस्तं गच्छति– इत्येवमहोरात्राभ्यां सूर्यो व्यवस्थाप्यत इत्यर्थः ।। ८ ।।

**सायण– हे अश्विना** सप्तमातृभिः । 'इमं मे गङ्गे' (ऋ.सं.१०.७५.५) इत्यादिमन्त्रोक्ताः सप्तसंख्याका गङ्गाद्या नद्यो मातर उत्पादिका येषां जलविशेषाणां ते सप्तमातरः । तैः **सिन्धुभिः** स्यन्दनस्वभावैर्जलैर्वसतीवरीनामभिः **त्रिः** सोमाभिषवः कृत इति शेषः । तथा चान्यत्र ब्राह्मणे समाम्नातम्– अष्टौ कृत्वोऽभिषुणोति एकादश कृत्वो द्वितीयं द्वादश कृत्वस्तृतीयम् (तै.सं. ६.४.५.१-२) इति । **आहावाः** यथोक्तजलयुक्तस्य सोमस्याधारभूताः कूपसदृशाः **त्रयः** त्रिसंख्याका द्रोणकलशाधवनीयपूतभृदाख्या निष्पना इति शेषः । तेषु त्रिषु पात्रविशेषेषु त्रेधा त्रिभिः प्रकारैः सवनत्रयगतैः **हविष्कृतं** सोमाख्यं हविः सम्पादितं द्रव्यं वर्तते इति शेषः । **तिस्रः पृथिवीरुपरि** त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वं **प्रवा** प्रवन्तौ गच्छन्तौ युवां **दिवो नाकं** द्युलोकसम्बन्धिनमादित्य रक्षेथे । कीदृशं नाकम् । द्युभिः अहोभिः **अक्तुभिः** रात्रिभिश्च **हितं**

स्थापितम् । अहनि सूर्यं उदेति रात्रावस्तं गच्छतीत्येवमहोरात्राभ्यां सूर्यो व्यवस्थाप्यते इत्यर्थः । सप्तमातृभिः । बहुव्रीहिस्वरः । **आहावाः** । 'निपानमाहावः' (पा.सू.३.३.७४) इति आङ्पूर्वात् ह्वयतेः अप्प्रत्ययः सम्प्रसारणं वृद्धिश्च निपातनात् । थाथादिना उत्तरपदान्तोदात्तत्वम् । प्रवा । च्युङ् ग्रुङ गतौ । प्रवेते गच्छतः इति प्रवौ । पचाद्यच् । 'सुपां सुलुक्' इति आकारः । नाकम् । न अस्मिन् अकम् अस्तीति नाकः । 'नभ्राण्नपान्' इत्यादिना नञः प्रकृतिभावः । द्युभिः । 'उडिदम्' इत्यादिना प्राप्तस्य विभक्त्युदात्तस्य दिवो झल् (पा.सू.६.१.१८३) इति प्रतिषेधः ।। ८ ।।

**सिद्धाञ्जनम्– हे अश्विना** अश्विनी, **सप्तमातृभिः** सप्तत्त्वात्मिकाः मातृस्थानीयाः आपः यासां ताभिः सिन्धुभिः स्यन्दनशीलाभिः नदीभिः शोधयन्तीभिः त्रिः सोमसंस्कारः कृत इति शेषः । तथा त्रयः विसंख्याकाः **आहावाः** कूपस्थानीयाः सोमस्याधारपात्रभूताः सिद्धा भवन्तीति शेषः। त्रेधा त्रिभिः प्रकारः, दैव्यसमयानुसारेण त्रिधा समर्पणीयं हविः सोमरूपं कृतं सम्पादितम् । तिस्रः पृथिवीः उपरि तिसृभ्यः भूर्भुवस्स्वरिति लोकत्रयवर्तिनीभ्यः भूमिभ्यः ऊर्ध्वं **प्रवा** प्रवौ प्रवन्तौ गच्छन्तौ युवां **दिवः** द्युसम्बन्धिनं **नाकम्** स्वलोकभूतं ज्योतिरात्मानं सूर्यं **रक्षेथे** रक्षथः। कीदृशं नाकम् ? द्युभिः अहोभिः **अक्तुभिः** रात्रिभिः च **हितम्** स्थापितम् । प्रवा-प्रङ् गतो प्रवेते गच्छत इति प्रवौ । सप्ततत्त्वात्मकचित्तेजोवाहिनीभिः शक्तिभिः सर्वसत्तोपभोगसारभूतः संमदात्मा सोमः संस्कृतः । तदाधारपात्राणि अन्नमयादीनि कूपसदृशानि त्रीणि सिद्धानि । हे अश्विनौ परिगृह्येमं मधुपातमौ युवां त्रैलोक्यादूर्ध्वं गच्छतम् । गत्वा च तत्र नः उत्तमं ज्योतिः रक्षतम् । तच्च सूर्याख्यं नाकपदवाच्यं 'स्वः' नैकेन अह्ना प्रतिष्ठापितम् । 'द्युभिः' अहोभिः प्रकाशदशा लक्षिताः । 'अक्तुभिः' रात्रिभिन्प्रकाशदशाश्चेति बोध्यम् । अह्ना अनुवाकं अधीते इतिवत् अपवर्गे तृतीया । पर्यायेण प्रकाशाप्रकाशदशाभिः अन्तर्यजनगताभिः निष्पादितं उत्तमं नाफपदं नः । तद्रक्ष्यतां युवाभ्यामस्मदर्थम् इति सूक्ष्मं तत्वम् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**क्व॑१॒त्री च॒क्रा त्रि॒वृतो॒ रथ॑स्य॒ क्व॑१॒ त्रयो॑ व॒न्धुरो॒ ये सनी॑ळाः ।**
**क॒दा योगो॑ वा॒जिनो॒ रास॑भस्य॒ येन॑ य॒ज्ञं ना॑सत्योपया॒थः ।। ९ ।।**

क्व । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्व । त्रयः । वन्धुरः । ये । सऽनीळाः । कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञम् । नासत्या । उपऽयाथः ॥ ९ ॥

**ऋग्भाष्यटीका–** क । **हे नासत्यौ** युवयोस्त्रिवृतस्त्रीन्लोकान्वृणोतीति त्रिवृत् तस्य रथस्य । **त्री** त्रीणि । **चक्रा** चक्राणि । **क** । दर्शनोत्कण्ठयैवं पृच्छति । तस्य च रथस्य । बन्धुरो बन्धुरा उन्नता नतास्त्रयः प्रदेशाः क । कथं भूताः ये **सनीळाः** सनीडाः । तस्मिंश्च रथे रासभस्य वाजिनो योगः कदा नु भविष्यति । कथं भूतो येन रथेनास्मदीयं यज्ञमुपयाथः ॥ ९ ॥

**मन्त्रार्थमञ्जरी– हे नासत्या** नासत्यौ । युवयोः **त्रिवृतः** त्रींल्लोकाँन्वृणोतीति त्रिवृत्, तस्य । रथस्य । **त्री** त्रीणि । **चक्रा** चक्राणि । **क** दर्शनोत्कण्ठयैवं पृच्छति । तस्य च रथस्य **वन्धुरः** बन्धुरः, बन्धुराः, उन्नतानताः । त्रयः प्रदेशाः क । कथं भूताः ? ये । **सनीळाः** सनीडाः । तस्मिन्रथे रासभस्य वाजिनः योगः कदा नु भविष्यति कथं भूते ? **येन** रथेन । अस्मदीयम् यज्ञम् उपयाथः ॥ ९ ॥

**स्कन्द– क त्री चक्रा** त्रीणि चक्राणि **त्रिवृतः** त्रिभिश्चक्रैर्वर्तते गच्छतीति त्रिवृत् । तस्य त्रिवृतो युष्मदीयस्य रथस्य अवयवभूतानि । क वा **त्रयः बन्धुरः** सारथिस्थानं बन्धुर् उच्यते । ये **सनीळाः** समानस्थानाः एकस्मिन्नेव प्रदेशे स्थिताः । मानुषस्य शकटस्येव न भिन्नप्रदेशवर्तिन इत्यर्थः । **कदा योगः** रथे नियोजनम् । **वाजिनः** वेगवतः । **रासभस्य** युष्मदीयस्य अश्वस्य । कदा युष्मदीयोऽश्वो रथे नियोक्ष्यत इत्यर्थः । **येन** अश्वेन **यज्ञम्** हे नासत्यौ! **उपयाथः** उपगच्छथः । किमसन्निहितानि वां गमनसाधनानि येन नागच्छथ इत्येव मागमनविलम्ब-नादुपालम्भोऽयम् ॥ ९ ॥

**वेङ्कटमाधव–** क त्रीणि चक्राणि त्रिभिश्चक्रैर्वर्तमानस्य युवयोः रथस्य । **क** वा **त्रयः** फलकाः सङ्घाटाः । प्रउगाकारस्य कोणेषु त्रयः फलकाः सङ्घाटा भवन्ति । ये सनीडाः एकस्मिन् रथे फलकाः सङ्घटिताः । कदा च योगः रथे युवयोः बलवतः **रासभस्य** । येन रासभेन नासत्यौ! **यज्ञम्** उपगच्छथः ॥ ९ ॥

**मुद्गल– हे नासत्या** । अश्विनौ! **त्रिवृतः** त्रिसङ्ख्याकैरधिभिरुपेतस्य भवदीयस्य **रथस्य** ईषाद्वयं पूर्वभागे संयुज्यते । सेयम् एका अश्रिः । पृष्ठभागे वियुज्यते । तत्र कोणद्वयं सम्पद्यते ।

ईदृशस्य रथस्य सम्बन्धीनि **त्री चक्रा** त्रीणि चक्राणि **क** कुत्र स्थितानि इत्यस्माभिर्न दृश्यते । ये काष्ठविशेषाः **सनीळाः** नीळं गृहसदृशं रथस्योपयुपवेशनस्थानम्, तेन सह वर्तन्ते इति सनीळाः । ते काष्ठविशेषाः बन्धुरः नीडबन्धनाधारभूता त्रयः अक्षेण सहिते द्वे ईषे इत्येवं त्रिसङ्ख्याकाः क कुत्र स्थिता इति अस्माभिर्न ज्ञायते । **वाजिनः** बलवतः **रासभस्य** भवदीयाश्व-स्थानीयस्य गर्दभस्य **योगः** रथे योजनम् **कदा** कस्मिन् काले । निष्पन्नमिति अस्माभिर्न दृश्यते । येन चक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेन रथेन **यज्ञम्** अस्मदीयं यागस्थानम् युवाम् **उपयाथः** प्राप्नुथः । तादृशस्य रथस्येति पूर्वत्रान्वयः ।। ९ ।।

**सायण–** हे नासत्यौ अश्विनौ **त्रिवृत्रः** त्रिसंख्याकैरश्रिभिरुपेतस्य भवदीयस्य **रथस्य** ईषाद्वयं पूर्वभागे संयुज्यते । सेयम् एका अश्रिः । पृष्ठभागे वियुज्यते । तत्र कोणद्वयं सम्पद्यते । ईदृशस्य रथस्य सम्बन्धीनि **त्री चक्रा** त्रीणि चक्राणि **क** । कुत्र स्थितानीत्यस्माभिर्न दृश्यते । **ये** काष्ठविशेषाः **सनीळाः** । नीळं गृहसदृशं रथस्योपरि उपवेशस्थानम् । तेन सह वर्तन्ते इति सनीलाः । ते काष्ठविशेषाः **वन्धुरः** नीडबन्धनाधारभूताः **त्रयः** अक्षेण सहिते द्वे ईषे इत्येवं त्रिसङ्ख्याकाः **क** । कुत्र स्थिता इत्यस्माभिर्न ज्ञायते । **वाजिनः** बलवतः **रासभस्य** भवदीयाश्व-स्थानीयस्य गर्दभस्य **योगः** रथे योजनं **कदा** कस्मिन् काले निष्पन्नम् इत्यस्माभिर्न दृश्यते । **येन** चक्रत्रयनीडकाष्टवयरासभयोजनसहितेन रथेन **यज्ञम्** अस्मदीयं यागस्थानम् 'उपयाथः युवां प्राप्नुथः । तादृशस्य रथस्येति पूर्वत्रान्वयः । त्री चक्रा । उभयत्रापि 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । बन्धुरः । बन्धेः औणादिकः उरप्रत्ययः । वत्वं छान्दसम् । सनीळाः । 'वोपसर्जनस्य' इति सभावः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **नासत्यौ** अश्विनौ, **त्रिवृतः** त्रिभिर्व्रियते वर्त्यते वा भागैः त्रिवृत् तस्य त्रिधाभूतस्य **रथस्य** युष्मदीयस्य **त्री** त्रीणि **चक्रा** चक्राणि **क** कुत्र सन्ति? अस्मदीयः सन्नाहो भवत्येव, युष्मदीयो रथस्तु अद्यापि न लक्ष्यते, क्षिप्रं कृपां कुरुतं, सबाहो रथ आगच्छतु इत्याह– **ये सनीळाः** नीडवत् रथस्योपरि निवेशनस्थानं तेन सह वर्तन्ते ते **बन्धुरः** नीडबन्धना-धारभूताः **त्रयः** आधारस्तम्भाः **क** कुत्र स्थिताः? **कदा** कस्मिन् काले वा **वाजिनः** अश्व-स्थानीयस्य **रासभस्य** गर्दभस्य (रासभस्य आश्विनवाहत्वं प्रसिद्धम् ) **योगः** रथसंयोजनं निष्पन्नमिति नास्माभिर्जायते । **येन** त्रिचत्रिनीडरासभयोगवता रथेन **यज्ञम्** अस्मदीयं यजनं

**उपयाथः** युवां प्राप्नुथः । त्री चक्रा उभयोः शेर्लोपः छन्दसि । **वन्धुरः** बन्धेरौणादिक उरप्रत्ययः, बस्य वत्वं छान्दसम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।**
**युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवन्तमिष्यति ।। १० ।।**

**आ । नासत्या । गच्छतम् । हूयते । हविः । मध्वः । पिबतम् । मधुऽपेभिः । आसऽभिः । युवोः । हि । पूर्वम् । सविता । उषसः । रथम् । ऋताय । चित्रम् । धृतऽवन्तम् । इष्यति ।। १० ।।**

**ऋग्भाष्यटीका– आनासत्या** । हे नासत्यावागच्छतम् । युवां प्रत्यस्माभिर्हविर्हूयते । किं च **मधुपेभिः** सोमपैः आसभिरास्यैः । **मध्वो** मधु सोमम् । **पिबतम्** । उषसोऽपि वक्ष्यमाणत्वाद्बहुवचनम् । **युवोः** युवयोश्चित्रम् अद्भुतम् । **घृतवन्तं** दीप्तिमन्तं रथम् । सवितोषस इति व्यत्ययेन । सवितुः सुतोषाः । **ऋताय** यज्ञाय । यज्ञं गन्तुम् । **पूर्वं** प्रथमत एवेष्यति गच्छति हि । तया सहागच्छतमिति भावः ।। १० ।।

**मन्त्रार्थमञ्जरी–** हे **नासत्या** नासत्यौ । आ गच्छतम् । युवां प्रत्यस्माभिः हविः हूयते । किं च **मधुपेभिः** सौमपैः । **आसभिः** आस्यैः । **मध्वः** मधु सोमम् । **पिबतम्** । उषसोऽपि वक्ष्यमाणत्वात् 'आसभिः' इति बहुवचनम् । **युवोः** युवयोः । **चित्रम्** अद्भुतम् । **घृतवन्तम्** दीप्तिमन्तम् । रथम् । 'सविता, उषसः' इति व्यत्ययेन, सवितुः सुतोषाः । **ऋताय** यज्ञाय, यज्ञं गन्तुम् । **पूर्वम्** प्रथमतः । एव **इष्यति** गच्छति । हि । यथा सहागच्छतम् इति भावः ।।

**स्कन्द–** हे नासत्यौ ! **आ गच्छतम्** युवाम् । किं कारणम् । यस्मात् सोमलक्षणम् **हविः हूयते** । आगत्य च मध्वः मधुस्वादमिदं मधुस्वादस्य वाऽस्य एकदेशं स्वांशलक्षणम् **पिबतम्** । **मधुपेभिः आसभिः** व्यत्ययेनेदं बहुवचनम् । मधुपाभ्यामास्याभ्याम् । कस्मादागच्छावः । उच्यते । **युवोः हि** हिशब्दो यस्मादर्थे । यस्मात् युवयोः स्वभूतम् । **पूर्वम्** क्रियाविशेषणमेतत् । अन्याभ्यो देवताभ्यः प्रथमम् । **सविता** यजमाननामधेयमेतत् शाकपूणिना पठितम् । सर्वस्य यज्ञस्य प्रसविता अभ्यनुज्ञाता यजमानः । **उषसः** च स्वभूतम् **रथम् ऋताय**

ऋ गतौ । यज्ञं प्रति गमनाय । **चित्रम्** विचित्रं पूजनीयं वा **घृतवन्तम्** उदकवन्तम् इष्यति इच्छतेरयं व्यत्ययेन श्यन् । इच्छति । यस्मात् यजमानः युष्मदीयम् औषसं च रथं पूर्वमिच्छति तस्मादागच्छतमित्यर्थः । अथवा सविता प्रकाशद्वारेण सर्वस्य प्रसविता सूर्य उच्यते । उषस इत्येतच्च ऋतायेत्येतेन सम्बध्यते । इष्यतीत्यपि भूतकाले लट् व्यत्ययेन द्रष्टव्यः । यस्मात् युवयोः स्वभूतं रथं पूर्वमतीते काले सविता सर्वस्य प्रसविता सूर्यं स्वदुहितुरुषसः ऋताय गमनाय इष्यति इष्टवान् प्रार्थितवान् । तदेतत्– आ वां रथं दुहिता सूर्यस्य' (ऋ१,११६,१७) । इत्यत्र वक्ष्यति कक्षीवान् । यस्मात् सूर्यप्रभृतिभिः देवैरप्युषसो गमनाय प्रार्थितरथौ स्थः । तस्मात् महात्मकत्वादागच्छतमित्यर्थः ।। १० ।।

**वेङ्कटमाधव– आ गच्छतम्** नासत्यौ ! **हूयते हविः** । तं सोमम् **पिबतम्** सोमपैः आस्यैः । बहुवचने न तात्पर्यमस्ति । यद्वा बहूनि भवन्ति देवशरीराणि । युवयोः **हि रथम् त्रित्रम्** उदकन्तम् **उषसः पूर्वम्** अपररात्र एव **सविता** दिवसकरणाय इच्छति प्रेरयति वेति ।।

**मुद्गल– हे नासत्या** । अश्विनौ! इह कर्मणि **आ गच्छतम्** । अत्रास्माभिः **हविः हूयते** । युवां च **मधुपेभिः** मधुरद्रव्यपानयुक्तैः **आसभिः** भवदीयैरास्यैः मध्वः मधुरद्रव्याणि हवींषि पिबतम् । सविता सूर्यः उषसः पूर्वम् उप कालात्पुरा युवयोरश्विनोःसम्बन्धिनम् रथम् ऋताय अस्मय ज्ञार्थम् इष्यति हि प्रेरयति खलु । कीदृशम् । चित्रम् पूर्वोक्तैः चक्रत्रयादिभिः विचित्रम् फृतवन्तम् अक्षाञ्जनसाधनेन घृतेनोपेतम् ।। १० ।।

**सायण–** हे नासत्यौ अश्विनौ इह कर्मणि **आ गच्छतम्** । अत्रास्माभिः **हविः हूयते** । युवां च **मधुपेभिः** मधुरद्रव्यपानयुक्तैः **आसभिः** भवदीयैरार्यैः **मध्वः** मधुरद्रव्याणि हवींषि **पिवतम्** । **सविता** सूर्यः **उषसः पूर्वम्** उषःकालात्पुरा युवयोरश्विनोः सम्बन्धिनं **रथम् ऋताय** अस्मद्यज्ञार्थम् **इष्यति हि** प्रेरयति खलु । कीदृशम् । **चित्रं** पूर्वोक्तैश्चक्रत्रयादिभिः विचित्रं **घृतवन्तम्** अक्षाञ्जनसाधनेन घृतेनोपेतम् । गच्छतम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तात्वम् । धातुस्वरः । अत्र गच्छतं पिबतं चेति चार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायाः तिङ् विभक्तेः निघातप्रतिषेधः । हूयते । लसार्वधातुकानुदात्तत्वे यकः स्वरः । मध्वः । लिङ्गव्यत्ययः शसि यणादेशच्छान्दसः । मधुपेभिः । मधु पिबन्तीति मधुपानि । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । आसभिः । 'पद्दन्' इत्यादिना आस्यशब्दस्य आसनादेशः ।

युवोः । 'युवोर्हि यन्त्रम्' इत्यत्रोक्तम् । इष्यति । 'इष गतौ' । श्यनो नित्त्वादाद्युदात्तत्वम् । 'हि च' इति निघातप्रतिषेधः ॥ १० ॥

**सिद्धाञ्जनम्– हे नासत्या** अश्विनौ, **आगच्छतम्,** अस्माभिः **हविः** हूयते सोमरूपं हविर्दीयते । युधां च **मधुपेभिः** मधु पिबन्तीति मधुपानि तैः **आसभिः** आस्यैः, आस्यशब्दस्य आसन्नादेशः, **मध्वः** मधूनि (लिङ्गव्यत्ययः यणादेशछान्दसः) मधुराणि हवींषि सोमात्मकानि **पिबतम्** । **हि** यस्मात् **सविता** सर्वप्रेरको देवः सूर्यः **उषसः पूर्वम्** उषस उदयात् पुरा **युधोः** युवयोः **रथम्,** ऋताय सत्याय ज्योतिष उत्तमं पदं प्रति, **इष्यति** प्रेरयति । कीदृशं रथम् ? **चित्रम्** पूर्वोक्तलक्षणं त्रिचक्रादियुक्तं, विचित्रं, **घृतवन्तम्** दीप्तिमन्तम् । यस्मादेवं प्रेरयति सूर्यः, तस्मात् सोमं शीघ्रं पिबतमिति सम्बन्धः ॥ १० ॥

## ऋक्संहिता पदपाठसहिता

**आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना ।**
**प्रायुस्तारिष्टं नीरपांसिमृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥ ११ ॥**

**आ । नासत्या । त्रिऽभिः । एकादशैः । इह । देवेभिः । यातम् । मधुऽपेयम् । अश्विना । प्र । आयुः । तारिष्टम् । निः । रपांसि । मृक्षतम् । सेधतम् । द्वेषः । भवतम् । सचाऽभुवा ॥**

**ऋग्भाष्यटीका– आनासत्या त्रिभिः** । हे नासत्यौ त्रिभिः एकादशैः एकादशानां वर्गैः त्रयस्त्रिंशद्भिः **देवेभिः** देवैः सह इह यज्ञे । **पेयं** पातव्यम् । मधु सोमम् । प्रत्यायातम् । आगत्य चायुरस्मभ्यं प्रतारिष्टं प्रयच्छतम् । अस्मदीयानि रपांसि पापानि निर्मृक्षतं शोधयतम् । द्वेषो द्विषः । **सेधतं** प्रतिषेधतम् । **सचाभुवा** सहभुवास्माकं सखायौ भवतम् ॥ ११ ॥

**मन्त्रार्थमञ्जरी– हे नासत्या** नासत्यौ । **अश्विना** अश्विनौ । **त्रिभिः** । **एकादशैः** एकादशानां वर्गैः त्रयस्त्रिंशद्भिः । **देवेभिः** देवैः सह । **इह** यज्ञे । **मधुपेयम्** पेयं मधु पेयं पातव्यं मधु सोमं प्रति । **आ यातम्** । आगत्य च आयुः अस्मभ्यम् प्रतारिष्टम्, प्रयच्छतम् । अस्मदीयानि **रपांसि** पापानि । **निः मृक्षतम्** शोधयतम् । **द्वेषः** द्विषः । **सेधतम्** प्रतिषेधतम् । **सचाभुवा** सहभुवा सह भवत इति सहभुवौ, अस्माकं सखायौ । भवतम् ॥ ११ ॥

**स्कन्द–** हे नासत्यौ ! त्रिभिः एकादशैः इह देवेभिः एकादश परिमाणं येषां ते एकादशाः । त्रयस्त्रिंशत् । सहयोगलक्षणा चात्र तृतीया । इहेत्येतच्च मधुपेयमित्यनेन सम्बध्यते । त्रयस्त्रिंशता देवैः सह । **इह** यज्ञे यदेतत् **मधुपेयम्** मधुस्वादं च पानार्हश्च सोमलीणं हविः तत् प्रति **आ यातम्** । आगत्य च सोमपानोत्तरकालं हे अश्विनौ! **प्र आयुः तारिष्टम्** प्रकर्षेण अस्माकम् आयुर्वर्धयतम् । **निः रपांसि मृक्षतम् 'रपो रिप्रमिति पापनामनी भवतः** (या.४.२१) । पापानि च निर्मृक्षतम् । मृजू शुद्धौ । निःशोधयतम् । सर्वाण्यपनयतमित्यर्थः । **सेधतम्** सिधिरत्र सामर्थ्यात् वधार्थः । हतं च । किम् । **द्वेषः** द्वेष्टॄन् द्वेष्यान् वा अस्माकम् । अथवा सेधतिर्गतिकर्मा । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । शुद्धोऽपि च सोपसर्गार्थो द्रष्टव्यः । यत्किञ्चिद् द्वेष्टृ द्वेष्यं वा अस्माकं तत्सर्वमपगमयतमित्यर्थः । नित्यं च सचा भुवा भवतम् यज्ञेषु अस्माभिः सह भवतम् । सचा सहेत्यर्थः । सह भुवौ एकस्थानवर्त्तिनौ नित्यम् अस्मदीयेषु यज्ञेषु आगच्छतमित्यर्थः ।। ११ ।।

**वेङ्कटमाधव– आ यातम्** नासत्यौ! त्रयस्त्रिंशद्देवैः **इह** पातव्यं सोमम् । **आयुः** च **प्र** वर्धयतम् । पापानि च विनाशयतम् द्वेष्टॄंश्च **निः सेधतम् भवतम्** च सहभूतावस्माभिः ।।

**मुद्गल– हे नासत्या** असत्येन रहितौ! **अश्विना**! अश्विनौ देवौ! युवाम् **त्रिभिः एकादशैः 'ये देवासो दिव्येकादश स्थ'** (ऋ.१,१६९,११) इत्यादिमन्त्रप्रतिपादितैः त्रिसङ्ख्याकैः एकादशात्मकवर्गत्रयगतैः **देवेभिः** देवैः सह **मधुपेयम्** सोमद्रव्यात्मकं मधुरद्रव्यपानम् अभिलक्ष्य **इह** अस्मिन् देवयजनदेशे **आ यातम्** आगच्छतम् । **आयुः** अस्मदीयमायुष्यम् **प्र तारिष्टम्** प्रवर्धयतम् । **रपांसि** अस्मदीयानि पापानि **निः मृक्षतम्** निःशेषेण शोधयतम् । द्वेषः द्वेषकर्तॄन् सेधतम् प्रतिषेधतम् सचाभुवा । अस्माभिः सहावस्थितौ भवतम् ।। ११ ।।

**सायण–** हे **नासत्या** असत्येनानृतेन रहितौ **अश्विना** अश्विदेवौ युवां **त्रिभिरेकादशैः** 'ये देवासो दिव्येकादश स्थ' (ऋ.सं.१.१३९.११) इत्यादिमन्त्रप्रतिपादितैस्त्रिसंख्याकैः एकादशात्मकवर्गत्रयगतैर्देवैः सह **मधुपेयं** सोमात्मकं मधुरद्रव्यपानम् अभिलक्ष्य 'इह अस्मिन् देवयजनदेशे **आ यातम्** आगच्छतम् । **आयुः** अस्मदीयमायुष्यं **प्र तारिष्टं** प्रवर्धयतम् । **रपांसि** अस्मदीयानि पापानि **निः मृक्षतं** निःशेषेण शोधयतम् । **द्वेषः** द्वेषकर्तॄन् **सेधतं** प्रतिषेधतम् । **सचाभुवा** अस्माभिः सहावस्थितौ **भवतम्** । त्रिभिः । षट्त्रिचतुर्भ्यः इति विभक्तेरुदात्तत्वम् ।

एकादशैः । एकादशानां पूरणैः । 'तस्य पूरणे' (पा.सू.५.२.४८) इति डट् । मधुपेयम् । 'पा पाने' । 'अचो यत्' इति कर्मणि यत् । 'ईद्यति' (पा.सू.६.४.६५) इति आकारस्य ईकारादेशः । 'यतोऽनावः' इत्याद्युदात्तत्वम् । मधु च तत्पेयमिति समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । तारिष्टम् । 'तॄ प्लवनतरणयोः । छान्दसे प्रार्थनायां लुङि च्लेः सिच् । इडागमः । 'वृतो वा' (पा.सू.७.२.३८) इति प्राप्तस्य इटो दीर्घस्य 'सिचि च परस्मैपदेषु' (पा.सू. ७.२.४०) इति प्रतिषेधः । 'बहुलं छन्दस्यमाङ्योगेऽपि इति अडभावः । अत्र तारिष्टं मृक्षतं चेति चशब्दार्थप्रतीतेस्तस्य च अप्रयोगात् 'चादिलोपे विभाषा' इति निघातप्रतिषेधः । 'आदिः सिचोऽन्यतरस्याम्' (पा.सू.६.१.१८७) इत्याद्युदात्तत्वम् । मृक्षतम् । 'मृश आमर्शने' । 'छन्दसि लुङ्लङ्लिटः' इति लोडर्थे लुङ् । 'शल इगुपधादनिटः क्सः' (पा.सू.३.१.४५) इति क्सादेशः । 'एकाच उपदेशेऽनुदात्तात्' इति इट्प्रतिषेधः । षत्वकुत्वे । पूर्ववत् अडभावः । सेधतम् । 'षिधु गत्याम्' । अत्र केवलोऽपि विधिः प्रतिपूर्वस्यार्थे वर्तते । प्रार्थनायां लोट् । शपः पित्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । पादादित्वात् तिङः परत्वात् वा निघाताभावः । द्वेषः । 'अन्येभ्योऽपि दृश्यन्ते' इति कर्तरि विच् । भवतम् । द्वेष इत्यस्य वाक्यान्तरगतत्वात् तदपेक्षयास्य निघातो न भवति, 'समानवाक्ये च निघातयुष्मदस्मदादेशा वक्तव्याः' (पा.सू.८.१.१८.५) इति वचनात् । सचाभुवा । सचा इत्ययं निपातः सहशब्दसमानार्थः । तथा च यास्कः-'सचा सहेत्यर्थः' (निरु.५.५) इति । सचा भवतः इति सचाभुवौ । क्विप् । 'ओः सुपि' (पा.सू.६.४.८३) इति यणादेशस्य 'न भूसुधियोः' । (पा.सू.६.४.८५) इति प्रतिषेधः । 'सुपा सुलुक्' इति विभक्तेः आकारः ।। ११ ।।

**सिद्धाञ्जनम्–** हे **नासत्या अश्विना** क्षिप्रगतिको अश्विदेवौ, युवां इह अवास्मद्यजने **त्रिभिः** त्रिसंख्याकैः **एकादशैः** एकादशात्मकवर्गत्रयगतैः **देवेभिः** देवैः सह **मधुपेयम्** सोमरूपमधुपानमभिलक्ष्य **आयातम्** आगच्छतम् । **आयुः** आयुष्यं **प्रतारिष्टम्** प्रवर्धयतम् । **रपांसि** दुरितानि **निर्मृक्षतम्** निःशेषेण शोधयतम् । **द्वेषः** द्वेषकारिणः **सेधतम्** प्रतिषिद्धान् कुरुतम् । **सचाभुवा** अस्माभिः सहावस्थितौ **भवतम्** । अस्यामृचि एकादशात्मकवर्गत्रयगता देवा उक्ताः । एकैकस्मिन् स्थाने एकादश देवाः, पृथिव्यादिलोकत्रये त्रयस्त्रिंशद्देवा भवन्ति । तर्हि ने मे अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिर्वषट्कारश्चेति पुराणप्रसिद्धा भवन्ति । क इमे एकादशेति निर्णयो दुष्करः ।।

एकादशैः एकादशानां पूरणैः, तस्य पूरण इति डट् । **मधुपेयम्** पा पाने, कर्मणि यत् । तारिष्टम्-तरतेर्लुङ्, छान्दसम्, लोडर्थे । **मृक्षतम्** मृश आमर्शने, लोडर्थे लुङ् । द्वेषः-कर्तरि विच् । सचाभुवा-मचा सह भवत इति सचाभुवौ ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**आ नो॑ अश्विना त्रिवृता॒ रथे॑नार्वाञ्चं॑ र॒यिं व॑हतं सु॒वीर॑म् ।**
**शृण्वन्ता॑ वा॒मव॑से जोहवीमि वृ॒धे च॑ नो भवतं॒ वाज॑सातौ ।।१२,५,३४।।**
**आ । नः॒ । अ॒श्वि॒ना॒ । त्रि॒ऽवृता॑ । रथे॑न । अ॒र्वाञ्च॑म् । र॒यिम् । व॒ह॒त॒म् । सु॒ऽवीर॑म् ।**
**शृण्वन्ता॑ । वा॒म् । अव॑से । जो॒ह॒वी॒मि॒ । वृ॒धे । च॒ । नः॒ । भ॒व॒त॒म् । वाज॑ऽसातौ ।।**

**ऋग्भाष्यटीका– आनः** । हे अश्विनौ नोऽस्मभ्यं दातुम् । **सुवीरं रयिम्** । त्रिवृता रथेनार्वाचं स्वर्गादर्वागिति यावत् । वहतम् । किंच शृण्वन्तावुक्तमवधारयन्तौ । **वां** युवाम् अहमवसे रक्षायै । **जोहवीमि** आह्वयामि । तस्मात् **वाजसातौ** युद्धे । **नो** रक्षायै । **वृधे** वृद्ध्यै च । भवतम् ।। १२ ।।

**मन्त्रार्थमञ्जरी–** हे **अश्विना** अश्विनौ । **नः** अस्मभ्यम् । **दातुम्** सुवीरम् रयिम् त्रिवृता रथेन **अर्वाञ्चम्** स्वर्गादवागिति यावत् । **आ** वहतम् । किं च, **शृण्वन्ता** शृण्वन्तौ, उक्त-मवधारयन्तौ । **वाम्** युवाम् । **अहम् अवसे** रक्षायै । **जोहवीमि** आह्वयामि । तस्मात् **वाजसातौ** युद्धे । नः । **अवसे** रक्षायै । **वृधे** वृद्ध्यै । च भवतम् ।। १२ ।।

**स्कन्द–** नः इति तादर्थ्ये चतुर्थी । अस्माकमर्थाय हे अश्विनौ! त्रिवृता रथेन आत्मीयेन अर्वाञ्चम् अस्मदभिमुखम् **रयिम्** धनम् **आ वहतम्** प्रापयतम् **सुवीरम्** शोभनैर्वीरैरुपेतम् । शृण्वन्तौ **वाम्** नित्यमस्मदीयमाह्वानं शृण्वन्तौ वा युवाम् । **अवसे** तर्पणाय वा पालनाय वा **जोहवीमि** पुनः पुनराह्वयामि । **वृधे** वर्धनाय **च नः** अस्माकम् **भवतम् वाजसातौ** सङ्ग्रामनामैतत् (तु.निघ.१.१७) सङ्ग्रामे । नित्यं च अस्मान् सङ्ग्रामेषु जयलक्षणया वृद्ध्या वर्धयतमित्यर्थः ।। १२ ।।

**वेङ्कटमाधव– आ वहतम्** अश्विनौ! **त्रिवृता रथेन** अस्मभ्यम् इतोमुखम् **सुवीरम् रयिम्** । शृण्वन्तौ **वाम्** अहं रक्षणार्थं भृशमाह्वयामि । वृद्ध्यर्थम् च अस्माकम् **भवतम्** युद्धे ।।१२ ।।

**मद्गल– हे अश्विना** अश्विनौ । **त्रिवृता रथेन** अप्रतिहतगतित्वात् त्रिषु लोकेषु वर्तमानेन रथेन सह **नः** अस्माकम् **अर्वाश्वम्** अभिमुखम् **सुवीरम्** शोभनैः वीरैः पुत्रभृत्यादिभिरुपेतम् **रयिम्** धनम् **आ वहतम्** आनीय प्रापयतम् । **शृण्वन्ता** अस्मदीयां स्तुतिं शृण्वन्तौ **वाम्** युवाम् **अवसे** अस्मद्रक्षणार्थम् **जोहवीमि** आह्वयामि । **नः** अस्माकम् **वाजसातौ** सङ्ग्रामे **वृधे** वर्धनाय च **भवतम्** ॥ १२ ॥

**सायण– हे अश्विना त्रिवृता रथेन** अप्रतिहतगतित्वात् त्रिषु लोकेषु वर्तमानेन रथेन सह **नः** अस्माकम् **अर्वाश्वम्** अभिमुखं **सुवीरं** शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतं **रयिं** धनम् **आ वहतम्** आनीय प्रापयतम् । **शृण्वन्ता** अस्मदीयस्तुतिं शृण्वन्तौ **वां** युवाम् **अवसे** अस्मद्रक्षणार्थं **जोहवीमि** आह्वयामि । 'नः अस्माकं वाजसातौ संग्रामे । वाजसातौ महाधने' (नि.२.१७.३६) इति संग्रामनामसु पाठात् । **वृधे** वर्धनाय **च भवतम्** । सुवीरम् । शोभना वीरा यस्येति बहुव्रीहौ वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । **शृण्वन्ता** । 'श्रु श्रवणे' । शतरि श्रुवः शृ च' (पा.सू.३.१.७४) इति श्नुः शृभावश्च । 'हुश्नुवोः सार्वधातुके' इति यणादेशः । 'सुपां सुलुक्' इति आकारः । **जोहवीमि** । ह्वेञ् स्पर्धायां शब्दे च । यङ्लुकि 'अभ्यस्तस्य च' (पा.सू.६.१.३३)इति कृतसम्प्रसारणादस्मात् लडुत्तमैकवचने 'यङो वा' (पा.सू.७.३.९४) इति ईडागमः । वृधे । 'वृधु वृद्धौ' इत्यस्मात् सम्पदादिलक्षणो भावे क्विप् । **वाजसातौ** । 'षणु दाने' । क्तिनि 'तितुत्र' इत्यादिना इट्प्रतिषेधः । 'जनसन' इत्यादिना आत्वम् । वाजानां सातिर्यस्मिन्निति पूर्वपदप्रकृतिस्वरत्वम् ॥

'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम् । हिरण्यस्तूप ऋषिः । आद्या नवमी च जगतीच्छन्दस्के । शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य सविता देवता। आचायाः 'हयान्यनिम' इत्यस्या अग्निमित्रावरुणरात्रिसवित्राख्या लिङ्गोक्तदेवताः। तथा चानुक्रान्तं- 'हयाम्येकादश सावित्रं नवमी जगल्याद्या च लिङ्गोक्तदैवतपादास्त्रयः' इति । अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशने इदं सूक्तं सावित्रं निविद्धानम्' । तृतीयस्य व्यर्यमा' इति खण्डे सूत्रितं- 'हयाम्यग्निमस्य मे थावापृथिवी इति तिस्रः' (आश्व.श्री.७.७) इति ॥ १२ ॥

**सिद्धाञ्जनम्–** हे अश्विना अश्विनौ, नः अस्माकं **अर्वाश्वम्** अभिमुखं **सुवीरम्** शोभनवीर-बलोपेतं **रयिम्** धनं **त्रिवृता** त्रिषु लोकेषु वर्तमानेन **रथेन** युवयोर्वहनसाधनेन **आवहतम्** आनीय

प्रापयतम् । **शृण्वन्ता** अस्मदीयां वाचं शृण्वन्तौ **वाम्** युवां **अवसे** अस्मदक्षणार्थं जोहवीमि आह्वयामि नः अस्माकं **वाजसातौ** समृद्धिलाभे कर्मणि **वृधे च** वर्धनाय च **भवतम्** ।। जोहवीमि -ह्वेञ् स्पर्धायां शब्दे च, यङलुकि लडुत्तमैकवचने ईडागमः ।। वृधे-वृधु वृद्धौ भावे क्विप् । **वाजसातौ** वाजानां सातिर्यत्रेति बहुव्रीहिः ।। १२ ।।

।। इति प्रथमाष्टके तृतीयाध्याये पञ्चमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ३५)

११ हिरण्यस्तूप आङ्गिरसः । १ (पादानां क्रमेण) अग्निः मित्रावरुणौ, रात्रिः, सविता च । २-११ सविता । त्रिष्टुप्, १,९ जगती ।

**ह्वया॒म्य॒ग्निं प्र॑थ॒मं स्व॒स्तये॒ ह्वया॑मि मि॒त्रावरु॑णावि॒हाव॑से ।**
**ह्वया॑मि॒ रात्रीं॒ जग॑तो नि॒वेश॑नीं॒ ह्वया॑मि दे॒वं स॑वि॒तार॑मू॒तये॑ ।। १ ।।**

**ह्वया॑मि । अ॒ग्निम् । प्र॒थ॒मम् । स्व॒स्तये॑ । ह्वया॑मि । मि॒त्रावरु॑णौ । इ॒ह । अव॑से । ह्वया॑मि । रात्री॑म् । जग॑तः । नि॒ऽवेश॑नीम् । ह्वया॑मि । दे॒वम् । स॒वि॒तार॑म् । ऊ॒तये॑ ।। १ ।।**

## ऋग्भाष्यम्

**ह्वयामि देवानग्निपूर्वानथो वा विष्णुं तैस्तैर्नामभी राति यस्मात् ।**
**रतित्वाद्वारतिदत्वात् स रात्री .................. ।। १ ।।**

**ऋग्भाष्यटीका– ह्वयाम्यग्निम्** । एकादशर्चमिदं सूक्तम् । तत्राद्या लिङ्गोक्तदैवतपादा । शेषाः सावित्र्यः । प्रथमां प्रतीतदेवतासु विष्णौ च क्रमेण संक्षेपतो व्याचष्टे ।। ह्वयामीति ।। तैस्तैरग्न्यादिनामभिर्युक्तम् । प्रागव्याख्यातत्वाद्रात्रिशब्दं विष्णौ निर्वक्ति ।। रातीति ।। राति ददाति यस्मात्तस्मात्स विष्णू रात्री । रातेःष्ट्रप्रत्ययः । रतित्वाद्रतिकर्तृत्वात् रमेः ष्ट्रो डिच्च । रतिदत्वाद्वा रतं रातीति रतशब्दाद्याकारस्य दीर्घो द्वितीयस्य लोपः । रातेश्च कः । स्त्रियामीकारः ।

तथा चायमर्थः । अहं **स्वस्तये** सन्ततसौख्याय । **प्रथमं** वैश्वानराख्यमग्निं **ह्वयामि** आह्वयामि । मित्रावरुणौ चावसे रक्षणायेह यज्ञे ह्वयामि । **जगतो निवेशनीं** निविशन्तेऽत्रेत्याश्रयभूतां रात्रीं ह्वयामि । **सवितारं देवं** चल **ऊतये** रक्षायै ह्वयामीति ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'ह्वयाम्यग्निम्' इत्येकादशर्चं वर्गद्वयात्मकं पञ्चत्रिंशं सूक्तम् । तत्र आद्या लिङ्गोक्तदैवतपादा, शिष्टाः सावित्र्यः । आद्या नवमी च जगत्यौ, शिष्टास्त्रिष्टुभः अहम् **स्वस्तये** सन्ततसौख्याय । **प्रथमम्** । वैश्वानराख्यम् **अग्निम् ह्वयामि** आह्वयामि । मित्रावरुणौ च । **अवसे** रक्षणाय । इह यज्ञे । **ह्वयामि** । जगतः । **निवेशनीम्** निविशन्तेऽत्रेत्याश्रयभूताम् । **रात्रीम्** राति ददातीष्टमिति रात्रीनामकं विष्णुम्, रात्रिदेवतां च, रातेः त्रिप्प्रत्ययः । ह्वयामि । सवितारम् देवम् । च **ऊतये** रक्षायै । ह्वयामि । इत्यर्थः । अग्न्यादिपदानि प्राक् विष्णौ निरुक्तानि ।। १ ।।

**स्कन्द–** 'ह्वयामीत्यग्नये पादो मैत्रावरुण उत्तरः । तृतीयो रात्रिसंस्तावः सूक्तं सावित्रमुच्यते' (तु.बृदे.३,१०५) । ह्वयामि इत्याद्यः पाद आग्नेयः । ततः परो द्वितीयो मैत्रावरुणः । तृतीयो रात्रेः संस्तावः । रात्रिदेवत्य इत्यर्थः । शिष्टमन्यत् सूक्तं सावित्रम् । **ह्वयामि अग्निम्** । कीदृशम् । **प्रथमम्** मुख्यम् । क्रियाविशेषणं वा प्रथमशब्दः । अन्याभ्यो देवताभ्यः प्रथमम् अग्रे । **स्वस्तये** अविनाशाय आत्मनः । **ह्वयामि मित्रावरुणौ इह अवसे** पालनाय । **ह्वयामि रात्रिम् जगतः** कृत्स्नस्य **निवेशनीम्** स्वापकरीम् । **ह्वयामि देवम् सवितारम् ऊतये** पालनाय ।। १ ।।

**वेङ्कटमाधव– ह्वयामि अग्निम्** मुख्यम् अविनाशाय । **ह्वयामि मित्रावरुणौ** इह रक्षणाय । **ह्वयामि रात्रिम्** जङ्गमस्य निवेशयित्रीम् । ह्वयामि **देवम् सवितारम्** रक्षणाय ।। १ ।।

**मुद्गल–** 'ह्वयाम्यग्निम्' इत्येकादशर्चं पञ्चमं सूक्तम् । हिरण्यस्तूप ऋषिः । आद्या नवमी च जगती च्छन्दस्के । शिष्टा त्रिष्टुभः । आद्याऽग्निमित्रावरुणरात्रिसवितृदेवताका । शिष्टाः सवितृदेवताकाः ।

**स्वस्तये** अस्माकमविनाशाय **प्रथमम्** आदौ **अग्निम् ह्वयामि** । इह अस्मिन् कर्मणि **अवसे** अस्मद्रक्षणाय **मित्रावरुणौ ह्वयामि** । **जगतः** जङ्गमस्य प्राणिजातस्य निवेशनीम् उपवेशनहेतुभूताम् **रात्रीम्** रात्रिदेवताम् **ह्वयामि** । जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्य गृहे रात्रावुपविशन्तीति प्रसिद्धम् । **ऊतये** अस्मद्रक्षणार्थम् **सवितारम् देवम् ह्वयामि** ।। १ ।।

**सायण– स्वस्तये** अस्माकमविनाशाय । स्वस्तीत्यविनाशनाम (निरु.३.२१) इति यास्कः । **प्रथमम्** आदौ **अग्निं ह्वयामि** । **इह** अस्मिन् कर्मणि **अवसे** अस्मद्रक्षणाय **मित्रावरुणौ ह्वयामि** । **जगतः** जङ्गमस्य प्राणिजातस्य **निवेशनीम्** उपवेशनहेतुभूतां **रात्रीं** रात्रिदेवतां **ह्वयामि** । जङ्गमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान् कृत्वा स्वस्वगृहे रात्रौ उपविशन्तीति प्रसिद्धम् । 'ऊतये अस्मद्रक्षणार्थं सवितारं देवं ह्वयामि । मित्रावरुणौ । 'देवताद्वन्द्वे च' इति पूर्वपदस्य अनङादेशः । 'देवताद्वन्द्वे च' इति उभयपदप्रकृतिस्वरत्वम् । रात्रीम् । रात्रेश्चाजसौ (पा.सू.४.१.३१) इति ङीप् । निवेशनीम् । निविशन्त्यस्यामिति निवेशनी । करणाधिकरणयोश्च' इति ल्युट् । 'टिड्ढाणञ्' (पा.सू.५.१.१५) इत्यादिना ङीप् । उतये । अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना वकारस्य उपधायाश्च ऊठ् । ऊतियूति इत्यादिना क्तिन उदात्तत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** अथ ह्वयाम्यग्निम् इति एकादशर्च पञ्चमं सूक्तं हिरण्यस्तूपस्यार्षम् । आद्या नवमी च जगतीच्छन्दस्के । शिष्टास्त्रिष्टुभः । कृत्स्नस्य सूक्तस्य सविता देवता । आद्याया अग्न्यादयो लिङ्गोक्तदेवताः ।।

तत्र प्रथमामृचमाह– **स्वस्तये** (स्वस्ति अविनाशिनाम) अविनाशाय **प्रथमम्** आदौ **अग्निम् ह्वयामि** आह्वयामि । **इह** अत्र यजने **अवसे** रक्षणाय **मित्रावरुणौ ह्वयामि** । **जगतः** जङ्गमस्य लोकस्य **निवेशनीम्** स्थितिहेतुभूतां **रात्रीम्** अप्रकाशमयीं दिवसप्रतिद्वन्द्वभूतां अन्तर्निहित-सर्वसृष्टिगर्भां जगदाविष्कारप्रयोजिकां अनाविष्कृतसमस्तजगदाधारभूतां रात्रिदेवतां **ह्वयामि** । **ऊतये** अस्मद्वर्धनाय **सवितारम् देवम्** सर्वप्रेरकं सूर्यं ज्योतिर्मयं **ह्वयामि** ।। रात्रीम् रात्रेश्चाजसाविति ङीप् । **निवेशनीम्** निविशन्तेऽस्यामिति निवेशनी, अधिकरणे ल्युट् ।।१।।

## ऋक्संहिता पदपाठसहिता

**आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ।। २ ।।**

**आ । कृष्णेन । रजसा । वर्तमानः । निऽवेशयन् । अमृतम् । मर्त्यम् । च । हिरण्ययेन । सविता । रथेन । आ । देवः । याति । भुवनानि । पश्यन् ।। २ ।।**

## ऋग्भाष्यम्

....................कृष्णं रजः शार्वरं हृत्तमो वा ।

**देवान्नृजातानथवा विमुक्तानन्यांश्च मर्त्यान् सृतिगान्वा लयेषु ।**
**निशासु वा स्वात्मनि संनिवेशयन् प्रस्वापयन्वा रविगो जनार्दनः ।। २ ।।**

**ऋग्भाष्यटीका– आकृष्णेन** । अत्र कृष्णं रजोबहिरन्तश्च व्याख्याति । **कृष्णमिति** । शार्वरन्तम इति सम्बन्धः । देवोऽमृतं मर्त्यं च निवेशयन्नायाति इत्येतद्द्वेधा व्याचष्टे **देवानिति** ।। अथवेति पूर्वेण सम्बन्धः । मर्त्यानित्यनुवादेन सृतिगानिति व्याख्यानम् । ततश्चायमर्थः । **देवः** सविता । **कृष्णेन रजसा** शार्वरेण तमसा । तत्प्रवर्तकतयेति यावत् । **आवर्तमानः** प्रवर्तमानोऽमृतं देवजातम् । **मर्त्यं** नृजातं **च** । उपलक्षणमेतत् । अन्यानपि प्राणिनो **निवेशयन्** निशासु प्रस्वापयन् **हिरण्ययेन** हिरण्मयेन । **रथेन भुवनानि पश्यन्** आयातीति । यद्वा सविता देवो रविगो जनार्दनः । कृष्णेन रजसा आवर्तमान इत्यादि पूर्ववत् । रविगतत्वं विनापि जगत्प्रसविता विष्णुः । कृष्णेन रजसाऽविद्याख्येन हृत्तमसा । आवर्तमानोऽमृतं विमुक्तवर्गम् । मर्त्यं च सृतिगजातं च । निवेशयंल्लयेषु स्वात्मनि सन्निवेशयन् वासयन् **हिरण्ययेन** स्वीयेन रथेन भक्तानां शुद्धेन शरीरेण वा भुवनानि पश्यन्नायातीति ।। २ ।।

**मन्त्रार्थमञ्जरी–** देवः सविता । **कृष्णेन रजसा** शार्वरेण तमसा, तन्निवर्तकतयेति यावत् । **आ वर्तमानः** प्रवर्तमानः । **अमृतम्** देवजातम् । **मर्त्यम्** नृजातम् । च । उपलक्षणमेतत् अन्यानपि प्राणिनः । **निवेशयन्** निशासु प्रस्वापयन् । **हिरण्ययेन** हिरण्मयेन । रथेन भुवनानि पश्यन् आ याति इति । यद्वा सविता **देवः**, रविगो जनार्दनः । कृष्णेन रजसा आ वर्तमानः' इत्यादि पूर्ववत् रविगत्वं विनापि सविता देवः जगत्प्रसविता विष्णुः । **कृष्णेन रजसा** अविद्याख्येन हृत्तमसा, तन्निवर्तकतया । आ वर्तमानः । **अमृतम्** मुक्तवर्गम् । **मर्त्यम्** संसारिजातम् च । **निवेशयन्** लये स्वात्मनि निवेशयन्, वासयन् । **हिरण्ययेन** । स्वीयेन रथेन । भक्तानां शुद्धेन शरीरेण वा भुवनानि पश्यन् आ याति इति ।। २ ।।

**स्कन्द–** रजोऽत्र तमो रात्रिर्वा उच्यते । तृतीयानिर्देशाच्च योग्यक्रियाध्याहारः । **कृष्णेन रजसा** तमसा रात्र्या वा व्याप्ते जगति । **आ वर्तमानः 'वर्तते'** (निघ.२,१४) इति

गतिकर्मा । 'लक्षणहेत्वोः क्रियायाः' (पा.३,२,१२६) इत्येवमयं हेतौ शानच् । आगमेन आत्मीयेन हेतुना **निवेशयन्** शुद्धोऽप्ययं निविशिः अभिपूर्वार्थे द्रष्टव्यः । स्वव्यापारेषु अभिनिवेशयन् । यत्नेन व्यापारयन्नित्यर्थः । किम् । **अमृतम्** मरणवर्जितं देवादिम् । **मर्त्यम्** मनुष्यादिम् च । उदिते हि सवितरि सर्वः स्वव्यापारे प्रवर्तते । अत एवमुच्यते– आ वर्तमानः निवेशयन् अमृतं मर्त्यं चेति । किं करोति । उच्यते । **हिरण्ययेन सविता रथेन देव आ याति भुवनानि** कृताकृतप्रत्यवेक्षणार्थम् **पश्यन्** । अथवा निवेशयन्निति निवेशः स्वापः एवाभिप्रेतः । कृष्णेन रजसा इत्येतच्च निवेशयन्नित्येतेन सम्बध्यते । सप्तम्यर्थे चात्र तृतीया । आ वर्तमानो निवेशयन्निति हेतुहेतुमद्भावः । एवं योजना– कृष्णायां रात्रौ निवेशयन् स्वापयन् अमृतं मर्त्यं च आवर्तमानः । कदा । सामर्थ्यादहनि । हिरण्ययेन सविता रथेन आ देवो याति । क्व आयाति । सामर्थ्यात् रात्रौ । रात्रावावर्तमानः निवेशयन्नमृतं मर्त्यं च उदयगिरिं प्रत्यायाति । उत्तरकुरुस्थानि भूतानि पश्यन् । अहनि त्वावर्तमानः पृथिवीं प्रत्यायाति तत्रस्यानि भूतानि पश्यन्निति ।। २ ।।

**वेङ्कटमाधव–** कृष्णवर्णेन **रजसा** द्युलोकेन **आ वर्तमानः निवेशयन्** देवान् मर्त्यान् **च** हिरण्मयेन **सविता रथेन देवः आ याति** सर्वाणि **भुवनानि पश्यन्** ।। २ ।।

**मुद्गल–** सविता सूर्यः **कृष्णेन रजसा** कृष्णवर्णेन लोकेन । अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति । तेनान्तरिक्षमार्गेण **आ वर्तमानः** पुनः पुनरागच्छन् **अमृतम्** देवम् **मर्त्यम्** मनुष्यम् च **निवेशयन्** स्वस्वस्थाने स्थापयन् । यथोक्तगुणोपेतः सविता **देवः भुवनानि** सर्वान् लोकान् **पश्यन्** अवेक्षमाणः प्रकाशयन्नित्यर्थः । **हिरण्ययेन** सुवर्णनिर्मितेन **रथेन आ याति** अस्मत्समीपमागच्छति ।। २ ।।

**सायण– सविता** सूर्यः **कृष्णेन रजसा** कृष्णवर्णेन लोकेन । कृष्णं कृष्यतेर्निकृष्टो वर्णः' (निरु.२.२०) इति यास्कः । 'लोका रजांस्युच्यन्ते' (निरु.४.१९) इति च । अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति । तेनान्तरिक्षमार्गेण **आ वर्तमानः** पुनःपुनरागच्छन् **अमृतं** देवं **मर्त्यं** मनुष्यं **च निवेशयन्** स्वस्वस्थानेऽवस्थापयन् । यद्वा । अमृतं मरणरहितं प्राणं **मर्त्यं** मरणसहितं शरीरं च निवेशयन् । तथा चारण्यकाण्डे अमर्त्यो मर्त्येना सयोनिः '(ऋ.सं.१.१६४.३८) इत्येतस्य मन्त्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते'

मर्त्यानि हीमानि शरीराणि अमृतैषा देवता' (ऐ.आ.२.१.८) इति । यथोक्तगुणोपेतः सविता देवः 'भुवनानि सर्वान् लोकान् पश्यन् अवेक्षमाणः प्रकाशयन्नित्यर्थः । **हिरण्ययेन** सुवर्णनिर्मितेन रथेन **आ याति** अस्मत्समीपमागच्छति । अमृतम् । मृतं मरणं नास्ति अस्येति बहुव्रीहौ 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । मर्त्यम् । मर्ते भवम् । भवे छन्दसि इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । हिरण्ययेन । ऋत्व्य... (पा.सू.६.४.१७५) इत्यादिना मयटो मकारलोपो निपातितः । यस्येति लोपे प्रत्ययस्वरः । भुवनानि । 'भू सत्तायाम्' । भूसूधूभ्रस्जिभ्यश्छन्दसि' (उ.सू.२.२३८) इति क्युन्प्रत्ययः । योरनादेशे उवङादेशः । नित्त्वादाद्युदात्तत्वम् ।। २ ।।

**सिद्धाञ्जनम्– कृष्णेन** कृष्णवर्णेन **रजसा** लोकेन मार्गेण **वर्तमानः** उदितो गच्छन्, **अमृतम्** मरणरहितं देवं **मर्त्यं च** मनुष्यं च **निवेशयन्** यथास्थानमवस्थापयन् **सविता देवः** सर्वप्रेरको ज्योतिष्मान् सूर्यः **हिरण्ययेन** सुवर्णमयेन **रथेन आयाति** आगच्छति । किं कुर्वन् ? **भुवनानि पश्यन्** सर्वं जगज्जातं अवेक्षमाणः, स्वेन ज्योतिषा प्रकाशयन्नित्यर्थः । इदमवधेयम् । अधोभुवनं तमसा परिवीतम् । तस्मादुदेति प्रज्ञानघनज्योतिः सूर्यः । कृष्णवर्णस्य प्रतिद्वन्द्वी हिरण्यवर्णः । मर्त्यं अमृतं च प्रकाश्य अवस्थापयति उदितः सुवर्णज्योतिरात्मा सूर्यः। तथा अवस्थापनेन उभयोः कर्म सुकरं भवति । मर्त्यस्य कार्यं यजनं, येन अमृतत्वलाभः । अमृतस्य देवजातस्य कार्यं तु मर्त्योपकारकत्वम् । एवं अमृतं मर्त्यं च निवेशयन्नुदितश्चरति सविता । **हिरण्ययेन** हिरण्मयेन, मयटो मकारलोपः निपातितः। **मर्त्यम्** मर्ते भवं, छन्दसि यत् । **अमृतम्** मृतं मरणं नास्त्यस्येति बहुव्रीहिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**याति॑ दे॒वः प्र॒वता॒ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्याम् ।**
**आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒विश्वा॑ दुरि॒ता बाध॑मानः ।। ३ ।।**
**याति॑ । दे॒वः । प्र॒ऽवता॑ । याति॑ । उ॒त्ऽवता॑ । याति॑ । शु॒भ्राभ्या॑म् । य॒ज॒तः । हरि॑ऽभ्याम् ।**
**आ । दे॒वः । या॒ति॒ । स॒वि॒ता । प॒रा॒ऽवतः॑ । अप॑ । विश्वा॑ । दुः॒ऽइ॒ता । बाध॑मानः ।।**

## ऋग्भाष्यम्

**आयाति नित्यं चोच्चनीचैः प्रदेशैः शुभ्राश्वयुक्तेन रथेन याज्यः ।**
**शुभौ च तौ रमणीयौ च शुभ्रौ पुरोगाश्वौ हरिदश्वो हि सूर्यः ।**
**परावतो दूरतः ........... ........... ।। ३ ।।**

**ऋग्भाष्यटीका– याति देवः** । अत्र पूर्वपादार्थमाह ।। आयातीति ।। एतत्पदं पूर्वत्रापि सम्बध्यते । पूर्वं रथेनायातीत्युक्तम् । अत्र शुभ्राभ्यां हरिभ्यामिति तदविरोधेन व्याख्याति । शुभ्रेति । यजत इत्यस्यार्थो याज्य इति । यजेरतप्रत्ययः । शुभ्रशब्दः श्वेतवाचीति प्रतीति-निवारणायाह ।। शुभौ चेति ।। रमेर्डः पूर्वपदाकारलोपश्च । शुभौ गत्यादिना । रमणीयौ रूपेणेति शुभ्रावित्यर्थः । ननु सूर्यस्य सप्ताश्वाः तत्र कथं द्वयोरेव ग्रहणं प्राधान्यादित्याह । **पुरोगेति** ।। शुभ्रशब्दस्य प्रसिद्धार्थपरित्यागे को हेतुरित्यत आह ।। हरिदिति ।। परावत इत्येतदनूद्य व्याचष्टे ।। **परावत इति** ।।

तथा चायमर्थः । आयातीत्युक्तानुवादेन विशेषणान्युच्यन्ते । **देवः** सविता । **प्रवता** प्रवणेन । कचिन्नीचैः प्रदेशैरायाति । कचिदुद्वतोन्नतेनोच्चैः प्रदेशैरायाति । नित्यमिति शेषः । एतच्च क्रियासातत्ये लडिति ज्ञापनार्थम् । किं च यजतो याज्यः । **शुभ्राभ्यां हरिभ्यां** शुभ्राश्वयुक्तेन रथेनायाति । अपि च सविता देवः । प्राणिनां विश्वानि दुरितान्यपबाधमानः । परावतो दूरत आयातीति ।। ३ ।।

**मन्त्रार्थमञ्जरी–** आ याति इत्युक्तानुवादेन विशेषणान्यत्र उच्यन्ते देवः सविता । **प्रवता** प्रवणेन, कचिन्नीचैः प्रदेशैः । **आ याति** कचित् **उद्वता** उन्नतेन, उच्चैः प्रदेशैः । **आ याति** क्रियासातत्ये लट्, नित्यमायाति इत्यर्थः । किं च, यजतः **याज्यः** यागविषय इति यावत् । **शुभ्राभ्याम्** रूपेण रमणीयाभ्याम् इत्यर्थः, रमेः डः, उपपदाकारलोपः, शुभौ च तौ (रौ च) रमणीयौ यौ च इति विग्रहः । **हरिभ्याम्** अश्वाभ्याम् । युक्तेन रथेन आ याति । सवितुः सप्ताश्वत्वेऽप्यग्रगामिणोर्हरिद्वर्णयोः प्राधान्याद्विवचनम् । अपि च, सविता देवः । **प्राणिनाम् विश्वा**, विश्वानि । **दुरिता** दुरितानि । अप बाधमानः । **परावतः** दूरतः । आ याति इति ।।

**स्कन्द– याति देवः** प्रवता 'उपसर्गाच्छन्दसि धात्वर्थे' (पा.५,१,११८) इत्येवमयं

वतिप्रत्ययः । शीघ्रयापिना । केन । सामर्थ्यात् रथेन । **याति उद्वता** ऊर्ध्वगामिना । केन । सामर्थ्यात् रथेनैव **याति शुभ्राभ्याम्** शोभनाभ्याम् । **यजतः** यष्टव्या यागार्हः । **हरिभ्याम्** अश्वाभ्याम् । यत्र यथा गन्तव्यं शीघ्रं वोर्ध्वं वा रथेन वा अश्वैर्वा तत्र तथा गच्छतीत्यर्थः । किं च **आ देवः याति सविता परावतः** दूरादुदयगिरेः । **अप विश्वा दुरिता** दुरितानि । अत्र तमोलक्षणानि । **बाधमानः** अपनयन् । अथवाऽपुण्यान्येव दुरितानि, तान्यपि सविता बाधते । रश्मिसंस्पर्शस्य शुचित्वकरत्वादहनि च पापनिवृथ्यर्थं प्रायश्चित्तानुष्ठानात् ।। ३ ।।

**वेङ्कटमाधव– याति देवः** प्रवणेन मार्गेण प्रातः । **याति** अनन्तरम् उन्नतेन । **याति** शोभनाभ्याम् अश्वाभ्याम् यष्टव्यः । **आ याति देवः सविता** दूरात् **अप बाधमानः** विश्वानि दुरितानि ।। ३ ।।

**मुद्गल– देवः** दीप्यमानः सविता **प्रवता** प्रवणवता मार्गेण **याति** गच्छति । तथा **उद्वता** उत्कृष्टेन ऊर्ध्वदेशयुक्तेन मार्गेण **याति** । उदयानन्तरम् आमध्याह्नम् ऊर्ध्वो मार्गः । तत उपरि आसायं प्रवणो मार्गं इति विवेकः । तथा **यजतः** यष्टव्यः स देवः **शुभ्राभ्याम्** श्वेताभ्याम् **हरिभ्याम्** अश्वाभ्याम् **याति** देवयजनदेशे गच्छति । **सविता देवः विश्वा दुरिता** सर्वाणि पापानि **अप बाधमानः** विनाशयन् **परावतः** दूरदेशात् द्युलोकात् **आ याति** यागदेशे आगच्छति ।। ३ ।।

**सायण– देवः** दीप्यमानः सविता '**प्रवता** प्रवणवता मार्गेण **याति** गच्छति । तथा **उद्वता** उत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण **याति** । उदयानन्तरं आमध्याह्नं ऊर्ध्वो मार्गः । तत उपरि आसायं प्रवणो मार्ग इति विवेकः । तथा **यजतः** यष्टव्यः स देवः **शुभ्राभ्यां** श्वेताभ्यां **हरिभ्याम्** अश्वाभ्यां **याति** देवयजनदेशे गच्छति । **सविता देवः विश्वा दुरिता** सर्वाणि पापानि **अप बाधमानः** विनाशयन् **परावतः** दूरदेशात् । 'परावतः' (नि.३.२६.५) इति दूरनामसु पठितत्वात् । तादृशात् द्युलोकात् **आ याति** यागदेशे आगच्छति ।। प्रवता । 'वन षण संभक्तौ' । अस्मात् प्रपूर्वात् क्विप् । 'गमादीनामिति वक्तव्यम्' (पा.सू.६.४.४०.१) इत्यनुनासिकलोपः । ततः तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । उद्वता । उत्पूर्वात् वनतेः पूर्ववत्प्रक्रिया । यजतः । 'भृमृदृशि' (उ.सू.३.३९०) इत्यादिना यजतेः कर्मणि अतच् प्रत्ययः । विश्वा दुरिता । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः ।। ३ ।।

**सिद्धाञ्जनम्–** देवः द्योतमानः सूर्यः **प्रवता** प्रवणवता मार्गेण **याति** गच्छति, तथा **उद्वता** उद्गमवता मार्गेण **याति**, ऊर्ध्वस्थानादवरोहति, इतश्च ऊर्ध्वमारोहति । इदं च आरोहणा-वरोहणात्मकं यजमानानुग्रहार्थकं ऋतज्योतिर्गमनं अन्तर्यजने प्रसिद्धम् । तथा **यजतः** यष्टव्यः **स देवः शुभ्राभ्यां** स्वच्छाभ्यां **हरिभ्याम्** अश्वाभ्यां **याति** गच्छति अस्मदनुग्रहार्थम् । **सविता देवः** सर्वलोकप्रेरकज्योतिःस्वरूपी **विश्वा** सर्वाणि **दुरिता** दुर्गतानि **अपबाधमानः** प्रध्वंसयन् **परावतः** परस्माद् द्युलोकात् **आयाति** आगच्छति । प्रवता, उद्वता उभयोः समानप्रक्रिया, वनधातोः क्विप्, अनुनासिकलोपः, ततः तुक् । यजतः यजतेः अतच् । विश्वा, दुरिता शेर्लोपः छन्दसि ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**अभीवृ॑तं कृश॑नैर्वि॒श्वरू॑पं हिर॑ण्यशम्यं यज॒तो बृ॒हन्त॑म् ।**
**आस्था॒द्रथं॑ सवि॒ता चि॒त्रभा॑नुः कृ॒ष्णा रजां॑सि॒ तवि॑षीं॒ दधा॑नः ॥ ४ ॥**

**अ॒भिऽवृ॑तम् । कृश॑नैः । वि॒श्वऽरू॑पम् । हिर॑ण्यऽशम्यम् । य॒ज॒तः । बृ॒हन्त॑म् । आ । अ॒स्था॒त् । रथ॑म् । स॒वि॒ता । चि॒त्रऽभा॑नुः । कृ॒ष्णा । रजां॑सि । तवि॑षीम् । दधा॑नः ॥**

## ऋग्भाष्यम्

**......................अभीवृतश्च ।**
**रथो हिरण्यैस्तस्य शम्या युगाणी ।**
**तमः प्रकाशौ यदधीनौ यतस्तौ दधान इत्युच्यते वासुदेवः ।**
**कृष्णं रजस्तविषी सत्त्वपूर्वगुणास्त्रयो व्युत्क्रमात् ॥ ४ ॥**

**ऋग्भाष्यटीका– अभीवृतम्** । अत्र रथस्य कृशनैरभीवृतत्वं विशेषणमुक्तम् । तद्व्याचष्टे । अभीवृतश्चेति ॥ कृशनशब्दस्य हिरण्यनामसु पाठात् । तस्य सवितुः । शम्याशब्दं व्याख्याति । शम्येति । युगाणी युगकीलम् । तदयमर्थः । **यजतो** याज्यश्चित्रभानुः । **कृष्णारजांसि** तमांसि । **तविषीं** तेजश्च **दधानः** । **कृशनैरभीवृतम्** आच्छादितम् । **विश्वरूपं** विचित्रम् । **हिरण्यशम्यं** हिरण्मयशम्यम् । **बृहंतं रथमास्थात्** अधिष्ठितवानिति । अत्र तमसः परस्तात् न तत्र सूर्यो भाति इत्युक्तेः परमेश्वरे कथं तमःप्रकाशौ दधान इति वचनमित्यत आह ॥ तम इति ॥ तमः

प्रकाशौ प्रवृत्तौ यदधीनौ यतश्चोत्पन्नौ । स वासुदेवस्तौ दधान इत्युच्यते । कृष्णेत्यादिपदार्थान-न्यथाप्याह ।। कृष्णमिति ।। कृष्णारजांसीति प्राक्समानाधिकरणतया व्याख्यातमिदानीं तु पृथक् वृत्त्यपेक्षया बहुवचनमित्यभिप्रायेण कृष्णं रज इत्युक्तम् । सत्वपूर्वास्त्रयो गुणाः कृष्णं रजस्तविषीति पदत्रयेणोच्यन्ते इत्युक्ते यथाक्रममिति प्रतीतिः स्यात् न च कृष्णत्वं सत्वे तविषीत्वं तमसि शक्यसमर्थनमत उक्तम् । व्युत्क्रमादिति । कृष्णत्वं तमस्यजामेकामित्यादौ प्रसिद्धम् । प्रकाशहेतुत्वात्सत्वं तविषी ।। ४ ।।

**मन्त्रार्थमञ्जरी–** यजतः याज्यः चित्रभानुः सविता । **कृष्णा** कृष्णानि । **रजांसि** तमांसि । **तविषीम्** तेजः । (च) **दधानः** तयोर्नि तन्नियन्ता इत्यर्थः । यद्वा **कृष्णा** कृष्णम्, रजांसि रजः, **तविषीम्,** तविषी इति तमोगुणरजोगुणसत्त्वगुणा उच्यन्ते, नियन्तृतया तान् दधानः, वृत्त्यपेक्षया 'रजांसि' इति बहुवचनम् । कृशनैः, सुवर्णैः तन्नामसु (वै०नि०१।२) पाठात् । **अभिवृतम्** आच्छादितम् । **विश्वरूपम्** विचित्रम् । **हिरण्यशम्यम्** हिरण्मययुगकीलोपेतम् । बृहन्तं रथम् । **आ अस्थात्,** अधिष्ठितवान्, स्वार्थे लुङ् ।। ४ ।।

**स्कन्द– अभिवृतम् कृशनैः** हिरण्यनामैतत् (तु.निघ.१,२) । हिरण्यैः । सुवर्ण-खचितमित्यर्थः । **विश्वरूपम्** 'विश्वम्' (निघ.३,१) इति बहुनाम । सर्वपर्यायो वा । बहुरूपं सर्वरूपं वा । **हिरण्यशम्यम्** वोढुरश्वस्य अनडुहो वाऽनपगमार्थं या निधीयते सा शम्येति प्रसिद्धा । सा हिरण्मयी यस्य तं हिरण्यशम्यम् । **यजतः** यागार्हः । **बृहन्तम् आ अस्थात्** आतिष्ठति आस्थितवान् वा **रथम् सविता चित्रभानुः** चित्रदीप्तिः विचित्रदीप्तिर्वा पूजनीयदीप्तिर्वा । **कृष्णा** कृष्णानि **रजासिं** तमासि । **तविषीम्** बलनामैतत् (तु.निघ.२,९) । तृतीयार्थे चात्र द्वितीया । स्वेन तेजसा बलेन । **दधानः** धारयन् । निरुन्धन्नित्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** परिवृतं हिरण्यैः नानारूपं हिरण्मयशम्य यष्टव्यो महान्तम् **रथम्** आस्थित **सविता** चित्रदीप्तिः कृष्णानि तेजांसि बलं च **दधानः** ।। ४ ।।

**मुद्गल– सविता रथम् आ अस्थात्** आस्थितवान् । आरूढवानित्यर्थः । कीदृशम् । **अभीवृतम्** अभितो वर्तमानम् । तथा **कृशनैः विश्वरूपम्** सुवर्णेन नानारूपम् । क्वचित् सुवर्णनिर्मितगजङ्क्तिः क्वचिन्मनुष्यपङ्क्तिः इत्येवं बहुरूपत्वम् । **हिरण्यशम्यम्** अश्वानां स्कन्धेषु

रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणा शङ्कवः शम्याः । ताः सुवर्णमय्यो रथे वर्तन्ते । **बृहन्तम्** प्रौढम् । कीदृशः सविता । **यजतः** यष्टव्यः चित्रभानुः विविधरश्मियुक्तः **कृष्णा रजांसि** अन्धकारयुक्ततया कृष्णवर्णान् लोकान् उद्दिश्य तमोनिवारणार्थम् **तविषीम्** बलं स्वकीयम् प्रकाशरूपम् **दधानः** ॥ ४ ॥

**सायण– सविता रथम् आस्थात्** आस्थितवान् आरूढवानित्यर्थः । कीदृशम् । **अभीवृतम्** अभितो वर्तमानम् । तथा **कृशनैः विश्वरूपं** सुवर्णेन नानारूपम् । 'कृशनं लोहम्' (नि.१.२.७) इति सुवर्णनामसु पाठात् । क्वचित् सुवर्णनिर्मितगजपङ्क्तिः क्वचिन्मनुष्यपङ्क्तिरित्येवं बहुरूपत्वम् । **हिरण्यशम्यम्** । अश्वानां स्कन्धेषु रथयोजनवेलायां नियन्तुं प्रक्षेप्यमाणाः शङ्कवः शम्याः । ताः सुवर्णमय्यो रथे वर्तन्ते । **बृहतं** प्रौढम् । कीदृशः सविता । **यजतः** यष्टव्यः **चित्रभानुः** विविधरश्मियुक्तः **कृष्णा** 'रजांसि अन्धकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं तविषीं बलं स्वकीयं प्रकाशरूपं **दधानः** ॥ अभीवृतम् । अभितो वर्तते इत्यभी-वृत् । 'वृतु वने । क्विपि नहिवृति' (पा.सू.६.३.११६) इत्यादिना पूर्वपदस्य दीर्घत्वम् । विश्वरूपम् । विश्वानि रूपाणि यस्यासौ विश्वरूपः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति व्यत्ययेन असंज्ञायामपि पूर्वपदान्तोदात्तत्वम् । हिरण्यशम्यम् । 'हर्य गतिकान्त्योः' । 'हर्यतेः कन्यन् हिर च' (उ.सू.५.७२२) इति कन्यन्प्रत्ययो धातोर्हिरादेशश्च । नित्त्वादाद्युदात्तत्वम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **आस्थात्** । तिष्ठतेलुहि 'गातिस्था' इति सिचो लुक् । कृष्णा । 'कृषेवर्णे' (उ.सू.३.२८४ ) इति नक्प्रत्ययः । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । **तविषीम्** । तवतिः सौत्रो धातुः । 'तवतेर्णिद्वा' (उ.सू.१.४८) इति टिषच् । टित्त्वात् टिड्ढाणञ्' इत्यादिना ङीप् । व्यत्ययेन आद्युदात्तत्वं वृषादित्वात् दृष्टव्यम् । दधानः । शानचि 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ४ ॥

**सिद्धाञ्जनम्– सविता रथम् आस्थात्** आस्थितः सूर्यो रथमारूढवान् । कीदृशं रथम् ? **अभिवृतम्** अभितो वर्तमानं, **कृशनैः** (कृशनं हिरण्यनाम) हिरण्यैः **विश्वरूपम्** विश्वानि सर्वाणि विविधानि रूपाणि यस्य तं, हिरण्मयरूपबाहुल्ययुक्तमित्यर्थः **हिरण्यशम्यम्** हिरण्मय-शङ्कयुक्तं, (शङ्कवः शम्याः) हिरण्मयशिल्पकर्मयुक्तमिति वा (शमी कर्मनाम) **बृहन्तम्** महान्तम् । कीदृशः सविता? **यजतः** यष्टव्यः, **चित्रभानुः** नानावर्णरश्मियुक्तः । किं कुर्वन् ? **कृष्णा** कृष्णानि

तमोमयानि रजांसि भुवनानि अभिलक्ष्य तमसोऽपहत्यं **तविषीम्** बलं प्रकाशात्मकं **दधानः** धारयमाणः । **अभीवृतम्**-अभितो वर्तत इति अभीवृत् तं, नहिवृतीत्यादिना पूर्वपदस्य दीर्घत्वम् । **तविषीम्**-तवतिः सौत्रो धातुः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**विजनाञ्छ्यावाः शितिपादो अख्यन्रथं हिरण्यप्रउगं वहन्तः ।**
**शश्वद्विशः सवितुर्दैव्यस्योपस्थे विश्वा भुवनानि तस्थुः ॥ ५ ॥**
वि । जनान् । श्यावाः । शितिऽपादः । अख्यन् । रथम् । हिरण्यऽप्रउगम् । वहन्तः ।
शश्वत् । विशः । सवितुः । दैव्यस्य। उपऽस्थे । विश्वा । भुवनानि । तस्थुः ॥ ५ ॥

## ऋग्भाष्यम्

**...................... तत्तुरङ्गाः ।**
**श्यावाः श्यामत्वान्नीलपादो जगत्ते ।**
**पश्यन्ति सन्धिः प्रउगं रथस्य ।**
**देवप्रियत्वाद्दैव्यनाम्नो हरेस्तु ।**
**समीपस्थं सर्वगत्वाज्जगद्धि ॥ ५ ॥**

**ऋग्भाष्यटीका– विजनान्** । तत्तुरङ्गाः । श्यामत्वाच्छ्यावाः । शितिपादो नीलपादो **हिरण्यप्रउगं रथम्** । **जनान्** प्रति **वहन्तः** सामर्थ्यात्तत्तुरङ्गास्तस्य सवितुः ते प्रसिद्धास्तुरङ्गाः । **शश्वत्** सर्वदा । विशः प्रजाः जगदिति यावत् । व्यख्यन् । अपश्यन्पश्यन्ति । यस्याश्वा अपि सर्वदर्शिनः किमुतासाविति । प्रउगं किमुच्यत इत्यत आह ॥ सन्धिरिति ॥ रथस्य रथावयवानाम् । ततश्च हिरण्योपनिबद्धसन्धिमित्यर्थः । किंच विश्वानि भुवनानि जगदिति यावत् । **दैव्यस्य** देवप्रियत्वाद्दैव्यनाम्नः सवितुर्हरेस्तु हरेरेव **उपस्थे** समीपे **तस्थुः** समीपत्स्थं वर्तते । कथं सर्वगतत्वात् तच्च 'यच्च किञ्चित्' इत्यादि श्रुतिसिद्धमिति ॥ ५ ॥

**मन्त्रार्थमञ्जरी–** श्यामत्वात् श्यावाः । **शितिपादः** नीलपादः । **हिरण्यप्र उगम्** हिरण्योपनिबद्धरथावयवसंधिम् । **रथम्** जनान् प्रति वहन्तः । सामर्थ्यात् 'तुरगाः' इत्यन्वेति, तस्य

सवितुः तुरगाः **शश्वत्** सर्वदा । **विशः** प्रजाः, जगदिति यावत् । **वि अख्यन्** अपश्यन्, पश्यन्ति, 'यस्याश्वा अपि सर्वदर्शिनः, किम्वसौ ?' इति भावः । किं च, **विश्वा** विश्वानि । भुवनानि, जगदिति यावत् । **दैव्यस्य** देवप्रियतया देवसम्बन्धित्वाद्दैव्यनाम्नः । **सवितुः** हरेः । **उपस्थे** समीपे । **तस्थुः** समीपस्थं वर्तते, कथम् ? सर्वगत्वात्तस्य, 'यच्च किंचिज्जगत्सर्वम्' (महाना०उ०११।६) इत्यादि श्रुतिसिद्धम् इति ।। ५ ।।

**स्कन्द– जनान्** मनुष्यान् **श्यावा** श्याववर्णाः **शितिपादः** अश्वा वि **अख्यन्** विविधं प्रकाशयन्ति सवितुः स्वभूतम् **रथम् हिरण्यप्रउगम्** यत्र रथो निबध्यते स प्रदेशः प्रउगम् इत्युच्यते । स हिरण्मयो यस्य तं हिरण्यप्रउगम् । **वहन्तः** । किञ्च **शश्वत्** बहुनामैतत् (तु.निघ.३,१) । नित्यपर्यायो वा । बहुशो नित्यं वा । **विशः** मनुष्याः **सवितुः दैव्यस्य** देव एव दैव्यः । अथवा देवेषु दिवि वा भवो दैव्यः । तस्य दैव्यस्य **उपस्थे** उपस्थाने । **विश्वा भुवनानि** सर्वाणि च भूतानि । **तस्थुः** स्थितानि । बहवो मनुष्याः सर्वाणिच भूतजातानि सवितारमुपतिष्ठन्त इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव– वि अख्यन् जनान्** श्यामवर्णाः श्वेतपादाः हिरण्मयप्रउगम् **रथम् वहन्तः** अश्वाः । सदा **सवितुः** दिवि भवस्य **उपस्थे विशो** व्याप्ता दिशः तिष्ठन्ति, सर्वाणि च भुवनानि ।।

**मुद्गल– श्यावाः** एतन्नामकाः सूर्यस्याश्वाः । ते च **शितिपादः** शितयः श्वेतवर्णाः पादा येषां ते शितिपादः **हिरण्यप्रउगम्** रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगम् इत्युच्यते । तच्चत्र सुवर्णमयम् । तद्युक्तम् **रथम् वहन्तः जनान्** प्राणिनः **वि अख्यन्** । विशेषेण प्रकाशितवन्त इत्यर्थः । **शश्वत्** सर्वदा **विशः** प्रजाः **दैव्यस्य** इतरदेवसम्बन्धिनः **सवितुः** प्रेरकस्य सूर्यस्य **उपस्थे** समीपस्थाने **तस्थुः** स्थितवत्यः । न केवलं प्रजाः । किन्तर्हि । **विश्वा भुवनानि** सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः ।। ५ ।।

**सायण– श्यावाः** एतन्नामकाः सूर्यस्याश्वाः । 'श्यावाः सवितुः' (नि.१.१५.८) इति निघण्टावुक्तत्वात् । ते च **शितिपादः** श्वेतैः पादैरुपेताः **हिरण्यप्रउगम्** । रथस्य मुखम् ईषयोरग्रं युगबन्धनस्थानं प्रउगमित्युच्यते । तच्चात्र सुवर्णमयम् । तद्युक्तं **रथं वहन्तः जनान्** प्राणिनः **वि अख्यन्** विशेषेण प्रकाशितवन्त इत्यर्थः । **शश्वत्** सर्वदा **विशः** प्रजाः **दैव्यस्य**

इतरदेवसम्बन्धिनः सवितुः प्रेरकस्य सूर्यस्य **उपस्थे** समीपस्थाने तस्थुः स्थितवत्यः । न केवलं प्रजाः किं तर्हि **विश्वा भुवनानि** सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः ।। शितिपादः । शितयः श्वेतवर्णाः पादा येषां ते शितिपादाः । 'सुपां सुलुक्' इति जसः सु आदेशः । यद्वा । शितिः श्वेतवर्णः स्फाटिकादिः । स इव पादो येषां ते । 'पादस्य लोपोऽहस्त्यादिभ्यः' (पा.सू.५.४.१३८) इति समासान्तपादशब्दस्यान्त्यलोपः । उपमानात् इति हि तत्रानुवर्तते । पादशब्दस्य वृषादित्वादाद्युदात्तत्वम् । तस्य बहुव्रीहौ समासे 'शितेर्नित्यावह्वज्बहुव्रीहावभसत्' (पा.सू.६,२,१३८ ) इत्युत्तरपदप्रकृतिस्वरत्वम् । अख्यन् । ख्यातेर्लुङि अस्यति वक्ति' इत्यादिना च्लेः अङादेशः । हिरण्यप्रउगम् । बहुव्रीहौ पूर्वपदप्रकृतस्वरत्वम् । वहन्तः । शपः पित्वादनुदात्तत्वम् । शतुश्च लसावधातुकस्वरेण धातुस्वरः' । दैव्यस्य । तस्येदमित्यर्थे 'देवाद्यञञौ' (पा.सू.४.१.८५.३) इति देवशब्दात् प्राग्दीव्यतीयो यञ् । 'तद्धितेष्वचामादेः' (पा.सू.७.२.११७) इति आदिवृद्धिः । 'ञ्नित्यादिनित्यम्' इत्याद्युदात्तत्वम् । उपस्थे । 'आतश्चोपसर्गे' इति कः । 'आतो लोप इटि च' इति आकारलोपः । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्– श्यावाः** एतन्नामकाः सूर्याश्वाः, कपिशवर्णाः ते च **शितिपादः** शितयः श्वेताः पादाः येषां ते श्वेतवर्णपादयुक्ताः **हिरण्यप्रउगम्** रथस्य युगबन्धनस्थानं प्रउगम्, हिरण्यं सुवर्णमयं प्रउगं यस्य तं **रथम् वहन्तः जनान्** प्रजाः **व्यख्यन्** विशेषेण प्रकाशितवन्तः। **शश्वत्** सदा विशः प्रजाः **दैवस्य** सर्वदेवसंबन्धिनः **सवितुः** प्रेरकस्य देवस्य **उपस्थे** समीपे स्थाने तस्थुः स्थिताः । तथा विश्वा सर्वाणि **भुवनानि** लोकाश्च तस्थुः । पूर्वमेव हिरण्यवर्णरययुक्तशुभ्राश्वैः प्रापितप्रकाशाः विशः भुवनानि च सर्वप्रकाशमूलस्थानमुपेत्य स्थिताः । ये पुनर्लोका विशो न तथा लब्धप्रकाशाः, तेषां तमस्येवावस्थानं, तेषां लोकाश्च 'असूर्या नाम' ।। शितिपादः 'सुपां सुलुक्' इति जसः सु आदेशः । अख्यन्- ख्यातेलुङि च्लेरङादेशः । दैव्यस्य-देवाद्यञ्, तस्येदमित्यर्थे ।। ५ ।।

## ऋक्संहिता पदपाठसहिता

**तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।**
**आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ।। ६,६ ।।**

तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् । (आणिम् । न । रथ्यम् । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊँइति । तत् । चिकेतत् ।। ६,६ ।।

## ऋग्भाष्यम्

तिस्रो द्यावो मात्र यं द्वावुपस्थौ जडाजडे श्रीर्विराषाडधीशा ।
विश्वस्य साक्षाद्भगवान्नियंता यमोऽस्य सर्वं गदितं सदैव ।
जडाजडत्वान्मानमुक्तं पृथग् हि सर्वस्वाम्यं वक्तुमेवोदिता श्रीः ।
अन्योन्यसम्बन्धविवक्षयैव ह्युपस्थत्वं मुक्तभूतानि यानि ।
अशेषतस्तानि रथस्य यद्वदाणिं रथ्यं संश्रितं सर्वदैव ।
एवं हरिं संश्रितान्यब्जजेशपूर्वाण्यपीत्येष वेदार्थसारः ।
इह ब्रवीत्वन्यथा योऽभिपश्येत् कुर्याद्वा तद्यो यथावच्च पश्येत् ।
शेषं ज्ञानं स ब्रवीत्वस्मदर्थे चकार यो विष्णुरेतत् स वा नः ।। ६, ६ ।।

**ऋग्भाष्यटीका– तिस्रो द्यावः** । इह तिस्रो द्याव इति अनूद्य व्याचष्टे । तिस्र इति । प्रत्यक्षानुमानागमजन्यं प्रमात्रयम् । द्युत्यर्थस्य दीव्यतेर्भावे रूपमेतत् । द्वावुपस्थावित्यनूद्याभिधेयमाह । द्वाविति । विराषाडित्यस्याभिधेयं निमित्तं चाह ।। श्रीरिति ।। यमशब्दस्य सनिमित्तमभिधेयमाह ।। विश्वस्येति ।। अस्य पदस्य पूर्वत्रापि सम्बन्धः । यच्छतेः पचाद्यच् । पूर्वार्धपदानां सङ्क्षेपतो घटनां सूचयति ।। अस्येति ।। गदितं सर्वं द्युत्रयाश्रयत्वादिकं सदैवास्य भगवतः ।

**मन्त्रार्थमञ्जरी– तिस्रः** । **द्यावः** प्रत्यक्षानुमानागमजन्याः प्रमाः, द्युत्यर्थादीव्यतेः भावे (ड्यो) ड्यप्रत्यये 'द्यौः द्युः' इति रूपसिद्धेः । **यमस्य** यच्छति नियमयति विश्वमिति यच्छतेः पचाद्यच्, तस्य विश्वनियन्तुः । **सवितुः** । '**उपस्था** (उपस्थाः) समीपे वर्तिन्यः' इत्यावृत्तिविपरिणामाभ्यां योज्यम् । तथा द्वौ जडाजडवर्गौ । **उपस्था** उपस्थौ, समीपस्थौ एव **भुवने** भुवनविषये । **एका** अद्वितीया । **विराषाट्** श्रीः । यमस्य सवितुः उपस्था द्युत्रयादेः सवित्रुपस्थत्वम् 'सवितृनियम्यत्वं सवितृनियामकत्वं च' इत्येवं सम्बन्धाभिप्रायेणोपस्थितत्वोक्तिः इति ज्ञेयम् । न केवलमजडपदोक्तसंसारिणामाश्रयः, किं तु रथ्यम्, **आणिम् न** रथसम्बन्धिवस्तुजातं रथकीलमाश्रित्य यथास्ति । **एवम् अमृता** अमृतानि, अब्जजेशपूर्वाण्यशेषमुक्तभूतानि । **अधि**

**तस्थुः** आश्रितानि । **सवितारम्** हरिम् इति प्रकरणाल्लभ्यते । 'उक्तं सर्वं मिथ्या किं स्यात् ?' इत्यत उक्तम् 'इह' इत्यादि यः उ, य एव । तत्, प्रागुक्तं हरेः सर्वाश्रयत्वं प्रमेयम् । चिकेतत्, 'कित ज्ञाने' इत्यतो लेट्, अडागमः, छान्दसं द्विर्वचनम्, अभ्यासस्य चुत्वम्, **अभिपश्येत्** कुर्याद्वा । **अन्यथा** इति शेषः सः इह मम पुरतः । **ब्रवीतु** बाधकाभावादुक्तं न मृषा इति भावः । यद्वा तत् सवितुः स्वरूपम्, मयैतावज्ज्ञातम् । **यः उ** यस्तु । यथावदतिशयेन **चिकेतत्** अभिपश्येत् । सः **इह अस्मासु** अस्मदर्थे । अस्मदविज्ञातं तत्स्वरूपम् ब्रवीतु । यद्वा **यः** उ य एव, विष्णुः । **तत्** एतद्विश्वम् । **चिकेतत्** चकार । **सः इह** नः प्रति । स्वस्वरूपम् ब्रवीतु । इत्यर्थः ॥ ६ ॥

तदयमर्थः । तिस्रो द्यावो यमस्य सवितुरुपस्थाः समीपवर्तिन्यः । तथा द्वौ जडाजडवर्गावुपस्थौ । एवं भुवने विषये विराषाडेकाऽद्वितीया तस्योपस्थेति । ननु सर्वं विश्वं जडाजडवर्गद्वयान्तर्भूतं तत्किमर्थं पृथक् प्रमाग्रहणमित्यत आह ॥ जडेति ॥ जडाजडशब्दाभ्यां हि यत्केवलं जडं यच्च केवलं चैतन्यं तल्लभ्यते । न तूभयसमाहारात्मकम् । तथाविधं च मानं प्रमात्रयम् अतः पृथगुक्तम् । न च जडभागो जडशब्देन चैतन्यं चाजडशब्देन ग्रहीष्यत इति वाच्यम् । संसारे चैतन्यस्य मनोवृत्तेश्च संवलनेनैव प्रवृत्त्या पृथकरणायोगात् । तथात्वं चान्यत्रोदाहृतप्रमाणसिद्धमिति हिशब्दः । तर्हि केवलचैतन्यरूपा श्रीर्न पृथग्वक्तव्येत्यत आह ॥ सर्वेति ॥ पृथगिति वर्तते सत्यं सामान्यतो लब्धापि श्रीः सर्वस्वाम्यं वक्तुं पृथगुदिता । तच्च सवितुरुत्कर्षायोपयोक्ष्यते । ननु च द्युत्रयादिकस्य समीपस्थत्वोक्त्या सवितुः का स्तुतिः कृता स्यादित्यत आह ॥ अन्योन्येति ॥ अन्योन्यसम्बन्धो नियम्यनियामकभावादिरिह विवक्षितः । तृतीयपादं व्याख्याति ॥ मुक्तेति ॥ न केवलं संसारिणामाश्रयो हरिः किन्नाम रथ्यं रथसम्बन्धि वस्तुजातं रथस्याणिं न यद्वत्सर्वदैव संश्रितम् एवममृतानि मुक्तभूतानि यानि तान्यब्जजेशपूर्वाण्यशेषतोऽप्यधि तस्थुराश्रितानि वर्तन्ते । सवितारं हरिमिति प्रकरणाल्लभ्यते । एतत्प्रशंसामात्रं न पुनरत्र तात्पर्यमित्यद्वैतिनस्तन्निरासायाह । इत्येष इति । वेदार्थसारो वेदतात्पर्यगोचरोऽर्थः । कुत इत्याकाङ्क्षानिरासार्थत्वेन चतुर्थपादार्थमाह ॥ इहेति ॥ य उ य एव तत् । उक्तं प्रमेयं चिकेतत् पञ्चमो लकारः । अभिपश्येदन्यथेति शेषः । स इह मम पुरतो ब्रवीतु । चिकेतदित्यस्यार्थान्तरं कुर्याद्वेति । अन्यथेत्यत्रापि सम्बध्यते । बाधकाभावादिति भावः । कालान्तरे विपरीतकरणा-

शङ्कानिरासाय कुर्याद्वित्युक्तम् । चतुर्थपादं प्रकारान्तरेण व्याचष्टे ।। तद्य इति । तत्सवितुः स्वरूपं ममैतावत् ज्ञातम् । य उ यस्तु । चिकेतत् यथावदेवातिशयेनेति यावत् । पश्येत् । स इह अस्मासु अस्मदर्थे शेषं ज्ञानम् अस्मदविदितं तत्स्वरूपं ब्रवीतु । प्रकारान्तरेण व्याख्याति । चकारेति । य एव विष्णुस्तदेतद्विश्वं चिकेतच्चकार । स इह नः प्रति । स्वस्वरूपं ब्रवीत्विति वेति ।। ६,६ ।।

**स्कन्द–** **तिस्रो द्यावः** द्युशब्दोऽत्र दिवोऽवयवेषु देवस्थानेषु वर्तते । त्रीणि दिवोऽवयवभूतानि स्थानानि **सवितुः** । अथवा इत एव दर्शनात् दिवां बहुत्वं प्रतिपत्तव्यम् । तिस्रो दिवः सवितुः स्वभूताः । तासाम् **द्वौ** द्वे उपस्थे समीपे सवितुः । एका तु **यमस्य भुवने लोके विराषाट्** विराषाडिति विपूर्वस्य राजतर्दीप्त्यर्थस्येदं रूपम् । विविधं दीप्ताः । अथवा द्युसाहचर्यात् त्रयो लोका अत्र तिस्रो दिव उच्यन्ते । तासां द्वे समीपे द्यौरन्तरिक्षं च । एका तु पृथिवी यमस्य भुवने । अग्निरत्र यम उच्यते । 'यमो ह **जातो यमो जनित्वम्**' (ऋ.१,६६,४) इति यथा । तस्य स्वभूते पार्थिवे लोके । विराषाट् विविधं स्वदीप्त्या दीप्ता । किञ्च **आणिम् न रथ्यम्** चक्रस्य अक्षान्निर्गमननिरोधार्थः कील आणिरुच्यते । रथे भवो रथ्यः । यथा रथ्यमाणिं सर्वाणि स्याद्वान्याश्रितानि, एवं सवितारम् **अमृता 'अमृतम्'** (निघ.१,१२) इत्युदकनाम । रश्म्याहृता-न्युदकानि । अथवा अमृतशब्दो देववचनः । प्रथमाबहुवचनस्यायमाकारः । अमृता देवाः । **अधि तस्थुः** अधिष्ठितवन्तः । आश्रिता इत्यर्थः । इह लोके सभायां वा सः **ब्रवीतु यः** उ उकारः पदपूरणः । यः **तत् चिकेतत्** ।। ६ ।।

**वेङ्कटमाधव–** **तिस्रः द्यावः** सन्ति । तत्र द्वे **सवितुः** उपस्थे उत्सङ्गे भवतः । अथ अपरा **यमस्य** अग्नेः भुवने विराजते वैद्युतस्य । चक्रनिर्गमननिरोधार्थम् **आणिम्** रथाक्षान्ते निहितम् रथाङ्गानि हव अमृतानि कश्चन अधितिष्ठन्ति । यः **तत्** जानाति, सः इह तत् **ब्रवीतु** । अग्निना सवित्रा चोभयतः स्थिताभ्यामाणिभ्यामिव तिस्रो द्यावो ध्रियतेऽविनष्टा इति । यद्वा सर्वेषाममरणानि सवितरि तिष्टन्तीति । **'तत् सविता वोऽमृतत्वमासुवत्'** (ऋ.१,११०,३) इति मन्त्रः ।। ६ ।।

**मुद्गल–** **द्यावः** स्वर्गोपलक्षिताः प्रकाशमाना लोकाः तिस्रः त्रिसङ्ख्याकाः सन्ति । तत्र **द्वौ** लोकौ **सवितुः** सूर्यस्य **उपस्था** उपस्थाने वर्तेते । द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् ।

एका मध्यमा भूमिः अन्तरिक्षलोकः **यमस्य भुवने** पितृपतेर्गृहे **विराषाट्** विरान् गन्तॄन् सहते । प्रेताः पुरुषाः अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः । **अमृता** अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि **अधि तस्थुः** सवितारमधिगम्य स्थितानि । दृष्टान्तः । **रथ्यम् आणिम् न** रथाद्वहि रक्षच्छिद्रे प्रक्षिप्तं कीलविशेषः आणिरित्युच्यते । रथसम्बन्धिनमाणिमधिगम्य यथा रथस्तिष्ठति तद्वत् । **यः** तु मानत्र **तत्** सवितृरूपम् **चिकेतत्** जानाति स मानवः **इह** अस्मिन् विषये **ब्रवीतु** । केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः ।। ६ ।।

**सायण– द्यावः** स्वर्गोपलक्षिताः प्रकाशमाना लोकाः तिस्रः त्रिसंख्याकाः सन्ति । तत्र 'द्वौ लोकौ सवितुः सूर्यस्य' **'उपस्था** समीपस्थाने वर्तेते; द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् । **एका** मध्यमा भूमिरन्तरिक्षलोकः **यमस्य भुवने** पितृपतेर्गृहे **विराषाट्** विरान् गन्तॄन सहते । प्रेताः पुरुषा अन्तरिक्षमार्गेण यमलोके गच्छन्तीत्यर्थः । **अमृता** अमृतानि चन्द्रनक्षत्रादीनि ज्योतींषि जलानि वा **अधि तस्थुः** सवितारमधिगम्य स्थितानि । तत्र दृष्टान्तः । **रथ्यम् आणिं न** । रथाद्वहिः अक्षच्छिद्रे प्रक्षिप्तः कीलविशेषः आणिरित्युच्यते । रथसंबन्धिनम् आणिम् अधिगम्य यथा रथस्तिष्ठति तद्वत् । **'यः** तु मानवः **तत्** सवितृरूपं चिकेतत् जानाति स मानवः इह अस्मिन् विषये **ब्रवीतु** कथयतु । केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः ।। तिस्रः । 'तिसृभ्यो जसः' (पा.सू.६.१.१६६) इति विभक्ते रुदात्तस्वम् । द्वौ । संहितायामावादेशे 'लोपः शाकल्यस्य' इति वकारलोपः । उपस्था । 'आङ्याजधारां चोपसंख्यानम्' (पा.म.७.१.३९.१) इति सप्तम्या आङादेशः । 'आङोऽनुनासिकश्छन्दसि' (पा.स.६.१.१२६) इति प्रकृतिभावः । विराषाट् । 'वृञ् वरणे' । 'घमर्थे कविधानम्' (पा.सू.३.३.५८.४) इति कर्मणि कः । 'बहुलं छन्दसि' (पा.सू.७.१.१०३) इति इत्वम् । तथा सति वूर्यन्ते इति विरा इत्युक्तं भवति । तान् सहते इति विरापाट् । 'छन्दसि सहः' (पा.सू.३.२.६३) इति सहेर्ण्विः । ' सहेः साडः' (पा.सू.८.३.५६) इति षत्वम् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः । रथ्यम् । रथस्येदं रथ्यम् । 'रथाद्यत्' (पा.सू.४.३.१२१) इति यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । अमृता । 'शे छन्दसि बहुलम्' इति शेर्लोपः । चिकेतत् । 'कित ज्ञाने' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । जुहोत्यादित्वात् श्लुः । लघूपधगुणः । 'अनुदात्ते च' (पा.सू.६.१.१९०) इति अभ्यस्तस्याद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः ।। ६ ।।

**सिद्धाञ्जनम्– तिस्रः द्यावः** स्वर्गोपलक्षिताः नित्यप्रकाशाः लोकास्त्रयः सन्ति । तत्र **द्वौ** द्युलोकौ **सवितुः** प्रेरकस्य देवस्य **उपस्था** उपस्थौ समीपस्थितौ भवतः । **एका** तृतीया शिष्टा द्यौः, अद्वितीया वा **यमस्य** विश्वनियन्तुः सूर्यस्य **भुवने** लोके विराषाट् भवति । द्वे द्यावौ सूर्यस्य सन्निहिते, एका तु सूर्यभुवन एव भवति । सा च 'विराषाट्' उक्ता । विरान् गन्तॄन् सहते, प्रेताः पुरुषाः अन्तरिक्षमार्गेण गच्छन्ति पितृपतेर्यमस्य लोकमिति व्याचष्टे सायणः । विरशब्दस्य कापि प्रक्रिया च दत्ता । वेदे सकृदेव प्रयुक्तोऽयं शब्दः । संदिग्धा प्रक्रिया, संदिग्ध एव शब्दार्थः । वीरशब्दस्यैव विर इति ह्रस्व इकारः स्याद्वेति ऊहः । इदं तु निःसंशयं वक्तुं शक्यम्– अत्र यमस्य भुवने तिसृणामेका द्यौरेव स्थिता । तिस्रः पृथिव्य इव तिस्रो द्यावः वेदे प्रसिद्धाः । ताश्च स्वर्लोकीयाः । तत्र द्युलोकौ सवितुः सामीप्यमेव भजेते, एकस्तु सवितुः सर्वनियन्तुर्भुवन एव तदात्मतया वर्तते । वीरैरेव पुण्यपुरुषस्तत्र गन्तुं शक्यम्, ते च न निवर्तन्ते तत्र गत्वा । अन्यद् द्युलोकद्वयं सवितुः समीपवर्त्येव, न तदात्मकतां भजते । एकत्रैव सायुज्यं, अन्यत्र द्वयोः सामीप्यमात्रम् । विरान् गन्तॄन् सहत इति सायणोक्त्यनुसारतः, वीरान् यजनेन साधनेन निःशेषार्पणशूरान् सहत इति वा प्रोच्यताम् । तिस्रो द्याव इत्यत्र अन्तरिक्षलोक एका द्यौरिति सायणीयम् प्रसिद्धा द्योः पृथिवी च द्वे द्यावौ, सूर्येण प्रकाशितत्वात् धुशब्दव्यवहार्यौ भवतः, सायणानुसारतः । कथं अन्तरिक्षं सूर्यप्रकाशवर्जितं स्यात् ? अथ च पृथिवीनाम्नी द्यौः सूर्यस्य समीपवर्तिनो चेत्, अन्तरिक्षं समीपतरवर्ति प्रकाशितं च स्यात् । चिन्त्यतामिदं चिन्तकैः । यमः सवितैवेत्यभ्युपगतं चेत् कष्टं शिथिलितं भवति, अर्थश्च ऋजुः । रहस्य-गर्भितयमृगिति उत्तरार्धेन स्पष्टं भवति । **अमृताः** मृतिरहिताः देवाः, सवितारं **अधि** अधिगम्य तस्थुः स्थिताः । तत्र दृष्टान्तः– **रथ्यम् आणिं न** रथसंबन्धिनं 'आणिं' कीलविशेषं अक्षच्छिद्रे प्रक्षिप्तं आश्रित्य यथा रथस्तिष्ठति तद्वत्, सर्वे देवाः सवितारमाश्रित्यावतिष्ठन्ते । चरेषु सर्वेषु सवितुः स्थिरत्वं लक्षयति दृष्टान्तः । **यः** उ यश्च **तत्** सवितृरूपं **चिकेतत्** जानाति, सः इह अस्मिन् विषये रहस्यं **ब्रवीतु** भणतु, दुरधिगममिदं रहस्यमिति भावः ।। रथ्यम्- रथस्येदं, यत् । चिकेतत्-कित ज्ञाने, लेट् ।। ६ ।।

।। इति **प्रथमाष्टके** तृतीयाध्याये **षष्ठो वर्गः** ।।

## ऋक्संहिता पदपाठसहिता

वि सुपर्णो अन्तरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ।। ७ ।।

वि । सुऽपर्णः । अन्तरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः । सुऽनीथः । क्व । इदानीम् । सूर्यः । कः । चिकेत । कतमाम् । द्याम् । रश्मिः । अस्य । आ ततान ।।

## ऋग्भाष्यम्

गम्भीरवेगो भगवान्वा सुपर्णः परानन्दादन्तरिक्षाण्यपश्यत् ।
असौ रतिः शुभनीतिश्च विष्णुरित्यपश्यद्दुर्लभत्वात्क एव ।
पश्यन् रवे रश्मिगणानपीह सर्वव्याप्तानपि विष्णोर्न रश्मीन् ।
लोकः पश्येदिति कुत्राततानेत्याक्षिप्यते व्यक्तिमपेक्ष्य रश्मेः ।। ७ ।।

**ऋग्भाष्यटीका– विसुपर्णः** । गम्भीर । परानन्दात्कारणात् सुपर्णः सु अतिशयेन परः ण आनन्दोऽस्येति । **गभीरवेपाः** । वेपःशब्दो वेगवाची गम्भीरवेगः । असौ प्राणे रतिरस्य इति **असुरः** । **सुनीथः** नीथो नीतिः । शुभनीतिश्च । सविता भगवान्विष्णुरन्तरिक्षाणि स्वान्त-(रीक्ष्याणि)रिक्षाणि । ईक्ष दर्शने कर्मण्यकारो ह्रस्वता च । **व्यख्यत्** अपश्यत् । उत्तरार्ध-तात्पर्यमाह ।। इतीति ।। इत्येवंभूतं परमानन्दमगाधवेगम् । प्राणे रममाणं फलाव्यभिचारिनीतिम् अन्तर्भावितप्रपञ्चं सर्वज्ञं क एवापश्यत् न कोऽपि । कथम् । दुर्लभत्वादाक्षेपः ।

ततश्चैवं योजना । एवम्भूतः सूर्य इदानीं क्व तिष्ठति । अस्य रश्मिः कतमां द्यां कतम-स्मिन्नन्तरिक्षप्रदेशे आततान व्याप्तः । इति कश्चिकेत को ददर्श । न कोऽपीति । यथान्यत्र देवतान्तरपरत्वमविहायैव भगवत्परत्वं व्याख्यायते न तथात्र । किं तु केवलं भगवत्परत्व-मेवेत्याशयवानाह । पश्यन्निति । इह गगने रवेः रश्मिगणानपि पश्यन्नपि लोकः सर्वव्याप्ता-न्विष्णोरश्मीस्तं च न पश्येदित्यभिप्रायेणैव कुत्राततानेत्याद्याक्षिप्यते ।

एतदुक्तं भवति । सूर्यस्तदीया रश्मयश्च गगनाधोभागव्यापिनो लोके न दृश्यन्त एव । अतो न तदपेक्षयाऽयमाक्षेपो युक्तः । किन्तु व्याप्तत्वेऽपि भगवांस्तदीया रश्मयश्च प्राकृतैर्न दृश्यन्त इति तद्विषय एवेति । नन्वयमाक्षेप इति कथमुच्यते । आक्षेपस्य विपर्ययेऽपर्यवसानात् । केदानीं

सूर्यो न क्वापि । कतमां द्यां रश्मिरस्याततान न कतमामपीत्यापत्तेरित्यत आह ।। व्यक्तिमिति । आक्षिप्यत इति सम्बन्धः । यथा चैतत्तथैवास्माभिर्योजितमिति ।। ७ ।।

**मन्त्रार्थमञ्जरी– सुपर्णः** स्वतिशयेन पर उत्कृष्टो णः सुखं यस्य सः । **गभीरवेपाः**, गम्भीरवेगः, वेपशब्दो वेगपर्यायः । **असुरः** असौ प्राणे (रः) रतिरस्येत्यसुरः, रमेर्भावे डः । **सुनीथः** नीथो नीतिः, शोभननीतिः । च सविता भगवान्विष्णुः । **अन्तरिक्षाणि** स्वान्तरीक्ष्याणि, 'ईक्ष दर्शने' कर्मण्यकारो ह्रस्वता च । **वि अख्यत्** अपश्यत् । एवं भूतः सूर्यः इदानीम् । क, कुत्र । तिष्ठति अस्य रश्मि । **कतमाम् द्याम्** कतमस्मिन्नन्तरिक्षे प्रदेशे । **आ ततान,** व्याप्तः । इति **कः चिकेत,** को ददर्श ? न कोऽपि । सूर्यस्य तद्रश्मेश्च सर्वैः प्रत्यक्षतोऽवगमेऽपीश्वरतद्रश्मीनपेक्ष्य 'क?' इत्याक्षेपः इति ज्ञेयम् ।। ७ ।।

**स्कन्द– सुपर्णः** सुपतनः सुगमनः सविता । अथवा सुपर्ण इति रश्मिनाम (तु.निघ.१,५) । सामर्थ्याच्यात्रान्तर्णीतमत्वर्थः । सुपर्णवान् रश्मिवान् । **अन्तरिक्षाणि** अन्तरिक्षावयवा अत्रान्तरिक्षशब्देनोच्यन्ते । बहून्येव वाऽन्तरिक्षाणि । अन्तरिक्षसाहचर्याद् वा त्रयोऽपि लोका अन्तरिक्षाण्युच्यन्ते । तानि वि **अख्यत्** विविधं प्रकाशितवान् । **गभीरवेपाः** गभीरं दुरवगाहम् । **वेषः** (निघ.२,१) इति कर्मनाम । गभीरकर्मा । **असुरः** प्रचावान् । प्रशस्यनामैतत् (तु.निघ.३,८) । प्रशस्य । **क इदानीम्** । अनयोरर्धर्चयोस्कवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहतव्यौ । इदानीमिति च रात्र्यभिप्रायमेतत् । यो दिवो अन्तरिक्षाणि व्यदयत् स यत्र इदानीं रात्रौ सूर्यः सर्ता गन्ता सविता । क तम् **चिकेत** जानाति । यो जानाति स आचष्टामित्यर्थः । **कतमाम् द्याम्** दिवोऽवयवं द्युलोकमेव वा । लोकमात्रवचनो वा द्युशब्दः । कतमं लोकम् । **रश्मिः अस्य** स्वभूतः । **आ ततान** तनोति । तनोतिरत्र सामर्थ्यात् प्रकाशनार्थः । प्रकाशयति । अथवा द्यामिति द्वितीयानिर्देशात् कर्मप्रवचनीयप्रतिशब्दाध्याहारः । कतमां द्यां प्रति रश्मिरस्याततान आत्मानं विस्तारयति ।। ७ ।।

**वेङ्कटमाधव– वि अख्यत्** शोभनपतनः **अन्तरिक्षाणि** त्रीणि गम्भीरवेगः प्राज्ञः प्रशस्यः । सः **इदानीम्** सविता सुवीर्यः क भवति रात्रौ । **कः** चैनम् जानाति । **कतमाम्** च **द्याम्** **अस्य रश्मिः आ ततान इति** रात्रौ पृच्छति ।। ७ ।।

**मुद्गल– सुपर्णः** शोभनपतनः सूर्यरश्मिः **अन्तरिक्षाणि** अन्तरिक्षोपलक्षितानि लोकत्रय-स्थानानि **वि अख्यत्** विशेषेण ख्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः । **गभीरवेषाः** गभीरकम्पनः । रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः । **असुरः** सर्वेषां प्राणदः । **सुनीथः** सुनयनः शोभनप्रापणः । मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः **सूर्यः इदानीम्** रात्रौ **क्व** कुत्र वर्तते । तद्रहस्यम् कः **चिकेत** को जानाति । न कोऽपीत्यर्थः । अस्य सूर्यस्य रश्मिः कतमाम् द्याम् आ ततान कं द्युलोकं रात्रौ व्याप्तवान् । एतदपि को जनानाति ।। ७ ।।

**सायण– सुपर्णः** शोभनपतनः सूर्यस्य रश्मिः । **'सुपर्णा'** इति पञ्चदश रश्मिनामानि' (नि.१.५.१५) इति तन्नामसु पठितत्वात् । **अन्तरिक्षाणि** अन्तरिक्षोपलक्षितानि लोकत्रय-स्थानानि **वि अख्यत्** विशेषेण ख्यापितवान् प्रकाशितवान् । कीदृशो रश्मिः । **गभीरवेषाः** गम्भीरकम्पनः । रश्मेः प्रकम्पनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः । **'असुरः** सर्वेषां प्राणदः । तथा चान्यत्र आम्नायते– 'सर्वेषां भूतानां प्राणानादायोदेति' (ते.आ.१.१४.१) इति । **सुनीथः** सुनयनः शोभनप्रापणः । मार्गप्रकाशनेन अभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः **सूर्यः इदानीं** रात्रौ **क्व** कुत्र वर्तते । तदेतद्रहस्यं **कश्चिकेत** को जानाति । न कोऽपीत्यर्थः । **अस्य सूर्यस्य रश्मिः कतमां द्याम् आ ततान** कं द्युलोकं रात्री व्याप्तवान् । एतदपि को जानाति । सुपर्णः । 'नसुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **गभीरवेपाः** । 'टुवेपृ कम्पने' । असुन् । गभीरं वेपो यस्य । पूर्वपदप्रकृतिस्वरत्वम् । असुरः । असु क्षेपणे' । अस्यति शत्रून् इत्यसुरः । 'असेरुरन्' (उ.सू.१.४२) । नित्त्वादाद्युदात्तत्वम् । यद्वा । असून् प्राणान् राति ददातीत्यमरः । 'आतोऽ-नुपसर्गे कः' इति कप्रत्ययः । सुनीथः । 'णी प्रापणे' । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ.सू. २.१५९) इति क्थन् । प्रादिसमासे थाथादिना उत्तरपदान्तोदात्तत्वम् । इदानीम् । इदंशब्दात् सप्तम्यर्थे 'दानीं च' (पा.सू.५.३.१८) इति दानीं प्रत्ययः । 'इदम इश्' इति इदंशब्दस्य इशादेशः । प्रत्ययाद्युदात्तत्वम् । सूर्यः । 'पू प्रेरणे' । सुवतीति सूर्यः । 'राजसूयसूर्य' इत्यादिना रुडागमसहितः क्यप्प्रत्ययो निपातितः । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वम् । चिकेन । 'कित ज्ञाने' । लिट् । कतमां किंजातीयाम् । 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा.सू. ५.३.९३) इति किंशब्दान् डतमच् । ङित्त्वान् टिलोपः । 'चितः' इत्यन्तोदात्तत्वम् ।।७।।

**सिद्धाञ्जनम्– सुपर्णः** शोभनपतनः सूर्यरश्मिः **अन्तरिक्षाणि** ऊर्ध्वलोकस्थानानि **व्यख्यत्** प्रकाशितवान् । कीदृशः? **गभीरवेपाः** गभीरं गम्भीरं दुरवगाहं वेपः दृष्टिवैचक्षण्यं यस्य सः, दुरवगाहप्रज्ञाचक्षुरयं सुपर्णः, न लौकिकः साधारणो रविरश्मिः । अत्र सायणस्तु वेपः कम्पनमिति मन्यते, अन्यत्र 'गम्भीरवेपसः गम्भीरकर्माणः' (१०.६२.५) इत्याह । 'वेपिष्ठो अङ्गिरसां.... विप्रः' (६.११.३) 'अतिशयेन स्तुतेः प्रेरयिता मेधावी' इति व्याख्यातम् । अन्यत्र पुनः वेपः कर्मनाम इति बहुधा सायणीयम् । पुनः कीदृशः? **असुरः** महान् बलिष्ठः, **सुनीथः** शोभन-प्रापणः, प्रकाशदानेन गन्तव्यं स्थानं सुखं प्रापयतीत्यर्थः । तथाविधरश्मिसंपन्नः सूर्यः इदानीम् क अधुना कुत्र स्थितः? **कः चिकेत** को जानाति? **अस्य** सूर्यस्य **रश्मिः** उक्तलक्षणः **कतमाम्** किंजातीयां **द्याम्** दिव्यभुवं **आततान** व्याप्तवान्, इदमपि दिव्यं रहस्यं दुर्ज्ञेयं मनुष्यस्येत्यर्थः । असुर-असु क्षेपणे, अस्यति शत्रूनित्यमरः, उरन् । सुनीथः-णीञ् प्रापणे, कथन् प्रत्ययः । चिकेत-कित ज्ञाने, लिट् । कतमाम्-किंशब्दात् डतमच् जातिपरिप्रश्ने ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अष्टौ व्यंख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिन्धून् ।**
**हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ।। ८ ।।**

**अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिन्धून् ।**
**हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ।।**

## ऋग्भाष्यम्

**ऊर्ध्वं मध्यमधरं चेति धन्वत्रयं तमः सुखलीनं यतस्तत् ।**
**युक्तं भवेत्तद्गतैः सर्वदैव दृढश्लेषाद्योजनं स्यात्तमो हि ।**
**अष्टौ दिशः प्रकृतेर्वा पृथिव्या महदाद्याः सिंधवस्तान्यपश्यत् ।**
**हिरण्याक्षो नरसिंहात्मना स वार्याणि यद्वरणीयं सुवित्तम् ।। ८ ।।**

**ऋग्भाष्यटीका– अष्टौ** । अत्र त्रीधन्वेति व्याख्याति ।। ऊर्ध्वमिति ।। ऊर्ध्वं मध्यमधरं चेति त्रिविधं तमो धन्वत्रयम् । धन्वत्वं कथमित्यत आह ।। सुखेति ।। तत्तमो यतः सुखलीनं सुखरहितं तस्माद्धन्वशब्दम् । निरुदको हि देशो धन्वशब्देनोच्यते । तेन सुखाभावो लक्ष्यते ।

योजनशब्दस्याभिधेयं निर्वचनं चाह ।। युक्तमिति ।। तम एव योजनं स्यात् कुतः दृढश्लेषात् 'कृत्यल्युटो बहुलम्' इति वचनाद्युज्यते श्लिष्यत इति योजनम् । प्रकर्षगतिविज्ञानादृढेत्युक्तम् । तस्यैव विवरणं युक्तं भवेत्तद्वतैः सर्वदैव हीति । पृथिव्या अष्टौ ककुभ इत्येतत् द्वेधा व्याचष्टे ।। अष्टाविति ।। पृथिव्याः प्रसिद्धाया अष्टौ ककुभो दिशः पूर्वाद्याः तदवच्छिन्नप्रदेशा इत्येकोऽर्थः । यद्वा पृथुत्वात्पृथिव्याः प्रकृतेः प्रदेशा अष्टौ ककुभो दिश इत्यपरः । सप्तसिन्धवः समुद्रा-स्तावत्प्रसिद्धाः अपरान् आह ।। महदाद्या इति ।। महदहंकारभूतानि स्यन्दनात्कार्यप्रवाहत्वा-त्सिन्धवः । पूर्वार्धवाक्यार्थमाह ।। तानीति ।। तानि ककुभादीनि वस्तूनि । हिरण्याक्षत्वं हरौ घटयति ।। हिरण्येति ।। वार्याणीत्येतद्व्याचष्टे ।। वार्याणीति ।। यद्यस्मात्सुवित्तं शोभनानि वित्तानि वरणीयं वरणीयानि तस्माद्वार्याणि । 'ऋहलोर्ण्यत्' । अनेन रत्नशब्दो वित्तार्थ इत्युक्तं भवति ।

ततश्चायमर्थः । यः पृथिव्या अष्टौ ककुभस्त्रीणि योजनानि धन्वानि सप्तसिन्धूंश्च **व्यख्यत्** अपश्यत् । स हिरण्याक्षः । सविता देव **आगात्** अस्मानागच्छत् । कथम् । **दाशुषे** दातुं **वार्याणि** रत्नानि दधत् । **वार्याणि** रत्नानि **दाशुषे दधत्** ददिति वेति ।। ८ ।।

**मन्त्रार्थमञ्जरी– पृथिव्याः** प्रसिद्धपृथिव्याः । **अष्टौ** । **ककुभः** प्राच्याद्याः तदवच्छिन्नाः प्रदेशाः । इत्येकोऽर्थः । पृथुत्वात् **पृथिव्याः** प्रकृतेः । **अष्टौ** । **ककुभः** दिशः, प्रदेशाः महदाद्याः इत्यपरः, तान् । **त्री धन्व** त्रीणि धन्वानि, ऊर्ध्वमध्याधरभेदेन त्रिविधानि धन्वानि सुखरहितानि धन्वन् शब्दस्य निरुदकदेशवाचितया तेन सुखराहित्यलक्षणात् । युज्यते श्लिष्यते स्वगतैरिति योजनं तमः । **योजना** योजनानि तमांसि । **सप्त सिन्धून्** च सप्त समुद्रांश्च । **वि अख्यत्** अपश्यत् । चक्षिङः ख्यात्रादेशो लुङ् । सः हिरण्याक्षः । नृसिंहरूपी सविता देवः । **आ अगात्**, अस्मानागच्छतु, लोडर्थे लुङ् । कथम् ? **दाशुषे** यजमानाय । दातुम् **वार्याणि** वरणीयानि । **रत्ना** रत्नानि । **दधत्** 'ददत्' इति वा ।। ८ ।।

**स्कन्द– अष्टौ** चतस्रो दिशश्चतस्रोऽवान्तरदिशः ता एता **अष्टौ वि अख्यत् ककुभः** दिङ्नामैतत् (तु.निघ.१,६) । दिशः **पृथिव्याः** सम्बन्धिनोः । न च केवलाः । किन्तर्हि । **त्री धन्व** त्रीणि च धन्वानि । 'धन्व' (निघ.१,३) इत्यन्तरिक्षनाम । अत एव च दर्शना-दन्तरिक्षाणां त्रित्वं प्रतिपत्तव्यम् । तदवयवेषु वा आद्यमध्यान्तेषु धन्वशब्दो वर्तते । साहचर्यात्

वा त्रयो लोकास्त्रीणि धन्वानि उच्यन्ते । **योजना** युज्यन्त एभिः मनुष्याः तत्फलैरिति योजनानि कर्माणि । तानि च । सप्त सिन्धून् नदीनामैतत् (तु.निघ.१,१३) । शोणाद्यान् महतः प्रधानभूतान् नदान् । अथवा सप्तसङ्ख्यायोगात् सिन्धवोऽत्र रश्मय उच्यन्ते । तृतीयार्थे द्वितीया । सप्तभिः व्यख्यदित्यर्थः । परोऽर्धर्चो भिन्नमेव वाक्यम् । यत्तच्छब्दावध्याहृत्य एकवाक्यता योज्या । यो व्यरयत् ककुभः सः **हिरण्याक्षः** हिरण्मये एव हिरण्मयसदृशे वा अक्षिणी यस्य स हिरण्याक्षः । सः **सविता देव आ अगात्** आगतः । उदित इत्यर्थः । **दधत्** ददत् **रत्ना** धनानि, **दाशुषे** यजमानाय **वार्याणि** करणीयानि उत्कृष्टानि ।। ८ ।।

**वेङ्कटमाधव– अष्टौ दिशः वि अख्यत्** अन्तरिक्षसम्बन्धिनीः त्रीणि च अन्तरिक्षाणि कार्येष्वेवकाशप्रदानेन योजकानि **सप्त** च **सिन्धून्** हिरण्मयाक्षः **सविता देवः आ अगात्** प्रयच्छन् रत्नानि वाणीयानि यजमानाय ।। ८ ।।

**मुद्गल– पृथिव्याः** सम्बन्धिनीः **अष्टौ ककुभः** प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिष्टः इत्येवमष्टौ दिशः वि **अख्यत्** सविता प्रकाशितवान् । तथा **योजना** प्राणिनः स्वस्वभोगेन योजयितृन् धन्व अन्तरिक्षोपलक्षितान् **त्री** त्रिसङ्ख्याकान् पृथिव्यादिलोकान् **सप्त सिन्धून्** गङ्गादिनदीः सविता व्यख्यत् । **हिरण्याक्षः** हितरमणीयचक्षुर्युक्तः सविता देवः **आ अगात्** इहागच्छतु । किं कुर्वन् । **दाशुषे** हविर्दत्तवते यजमानाय **वार्याणि** वरुणीयानि **रत्ना** रत्नानि **दधत्** प्रयच्छन् ।। ८ ।।

**सायण– पृथिव्याः** सम्बन्धिनीः **अष्टौ ककुभः** प्राच्याद्याश्चतस्रो विदिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशः **व्यख्यत्** सविता प्रकाशितवान् । तथा **योजना** प्राणिनः स्वस्वभोगेन योजयितृन् धन्व अन्तरिक्षोपलक्षितान् त्री त्रिसंख्याकान् पृथिव्यादिलोकान् **सप्त सिन्धून्** गङ्गादिनदीः समुद्रान्वा सविता व्यख्यत् । **हिरण्याक्षः** । हितरमणीयचक्षुयुक्तो हिरण्यमयाक्षो वा **सविता देवः आगात्** इहागच्छतु । किं कुर्वन् । **दाशुषे** हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि धत् प्रयच्छन् । **अख्यत्** । ख्यातेर्लुङि अस्यतिवक्ति इत्यादिना च्लेः अङादेशः । **त्री** । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । धन्व । 'रिवि रवि धवि गत्यर्थाः' । 'इदितो नुम् धातोः' इति नुम् । अस्मात् 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् । 'सुपां सुलुक्' इति विभक्तेर्लुक् । नलोपः । प्रत्ययस्य नित्त्वादाद्युदात्तत्वम् । योजना । योजयन्ति

प्राणिन उपभोगेनेति योजनानि । नन्द्यादिलक्षणो ल्युः । 'णेरनिटि' इति णिलोपः । पूर्ववत् शेर्लोपः । **हिरण्याक्षः** । हिरण्मयान्यक्षीणि यस्यासौ हिरण्याक्षः । 'बहुव्रीहौ सक्थ्यक्ष्णोः' (पा.सू.५.४.११३) इति समासान्तः षच्प्रत्ययः । अगात् । एतेर्लुङि 'इणो गा लुङि' (पा.सू.२.४.४५) इति गादेशः । 'गातिस्था' इति सिचो लुक् । **दधत्** । शतरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **दाशुषे** । 'दाश्वान्साह्वान्' इत्यादिना क्वसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः संप्रसारणम्' इति सम्प्रसारणम् । परपूर्वत्वम् । 'शासिवसिघसीनां च' इति षत्वम् । वार्याणि । वृङ् सम्भक्तौ । ऋहलोर्ण्यत् । ईडवन्द इत्यादिनाद्युदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्– अष्टौ ककुभः** दिशो विदिशः सर्वाश्च व्यख्यत् प्रकाशितवान् सविता । तथा **पृथिव्याः** पृथिवीसम्बन्धीनि, **त्री** त्रीणि **योजना** योजयितृणि **धन्व** मरुप्रायाणि निर्जलानि स्वतस्तेजःशक्तिवाहिनीभिरद्भिर्विरहितानि क्षेत्राणि लोकनयसम्बन्धीनि अन्नप्राणमनस्तत्त्वप्रधानानि व्यख्यत् । ईदृशे स्वभावतो नीरसे पार्थिवे क्षेत्रे, दिव्यशक्तिवाहिनीनां क्षरणाय सप्त सिन्धूनपि प्रकाशितवानित्याह, सप्त सिन्धून् व्यख्यत् । **हिरण्याक्षः** हिरण्यज्योतिर्विसारिचक्षुर्युक्तः **देवः सविता आगात्** आगतवान् । किं कुर्वन् ? **दाशुषे** दत्तवते यजमानाय **वार्याणि** वरणीयानि रत्नानि रमणीयानि रतिप्रदानि दिव्यानि **दधत्** दधानः प्रयच्छन्नित्यर्थः । अत्र पृथिव्या अष्टौ ककुभः व्यख्यत्, योजना योजयितृन् प्राणिनः व्यस्यत्, त्री धन्व अन्तरिक्षोपलक्षितान् त्रीन् लोकान् व्यख्यत्, तथा सप्त सिन्धून् गङ्गादिनदीः व्यख्यत् इति सायणव्याख्या नेहाङ्गीक्रियते, सर्वथा न युक्ता ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अन्तरीयते ।**
**अपामीवां बाधते वेति सूर्यमभिकृष्णेन रजसा द्यामृणोति ।। ९ ।।**

हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अन्तः । ईयते । अप । अमीवाम् । बाधते । वेति । सूर्यम् । अभि । कृष्णेन । रजसा । द्याम् । ऋणोति ।।

## ऋग्भाष्यम्

**चर्षणिभ्यो यत्प्रजाभ्यो विशिष्टो विचर्षणिः केशवः सूर्यमेति ।**
**ऋणोति सम्पूरयति ......... ......... ।। ९ ।।**

**ऋग्भाष्यटीका– हिरण्यपाणिः** ।। विविधाश्चर्षणयो यस्यासौ विचर्षणिरिति सिद्धेऽर्थान्तरमाह ।। चर्षणिभ्य इति । कुगतिप्रादय इति समासः । सूर्यं वेतीत्यस्यार्थमाह ।। सूर्यमिति ।। वीगत्यादौ । धातूनामनेकार्थत्वादृणोतीत्येतत्सम्पूरयतीति व्याख्यातम् । यद्वा प्रापणार्थत्वाद्धातोः सम्पूरयतीति तात्पर्यार्थकथनम् ।

तदयमर्थः । वक्ष्यमाणप्रकारेण हिरण्यपाणिर्विचर्षणिः सविता । **उभे द्यावापृथिवी** उभयोर्द्यावापृथिव्योः **अन्तः** मध्ये **ईयते** प्रतीयते । अन्तरान्तरेण योग इवान्तर्योगेऽपि द्वितीयोपसंख्यातव्या । किञ्च । **अमीवां** प्राणिनां पापमपबाधते । सूर्यं प्रसिद्धं वेति । कृष्णेन रजसा तमसा द्यामंतरिक्षमभिऋणोतीति ।। ९ ।।

**मन्त्रार्थमञ्जरी– हिरण्यपाणिः** हिरण्यात्मकं पात्रं पाणौ यस्य स हिरण्यपाणिः रत्नादिना सम्पूर्णं हिरण्यपात्रं पाणौ दधानो वर्तत इति हिरण्यपाणिरुच्यते । हिरण्यवर्णदेहत्वाद्वा हिरण्यवर्णौ पाणी यस्येति हिरण्यपाणिः । **विचर्षणिः** वि विविधाश्चर्षणयः प्रजा यस्य स विचर्षणिरिति वा, चर्षणिभ्यो विशिष्टो विचर्षणिरिति वा, 'कुगतिप्रादयः' इति प्रादिसमासः । **सविता** । **उभे द्यावापृथिवी** उभयोर्द्यावापृथिव्योः । **अन्तः** मध्ये । **ईयते** प्रतीयते, अन्तरान्तरेण योग इवान्तर्योगेऽपि वा द्वितीया वक्तव्या । किं च **अमीवाम्** प्राणिनां पापम् । **अप बाधते** । **सूर्यम्** प्रसिद्धं सूर्यम् । **वेति** 'वी गतिव्याप्तिप्रजनकान्त्य सनखादनेषु' इति धातोः एति इत्यर्थः । **कृष्णेन रजसा**, शार्वरेण तमसा । **द्याम्** अन्तरिक्षम् । **अभि ऋणोति** धातूनामनेकार्थत्वात् सम्पूरयति इत्यर्थः ।। ९ ।।

**स्कन्द– हिरण्यपाणिः** हिरण्मयौ पाणी यस्य स हिरण्यपाणिः । अत्र च शाङ्खायना इतिहासब्राह्मणमधीयते– 'अथ यत्र ह तद्देवा यज्ञमतन्वत । तत्सवित्रे प्राशिनं परिजह्रुः । तस्य पाणी प्रचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुः । तस्मात् हिरण्यपाणिरिति स्तुतः' (शां.ब्रा. ६,१३) इति । स हिरण्यपाणिः **सविता** विचर्षणिः कृताकृतस्य विद्रष्टा **उभे द्यावापृथिवी**

**अन्तः** अधिकरणश्रुतेश्च योग्यक्रियाध्याहारः । मध्येऽवस्थितः **ईयते** गच्छति । मध्ये स्थितः उभे अपि द्यावापृथिव्यौ ज्योतिषा व्याप्नोतीत्यर्थः । किञ्च **अप अमीवाम् बाधते** अमीवा हिंसिता शत्रुर्यजमानस्य तमो वा प्रकाशस्य हिंसितृत्वात् । तम् अपबाधते । **वेति** वेतिर्गतिकर्मा (तु.निघ.२,१४) । अयं गच्छति च **सूर्यम्** प्रथमार्थे द्वितीया । सूर्यः सर्ता सविता । कं प्रति । सामर्थ्यादस्तपर्वतम्, अथवा सर्तव्यत्वात् सूर्यप्रतिसम्बन्धात् वा सूर्योऽस्तपर्वत इहोच्यते, तं प्रति । अस्तञ्च गच्छतीत्यर्थः । ततश्च उत्तरकालम् **कृष्णेन रजसा तमसा द्याम् अभि ऋणोति** ऋणोतिर्गतिकर्मा (तु.निघ.२,१४) । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अभिगमयति । व्यापयतीत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव–** हिरण्मयपाणिः **सविता** जगतः विद्रष्टा द्यावापृथिव्योः उभयोः मध्येन गच्छति । अप वाधते च रक्षः । सूर्यम् च प्राप्नोति । **कृष्णेन** तेजसा सूच्येव द्युलोकम् विध्यति ॥ ९ ॥

**मुद्गल– हिरण्यपाणिः** सुवर्णमयहस्तयुक्तः **विचर्षणिः** विविधदर्शनयुक्तः **सविता** देवः **उभे द्यावापृथिवी अन्तः** उभयोर्लोकयोर्मध्ये **ईयते** गच्छति । **अमीवाम्** रोगादिबाधाम् अप बाधते सम्यङ् निराकरोति । तथा **सूर्यम् वेति** गच्छति । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । **कृष्णेन** तमसः कर्षकेण निवर्तकेन **रजसा** तेजसा **द्याम्** आकाशम् **अभि ऋणोति** सर्वतो व्याप्नोति ॥ ९ ॥

**सायण– हिरण्यपाणिः** सुवर्णमयहस्तयुक्तः । यद्वा । यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् । **विचर्षणिः** विविधदर्शनयुक्तः । विचर्षणिः पश्यत्यर्थः । विचर्षणिः विश्वचर्षणिः' (नि.३.११.६) इति तन्नामसु पाठात् । **सविता देवः उभे द्यावापृथिवी अन्तः** उभयोलोकयोर्मध्ये **ईयते** गच्छति । **अमीवां** रोगादिबाधाम् **अप बाधते** सम्यक् निराकरोति । तथा **सूर्यं वेति** गच्छति । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । **कृष्णेन** तमसः कर्षकेण निवर्तकेन **रजसा** तेजसा **द्याम्** आकाशम् **अभि ऋणोति** सर्वतो व्याप्नोति । द्यावापृथिवी । दिवसश्च पृथिव्याम् (पा.सू.६.३.३०) इति चशब्दात् दिवशब्दस्य द्यावादेशः । देवताद्वन्द्वे च इत्युभयपदप्रकृतिस्वरत्वम् । नोत्तरपदेऽनुदात्तादौ (पा.सू.६.२.१४२) इति न निषेधः, अपृथिवीरुद्रपूषमन्थिषु' इति पर्युदस्तत्वात् । ईयते । ई गतौ । तिङ्ङतिङः

इति निघातः । बाधते । बाधते च वेति चेति समुच्चयार्थप्रतीतेः चशब्दस्याप्रयोगात् चादिलोपे विभाषा इति निघातप्रतिषेधः । वेति । 'वी गतिप्रजनकास्यशनखादनेषु । अदादित्वात् शपो लुक् । तिपः पित्वादनुदात्तत्वे धातुस्वरः । यद्यप्येषा । द्वितीया तथापि तिङः परत्वात् निधाताभावः । ऋगोति । ऋगु गतौ । तनादित्वात् उः । तनादिषु करोतेरेव गृगो नान्येषामिति आपिशलिमतेन गुणाभावः ।। ९ ।।

**सिद्धाञ्जनम्– हिरण्यपाणिः** सुवर्णमयहस्तः, विचर्षणिः विश्वस्य द्रष्टा सविता प्रेरको देवः उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः **अन्तः** मध्ये **ईयते** गच्छति । **अमीवाम्** आर्तिम् रोगादिम् **अपबाधते** निरस्यति । **सूर्यम् वेति** उत्तमं ज्योतिःस्थानं सूर्याख्यं प्राप्नोति । प्रथमं यजमानस्योद्धाराय उदितः सविता तस्मै लोकत्रयसंबन्धिनि स्थानत्रये प्रकाशं दत्त्वा तत्र सर्वां बाधां निराकृत्य ततः परं उत्तम पदं प्राप्नोति । तस्मान्नानुपपत्तिः 'सूर्यं वेति सविता' इत्युक्तौ । केन मार्गेण सविता गच्छति सूर्याख्यं द्युशब्दवाच्यं तदुत्तमं पदम् ? **कृष्णेन रजसा** कृष्णवर्णेन तमसा व्याप्तेन मध्यमस्थानेन अन्तरिक्षेण, अधस्तनलोकत्रयेण वा **द्याम्** परमं आकाशं उत्तमज्योतिः **अभ्यृणोति** अभितः प्राप्नोति । ईयते ईङ गतौ । वेति वी गतिव्याप्त्यादिषु । ऋणोति- ऋणु गतौ तनादिः । अमीवाम्- अम रोग इत्यस्मात् ईडागमः वन् प्रत्ययश्च ।। ९ ।।

**नीतिमञ्जरी–** देवतापि कृतं कर्म भुङ्क्ते इत्याह–

**शुभाशुभं कृतं कर्म भुञ्जते देवता अपि ।**
**सविता हेमहस्तोऽभूद्भगोऽन्धः पूषकोऽद्विजः ।। १५ ।।**

यत्कृतं कर्म शुभाशुभं वा देवा अपि भुञ्जते यदि तर्हि मनुष्याणां किमाश्चर्यम् । देवैर्भुक्तानि शुभाशुभानि कर्माणि तदाह– सविता देवो यज्ञे छिन्नहस्तः हेमहस्तोऽभूत् । हेममयो हस्ती यस्य स हेमहस्तः । भगो देवोऽन्धोऽभूत् । पूषकः पूषा अद्विजः अदन्तकोऽभूत् । तयोरशुभकर्मणः ।

तत्प्रदर्शनार्था इतिहासपूर्विका ऋक्–

**हिरण्यपाणिः सविता विचर्षणिरुभे द्यावा पृथिवी अन्तरीयते ।**
**अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ।** (ऋ०१.३५.९)

अत्राख्यानम् । देवकर्तृकत्वे यागे सविता ब्रह्मत्वेनावस्थितः । तदानीं कस्याञ्चिदिष्टौ अध्वर्यवः तस्मै सवित्रे ब्रह्मणे प्राशित्रेण कर्मपुरोडाशभागं दत्तवन्तः । तच्च प्राशित्रं हस्ते सवित्रा अमन्त्रेण गृहीतं सत् तदीयं पाणिं प्रचिच्छेद । ततः पाशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवन्तः । तद्भगाय दत्तवन्तः । तस्याक्षिणी निर्जघान । ईक्षणाभावाद्भगोऽन्धोऽभूत् । तत्पूष्णे दत्तवन्तः । तस्य दन्तलग्नाद् दन्तान्परोऽवाप । तस्मादाहुरदन्तकः पूषेति ।

तत्र कौषीतकिब्राह्मणम्- 'अथ यत्र ह तद्देवा यज्ञमतन्वत तत्सवित्रे प्राशित्रं परिजहुः तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुतः' इति । यथाह यास्कः । 'अन्धो भग इत्याहुरनुत्सृप्त' इति (नि०१२.१३) 'अदन्तकः पूषेति च ब्राह्मणम्' इति (नि०६.३१) । अतो देवैः शुभाशुभानि कर्माणि भुक्तानि इति दर्शितम् ।

हिरण्यस्तूपः सवितारं जगत्या तुष्टाव । अयमर्थः । **हिरण्यपाणिः** सुवर्णमयहस्तः । यद्वा यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान् । **सविता** सर्वस्य प्रसविता देवः । **विचर्षणिः** विविधदर्शनयुक्तः । 'विश्वचर्षणिः' इति (निघण्टु०३.११) तन्नामसु पाठात् सविता देवः पश्यतीत्यर्थः । **उभे द्यावापृथिवी** अन्तः उभयोर्लोकयोर्मध्ये ईयते गच्छति । **अमीवां** रोगादिबाधाम् **अपबाधते** सम्यङ् निराकरोति । तथा **वेति सूर्यं** सूर्यं गच्छति । 'वी गतौ' । यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गन्तृगन्तव्यभावः । **कृष्णेन** तमसः कर्षकेन निवर्तकेन **रजसा** । ज्योती रज उच्यते (नि०४.१९) । **द्याम्** आकाशं **अभ्यृणोति** । 'ऋणु गतौ' । तनादित्त्वादुः । सर्वतो व्याप्नोति । द्यौश्च पृथिवी च द्यावापृथिवी । दिवसश्च पृथिव्याम् (पा०६.३.३०) इति चशब्दाद् द्यावादेशः । द्यावापृथिवी अन्तः 'षष्ठ्यादयश्च द्विवचोऽन्तभाजः' (ऋ०प्रा०१.८६) इति प्रकृतिभावः । अन्तोदात्तमन्त इति (ऋ०प्रा०१.१३) अन्तः शब्दाद्रिफितः । एवं सवितुर्भाग्यवत्वं सिद्धम् ।

## ऋक्संहिता पदपाठसहिता

**हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ् ।**
**अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ।। १० ।।**

हिरण्यऽहस्तः । असुरः । सुऽनीथः । सुऽमृळीकः । स्वऽवान् । यातु । अर्वाङ् । अपऽसेधन् । रक्षसः । यातुऽधनान् । अस्थात् । देवः । प्रतिऽदोषम् । गृणानः ।। १० ।।

## ऋग्भाष्यम्

...................... स्ववान्स ।
स्वतन्त्रत्वात्स्वर्णपात्रं सुपूर्णम् ।
दधानोऽसौ स्वर्णवर्णश्च तेन स्वर्णपाणिः स्वर्णहस्तश्च देवः ।
पृथक्पृथक्पाणिपूर्वाङ्गवित्त्यै स्वर्णवर्णः स्वर्णपाणिः स उक्तः ।
एतैर्लिङ्गैर्वेति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः ।
उक्तो गायत्र्या चारणैस्तत्र तत्र कप्यास पद्माक्ष इति हृदाख्यः ।। १० ।।

**ऋग्भाष्यटीका– हिरण्यहस्तः** ।। स्वस्य स्वेन सम्बन्धाभावात्स्ववानित्ययुक्तमित्यत आह ।। स्ववानिति ।। स विष्णुः । परवान्स्ववानिति परतन्त्रस्वतन्त्रयोर्हि नामनी । हिरण्यहस्त इत्येतद्व्याकुर्वन्पूर्वं हिरण्यपाणिरित्येतदपि व्याख्याति स्वर्णेति ।। सुपूर्णं रत्नादिना । यतोऽसौ देवः सुपूर्णं स्वर्णपात्रं दधानो वर्तते । तेन पूर्वस्यामृचि स्वर्णपाणिर्हिरण्यपाणिरिह च स्वर्णहस्तो हिरण्यहस्त उक्त इत्येकं व्याख्यानम् । हिरण्यं हिरण्यात्मकं पात्रं पाणौ यस्येत्यादि निर्वचनात् । यतः स्वर्णवर्णस्तेन चेत्यपरम् । कथमेतदित्यत आह ।। पृथगिति ।। स्वर्णवर्णः स स्वर्णपाणिरुक्तः हिरण्यवर्णौ पाणी अस्येति निर्वचनादिति भावः । तथापि पाण्योरेव हिरण्यवर्णत्वं लभ्यते न सर्वावयवानाम् इति न वाच्यम् । उपलक्षणार्थत्वात्पाणिशब्दस्येत्युक्तम् । पृथक् पृथक् सर्वेषामिति यावत् । पाणिपूर्वाणामंगानां हिरण्यवर्णत्ववित्त्या इति । उपलक्षणे किं प्रयोजनमित्यतोऽप्युक्तम् । पृथक् पृथगिति । प्रत्येकमेव न समुदायेनेति भावः ।

तथा चायमर्थः । यो देवो **रक्षसो** रक्षांसि । यातुधानांश्च । अवान्तरजातिभेदात्पृथगुक्तिः । **अपसेधन्** निराकुर्वन् **प्रतिदोषं** सर्वासु रात्रिषु । दोषाशब्देनात्र तदुपक्रमोपसंहारौ लक्ष्येते । **गृणानः** स्तूयमानो **अस्थात्** स्थितः स **हिरण्यहस्तः असुरः** असुषु रतः **सुनीथः** सुनीतियुक्तः अधिकं रक्षकः **स्ववान् अर्वाङ्** नीचानस्मान् प्रति **यातु** इति । अन्यत्र देवतान्तरमविहाय भगवत्परत्वव्याख्यानादत्रापि तथेति प्रतीतिं वारयति ।। एतैरिति ।। अत्र सविता सूर्यादन्य एव स च वासुदेव एव । अन्यत्वं तावत्कुतः । एतैः केदानीं सूर्य इत्यादिनोक्तैर्लिङ्गैः । यतो वेति सूर्यमित्युक्तमतश्च कर्मकर्त्रोर्भेदावश्यम्भावात् । तथापि वासुदेवः कुतः 'एतैराणिं न रथ्यम्' इत्यादिनोक्तैर्लिङ्गैः । किञ्च । प्रतिदोषं गृणान इति गायत्रीप्रतिपाद्योऽयं प्रतीयते । गायत्र्या

चोक्तो वासुदेव एव । 'ध्येयः सदा' इति पुराणवाक्यात् । अपि चात्र हिरण्यवर्णः कथितः । हिरण्यवर्णश्चारणैरुपनिषद्भिस्तत्र तत्र हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इत्यादौ वासुदेव एवोक्तः । न च तत्रापि सूर्यः । सूर्ये कथितत्वात् । न चान्यः । यतस्तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी । इति कप्यासपद्माक्ष इत्युक्तः । कम्पिबन्नालसम्बन्धि कमलायत-लोचनेति ब्रह्माण्डे । किञ्च । तस्योदिति नामेत्यसावुदाख्य उक्तः । न च सूर्यादीनामिदंनाम सम्भवति । स एष सर्वेभ्यः पाप्मभ्य उदित इति तन्निर्वचनात् । तस्य संसारिण्यसम्भवादिति ।।

**मन्त्रार्थमञ्जरी–** यः **देवः** । **रक्षसः** रक्षांसि । **यातुधानान्** च अवान्तरजातिभेदात्पृथ-गुक्तिः । **अपसेधन्** निराकुर्वन् । **प्रतिदोषम्** सर्वासु रात्रिषु, अत्र दोषाशब्देन तदुपक्रमोपसंहार रूपसंध्याकालग्रहः । **गृणानः** गायत्र्यादिमन्त्रैः स्तूयमानः । **अस्थात्** स्थितः । **हिरण्यहस्तः**, प्राग्वत् । **असुरः** असुषु रतः । **सुनीथः** सुनीतियुक्तः । **सुमृळीकः** अधिकं रक्षकः । **स्ववान्** स्वतन्त्रः । **अर्वाङ्** नीचान् अस्मान्प्रति । **यातु** इति ।। १० ।।

**स्कन्द– हिरण्यहस्तः असुरः** प्रज्ञावान् **सुनीथः** प्रशस्यः **सुमृळीकः** सुसुखः **स्ववान्** धनवान् **यातु** अर्वाङ् अस्मदभिमुखम् । **अपसेधन्** सेधतिरत्र सामर्थ्यात् वधार्थः । गत्यर्थो वा अन्तर्णीतण्यर्थः । अपघ्नन् अपगमयन् वा **रक्षसः** राक्षसान् । कीदृशान् । **यातुधानान्** रक्षसां रक्षश्शब्देनैवोक्तत्वाद् विशेषणार्थः क्रियाशब्दोयम् यातुः हिंसा, तस्यां निधातव्याः स्थापयितव्याः यातुधानाः, तान् यातुधानान् । हिंसार्हानित्यर्थः । आगत्य च **अस्थात्** लोडर्थेऽयं लुङ् । तिष्ठतु अस्मदीयायां वेद्याम् । **प्रतिदोषम्** **'दोषा'** (निघ.१,७) इति रात्रिनाम् । अत्र च साहचर्यात् अहनि वर्तते । प्रत्यहम् । **गृणानः** व्यत्ययेनायं कर्मणि कर्तृशब्दः गीयमानस्तूयमानः अस्माभिः ।। १० ।।

**वेङ्कटमाधव– हिरण्यहस्तः** बली प्रशस्यः सुखयिता धनवान् सविता अभिमुख इह आयातु । **रक्षसः** हिंसानिधानान् निषेधन् उदस्थात् **देवः** प्रतिरात्रम् अस्माभिः स्तूयमानः ।।

**मुद्गल– हिरण्यहस्तः असुरः** प्राणप्रदाता **सुनीथः** सुष्ठु नेता । प्रशस्य इत्यर्थः । **सुमृळीकः** सुष्ठु सुखयिता **स्ववान्** धनवान् **अर्वाङ्** अभिमुखः कर्मदेशं **यातु गच्छतु** । किञ्च अयम् **देवः प्रतिदोषम्** प्रतिरात्रि **गृणानः** स्तूयमानः **अस्थात्** । किं कुर्वन् । **रक्षसः** बाधकत्वेन रक्षणनिमित्तभूतान् **यातुधानान्** असुरान् **अपसेधन्** निराकुर्वन् ।। १० ।।

## ऋग्भाष्यम्

**...................... स्ववान्स ।**
**स्वतन्त्रत्वात्स्वर्णपात्रं सुपूर्णम् ।**
**दधानोऽसौ स्वर्णवर्णश्च तेन स्वर्णपाणिः स्वर्णहस्तश्च देवः ।**
**पृथक्पृथक्पाणिपूर्वाङ्गवित्त्यै स्वर्णवर्णः स्वर्णपाणिः स उक्तः ।**
**एतैर्लिङ्गैर्वेति सूर्यं यतश्च सूर्यादन्यः सविता वासुदेवः ।**
**उक्तो गायत्र्या चारणैस्तत्र तत्र कप्यास पद्माक्ष इति ह्युदाख्यः ।। १० ।।**

**ऋग्भाष्यटीका– हिरण्यहस्तः** ।। स्वस्य स्वेन सम्बन्धाभावात्स्ववानित्ययुक्तमित्यत आह ।। स्ववानिति ।। स विष्णुः । परवान्स्ववानिति परतन्त्रस्वतन्त्रयोर्हि नामनी । हिरण्यहस्त इत्येतद्व्याकुर्वन्पूर्वं हिरण्यपाणिरित्येतदपि व्याख्याति स्वर्णेति ।। सुपूर्णं रत्नादिना । यतोऽसौ देवः सुपूर्णं स्वर्णपात्रं दधानो वर्तते । तेन पूर्वस्यामृचि स्वर्णपाणिर्हिरण्यपाणिरिह च स्वर्णहस्तो हिरण्यहस्त उक्त इत्येकं व्याख्यानम् । हिरण्यं हिरण्यात्मकं पात्रं पाणौ यस्येत्यादि निर्वचनात् । यतः स्वर्णवर्णस्तेन चेत्यपरम् । कथमेतदित्यत आह ।। पृथगिति ।। स्वर्णवर्णः स स्वर्णपाणिरुक्तः हिरण्यवर्णौ पाणी अस्येति निर्वचनादिति भावः । तथापि पाण्योरेव हिरण्यवर्णत्वं लभ्यते न सर्वावयवानाम् इति न वाच्यम् । उपलक्षणार्थत्वात्पाणिशब्दस्येत्युक्तम् । पृथक् पृथक् सर्वेषामिति यावत् । पाणिपूर्वाणामंगानां हिरण्यवर्णत्ववित्त्या इति । उपलक्षणे किं प्रयोजनमित्यतोऽप्युक्तम् । पृथक् पृथगिति । प्रत्येकमेव न समुदायेनेति भावः ।

तथा चायमर्थः । यो देवो **रक्षसो** रक्षांसि । यातुधानांश्च । अवान्तरजातिभेदात्पृथगुक्तिः । **अपसेधन्** निराकुर्वन् **प्रतिदोषं** सर्वासु रात्रिषु । दोषाशब्देनात्र तदुपक्रमोपसंहारौ लक्ष्येते । **गृणानः** स्तूयमानो **अस्थात्** स्थितः स **हिरण्यहस्तः असुरः** असुषु रतः **सुनीथः** सुनीतियुक्तः अधिकं रक्षकः **स्ववान् अर्वाङ्** नीचानस्मान् प्रति **यातु** इति । अन्यत्र देवतान्तरमविहाय भगवत्परत्वव्याख्यानादत्रापि तथेति प्रतीतिं वारयति ।। एतैरिति ।। अत्र सविता सूर्यादन्य एव स च वासुदेव एव । अन्यत्वं तावत्कुतः । एतैः क्वेदानीं सूर्य इत्यादिनोक्तैर्लिङ्गैः । यतो वेति सूर्यमित्युक्तमतश्च कर्मकर्त्रोर्भेदावश्यम्भावात् । तथापि वासुदेवः कुतः 'एतैराणिं न रथ्यम्' इत्यादिनोक्तैर्लिङ्गैः । किञ्च । प्रतिदोषं गृणान इति गायत्रीप्रतिपाद्योऽयं प्रतीयते । गायत्र्या

चोक्तो वासुदेव एव । 'ध्येयः सदा' इति पुराणवाक्यात् । अपि चात्र हिरण्यवर्णः कथितः । हिरण्यवर्णश्चारणैरुपनिषद्भिस्तत्र तत्र हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्ण इत्यादौ वासुदेव एवोक्तः । न च तत्रापि सूर्यः । सूर्ये कथितत्वात् । न चान्यः । यतस्तस्य यथा कप्यासम्पुण्डरीकमेवमक्षिणी । इति कप्यासपद्माक्ष इत्युक्तः । कम्पिबन्नालसम्बन्धि कमलायत-लोचनेति ब्रह्माण्डे । किञ्च । तस्योदिति नामेत्यसावुदाख्य उक्तः । न च सूर्यादीनामिदंनाम सम्भवति । स एष सर्वेभ्यः पाप्मभ्य उदित इति तन्निर्वचनात् । तस्य संसारिण्यसम्भवादिति ।।

**मन्त्रार्थमञ्जरी–** यः **देवः** । **रक्षसः** रक्षांसि । **यातुधानान्** च अवान्तरजातिभेदात्पृथ-गुक्तिः । **अपसेधन्** निराकुर्वन् । **प्रतिदोषम्** सर्वासु रात्रिषु, अत्र दोषाशब्देन तदुपक्रमोपसंहार रूपसंध्याकालग्रहः । **गृणानः** गायत्र्यादिमन्त्रैः स्तूयमानः । **अस्थात्** स्थितः । **हिरण्यहस्तः**, प्राग्वत् । **असुरः** असुषु रतः । **सुनीथः** सुनीतियुक्तः । **सुमृळीकः** अधिकं रक्षकः । **स्ववान्** स्वतन्त्रः । **अर्वाङ्** नीचान् अस्मान्प्रति । **यातु** इति ।। १० ।।

**स्कन्द–** **हिरण्यहस्तः** **असुरः** प्रज्ञावान् **सुनीथः** प्रशस्यः **सुमृळीकः** सुसुखः **स्ववान्** धनवान् **यातु** अर्वाङ् अस्मदभिमुखम् । **अपसेधन्** सेधतिरत्र सामर्थ्यात् वधार्थः । गत्यर्थो वा अन्तर्णीतण्यर्थः । अपघ्नन् अपगमयन् वा **रक्षसः** राक्षसान् । कीदृशान् । **यातुधानान्** रक्षसां रक्षश्शब्देनैवोक्तत्वाद् विशेषणार्थः क्रियाशब्दोयम् यातुः हिंसा, तस्यां निधातव्याः स्थापयितव्याः यातुधानाः, तान् यातुधानान् । हिंसार्हानित्यर्थः । आगत्य च **अस्थात्** लोडर्थेऽयं लुङ् । तिष्ठतु अस्मदीयायां वेद्याम् । **प्रतिदोषम्** **'दोषा'** (निघ.१,७) इति रात्रिनाम् । अत्र च साहचर्यात् अहनि वर्तते । प्रत्यहम् । **गृणानः** व्यत्ययेनायं कर्मणि कर्तृशब्दः गीयमानस्तूयमानः अस्माभिः ।। १० ।।

**वेङ्कटमाधव–** **हिरण्यहस्तः** बली प्रशस्यः सुखयिता धनवान् सविता अभिमुख इह आयातु । **रक्षसः** हिंसानिधानान् निषेधन् उदस्थात् **देवः** प्रतिरात्रम् अस्माभिः स्तूयमानः ।।

**मुद्गल–** **हिरण्यहस्तः** **असुरः** प्राणप्रदाता **सुनीथः** सुष्ठु नेता । प्रशस्य इत्यर्थः । **सुमृळीकः** सुष्ठु सुखयिता **स्ववान्** धनवान् **अर्वाङ्** अभिमुखः कर्मदेशं **यातु** **गच्छतु** । किञ्च अयम् **देवः** **प्रतिदोषम्** प्रतिरात्रि **गृणानः** स्तूयमानः **अस्थात्** । किं कुर्वन् । **रक्षसः** बाधकत्वेन रक्षणनिमित्तभूतान् **यातुधानान्** असुरान् **अपसेधन्** निराकुर्वन् ।। १० ।।

**सायण– हिरण्यहस्तः असुरः** प्राणदाता **सुनीथः** सुष्ट नेता प्रशस्य इत्यर्थः । 'सुनीथः पाकः' (नि.३.८.७) इति प्रशस्यनामसु पाठात् । सुमृळीकः सुष्टु सुखयिता **स्ववान्** धनवान् **अर्वाङ् अभिमुखः** कर्मदेशे गच्छतु । किंवायं **देवः प्रतिदोषं** प्रतिरात्रि **गृणानः** स्तूयमानः **अस्थात्** स्थितवान् । किं कुर्वन् । **रक्षसः** बाधकत्वेन रक्षणनिमित्तभूतान् रक्षो रक्षितव्यमस्मान् (निरु.४.१८) इति यास्कः । **यातुधानान्** असुरान् **अपसेधन्** निराकुर्वन् । हिरण्यहस्तादयो गताः । **सुमृळीकः** । सुष्टु मृळीकं सुखं यस्यासौ तथोक्तः । नञ्सुभ्याम् इत्युत्तरपदान्तोदात्तत्वम् । स्ववान् । स्वम् अस्यास्तीति स्ववान् । मादुपधायाः इति वत्वम् । संहितायां नकारस्य दीर्घादटि समानपादे इति रुत्वम् । आतोऽटि नित्यन् इति सानुनासिक आकारः । रोर्यत्वम् । यलोपश्च । अपसेधन् । षिधु गत्याम् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपद-प्रकृतिस्वरत्वम् । रक्षसः । रक्ष पालने इत्यस्मात् अपादाने औणादिकः असिप्रत्ययः । यद्वा । रक्षन्त्यनेनेति रक्षो बलम् । करणेऽसुन् । तदेषामस्तीति रक्षस्विनः । मत्वर्थप्रत्ययलोप छान्दसः । प्रत्ययस्वरः । यातुधानान् । यत निकारोपसंस्कारयोः । तस्मात् ण्यन्तात् औणादिको भावे उप्रत्ययः । यातवो यातना एषु धीयन्ते इति यातुधानाः । अधिकरणे ल्युट् । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । अस्थात् । गातिस्था. इति सिचो लुक् । प्रतिदोषम् । दोषां दोषाम् । प्रति वीप्सालक्षणे यथार्थे । अव्ययीभावः । गृणानः । 'ग शब्दे । कर्मणि लटः शानच् । व्यत्ययेन श्ना । प्वादीनां ह्रस्वः इति ह्रस्वत्वम् । चितः इत्यन्तोदात्तत्वम् ।। १० ।।

**सिद्धाञ्जनम्– हिरण्यहस्तः** सुवर्णमयपाणिः **असुरः** महाबलः, शत्रूणां क्षेप्ता **सुनोथः** शोभनप्रापणः सुष्ठु नेता वा, सुमृळीकः सुप्ठु मृडयिता सुखयिता **स्ववान्** धनवान् अर्वाङ् अभिमुखः **यातु** प्राप्नोत्वस्मदीयं यजनं अस्मान्वा । **प्रतिदोषम्** दोषा दोषा प्रतिराति **गृणानः** स्तूयमानः अस्थात् स्थितवान् अयं बेवः । किं कुर्वन् ? **रक्षसः** बाधकत्वेन रक्षानिमित्तभूतान् **यातुधानान्** राक्षसविशेषान् **अपसेधन्** निराकुर्वन् ।। स्ववान्-स्वं धनं अस्येति । रक्षसः-रक्ष पालने इत्यस्मादपादाने । यातुधानान्- यत निकारोपस्कारयोः अस्मादुप्रत्ययः (यातुः) यातवो यातना एषु धीयन्त इति यातुधानाः । गुणानः- गृ शब्दे कर्मणि लटः शानच्, व्यत्ययेन श्ना ।। १० ।।

## ऋक्संहिता पदपाठसहिता

**ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे ।**
**तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ।।११,६,३५,७**
ये । ते । पन्थाः । सवितरिति । पूर्व्यासः । अरेणवः। सुऽकृताः। अन्तरिक्षे । तेभिः । नः । अद्य । पथिऽभिः । सुऽगेभिः । रक्ष । च । नः । अधि । च । ब्रूहि । देव ।।

## ऋग्भाष्यम्

**ये पन्थानो देवयाना अमुत्र साध्या ये ते रेणवो रागतो वा ।**
**रजोहानादथवा तान्प्रदाय रक्षाधिकान्ब्रूहि नोऽथो समेभ्यः ।। ११,७,३,७ ।।**

**ऋग्भाष्यटीका–** ये ते । ये पन्थानः । हे सवितर्देव ये ते प्रसिद्धा देवयानाः पूर्वभवाः पूर्व्याः । ये ते चान्तरिक्षे अमुत्र लोके साध्या इति शेषः । अरागतो वा अथवा रजोहानादरेणवः रेणुशब्देन रजःशब्दो लक्ष्यते । तस्य च रागो वा रजोगुणो वार्थः । तद्रहितपुरुषसम्बन्धद्वारकं चेदं विशेषणम् । **सुकृताः** निवृत्तसुकृतप्राप्याः पन्थाः पन्थानः । **तेभिः** तैः । **सुगेभिः** सुगमैः । कण्टकादिरहितैः **पथिभिः** । तान्प्रदायेति यावत् । अद्य नोऽस्मान्रक्ष च संसारात् । अथो अन्यच्च **नः** अस्मान् **अधि** अधिकांश्च ब्रूहि । त्वद्वचनमात्रेणाधिका भविष्यामः । हीनेभ्योऽधिकत्वस्य सिद्धत्वादधिकेभ्यस्त्वप्राप्यत्वात्समेभ्य इत्युक्तम् । एतद्घटनं चान्यत्र द्रष्टव्यम् । पथां बहुत्वं चावान्तरभेदेनेति ।। ११,७,३,७ ।।

**मन्त्रार्थमञ्जरी–** **हे सवितः देव** । **ते** प्रसिद्धाः देवयानाः । पूर्वं भवाः पूर्व्याः त एव पूर्व्यासः **ये च अन्तरिक्षे** अमुत्र लोके । साध्याः इति शेषः । पुनः कीदृशाः ? **अरेणवः** रेणुशब्देन रजो लक्ष्यते, रजश्च रागो वा रजोगुणो वा, तद्रहितपुरुषप्राप्यत्वसम्बन्धात् 'अरेणवः' इत्युक्ताः । **सुकृताः** निवृत्तकर्मप्राप्याः । **पन्थाः** पन्थानः । **तेभिः** तैः । **सुगेभिः** सुगैः, सुगमैः, कण्टकादिहीनैः । **पथिभिः** तान्प्रदायेति यावत् । **अद्य नः** अस्मान् । **रक्ष च** संसारात् । अथो अन्यश्च । **नः अधि च** अस्मानधिकाँश्च । **ब्रूहि** त्वद्वचनमात्रेणाधिका भविष्यामः । पथां बहुत्वं चावान्तरत्वेन इति ज्ञेयम् ।। ११ ।।

**स्कन्द– ये ते** तव **पन्थाः** पन्थानः **हे सवितः ! पूर्व्यासः** पूर्वे चिरन्तनाः **अरेणवः** पांसुवर्जिताः **सुकृताः** शोभनाः कृताः । केन । सामर्थ्यात् त्वयैव विधात्रा । क्व । **अन्तरिक्षे** । **तेभिः नः** इति तादर्थ्ये चतुर्थी । तृतीयानिर्देशाश्च योग्यक्रियाव्याहारः । तैरस्मदर्थमागत्य । कदा । **अद्य** । कैः । **पथिभिः** । कीदृशैः । **सुगेभिः** सुगमनैः । **रक्ष च नः** अस्मान् । **अधि च ब्रूहि** अधिवचनमाज्ञापनम् । आज्ञापय च यदाज्ञापयितव्यं हे देव! ॥ ११ ॥

**वेङ्कटमाधव– ये** तव मार्गाः चिरन्तनाः रेणुवर्जिताः तुष्ठु कृताः **अन्तरिक्षे** । तैः अस्मान् **पथिभिः** सुगमैः **अद्य रक्ष** । अपि च अस्मान् **अधि ब्रूहि** । पुनः **नः** इति पूरणम् ॥११॥

**मुद्गल– हे सवितः ! ये ते** तत्र पन्थाः मार्गाः **पूर्व्यासः** पूर्वसिद्धाः अरेणवः धूलिरहिताः **अन्तरिक्षे सुकृताः** सुष्ठु सम्पादिताः । **सुगेभिः** सुष्ठु गन्तुं शक्यैः तेभिः पथिभिः तैः मार्गैः आगत्य अद्य अस्मिन् दिने **नः** अस्मान् **रक्ष च** पालनमपि कुरु । तथा हे **देव!**अस्मान् अनुष्ठातॄन् **अधि च ब्रूहि** देवानामग्रे अधिकत्वेन कथय च ॥ ११ ॥

**सायण– हे सवितः ते** तव **पन्थाः** मार्गाः **पूर्व्यासः** पूर्वसिद्धाः **अरेणवः** धूलिरहिताः **अन्तरिक्षे सुकृताः** सुष्टु सम्पादिताः । **सुगोभिः** सुष्टु गन्तुं शक्यैः **तेभिः पथिभिः** तैर्मा गैरागत्य **अद्य** अस्मिन् दिने **नः** अस्मान् **रक्ष च** पालनमपि कुरु । तथा **हे देव नः** अस्मान् **अनुष्ठातॄन् अधि ब्रूहि च** देवानामग्रेऽधिकत्वेन कथय च । **पन्थाः** । 'सुपां सुलुक्' इति जसः सुः । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । पूर्व्यासः । पूर्वैः कृताः पूर्व्याः । 'पूर्वैः कृतमिनियौ च' (पा.सू-४.४.१३३) इति यः । प्रत्ययस्वरः । असुगागमः । अरेणवः । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । सुकृताः । कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । सुगेभिः । सुष्टु गच्छन्त्येष्विति सुगाः । 'सुदुरोरधिकरणे' (पा.सू.३.२.४८.३) इति गमेर्डप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वम् । रक्ष । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः ॥

अष्टमेऽनुवाकेऽष्टौ सूक्तानि । तत्र 'प्र वो यह्वम्' इति विंशत्यृचं प्रथमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । अयुजो बृहत्यः तृतीयपादस्य द्वादशाक्षरत्वात् । युजः सतोबृहत्यः प्रथमतृतीययोः पादयोः दशाक्षरत्वात् । अग्निर्देवता । 'ऊर्ध्व ऊ षु' इत्यादिके यूपदेवत्ये । तथा चानुकान्तं- 'प्र वो विंशतिः कण्वो घौर आग्नेयं प्रागाथमूर्ध्व ऊ षु यौप्यौ' इति । ननु ङ ऊर्ध्व ऊ षु'

इत्यादिकयोरप्यग्नेर्देवतात्वेन भवितव्यमाग्नेये ऋतौ अनयोरनुद्धारात् । तथा हि सूत्रे 'एना वो अग्निं प्र वो यह्वम्' (आश्व.श्री.४.१३) इति प्रतीकमात्रस्यैवोपादानात् कृत्स्नसूक्तमाग्नेयमिति गम्यते । यद्येते अन्यदेवत्ये स्याता वसित्वा हीति सूक्तयोरुत्तमामुद्धरेत्' (आश्व.श्री.४.१३) इतिवत् उद्धारं ब्रूयात् । न च ब्रूते । अतः कथं योप्याविति । नैष दोषः । यूपाधिष्ठानस्याग्नेः स्तूयमानत्वात् अनयोरपि अग्निर्देवता इत्याग्नेये ऋतौ उद्धारो न कृतः । अधिष्ठानप्राधान्यविवक्षया योप्यावित्येतदपि न विरुध्यते । प्रातरनुवाके आग्नेये ऋतो बाहते छन्दसि 'प्र वो यह्वम्' इति सूक्तम् । अथैतस्या रात्रेर्विवासकाले इति खण्डे सूत्रितम्- एना वो अग्निं प्र वो यह्वम् इति ।।

**सिद्धाञ्जनम्–** हे **सवितः**, ते तव **ये पन्थाः** मार्गाः **पूर्व्यासः** पूर्वसिद्धाः **अरेणवः** निर्धूलयः स्वच्छाः **सुकृताः** सुष्ठु सम्पादिताः अङ्गिरःप्रभृतिभिः पूर्वैर्ऋषिभिः ये पन्थानः समीचीनतया अस्मदादीननुग्रहीतुं तवागमनाय प्रतिष्ठिताः सन्ति **अन्तरिक्षे** आकाशे, **सुगेभिः** सुखेन गन्तुं शक्यैः **तेभिः पथिभिः** मार्गैः **अद्य** इदानीं नः अस्मदर्थं एहि । एत्य हे देव, **नः** अस्मान् **रक्ष च** पालय, **अधिब्रूहि च** अस्मासु विषये यद्वक्तव्यं तद् ब्रूहि च । पन्थाः-जसः सुः । पूर्व्यासः पूर्वैः कृताः, असुगागमः । सुगेभिः सुष्ठु गच्छन्त्येषु इतिः सुगाः, अधिकरणे गमेर्डप्रत्ययः ।। ११ ।।

।। इति प्रथमाष्टके तृतीयाध्याये सप्तमो वर्गः ।।

।। इति प्रथमे मण्डले सप्तमोऽनुवाकः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ३६)

२० कण्वो घौरः । अग्निः, १३-१४ यूपो वा । प्रगाथः=विषमा बृहत्यः,
समाः सतोबृहत्यः (१३ उपरिष्टाद्बृहती । ऐ.ब्रा. २।२ चरणच्छेदः)

**प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म् ।**
**अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ।। १ ।।**

प्र । व॒ः । य॒ह्वम् । पु॒रू॒णाम् । वि॒शाम् । दे॒व॒ऽय॒तीना॑म् । अ॒ग्निम् । सु॒ऽउ॒क्तेभिः॑ । वचः॑ऽभिः । ईम॒हे॒ । यम् । सी॒म् । इत् । अ॒न्यः । ईळ॑ते ।। १ ।।

## ऋग्भाष्यम्

कण्वस्त्वध्यापयन् विष्णोरनुग्रहमथाप्नुवन् ।
इच्छंश्च ज्ञानविततिं देवांस्तुष्टाव भक्तितः ।।
ऋक्शतेनावशिष्टं च जप्यस्यान्ते तु कालतः ।
शृण्वन्तु स्तोममित्यन्ता ददर्शैकाग्रमानसः ।।
बह्वाधेयत्वतः पुत्रं बहूनां वो हुताशनम् ।
बहुज्ञेयत्वतो विष्णुं वेमहे हे प्रजाः सदा ।
देवज्ञानाद्वा यजनाद्देवयत्यः समीळते ।
यमन्ये च जनास्सन्तः.......... ।। १ ।।

**ऋग्भाष्यटीका–** एवं हिरण्यस्तूपदृष्टा ऋचो व्याख्यायोत्तरासाम् ऋषिमाह ।। कण्वस्त्विति ।। विष्णोरनुग्रहमवाप्नुवञ्ज्ञानविततिमिच्छन्निति अध्यापने हेतुद्वयम् । अथ चशब्दावितरेतरसमुच्चये । तुशब्द एवार्थः । तेन जीवनार्थत्वं वारयति । देवान्विष्णुप्रधानकानग्न्यादीन् । ऋक् शतावशिष्टं च स एव ददर्शेति सम्बन्धः । तर्हि कथमस्य शतर्चित्वमित्यत उक्तम् ।। जप्यस्येति ।। भावे कृत्यः कालत इति कालान्तरत्वमुक्तम् । जप्यस्यान्त इत्यवस्थान्तरत्वम् । एतदर्थमेवाध्यापयन्नित्युक्तम् अवशिष्टमित्युक्तस्यैव विवरणम् ।। शृण्वन्त्विति ।। इत्यन्ता ऋच इति तद्गुणसंविज्ञानो बहुव्रीहिः । अनेन त्वमग्न इत्यतः प्राक्तनीनां कण्वदृष्टत्ववचनेन नाग्नेषळूनाप्रस्कण्व इति कण्वदृष्टास्वेव चतुर्दशानां यत्प्रस्कण्वदृष्टत्ववचनं तदसदित्युक्तं भवति । प्रमाणं तु प्रागेवोक्तमिति ।

**प्रवः** । विंशत्यृचमिदमाग्नेयं सूक्तम् । ऊर्ध्व ऊष्विति द्वे यौप्यावित्येके । बहुव इति श्रवणात् । हे प्रजाः ज्ञानकर्माधिकृताः । देवयतीनां देवज्ञानाद्देवानां यजनाद्वा देवयत्यः तासाम् । द्वितीयान्तस्य देवशब्दस्येणः शत्रंतात्स्त्रियां ङीपि कृते सिद्धेन यतीशब्देन श्रितादिषु गमिगम्यादीनामुपसंख्यानात्समासः । गतिश्च ज्ञानं वा यजनं वेति । **पुरूणां** बहूनां **विशां** प्रजानां वो युष्माकम् । **यह्वं** यहुम् । छन्दस्यमि पूर्वरूपमकृत्वा यणादेश एव कृतः । पुत्रमग्निं हुताशनं विष्णुं वा । हुताशनस्य बहुपुत्रत्वघटकं बह्वाधेयत्व इति । विष्णोस्तु बहुज्ञेयत्वत इति । अत एव देवयतीशब्दो द्वेधा व्याख्यातः । वयं **सूक्तेभिः** सम्यक् प्रयुक्तैर्वचोभिः । **प्रः** सदा **ईमहे** । याश्चाकर्मसु पाठात् । कथं भूतम् अन्ये च सन्तो जना यं **सीमित्** सम्यगेव । **ईळते** स्तुवन्ति ।।

**मन्त्रार्थमञ्जरी–** अथ 'प्र वो॑ य॒ह्वम्' इत्यारभ्य 'त्वम॑ग्ने (ऋ०म०१।४५।१) इत्यतः प्राक्तनस्य दशोत्तरऋक्शतस्य कण्वऋषिः, तस्य शतर्चित्वप्रसिद्धिरप्यधिकानां कालान्तरे दृष्टत्वा-द्युक्ता । छन्दस्तु यथायथं ध्येयम् । तत्र प्र वो॑ य॒ह्वम्' इत्यादि विंशत्यृचं वर्गचतुष्टयात्मकमाग्नेयं प्रागाथं षट्त्रिंशं सूक्तम्, 'ऊ॒र्ध्व ऊ॒ षु' इति द्वे यौप्यौ यूपदेवताके इत्येके अनुक्रमणिकाकाराः प्रागाथोऽत्र बार्हतः, बार्हतो नाम अयुजो बृहत्यो युजः सतोबृहत्यः, सतो बृहती नाम पङ्क्तिविशेषश्छन्दः, पङ्क्तिच्छन्दोदेवता तूक्तैव बृहतीछन्दोदेवतास्तु 'श्रीर्ब्रह्माणी भारती गरुडस्तारा' इति पञ्च हे प्रजाः ज्ञानकर्माधिकृताः । **देवयतीनाम्** देवज्ञानादेवानां यजनाद्वा देवयत्यस्तासाम्, द्वितीयान्तस्य देवशब्दस्य 'इण् गतौ' इत्यतः शत्रन्तात्स्त्रियां ङीपि कृते सिद्धेन यतीशब्देन श्रितादिषु गमिगाम्यादीनामुपसंख्यानात्समासः, गतिश्च ज्ञानं यजनं च । **पुरूणाम्** बहूनाम् । **विशाम्** प्रजानाम् । **वः** युष्माकम् । **यह्वम्** यहुम्, छन्दस्यमि पूर्वरूपमकृत्वा यणादेश एव कृतः, पुत्रम् । **अग्निम्** हुताशनं विष्णुं वा । वयम् **सूक्तेभिः**, सम्यक्प्रयुक्तैः । वचोभिः । **प्र ईमहे**, 'ईङ् याच्ञायाम्' इत्यपि (वै०नि०३।१९) धातुपाठात् । कथं भूतम् ? अन्ये च सन्तो जनाः । **यम्** । **सीम् इत्** सम्यगेव । **ईळते** स्तुवन्ति । अत्राग्नेर्विष्णोश्च बहून्प्रति पुत्रत्वम् बहुभिराधेयत्वं ज्ञेयत्वं च क्रमाज्ज्ञेयम् ।। १ ।।

**स्कन्द–** 'प्र वः कण्व उत्तरः' । 'प्रवो यह्वम्' इत्येतत् कण्वो नाम महर्षिः हिरण्यस्तूपा-दुत्तरोऽपश्यत् । घौरः घोरपुत्रश्च स ज्ञेयः । 'प्र वो यह्वम्' इत्याग्नेयं चैतत् सूक्तम् । **प्र** इत्युप-सर्गः **इमहे** इत्याख्यातेन सम्बन्धयितव्यः । वः इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । त्वाम् । **यह्वम्** । महन्नामैतत् (तु.निघ.३,३) । महान्तम् । **पुरूणां विशाम् देवयतीनाम्** **'पुरु'** (निघ.३,१) इति बहुनाम । सर्वत्र च निर्धारणे षष्ठी । बह्वीनां मनुष्यजातीनां देवा-निच्छन्तीनां मध्ये वयम् **अग्निम् सूक्तेभिः** सूक्तैः स्तुतिलक्षणैर्वचोभिः प्रेमहे प्रकर्षेण याचामहे । **यम् सीम् इत्** सीमिति परिग्रहार्थीयो वा पदपूरणो वा । इच्छब्दस्तु पदपूरण एव । यं सर्वे **अन्ये** अपि **ईळते** ईळिरत्र याच्ञार्थः । याचन्ते । अथवा सूक्तानां वचसां स्तुतिकरणत्वात् ईमहे ईळते इत्येतावुभावपि स्तुत्यर्थौ । बह्वीनां मनुष्यजातीनां मध्ये वयं स्तुमः । यमन्येऽपि स्तुवन्तीत्यर्थः ।। १ ।।

**वेङ्कटमाधव–** कण्वो धौरः । प्र याचामहे बह्वीनाम् वः देवानिच्छन्तीनाम् **विशाम्** महान्तम् **अग्निम्** वयम् शोभनवचनैः **वचोभिः** । **यम्** अग्निं सर्वे अपि **अन्ये** अभिलषितं याचन्ते ।।

**मुद्गल–** अष्टमेऽनुवाके अष्टौ सूक्तानि । 'प्र वो यह्वम्' इति विंशत्यृचं प्रथमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । अयुजो बृहत्यः, तृतीयपादस्य द्वादशाक्षरत्वात् । युजः सतोबृहत्यः, प्रथमतृतीययोः पादयोर्द्वादशाक्षरत्वात् । त्रयोदशी चतुर्दशी च यूपदेवताके । शिष्टा अग्निदेवताकाः । हे ऋत्विग्यजमानाः! **देवयतीनाम्** देवान् कामयमानानाम् **पुरूणाम्** बहूनाम् **विशाम्** प्रजारूपाणाम् **वः** युष्माकमनुग्रहाय **यह्वम्** महान्तम् **अग्निम् सूक्तेभिः** सूक्तरूपैः **वचोभिः** वाक्यैः **प्र ईमहे** प्रकर्षेण याचामहे । **अन्ये इत्** अन्येऽपि ऋषयः **यम्** अग्निम् **सीम्** सर्वतः **ईळते** स्तुवन्ति । तमग्निमिति पूर्वत्रान्वयः ।। १ ।।

**सायण–** हे ऋविग्यजमानाः **देवयतीनां** देवान् कामयमानानां **पुरूणां** बहूनां **विशां** प्रजारूपाणां **वः** युष्माकमनुग्रहाय **यह्वं** महान्तम् । 'यह्वः ववक्षिथ' (नि.३.३.१३) इति महन्नामसु पाठात् । **अग्निं** सूक्तेभिर्वचोभिः सूक्तरूपैर्वाक्यैः **प्र ईमहे** प्रकर्षेण याचामहे । 'ईमहे यामि' (नि.३.१९.१) इति याश्चाकर्मसु पाठात् । **अन्ये इत्** अन्येऽपि ऋषयः **यम्** अग्निं **सीं** सर्वतः **ईळते** स्तुवन्ति । तमग्निमिति पूर्वत्रान्वयः । पुरूणाम् । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । विशाम् । 'सावेकाच' इति विभक्तेरुदात्तत्वम् । देवयतीनाम् । देवानात्मन इच्छन्त्यो देवयन्त्यः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वस्येव दीर्घस्यापि प्रतिषेधः, 'अश्वाघस्यात्' इति पुनः आत्वविधानात् ज्ञापकात् । क्यजन्तात् लटः शतृ । कर्तरि शप् । शपः पित्त्वादनुदात्तत्वम् । शतुश्च लसार्वधातुकस्वरेण क्यचा सह एकादेशे 'एकादेश उदात्तेनोदात्तः' इति शतुरुदात्तत्वम् । 'उगितश्च' इति ङीप् । 'अनित्यमागमशासनम्' इति वचनात् नुमभावः; एकादेशस्वरस्य पूर्वत्रासिद्धत्वं नेष्यते इति वचनात् (पा.सू.८.२.६.१) । शतुरुदात्तत्वं सिद्धमेवेति 'शतुरनुमः' इति नद्या उदात्तत्वम् । सूक्तेभिः । वक्तेः 'क्तिचूक्तौ च संज्ञायाम्' इति क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् । ईलते । 'ईड स्तुतौ' । अदादित्वात् शपो लुक् । अनुदात्तेत्त्वात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ।।१।।

**सिद्धाञ्जनम्–** अष्टमेऽनुवाके अष्टौ सूक्तानि । तत्र प्र वो यह्वम् इति विंशत्यृचं प्रथमं सूक्तम् । घोरपुत्रः कण्वः ऋषिः । अयुजो बृहत्यः युजः सतोबृहत्यः । अग्निर्देवता । देवकामान् प्रति ऋषेः संबोधनम् । **देवयतीनाम्** देवान् कामयमानानां **पुरूणाम्** बहूनां **विशाम्** प्रजारूपाणां **वः** युष्माकं अर्थे **यह्वम्** (महन्नाम) महान्तं **अग्निम्, सूक्तेभिः वचोभिः** शोभनवचनैर्मन्त्रात्मकैः

**प्रेमहे** प्रार्थयामहे । **यम्** अग्निं **सीम्** सर्वतः **अन्य** **इत्** अन्येऽपि ऋषयः **ईळते** स्तुवन्ति तमग्निमिति पूर्वेण सम्बन्धः ।। देवयतीनाम्– 'सुप आत्मनः क्यच्, शतरि ङीप्, अनित्यमागमशासनमिति नुमभावः । ईमहे– याञ्चाकर्म ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**जनासो अग्निं दधिरे सहोवृधं हविष्मन्तो विधेम ते ।**
**स त्वं नो अद्य सुमना इहाविता भवा वाजेषु सन्त्य ।। २ ।।**

जनासः । अग्निम् । दधिरे । सहःऽवृधम् । हविष्मन्तः । विधेम । ते । सः । त्वम् । नः । अद्य । सुऽमनाः । इह । अविता । भव । वाजेषु । सन्त्य ।। २ ।।

## ऋग्भाष्यम्

**..........सहसा वायुनैधितम् ।**
**धारयन्ति जनास्तस्य कर्म कुर्मो वयं च ते ।**
**सन्त्यः सम्यक्ततो विष्णुर्वायोरपि विवृद्धिकृत् ।। २,३ ।।**

**ऋग्भाष्यटीका– जनासः** । पूर्वार्धं व्याख्याति । सहसेति । यं **सहोवृधं** सहसा वायुनैधितम् । वर्धतेः कर्मणि क्विप् । अग्निं त्वाम् । **जनासः** सज्जनाः । **दधिरे** धारयन्ति । वयं च ते तस्य **हविष्मन्तः** सन्तो **विधेम** । कर्म कुर्मः । परिचरणकर्मसु पाठात् । उत्तरार्धगतं संत्येति पदं व्याख्याति । संत्य इति । सम्पूर्वात्तनोतेर्ड्यः । धायग्निस्तद्गतस्य विष्णोश्च सन्ततत्वं प्रसिद्धमेव । विष्णुः कथं सहोवृधित्यत आह । विष्णुरिति । सहः शब्दे कर्मण्युपपदेऽन्तर्णीतण्यर्थात् क्विप् । उभयत्रेगुपधलक्षणः को वा । **हे संत्य** स एवमस्माभिः पूजितः सुमनास्त्वमिह लोकेऽद्य । **वाजेषु** अन्नेषु विषयेषु । **नः** अस्माकम् **अविता** रक्षको भवेति ।। २ ।।

**मन्त्रार्थमञ्जरी–** यम् **सहोवृधम्** सहसा वायुना वृधम् **एधितम्** 'वृधु वर्धने' इत्यतः कर्मणि क्विप्, विष्णुपक्षे सहसो वायोः वृधम् वृद्धिकरम्, सहस्शब्दात्कर्मण्युपपदेऽन्तर्णीतण्यर्थात्क्विप्, अर्थद्वये इगुपधलक्षणः कप्रत्ययो वा । **अग्निम्** त्वाम् **जनासः** सज्जनाः । **दधिरे** धारयन्ति । वयं च तस्य ते **हविष्मन्तः** सन्तः **विधेम** कर्म कुर्मः । हे **सन्त्य** सम्यक्तत, सम्पूर्वात्तनोतेर्ड्यः,

धार्याग्रेस्तद्व्रतस्य विष्णोश्च सन्ततत्वं प्रसिद्धमेव । सः एवमस्माभिः पूजितः । सुमनाः त्वम् । इह लोके । **अद्य** । **वाजेषु** अन्नेषु । **नः** अस्माकम् । **अविता** रक्षकः । **भव** इति ।।

**स्कन्द– सः त्वम् नः** इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यम् **जनासः** मनुष्याः **अग्निम् दधिरे** परिचर्यया धारयन्ति । परिचरन्तीत्यर्थः । **सहोवृधम्** बलस्य वर्धयितारम् । **हविष्मन्तः विधेम** वयमपि परिचरामः । **ते** द्वितीयार्थे षष्ठयेषा । त्वाम् । स त्वम् नः **अद्य सुमनाः** सुचित्तोऽनुग्रहपरः **इह अविता** पालयिता भव **वाजेषु** सङ्ग्रामेषु **हे सन्त्य!** षणु दाने इत्यस्य एतत् रूपम् । दातः! ।। २ ।।

**वेङ्कटमाधव–** अग्ने! यं त्वाम् अन्येऽपि जनाः अधारयन् बलस्य वर्धयितारम्, तं वयमपि **हविष्मन्तः** परिचरामः । **सः त्वम् नः अद्य** शोभनमनाः इह रक्षकः **भव** युद्धेषु भजनीय! ।।

**मुद्गल– जनासः** अनुष्ठातारो जनाः **सहोवृधम्** हलस्य वर्धयितारम् **अग्निम् दधिरे** धृतवन्तः । **हविष्मन्तः** हविर्युक्त वयं हे अग्ने ! ते स्वाम् विषेम परिचरेम । वाजेषु **अन्नेषु** सन्त्य! दानशील! हे अग्ने! **सः त्वम् अद्य** अस्मिन् दिने **इह** कर्मणि **नः** अस्मान् प्रति **सुमनाः** शोभनमनस्कः **अविता** रक्षिता भव ।। २ ।।

**सायण– जनासः** अनुष्ठातारो जनाः **सहोवृधं** बलस्य वर्धयितारम् **अग्निं दधिरे** धृतवन्तः । **हविष्मन्तः** हविर्युक्ता वयं हे अग्ने **ते** त्वां **विधेम** परिचरेम । विधतिः परिचरणकर्मा । 'विधेम सपर्यति' (नि.३.५.२) इति परिचरणकर्मसु पठितत्वात् । **वाजेषु** भन्नेषु **सन्त्य** दानशील हे अग्ने **स त्वम् अद्य** अस्मिन् दिने **इह कर्मणि नः** अस्मान् प्रति **सुमनाः** शोभनमनस्कः **अविता** रक्षिता **भव** ।। सहोवृधम् । 'वृधु वृद्धौ' । अस्मात् अन्तर्भावितण्यर्थात् क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । हविष्मन्तः । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । विधेम । 'विध विधाने' । तुदादित्वात् शः । सुमनाः । शोभनं मनो यस्यासौ सुमनाः । 'सोर्मनसी अलोमोपसी' इत्युत्तरपदाद्युदात्तत्वम् । भव । पादादित्वात् 'तिङ्ङतिङः' इति निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । सन्त्य । 'षणु दाने' । क्तिचि 'तितुत्र' इत्यादिना इट्प्रतिषेधः । 'न क्तिचि दीर्घश्च' (पा.सू.६.४.३९) इत्यनुनासिकलोपदीर्घयोर्निषेधः । सन्तिर्दाता । तत्र भवः सन्त्यः । 'भवे छन्दसि' इति यत् ।। २ ।।

**सिद्धाञ्जनम्– जनासः** देवभवता जनाः **सहोवृधम्** बलस्य वर्धनं अग्निं **दधिरे** धृतवन्तः । **हविष्मन्तः** हविर्युक्ता वयं सोमात्मकसर्वरसार्पणपराः ते त्वदर्थ, त्वां इति विभक्तिव्यत्ययो वा **विधेम** परिचरेम, विधृतिः परिचरणकर्मा, हविरर्पयेम वा । **वाजेषु** समृद्धिषु निमित्तभूतासु, हे **सन्त्य** दानशील अग्ने, **स त्वम्** तादृशस्त्वं **अद्य** इदानीं **इह नः** अस्मान् प्रति **सुमनाः** शोभनमनस्कः **अविता** वर्धयिता **भव** । सहोवृधम्-वृष वृद्धौ, अस्मादन्तर्भावितण्यन्तात क्विप् । विधेम-विध विधाने, तुदादित्वात् पाः । सन्त्य-षणु दाने, वितच्, सन्तिर्दाता, तत्र भवः, यत् ।।

## ऋक्संहिता पदपाठसहिता

**प्र त्वा॑ दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसम् ।**
**म॒हस्ते॑ स॒तो वि च॑रन्त्य॒र्चयो॑ दि॒वि स्पृ॑शन्ति भा॒नवः॑ ।। ३ ।।**

**प्र । त्वा॒ । दू॒तम् । वृ॒णी॒म॒हे॒ । होता॑रम् । वि॒श्वऽवे॑दसम् । म॒हः । ते॒ । स॒तः । वि । च॒रन्ति॒ । अ॒र्चयः॑ । दि॒वि । स्पृ॒शन्ति॒ । भा॒नवः॑ ।। ३ ।।**

**ऋग्भाष्यटीका– प्रत्वा** । हे अग्ने वयं **दूतं होतारं विश्ववेदसं** त्वां **प्र वृणीमहे** । यस्य **महः** महतः **सतः ते अर्चयः** अर्चिषो **विचरन्ति भानवो** रश्मयश्च **दिवि** दिवं स्पृशन्ति ।।

**मन्त्रार्थमञ्जरी–** हे अग्ने वयम् **दूतम्** । **होतारम्** । **विश्ववेदसम्** । **त्वा** त्वाम् । **प्र वृणीमहे** । यस्य **महः** महतः । **सतः ते** । **अर्चयः** अर्चिषः । **विचरन्ति** । **भानवः** च, रश्मयश्च । **दिवि** दिवम् । **स्पृशन्ति** ।। ३ ।।

**स्कन्द– प्र** त्वा त्वाम् **दूतम्** प्रकर्षेण **वृणीमहे होतारम्** च **विश्ववेदसम्** सर्वधनं सर्वज्ञं वा । महस्ते सतः– अयमर्धचो भिन्नं वाक्यं पूर्वस्मादर्धर्चात् । यत्तच्छब्दावध्याहृत्य एकवाक्यता योग्या । यस्य ते तव महः महतः सुदीप्तस्य सत सर्वत **वि चरन्ति** अर्चयः ज्वालाः । **दिवि स्पृशन्ति भानवः** दिवीति द्वितीयार्थे सप्तमी । मानवो दीप्तयो दिवं स्पृशन्ति ।। ३ ।।

**वेङ्कटमाधव– प्र वृणीमहे** त्वाम् **दूतम् होतारम्** सर्वधनम् । महतः भवतः तत्र **वि चरन्ति अर्चयः दिवि च स्पृशन्ति** भासमानाः ।। ३ ।।

**मुद्गल–** हे अग्ने! **होतारम्** होमनिष्पादकम् **विश्ववेदसम्** सर्वज्ञम् **दूतम्** देवानां दूत्ये प्रवृत्तम्

तादृशम् **त्वा** त्वाम् **प्र वृणीमहे** प्रकर्षेण वरुणं कुर्मः । **महः** महतः **सतः** नित्यं वर्तमानस्य **ते** तव **अर्चयः** दीप्तय वि **चरन्ति** विविधं प्रचरन्ति । भानवः त्वदीया रश्मयः **दिवि** द्युलोके **स्पृशन्ति** । तत्रत्यान् प्राणिनः प्रकाशयन्तीत्यर्थः ।। ३ ।।

**सायण–** हे अग्ने **होतारं** होमनिष्पादकमाह्वातारं वा **विश्ववेदसं सर्वज्ञं दूतं** देवानां दूत्ये प्रवृत्तम् । 'अग्निर्वै देवानां दूत आसीत्' इति श्रुत्यन्तरात् । तादृशं त्वां **प्र वृणीमहे** प्रकर्षेण वरणं कुर्मः । **महः** महतः **सतः** नित्यं वर्तमानस्य **ते** तव **अर्चयः** दीप्तयः **वि चरन्ति** विविधं प्रचरन्ति । **भानवः** त्वदीया रश्मयः **दिवि** द्युलोके **स्पृशन्ति** तत्रत्यान् प्राणिनः प्रकाशयन्तीत्यर्थः ।। विश्ववेदसम् । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । 'वेदः' इति धननाम (नि.२.१०.४)। विश्वं वेदो धनं यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । महः । 'मह पूजायाम्' 'क्विप् च' इति क्विप् । 'सावेकाचः' इति ङस उदात्तत्वम् । यद्वा । महच्छब्दे अच्छब्दलोपश्छान्दसः । सतः । अस्तेः शतरि 'श्नसोरल्लोपः' इति अकारलोपः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । दिवि । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् ।। ३ ।।

**सिद्धाञ्जनम्–** हे अग्ने **होतारम्** आह्वातारं **विश्ववेदसम्** विश्वानि वेत्तीनि विश्ववेदाः (असुन्) तं सर्वविदं **दूतम्** देवदूत्यवर्तिनं **त्वाम् प्र वृणीमहे** प्रकर्षेण वरयामः । **महः** महतः (अल्लोपः छन्दसि) **सतः** नित्यं वर्तमानस्य **ते** तव **अर्चयः दीप्तयः** ज्वालाः **विचरन्ति** विततं गच्छन्ति, विस्तृतप्रचारास्तव ज्वाला इत्यर्थः । तव **भानवः** रश्मयस्तु **दिवि स्पृशन्ति** ऊर्ध्वगाः द्युलोकं प्राप्नुवन्ति ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**देवासस्त्वा वरुणो मित्रो अर्यमा सं दूतं प्रत्नमिन्धते ।**
**विश्वं सो अग्ने जयति त्वया धनं यस्ते ददाश मर्त्यः ।। ४ ।।**

देवासः । त्वा । वरुणः । मित्रः । अर्यमा । सम् । दूतम् । प्रत्नम् । इन्धते । विश्वम् । सः । अग्ने । जयति । त्वया । धनम् । यः । ते । ददाश । मर्त्यः ।। ४ ।।

## ऋग्भाष्यम्

**प्रततेः पुरातनत्वाद्वा प्रत्नः........ ।। ४ ।।**

**ऋग्भाष्यटीका– देवासः** । अत्र प्रत्नशब्दार्थमाह ।। प्रततेरिति ।। प्रपूर्वात्तनोतेरकार उपधालोपश्च पुरातनत्वात्प्रत्न इति प्रसिद्धम् । हे अग्ने वरुणो मित्रो अर्यमा इत्यादयो देवाः । दूतं प्रत्नं त्वां समिंधते सन्दीपयन्ति । किञ्च । यो **मर्त्यः** ते तुभ्यं **ददाश** । दाशृ दाने ददौ । स त्वया प्रसन्नेन सता **विश्वं** सम्पूर्णं **धनं जयति** प्राप्नोति ।। ४ ।।

**मन्त्रार्थमञ्जरी– हे अग्ने** 'वरुणः, मित्रः, अर्यमा' इत्यादयः **देवासः** देवाः । **दूतम् प्रत्नम्** प्रततं पुरातनं वा, प्रपूर्वात्तनोतेः अकारः, उपधालोपश्च 'नश्च पुराणे प्रात्' इति त्नब्वा । **त्वा** वाम् । **सम् इन्धते** सन्दीपयन्ति । किं च, यः मर्त्यः । **ते** तुभ्यम् । **ददाश** 'दाशृ दाने' ददौ । सः । **त्वया** प्रसन्नेन सता । **विश्वम्** सम्पूर्णम् । **धनम्** । **जयति** प्राप्नोति ।। ४ ।।

**स्कन्द– देवासः** देवाः **त्वा** त्वाम् **वरुणः मित्र अर्यमा** इत्येते **दूतम् प्रत्नम्** पुराणम् **सम् इन्धते** तेजसा दीपितवन्तः । देवा अपि त्वां परिचरितवन्तः । न केवला मनुष्या इत्यर्थः । किञ्च **विश्वम्** बहुनामैतत् (तु.निघ.३,१) । बहु सः हे अग्ने **जयति** स्ववशे करोति । लभत इत्यर्थः । **त्वया** तृतीयानिर्देशादत्र योग्यक्रियाध्याहारः । त्वया अनुगृह्यमाणः । किं जयति । **धनम्** । किं करोति । उच्यते । **यः ते** ददाश हविर्ददाति **मर्त्यः** मनुष्यः ।। ४ ।।

**वेङ्कटमाधव–** वरुणादय देवा त्वाम् **दूतम्** पुराणम् **सम् इन्धते** । तथा य तुभ्य हविः प्रयच्छति मनुष्यः **सः त्वया विश्वम् धनम् जयति** ।। ४ ।।

**मुद्गल–** हे अग्ने! वरुणादयस्त्रय **देवासः** देवा **प्रत्नम्** पुरातनम् **दूतम् त्वा** त्वाम् **सम् इन्धते** सम्यक् दीपयन्ति । **यः मर्त्यः** मनुष्यः यजमानः **ते** तुभ्यम् **ददाश** हविर्दत्तवान्, **सः** यजमानः **त्वया** सहायभूतेन **विश्वम्** सर्वम् **धनम् जयति** ।। ४ ।।

**सायण–** हे **अग्ने** वरुणादयस्त्रयः **देवासः** देवाः **प्रत्नं** पुरातनं **दूतं त्वां सम् इन्धते** सम्यक् दीपयन्ति **यः मर्त्यः** मनुष्यो यजमानः **ते तुभ्यं ददाश** हविर्दत्तवान् **सः** यजमानः **त्वया** सहायभूतेन **विश्वं सर्वं धनं जयति** ।। अर्यमा । अर्यान्मिमीते इत्यर्यमा । 'श्ववक्षन्'

(उ.सू.१.१५७) इत्यादिना कनिन्प्रत्ययान्तो निपातितः । इन्धते । ञिइन्धी दीप्तौ' । अस्मात् लटि झस्य अदादेशे श्नम् । 'श्नान्नलोपः' (पा.सू.६.४.२३) । 'श्नसोरल्लोपः' इति अकार-लोपः । ददाश । 'दाशृ दाने' । लिटि णलि लित्स्वरेण प्रत्ययात्पूर्वस्य आकारस्योदात्तत्वम् । यद्वृत्तयोगादनिघातः ।। ४ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, वरुणः मित्रः अर्यमा,** एते त्रयो **देवासः** देवाः **प्रत्नं** पुरातनं **दूतम् त्वा** त्वाम् **समिन्धते** सम्यग्ज्वलयन्ति । **यः** मर्त्यः मनुष्य **ते** तुभ्यं ददाश दत्तवान् भवति, **सः त्वया** सहायभूतेन सिद्धिं निष्पादयता देवेनेत्यर्थः । **विश्वम् धनम् जयति** विश्वात्मकं धनं, सर्वविधमपि धनं वा जयति । अर्यमा-अर्यान् अरणशीलान् उद्यमिनः पुरुषान् मिमीत इत्यर्यमा, श्वन्नुक्षन्नित्यादिना कनिन्प्रत्ययान्तो निपातितः । इन्धते- ञि इन्धी दीप्तौ । ददाश-दाशृ दाने ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**मन्द्रो होता गृहपतिरग्ने दूतो विशामसि । त्वे विश्वा संगतानि व्रता ध्रुवा यानि देवा अकृण्वत ।। ५, ८ ।।**

**मन्द्रः । होता । गृहऽपतिः । अग्ने । दूतः । विशाम् । असि । त्वे इति । विश्वा । सम्ऽगतानि । व्रता । ध्रुवा । यानि । देवाः । अकृण्वत ।। ५, ८ ।।**

## ऋग्भाष्यम्

............**मन्द्रो महामखः ।। ५, ८ ।।**

**ऋग्भाष्यटीका– मन्द्रः** । अत्र मन्द्रशब्दार्थमाह ।। मन्द्र इति ।। महान्मखो यस्मिन्विषये स महामखः । मदन्त्यनेन देवा इति मन्दो मखः सो अस्यास्तीत्यूषसुषिमुष्कमधोर इत्यत्र योगविभागाद्रः । अन्येन महत्त्वम् । भूमनिन्देत्यादिना वा । हे **अग्ने मन्द्रः** त्वम् । **विशां** प्रजानाम् । **होता** गृहपतिर्दूतश्चासि । किञ्च । **देवाः यानि** ध्रुवाण्यव्यभिचरितानि । व्रतानि कर्माणि **अकृण्वत** अकुर्वत । तानि विश्वानि सर्वाणि । **त्वे** त्वयि । **सङ्गतानि** त्वद्विषयाण्येव ।।

**मन्त्रार्थमञ्जरी–** हे **अग्ने** । **मन्द्रः** महामखः, मन्दन्तेऽनेन देवा इति मन्दो मखः (करणे

घञ्) नुमागमः, 'सोऽस्यास्ति' इत्यर्थे 'ऊषसुषिमुष्कमधो रः' इत्यत्र योगविभागाद्रप्रत्ययः, उपपदान्तलोपः, भूमार्थे मतुप्, महामखः इत्यर्थलानः । त्वम् **विशाम्** प्रजानाम् । **होता** । **गृहपतिः** । **दूतः** च **असि** । किं च, देवाः यानि । **ध्रुवा** ध्रुवाणि, अव्यभिचरितानि । **व्रता** व्रतानि, कर्माणि । **अकृण्वत** अकुर्वत, कृञः श्नुविकरणत्वं छान्दसम् । तानि **विश्वा** विश्वानि, सर्वाणि । **त्वे** त्वयि । **सङ्गतानि** त्वद्विषयाणि । एव इति ।। ५ ।। इत्यष्टमो वर्गः ।।८।।

**स्कन्द– मन्द्रः** मदतिः स्तुत्यर्थः । स्तोता हर्षयिता वा । **होता गृहपतिः** च हे **अग्ने! दूतः** च **विशाम्** मनुष्याणाम् **असि** भवसि । किञ्च त्वे तव **विश्वा** सर्वाणि सङ्गतानि स्तोतृभि यष्टृभिश्च सह सख्यानि **व्रता** कर्माणि च **ध्रुवा** ध्रुवाणि । कतमानि । उच्यन्ते । **यानि देवाः अकृण्वत** कृतवन्त । हविर्वहनादीनि अग्नेः कर्माणि देवैः कृतानि ।। ५ ।।

**वेङ्कटमाधव–** मादयिता **होता गृहपतिः अग्ने! दूतः** मनुष्याणां भवसि । त्वयि विश्वानि कर्माणि ध्रुवाणि **सङ्गतानि** । **यानि देवाः** पृथक् पृथक् कुर्वन्ति वर्षणनियमनोत्क्षेपणादीनि । यानि प्रत्येकं देवाः कृण्वन्ति तानि सर्वाणि त्वयि सङ्गतानि इति ।। ५ ।।

**मुद्गल– हे अग्ने!** त्वम् **मन्द्रः** हर्षहेतुः **होता** देवानामाह्वाता **विशाम्** यजमानरूपाणां प्रजानाम् **गृहपतिः** गृहस्य पालकः **दूतः** देवदूतः असि । **त्वे** त्वयि **विश्वा** व्रता सर्वाणि कर्माणि **सङ्गतानि**, पृथिव्यादयः **देवाः ध्रुवा** ध्रुवाणि स्थिराणि **यानि** कर्माणि **अकृण्वत** कृतवन्तः । पृथिवी धारयति । पर्जन्यो वर्षति । सूर्यः प्रकाशयति । तान्येतानि त्वयि सङ्गतानीति पूर्वत्रान्वयः ।। ५ ।।

**सायण–** हे **अग्ने** त्वं **मन्द्रः** हर्षहेतुः **होता** देवानामाह्वाता **विशां** यजमानरूपाणां प्रजानां **गृहपतिः** गृहस्य पालक **दूतः** देवदूतः **असि** । **त्वे** त्वयि **विश्वा व्रता** सर्वाणि कर्माणि **सङ्गतानि** । 'व्रतं कर्वरम्' (नि.२.१.७) इति कर्मनामसु व्रतशब्दः पठितः । पृथिव्यादयः देवाः ध्रुवा स्थिराणि यानि कर्माणि अकृण्वत कृतवन्तः । पृथिवी धारयति पर्जन्यो वर्षति सूर्यः प्रकाशयति । तान्येतानि स्वयि संगतानीति पूर्वत्रान्वयः ।। गृहपतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । 'सुपां सुलुक्' इति सप्तम्येकवचनस्य शे आदेशः । 'त्वमावेकवचने' इति मपर्यन्तस्य त्वादेशः । 'शेषे लोपः' इति टिलोपपक्षे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम्

अन्त्यलोपपक्षे तु एकादेशस्वरेण । संगतानि । गमेः कर्मणि निष्ठायाम् 'एकाचः' (पा.सू.७.२.१०) इति इट्प्रतिषेधः । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । व्रता ध्रुवा इत्युभयत्र शेर्लोपः । अकृण्वत । 'कृवि हिंसाकरणयोश्च' । व्यत्ययेनात्मनेपदम् । इदित्वात् नुम् । 'धिन्विकृण्व्योर च' इति उप्रत्ययः ।।

**सिद्धाञ्जनम्–** हे **अग्ने,** त्वं **मन्द्रः** मदकारकः हर्षयिता **होता** आह्वाता देवानां **विशाम् प्रजानां गृहपतिः** गृहस्य पालकः **दूतः** देवदूतः **असि** । **त्वे** त्वयि **विश्वा** सर्वाणि **व्रता** कर्माणि देव्यानि **सङ्गतानि** सम्यग्युक्तानि भवन्ति । **यानि ध्रुवा** वा ध्रुवाणि स्थिराणि अव्यभिचारीणि देवाः **अकृण्वत** कृतवन्तः । सर्वदेववृन्दकार्याणि सुनियन्तानि अग्नौ प्रणिहितानि । अत एव अग्निमुखेन तानि सर्वाणि इन्द्रादीनां कर्माणि निष्पाद्यानि भवन्ति । मन्द्रादयो व्याख्याताः । त्वे सप्तम्येकवचनस्य शे आदेशः ।। ८ ।।

।। इति प्रथमाष्टके तृतीयाध्याये अष्टमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वे इदग्ने सुभगे यविष्ठ्य विश्वमा हूयते हविः । स त्वं नो अद्य सुमना उतापरं यक्षि देवान्त्सुवीर्या ।। ६ ।।**

**त्वे इति । इत् । अग्ने । सुभगे । यविष्ठ्य । विश्वम् । आ । हूयते । हविः । सः । त्वम् । नः । अद्य । सुऽमनाः । उत । अपरम् । यक्षि । देवान् । सुऽवीर्या ।। ६ ।।**

### ऋग्भाष्यम्

**देवान्सुवीर्यायजसि ............।। ६ ।।**

**ऋग्भाष्यटीका– त्वे इत्** । अत्र चतुर्थपादं व्याचष्टे ।। देवानिति ।। सुवीर्येति पञ्चम्येकवचनस्य 'सुपां सुलुक्' इत्यादिनाकारादेशः । यजेर्लटि 'बहुलं छन्दसि' इति शपो लुगिति भावः । **हे यविष्ठ्य** व्याख्यास्यते । **अग्ने विश्वं हविः सुभगे** महैश्वर्ये । **त्वे इत्** त्वय्येव । आ सम्यक् । हूयतेऽस्माभिरिति शेषः । स एवमस्माभिर्दत्तहविः सुमनास्त्वमद्य **नः** अस्मदर्थे । **सुवीर्या** सुवीर्यात्कारणाद्देवान् **यक्षि** यजसि । **अपरमुत** आगामिन्यपि काले । यजेति शेषः । सुवीर्यकार्यं ह्येतत् । यदेकस्यैवानेकान्देवान्प्रति युगपदनेकप्रत्तहविःप्रापणम् ।। ६ ।।

**मन्त्रार्थमञ्जरी– हे यविष्ठ्य** यविष्ठेषु स्थितत्वेन हेतुना 'यविष्ठ्य' इत्युक्त विष्णो, यविष्ठशब्दाद्भवार्थे 'भवे छन्दसि' इति यत्प्रत्ययः, 'यस्येति च' इत्यकारलोपः प्रसिद्धाग्निपक्षे ब्रह्माद्यपेक्षयात्यन्तनिकृष्टत्वात् 'यविष्ठ्य' इत्युक्तम् । अग्ने विश्वम् हविः । **सुभगे** महैश्वर्ये । **त्वे इत्** त्वय्येव । **आ** सम्यक् । **हूयते** अस्माभिः इति शेषः । **सः** एवमस्माभिर्दत्तहविः । सुमनाः त्वम् अद्य । **नः** अस्मदर्थे । **सुवीर्या** सुवीर्यात्कारणात् पञ्चम्येकवचनस्य 'सुपां सुलुक्' इत्यादिनाकारादेशः । **देवान्** । **यक्षि** यजसि, यजेः लटि 'बहुलं छन्दसि' इति शपो लुकि कत्वम्, षत्वं च । **अपरम्** उत, आगामिन्यपि काले । यज इति शेषः । सुवीर्यकार्यं ह्येतत् यदेकस्यैवानेकान्देवान्प्रति युगपदनेकदत्तहविःप्रापणम् ॥ ६ ॥

**स्कन्द– त्वे इत्** स त्वं न इति तच्छब्दात् यच्छब्दोऽध्याहार्यः । यस्मिन् त्वयि । इदिति पदपूरणः । हे **अग्ने** । **सुभगे** सुधने । हे **यविष्ठ्य** युवतम **विश्वम्** न बहु सर्वं वा **आ हूयते हविः** । **सः त्वम् नः अद्य सुमनाः** सुचित्तोऽनुग्रहपरः । **उत अपरम्** उतेत्यप्यर्थे । अपरमित्यस्माच्च परो द्रष्टव्यः । अपरमिति च सप्तम्यर्थे द्वितीया । अपरस्मिन्नपि काले । अद्य चागामिनि च काल इत्यर्थः । **यक्षि** यज **देवान् सुवीर्या** तृतीयैकवचनस्य चायमाकारः । शोभनेन आत्मीयेन वीर्येण ॥ ६ ॥

**वेङ्कटमाधव–** त्वयि एव **अग्ने** शोभनधने युवतम सर्वं देवार्थम् **हविः आ हूयते । सः त्वम् नः अद्य सुमनाः** अपि च **अपरम्** श्वश्च । यज **देवान्** शोभनेन वीर्येण ॥ ६ ॥

**मुद्गल– हे यविष्ठय!** युवतम । **अग्ने** । **सुभगे** शोभनभाग्ययुक्ते **त्वे इत्** त्वय्येव **विश्वम्** सर्वम् **हविः आ हूयते** सर्वत प्रक्षिप्यते । **सः त्वम् नः** अस्मान् प्रति **सुमनाः** शोभनमनस्को भूत्वा **अद्य** अस्मिन् दिने **उत** अपि च **अपरम्** अहत्यादिकमुत्तर कालम् सर्वस्मिन्नपि काले नैरन्तर्यण **सुवीर्या** शोभनवीर्योपेतान् **देवान् यक्षि** यज ॥ ६ ॥

**सायण–** हे यविष्ठ्य युवतम **अग्ने सुभगे** सौभाग्ययुक्ते **त्वे इत्** त्वय्येव **विश्वं** सर्वं **हविः आ हूयते** सर्वतः प्रक्षिप्यते । सः **त्वं नः** अस्मान्प्रति **सुमनाः** शोभनमनस्को भूत्वा **अद्य** अस्मिन् दिने **उत** अपि च अपरं श्वः परश्व इत्यादिकमुत्तरं कालं सर्वस्मिन्नपि काले नैरन्तर्येण **सुवीर्या** शोभनवीर्योपेतान् **देवान् यक्षि** यज ॥ सुभगे । शोभनो भगो यस्येति बहुव्रीहौ

आद्युदात्तत्वम् । यविष्ठय । युवशब्दात् इष्ठन् । स्थूलदूर इत्यादिना यणादेः परस्य लोपः पूर्वस्य च गुणः । छान्दसो यकारोपजनः । यक्षि । 'बहुलं छन्दसि' इति शपो लुक् । सुवीर्या । शोभनं वीर्यं येषाम् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । 'सुपां सुलुक्' इति विभक्तेः आकारः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **यविष्ठ्य** युवतम, **अग्ने, सुभगे** सौभाग्यसम्पन्ने **त्वे इत्** त्वय्येव **विश्वम्** **सर्वं हविः** देवेभ्यो देयं सोमरूपं द्रव्यं **आहूयते** सर्वतः हुतं भवति, प्रक्षिप्यत इत्यर्थः । स त्वं तादृशस्त्वं **नः** अस्मान् प्रति **सुमनाः** शोभनमनस्कः सन् **अद्य** इदानीं उत **अपरम्** इतः परमपि **सुवीर्या** शोभनवीर्योपेतान् **देवान् यक्षि** यज । यविष्ठ्य-युवशब्दादिष्ठन्, यकारोपजनश्छान्दसः । यक्षि-शपो लुक्, छन्दसि बहुलम् । सुवीर्या-सुपां सुलुगिति विभक्तेराकारः ।।

## ऋक्संहिता पदपाठसहिता

**तं घेमित्था नमस्विन उप स्वराजमासते । होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ।। ७ ।।**

**तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते । होत्राभिः । अग्निम् । मनुषः । सम् । इन्धते । तितिर्वांसः । अति । स्रिधः ।। ७ ।।**

## ऋग्भाष्यम्

**.........तं हि त्वामेव सर्वदा ।**
**उपासते नमस्यन्तः सन्तस्तीर्णास्तु संसृतेः ।**
**स्रिधो ह्यतितितिर्वांसस्तीर्णदुःखा इहैव वा ।**
**त्वत्प्रसादेन विद्वांसः प्राप्य ब्राह्मण्यमुत्तमम् ।। ७ ।।**

**ऋग्भाष्यटीका–** **तं घ** । तं हि । हे अग्ने ये मनुषः सन्तो मनुष्याः । **स्वराजं** तमुक्तगुणमग्निं त्वामीम् एव । **इत्था** निर्विकारतया । सर्वदेति यावत् । **नमस्विनो** नमस्यन्तः । उपासते । होत्राभिराह्वानरूपाभिर्ऋग्भिः समिन्धते प्रकाशयन्ति च । ते तु स्रिधो बन्धनात् अति तितिर्वांसोऽथ संसृतेस्तीर्णा हि । प्रकारान्तरेण व्याचष्टे । स्रिध इति । ये मनुष इत्था तं त्वामीमेव । **नम-**

**स्विनस्ते स्वराजं** स्वराष्ट्रम् उत्तमं ब्राह्मण्यमिति यावत् । **उपासते** प्राप्नुवन्ति । प्राप्य च होत्राभिः समिंधते दीप्ता विद्वांसो भवन्ति । ततस्त्वत्प्रसादेन **स्रिधोऽतितितिर्वांसो** हि । कोऽर्थः । इहैव जन्मनि तीर्णदुःखाः जीवन्मुक्ता जाता हीति ।। ७ ।।

**मन्त्रार्थमञ्जरी–** हे अग्ने **मनुषः**, सन्तो मनुष्याः । **स्वराजम्** । **तम्** उक्तगुणम् । अग्निम् त्वाम् **घ ईम्** एव । **इत्था** निर्विकारतया, सर्वदेति यावत् । **नमस्विनः** नमस्यन्तः । **उप आसते** प्राप्नुवन्ति । प्राप्य च **होत्राभिः**, वाग्भिः **सम् इन्धते** दीप्ता विद्वांसो भवन्ति । ततस्त्वत्प्रसादेन **स्रिधः अतितितिर्वांसः** हि कोऽर्थः ? इहैव जन्मनि तीर्णदुःखा जीवन्मुक्ता जाता हि इति ।। ७ ।।

**स्कन्द– तम्** अग्निम् । **घ ईम्** इति पदपूरणौ । **इत्था** सत्यनामैतत् (तु.निघ.३,१०) । सत्यम् । **नमस्विनः** स्तुतिमन्तः । **स्वराजम्** स्वदीप्तम् **उप आसते** स्तुतिभिः परिचरन्ति । स्तुवन्तीत्यर्थः । न च स्तुवन्त्येव केवलम् । किं तर्हि । **होत्राभिः** यज्ञनामैतत् आहुतिलक्षणेषु यागेषु वर्तते । आहुतिभिश्च । **अग्निम् मनुषः** मनुष्या **सम् इन्धते** सन्दीपयन्ति । **तितिर्वासः** अग्निप्रसादादेव निस्तीर्णवन्तः । अथवा तिरति इति वधकर्मसु पाठात् (तु.निघ.२,१९) तिरतिरत्र वधार्थः । हतवन्तः । **अति** सुष्ठु । कान् । **स्रिधः** स्रेधतिः क्षयार्थः शोषणार्थो वा । क्षपयितॄन् शोषयितॄन् वा । बलवतः शत्रूनित्यर्थः ।। ७ ।।

**वेङ्कटमाधव– तम्** ह एनम् इत्थम् हविष्मन्तः **उप आसत स्वराजम्** । वाग्भिः **अग्निम्** मनुष्याः प्रज्वलयन्ति अतितरन्तः शत्रून् ।। ७ ।।

**मुद्गल– हे अग्ने! नमस्विनः** अश्वयुक्तास्तादृशा यजमानाः **स्वराजम्** स्वतो दीप्यमानम् **तम् घ ईम्** तमेव पूर्वोक्तसर्वगुणविशिष्टं त्वाम् **इत्था** अनेन प्रकारेण हविष्यदानादिरूपेण **उप आसते** । मनुषः मनुष्या यजमाना **होत्राभिः** होत्रादिभिः सप्तभिर्वषट्कर्तृभिः **अग्निम्** त्वाम् **सम् इन्धते** सम्यग्दीपयन्ति । कीदृशा मनुष्या । **स्रिधः** शत्रून् **अति तितिर्वासः** अतिशयेन तरन्तः ।। ७ ।।

**सायण–** हे **अग्ने नमस्विनः** अन्नयुक्ता नमस्कारयुक्ता वा । 'नमः आयुः सूनृता' (नि.२.७.२२) इति अन्ननामसु पाठात् नमःशब्दस्यान्नवाचित्वम् । तादृशा यजमानाः **स्वराजं** स्वतो

दीप्यमानं **तं घें** तमेव पूर्वोक्तसर्वगुणविशिष्टं त्वाम् **इत्था** अनेन प्रकारेण हविष्प्रदानादिरूपेण **उप आसते** । **मनुषः** मनुष्याः यजमानाः **होत्राभिः** सप्तभिर्वषट्कर्तृभिः । सप्त होत्राः प्राचीर्वषट्कुर्वन्ति' (ते.बा.२.३.६.४) इति श्रुत्यन्तरात् । **अग्निं** त्वां **समिन्धते** सम्यग्दीपयन्ति । कीदृशा मनुष्याः । **स्रिधः** शत्रून् **अति तितिर्वासः** अतिशयेन तरन्तः ।। नमस्विनः । अस्मायामेधा इति मत्वर्थीयो विनिः । स्वराजम् । स्वभासा राजते इति स्वराट् । 'सत्सूद्विष' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आसते । 'आस उपवेशने' । अदादित्वात् शपो लुक् । तितिर्वांसः । 'तॄ प्लवनतरणयोः' । 'छन्दसि लिट्' इति वर्तमाने लिट् । तस्य 'क्वसुश्च' इति क्वसुः । 'वस्वेकाचाद्धसाम्' इति नियमात् इडभावः । 'ऋत इद्धातोः' इति इत्वम् । 'ऋच्छत्यृताम्' (पा.सू.७.४.११) इति गुणः 'हलि च' (पा.सू.८.२.७७ ) इति दीर्घत्वं च न भवति, 'संज्ञापूर्वको विधिरनित्यः' इति तयोरनित्यत्वात् । यद्वा । तिरतिः प्रकृत्यन्तरं द्रष्टव्यम् । स्रिधः । 'स्रिधु शोषणे' । 'क्विप् च' इति क्विप् ।। ७ ।।

**सिद्धाञ्जनम्–** हे अग्ने, **नमस्विनः** नमस्कारयुक्ताः मर्वया प्रणताः प्रपन्ना इति यावत्, तादृशाः पुरुषाः **स्वराजम्** स्वतः राजमानं दीप्यमानं तं **घ ईम्** तमेवैनं त्वां इत्था अनेन प्रकारेण **उपासते** उपासीना आश्रयन्ते । **स्रिधः** शत्रून् **अति तितिर्वांसः** अतिशयेन तरन्तः **मनुषः** मनुष्याः **अग्निम्** त्वां **होत्राभिः** आह्वात्रीभिर्वाग्भिः **समिन्धते** सम्यग्दीपयन्ति । स्तोतुर्वाग्भिः हृदयस्थोऽग्निर्ज्वलितो भवति खलु । सप्त होत्राः वपट्कुर्वन्ती इति प्राहुर्याजिकाः । अन्तर्यागे सप्त वाचः सप्त वाणीरिति प्रथिताः तत्वसप्तकसम्बद्धाः ज्ञेयाः ।। नमस्विनःमत्वर्थीयो विनिः । तितिर्वासः- तरतेः तिरतेर्वा लिटि क्वसुः, अन्यत्सर्वं छान्दसम् । स्रिधः-स्रिधु शोषणे, क्विप् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**घ्नन्तों वृत्रमंतरन्रोदंसी अप उरु क्षयांय चक्रिरे ।**
**भुवत्कण्वे वृषां द्युम्न्याहुंतः क्रन्ददश्वो गविंष्टिषु ।। ८ ।।**

घ्नन्तंः । वृत्रम् । अतरन् । रोदंसी इतिं । अपः । उरु । क्षयांय । चक्रिरे । भुवंत् । कण्वें । वृषां । द्युम्नी । आऽहुंतः । क्रन्दंत् । अश्वंः । गोऽइंष्टिषु ।। ८ ।।

## ऋग्भाष्यम्

तमो घ्नन्तो तरँल्लोकानपः कर्माणि चोत्तमाः ।
उरुब्रह्मक्षितित्वेन चक्रुस्तत्रैव संस्थितेः ।
वृषा स भगवान्विष्णुर्मुनौ कण्वेऽभवत्स्थितः ।
क्रन्ददश्वस्वरूपश्च ज्ञानस्यान्वेषणे कृते ।
ततः कण्वान्निस्सरन्ति शुद्धावेदानुगा गिरः ।
द्युतिमत्त्वात्स तु द्युम्नी............ ।। ८ ।।

**ऋग्भाष्यटीका– घ्नन्तः** । **तमः** । ये उत्तमाः पुरुषाः **अपः** कर्माणि । उपलक्षणमेतत् । मनः प्रभृति च । **उरुक्षयाय** उरुः पूर्णस्त्वमेव क्षय आश्रयस्तस्मै । उरु ब्रह्मक्षितित्वेन । तत्र त्वय्येव सन्तेर्निष्ठयेति यावत् । **चक्रिरे** चक्रुः । ते वृत्रं तमोऽज्ञानं वा । घ्नन्तो रोदसी द्यावा-पृथिव्यौ तद्गतांल्लोकान् जनान् **अतरन्** अत्यशेरत । स एवं स्वाराधकानतिशयितान्कुर्वन् वृषा श्रेष्ठो द्युम्नी भगवान्विष्णुः । क्रन्ददश्वः क्रन्ददश्वस्वरूप एव । सर्वदा वेदानुच्चारयद्धयग्रीवरूपं तेनेति यावत् । कण्वे मुनौ मयि । आहुतः आहितः स्थितो **भुवत्** अभवत् । किं निमित्तं गविष्टिषु गोर्ज्ञानस्येष्टिष्वन्वेषणेषु प्रार्थनेषु कृतेषु कण्वेनेति शेषः । सिद्धं चैतत्तस्य प्रयोजनमित्याह भाष्यकारः । **तत इति** । हयशिरसः सन्निधानात् । शुद्धा इत्यस्यैव विवरणम् । **वेदानुगा इति** । पूर्वाभ्यस्तवेदात्यन्तसादृश्यवत्यः । यद्वा गोशब्दो गिरां वाचक इति भावेन गविष्टिष्वित्यस्य तात्पर्यमिदम् । द्युम्नी कुत इत्यत आह ।। **द्युतीति** ।। द्युम्नं द्युतिः ।। ८ ।।

**मन्त्रार्थमञ्जरी–** हे अग्ने ये उत्तमाः पुरुषाः । अपः, कर्माणि, उपलक्षणमेतत् मनः प्रभृति च । **उरु क्षयाय** य उरुः पूर्णस्त्वमेव क्षय आश्रयस्तस्मै, त्वद्विषयाण्येवेति यावत्, 'क्षिनिवासगत्योः' भावेऽच्प्रत्ययः । **चक्रिरे** चक्रुः । ते **वृत्रम्** अज्ञानाख्यं तमः । घ्नन्तः । **रोदसी** द्यावापृथिव्यौ, तद्गताञ्जनान् । **अतरन्** अत्यशेरत । सः एवं स्वाराधकानतिशयिता-न्कुर्वन् । **वृषा,** श्रेष्ठः । **द्युम्नी** द्युम्नं द्युतिः, तद्वान्भगवान्विष्णुः । क्रन्दत् अश्वः क्रन्ददश्वस्वरूप एव, सर्वदा वेदानुच्चारयन्हयग्रीवरूपः । **गविष्टिषु,** गोर्ज्ञानस्य गवां वेदगिरां वेष्टिष्वन्वेषणेषु प्रार्थनेषु मया कृतेषु । **कण्वे,** मुनौ मयि । **आहुतः** स्थितः । **भुवत्** अभवत्, ज्ञानादिसम्पत्त्यर्थम् इति भावः ।। ८ ।।

**स्कन्द– घ्नन्तः** न पलायमानम् **वृत्रम् अतरन्** निस्तीर्णवन्तः । के । सामर्थ्यात् अग्नेः स्तोतारो यष्टारश्च । किञ्च **रोदसी अपः** अपः इत्येतदन्तरिक्षनाम द्वितीयाबहुवचनान्तम् । बहुवचनान्तमेव हि 'आपः' (निघ.१,३) इत्यन्तरिक्षनामसु पठितम् । द्यावापृथिव्यौ चान्तरिक्षं च । कीदृशाम् । **उरु** विस्तीर्णम् । **क्षयाय** निवासाय आत्मनः **चक्रिरे** कृतवन्तः । अग्निप्रसादात् त्रिष्वपि लोकेषु यथाकामं न्यवसन्नित्यर्थः । यत एवमतो ब्रवीमि– **भुवत्** भवतु । **कण्वे षष्ठ्यर्थे** सप्तम्येषा । ममापि कण्वस्य । **वृषा** कामानां वर्षिता । दातेत्यर्थः । **द्युम्नी** द्युम्नं द्योततेः । यशो वा अन्नं वा धनवान् वा । तद्वान् । यशस्वी अन्नवान् धनवान् वा इत्यर्थः । **आहुतः** आङ् मर्यादावचनः । मर्यादया हुतः सन् । किं कुर्वन् । उच्यते । **क्रन्दत्** कदि क्रदि क्लदि आह्वाने । शत्रन्तं चेदं द्रष्टव्यम् । क्रन्दन् आह्वयन् देवान् । **अश्वः** लुप्तोपममेतत् द्रष्टव्यम् । अश्व इव महता शब्देनेत्यर्थः । अथवा अश्वशब्दोऽत्र क्रियाशब्दः । अष्टा व्याप्ता । क्व । उच्यते । **गविष्टिषु** गावः सोमाः, ते यत्रेष्यन्ते देवताभिः, गावो वा याभिरिष्यन्ते यजमानैः, ताः गविष्टयः, तासु । यज्ञेष्वित्यर्थः । अथवा क्रन्ददित्याख्यातम् पादादित्वात्त्वनिघातः । क्रन्दत् । क्रन्दतु आह्वयतु च देवता यज्ञेष्वित्यर्थः ।। ८ ।।

**वेङ्कटमाधव– घ्नन्तः** उपद्रवम् **अतरन्** द्यावापृथिव्यौ अन्तरिक्षं च । विस्तीर्णम् निवासाय स्थानं कुर्वन्ति स्तोतारोऽग्नेः । सोऽग्निरधुना **कण्वे** मयि वर्षिता भवतु अन्नवान् **आहुतः** । गवामन्वेषणेषु **क्रन्दत् अश्वः** यथा शब्दायमानोऽश्वो गाः साधयति तद्वत् साधयिता ।।८।।

**मुद्गल– हे अग्ने! घ्नन्तः** त्वत्सहायेनेतरे देवाः प्रहरन्तः **वृत्रम् अतरन्** तीर्णवन्तः । तदनन्तरम् **रोदसी** द्यावापृथिव्यौ **अपः** अन्तरिक्षं च **क्षयाय** प्राणिनां निवासार्थम् **उरु** विस्तारो यथा भवति तथा **चक्रिरे** । भवांस्तु **कण्वे** कण्वनामके महर्षौ **वृषा** कामानां वर्षिता **द्युम्नी** धनवान् **आहुतः** सर्वतो होमयुक्तश्च **भुवत्** भवतु । दृष्टान्तः । **गविष्टिषु** गोविषयेच्छायुक्तेषु सङ्ग्रामेषु **अश्वः क्रन्दत्** शब्दं कुर्वन् यथाभीष्टप्रापकस्तथेति शेषः ।। ८ ।।

**सायण– हे अग्ने घ्नन्तः** स्वत्सहायेनेतरे देवाः प्रहरन्तः **वृत्रम् अतरन्** तीर्णवन्तः । तदनन्तरं **रोदसी** यावापृथिव्यौ **अपः** अन्तरिक्षं च **क्षयाय** प्राणिनां निवासार्थम् उरु विस्तारो यथा भवति तथा चक्रिरे । अपशब्दोऽन्तरिक्षवाची । 'आपः पृथिवी'(नि.१.३.८) इति तन्नामसु पठितत्वात् । भवांस्तु **कण्वे** कण्वनामके महर्षौ **वृषा** कामानां वर्षिता **द्युम्नी** धनवान् **आहुतः**

सर्वतो होमयुक्तश्च **भुवत्** भवतु । तत्र दृष्टान्तः । **गविष्टिषु** गोविषयेच्छायुक्तेषु संग्रामेषु **अश्वः क्रन्दत्** शब्दं कुर्वन् यथाभीष्टप्रापकस्तथेति शेषः । घ्नन्तः । हन्तेः शतरि 'गमहन' इत्यादिना उपधालोपः । 'हो हन्तेर्ञ्णिन्नेषु' (पा.सू.७.३.५४) इति घत्वम् । **अपः** । 'ऊडिदम्' इति शस उदात्तत्वम् । **क्षयाय** । 'क्षि निवासगत्योः' । क्षियन्ति निवसन्त्यस्मिन्निति क्षयो निवासस्थानम् । 'पुंसि संज्ञायां घः प्रायेण' इति घः । 'क्षयो निवासे' (पा.सू.६.१.२०१) इत्याद्युदात्तत्वम् । **भुवत्** । भवतेर्लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । 'बहुलं छन्दसि' इति शपो लुक् । 'भूसुवोस्तिङि' (पा.सू.७.३.८८) इति गुणप्रतिषेधः । अडागमस्य अनुदात्तत्वे धातुस्वरः । आहुतः । आहूयते इति **आहुतः** । 'हु दानादनयोः'। कर्मणि क्तः । 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । **क्रन्दत्** । 'कदि क्रदि क्लदि आह्वाने' । शतरि नुमभाव छान्दसः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । **गविष्टिषु** । 'इषु इच्छायाम्' । एषणम् इष्टिः । गवामिष्टिर्येषु सङ्ग्रामेषु । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ८ ।।

**सिद्धाञ्जनम्–** हे अग्ने, **घ्नन्तः** प्रहरन्तः **वृत्रम् अतरन्** तीर्णवन्तः त्वत्साहाय्येन देवाः । ततः परं **रोदसी** द्यावापृथिव्यौ **अपः** अपां स्यन्दनभुवश्च **क्षयाय** निवासाय **उरु** विस्तृतं यया तथा **चक्रिरे** कृतवन्तः । वृत्रवधात्परं द्यौः भूमिः आपश्च आवरणरहिताः बन्धाद्विमुक्ता वा यथासम्भवं कृताः । तेन तत्र सर्वत्र देवानां देवकामानां ऋषीणां वासयोग्यता जायते । भवान् **कण्वे** मेधाविनि यजमाने, एतन्नामनि मयि च, **वृषा** वर्षिता कामानां **द्युम्नी** दीप्तिमान्, **गविष्टिषु** गवेषणेषु गोलाभे निमित्तभूते **क्रन्दत्** क्रन्दन् शब्दं कुर्वन् **अश्वः** जेता विशिष्टक्रियाशक्तिः प्राणात्मा **आहुतः** सर्वतो होमयुक्तः, अत एव सन्तर्पितः **भुवत्** भवतु ।। घ्नतः-हन्तेः शतरि प्रथमाबहुवचनम् । भुवत्भवतेर्लेट् । द्युम्नी-द्युम्नं प्रकाशो दीप्तिर्वा अस्येति । आहुतः -हु दानादनयोः कर्मणि क्तः । क्रन्दत्- शतरि नुमभावः छान्दसः । गविष्टिषु-गवां इष्टिः एषणं येषु कार्येषु, बहुव्रीहिः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**सं सीदस्व महाँ असि शोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ।। ९ ।।**

सम् । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः । वि । धूमम् । अग्ने । अरुषम् । मियेध्य । सृज । प्रऽशस्त । दर्शतम् ॥ ९ ॥

## ऋग्भाष्यम्

..................देवेषु ज्ञानवत्तमः ।
सत्वं शोचस्व दीप्यस्व धूमः संसारधूत्कृतेः ।
अरुषो रोषहीनत्वाद्धूमश्चेच्छुभगन्धनात् ॥ ९,१०,९ ॥

**ऋग्भाष्यटीका– संसीदस्व** । देवेषु । हे मियेध्य मेध्य प्रशस्त स्तुताग्ने । यस्त्वं देववीतमः वीगतौ ततः क्विप् गतिश्च ज्ञानम् अतिशयेन वीर्वीतमः । देवेषु वीतमो देववीतमः । देवेषु ज्ञानवत्तमोऽसि । अन्यैश्च गुणैर्महानसि । सत्वमिह यज्ञे । **संसीदस्व** सन्निहितो भव । शोचस्व दीप्यस्व च । अनेकार्थत्वात् । विष्णुपक्षे धूममरुषं दर्शतं त्वत्साक्षात्कारमस्माकं विशेषेण सृजेति योजना । तत्र दर्शनस्य कथं धूमत्वादिकमित्यत आह ॥ **धूम इति** ॥ दर्शतशब्दोक्तेश्वर-साक्षात्कारः संसारस्य धूत्कृतिर्यतस्तस्माद्धूमः धुनोतीति । घञर्थैकविधानमिति रुषो रोषः । तद्धीनत्वं च तत्सामानाधिकरण्याभावः । अग्निपक्षे तु दर्शतं दृष्टिगोचरम् । अरुषं धूमं विसृजेति । तत्र धूमस्यारुषत्वं कथमित्यत आह ॥ **धूमश्चेदिति** ॥ प्रसिद्धधूमश्चेदत्र विशेष्यो विवक्षितस्तदा शुभगन्धनादाज्याद्युद्भूतशुभगन्धवत्त्वादरुषः । अरुषत्वेन निर्दोषत्वं तेन शुभगन्धनं लभ्यत इति ॥

**मन्त्रार्थमञ्जरी–** हे **मियेध्य प्रशस्त,** स्तुत । अग्ने । यः त्वम् । **देववीतमः,** 'वी गतौ' ततः क्विप्, गतिश्च ज्ञानम्, अतिशयेन वीर्वीतमः, देवेषु वीतमः ज्ञानवत्तमः । असि । अन्यैश्च गुणैः महान् असि सः त्वम् । सह यज्ञे । **सम् सीदस्व,** संनिहितो भव । **शोचस्व,** दीप्यस्व, अनेकार्थत्वाद्धातूनाम् । अग्निपक्षे **दर्शतम्** दृष्टिगोचरम्, दृशेः अतच्प्रत्ययः । अरुषम्, रुषो रोषः, तद्धीनम्, निर्दोषमिति यावत्, तेन आज्याद्युद्भूतशुभगन्धवत्त्वलाभः, शुभगन्धवन्तम् । धूमम् । विष्णुपक्षे धूनोति संसारमिति धूमः, 'धूञ् कम्पने' (ताच्छील्ये मः' (म०व्या०सू०) इति मप्रत्ययः, (तम्धूमम्) संसारनिवर्तकम् । **अरुषम्,** रुषो रोषः, 'घञर्थे कविधानम्' इति कप्रत्ययः, अरुषं निर्दोषम् । दर्शतम्, भावेऽतच्प्रत्ययः, त्वदपरोक्षज्ञानम् । वि विशेषेण । सृज । इति योजना ॥ ९ ॥

**स्कन्द– सम् सीदस्व** अस्मद्वेद्याम् । किं कारणम् । यस्मात् **महान् असि** । संसद्य च **शोचस्व** दीप्यस्व । **देववीतमः** वेतिर्गत्यर्थः कान्त्यर्थो वा । अतिशयेन देवान् प्रति गन्ता कामयिता वा देवानाम् । शोचमानश्च अर्धदग्धानां हविषां **धूमम् हे अग्ने! अरुषम्** रुशतेः रोचतेर्वा आङ्पूर्वस्य अरुषशब्दः । स्वदीप्त्या दीप्तम् । बहुलमित्यर्थः । अथवा अरुषतेर्गतिकर्मणः । (तु.निघ.२,१४) अरुषो गन्ता । दिवं प्रति गन्तारम् । दिवस्पृशमित्यर्थः । **हे मियेध्य** । मेध्य! यज्ञार्ह! **वि सृज** विमुञ्च । **हे प्रशस्त! दर्शतम्** दर्शनीयम् ॥ ९ ॥

**वेङ्कटमाधव– सम् सीदस्व** । **महान् असि** । ज्वल अतिशयेन देवान् प्रति गन्ता । **वि सृज धूमम् अग्ने** । आरोचमानं यज्ञिय! **प्रशस्त!** दर्शनीयम् ॥ ९ ॥

**मुद्गल–** हे अग्ने! **सम् सीदस्व** बर्हिषि उपविश । **महान् असि** गुणाधिको भवसि । **देववीतमः** अतिशयेन देवान् कामयमानः **शोचस्व** दीप्यस्व । हे **मियेध्य!** मेधार्ह! **प्रशस्त!** उत्कृष्ट! **अग्ने! अरुषम्** गमनशीलम् **दर्शतम्** दर्शनीयम् **धूमम् वि सृज** विशेषेण सम्पादय ॥

**सायण–** हे अग्ने **सं सीदस्व** बर्हिष्युपविश । **महान् असि** गुणाधिको भवसि । **देववीतमः** अतिशयेन देवान् कामयमानः **शोचस्व** दीप्यस्व । हे **मियेध्य** मेधार्ह **प्रशस्त** उत्कृष्ट **अग्ने** अरुषं गमनशीलं **दर्शतं** दर्शनीयं **धूमं वि सृज** विशेषेण सम्पादय ॥ सीदस्व ॥ 'षद्लृ विशरणगत्यवसादनेषु' । व्यत्ययेनात्मनेपदम् । प्रार्थनायां लोटि शपि 'पाघ्रा' इत्यादिना सीदादेशः । महान् । संहितायां नकाराकारयोः रुवानुनासिकौ उक्तौ । शोचस्व । 'शुच दीप्तौ' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । तिङः परत्वात् निघाताभावः । देववीतमः । 'वी गतिप्रजनकान्त्यशनखादनेषु' । देवान् वेति गच्छतीति देववीः । 'क्विप् च' इति क्विप् । अतिशयेन देववीर्देववीतमः । तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरस्त्वम् । अरुषम् अरोपणम् । 'रिष रुष हिंसायाम्'। 'घञर्थेकविधानम्' इति भावे कप्रत्ययः । नास्ति रुषोऽस्येति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मियेध्य । 'छन्दसि च' इति अर्हार्थे यप्रत्ययः । मकारात्परः इयागमश्छान्दसः । सृज । 'सृज विसर्गे' । तुदादित्वात् शः । विकरणस्वरः । पादादित्वादनिघातः । दर्शतम् । 'भृमृदृशि' इत्यादिना दृशेः कर्मणि अतच्प्रत्ययः ॥ ९ ॥

**सिद्धाञ्जनम्– हे अग्ने, सं सीदस्व** सम्यगुपविश, **महान् असि** विभवैर्वृ हन् भवसि ।

**देववीतमः** अतिशयेन देवान् कामयमानः सन् **शोचस्व** दीप्यस्व । हे **मियेध्य** मेधार्ह, **प्रशस्त** उत्कृष्ट, **अरुषम्** रोचमानं **दर्शतम्** दर्शनीयं **धूमम्** ऊर्ध्वेगेन बाष्पगतिप्रायो यः कम्पो जायते, **तं वि सृज** विशेषेण सम्पादय । अवयवार्थानुसारेण धूमशब्दस्य गूढोऽर्थः प्रागुक्तः (१.२७. ११) । सीदस्व-व्यत्ययेन आत्मनेपदम् । महान्-संहितायां नकाराकारयोः रुत्वानुनासिकौ उक्तौ । शोचस्व-शुच दीप्तौ । देववीतमः देवान् वेति गच्छति कामयते वा देववीः क्विप्, अतिशयेन देववीः, तमप् । अरुषम् व्याख्यातम् (१.६.१)। मियेध्य-अर्हार्थे यत्प्रत्ययः, मपर इयगागमश्छान्दसः ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**यं त्वा॑ दे॒वासो॒ मन॑वे द॒धुरि॒ह यजि॑ष्ठं हव्यवाहन ।**
**यं कण्वो॒ मेध्या॑तिथिर्धनस्पृतं॒ यं वृषा॒ यमु॑पस्तु॒तः ॥ १०, ९ ॥**
**यम् । त्वा । दे॒वासः॑ । मन॑वे । द॒धुः । इ॒ह । यजि॑ष्ठम् । ह॒व्य॒ऽवा॒ह॒न । यम् । कण्वः॑ । मेध्य॑ऽअतिथिः । ध॒न॒ऽस्पृत॑म् । यम् । वृषा॑ । यम् । उ॒प॒ऽस्तु॒तः ॥ १०, ९ ॥**

## ऋग्भाष्यम्

**यं त्वा** । हे **हव्यवाहन** यं यजिष्ठं त्वामिह लोके देवा मनवे मनोरर्थे दधुराहितवन्तः । यं च त्वां **धनस्पृतं** धनस्पृशं धनिकम् । **कण्वः** कण्वपुत्रो मेध्यातिथिर्मेधातिथिश्च दधौ । **यं त्वाम्** । वृषादधौ । यं चोपस्तुतो दधौ स इति पूर्वत्रान्वयः ॥ १०,९ ॥

**मन्त्रार्थमञ्जरी–** हे हव्यवाहन यम् । **यजिष्ठम्,** व्यत्ययात् यविष्ठम्, कनीयांसम् । त्वा त्वाम् । इह, लोके । **देवासः,** देवाः मनवे, मनोरथे । **दधुः** आहितवन्तः यम् (च) त्वा त्वाम् । **धनस्पृतम्,** धनस्पृशम्, धनिकम् । **कण्वः,** कण्वपुत्रः । **मेध्यातिथिः** च दधौ आहितवान् । यम् च । **त्वा** त्वाम् । **दधौ** यम् च त्वा त्वाम् । उपस्तुतः दधौ 'सः' इति पूर्वेण अन्वयः । भाष्यकृदव्याख्यातेयम् ऋक् ॥ १० ॥

**स्कन्द–** अत्रेतिहासमाचते– 'देवाः सत्रमागत । ते तत्राग्निमैन्धत । ते तेजस्वन्तोऽग्निं मनवे प्रादुः । तं । मनुरैन्ध । तम् ऋषय ऋषिपुत्राश्च श्रुतऋषय प्रावचनाश्चेति । तत्र यत्

इन्धनं तत् दर्शपूर्णमासयोरावाहननिगदे दृश्यते । 'देवेद्धो मन्विद्धः' (तै.ब्रा.३,५,३,१) इति' इति । यत्तु मनवे दानं तदयमर्धर्चं आह– **यम् त्वा देवासः मनवे दधुः** दत्तवन्तः **इह** । लोके इत्यर्थः । अथवा मनुशब्दो मनुष्यपर्यायः । तादर्थ्ये चतुर्थी । दधुरित्यपि दधातिर्निधानार्थः । यं त्वा देवा मनुष्याणामर्थाय इह लोके विनिहितवन्तः इत्यर्थः । कीदृशम् । **यजिष्ठम्** यष्टृतमम् । **हे हव्यवाहन** । हविषां वोढः । यम् च वण्वः सोऽयमित्यभिसम्बन्धात् पुत्रेऽयं पितृशब्दः प्रयुज्यते । काण्वो मेध्यातिथिर्नाम ऋषिः । अथवा कण्वश्च मेध्यातिथिश्च । किम् । ईध इति शेषः । कुत एतत् । साकाङ्क्षत्वात् उत्तरस्यां चर्चि दर्शनात् । कीदृशम् । **धनस्पृतम्** । स्पृ प्रीतिपालनयोः । धनस्य पालयितारं धनेन वा प्रीणयितारं यजमानानाम् । दानार्थे वा सामर्थ्यात् स्पृणोतिः । धनस्य दातारमित्यर्थः । न च केवलो मेध्यातिथिः । किन्तर्हि **यम् वृषा** नाम ऋषिरीधे । यम् च उपस्तुतः नाम ऋषिः । किं तस्येति । संसीदस्वेति पूर्वयचैकवाक्यता, तच्छब्दश्रुते । परया न, तदीयस्य आद्यस्य अर्धर्चस्यास्य च तुल्यार्थत्वात् पौनरुक्त्यप्रसङ्गात् ।। १० ।।

**वेङ्कटमाधव– यम् त्वा** देवाः **मनवे** निदधुः अस्मिन् लोके यष्टृतमं हविषां वोढः! **यम्** च कण्वपुत्रः **मेध्यातिथिः** धनस्य स्रष्टारं निदधे, **यम् च वृषा, यम् च उपस्तुतः** ।।१०।।

**मुद्गल–** हे **हव्यवाहन**! ओ । **मनवे** मनोरनुग्रहाय **देवासः** सर्वे देवाः **यजिष्ठम्** अतिशयेन पूज्यम् **त्वा** त्वाम् **इह** देवयजनदेशे **दधुः** धृतवन्तः । **मेध्यातिथिः** मेधार्हैरतिथिभिर्युक्तः **कण्वः** एतन्नामको महर्षिः **यम्** त्वाम् **धनस्पृतम्** धनेन प्रीणयितारं कृत्वा दधे इति शेषः । तथा **वृषा इन्द्रः यम्** त्वां दधे । तथा **उपस्तुतः** अन्योऽपि स्तोता यजमानो **यम्** त्वां दधे । स त्वं सं सीदस्वेति पूर्वत्रान्वयः ।। १० ।।

**सायण–** हे **हन्यवाहन** हविषो वाहकाग्ने **मनवे** मनोरनुग्रहाय **देवासः सर्वे देवाः यजिष्ठम्** अतिशयेन पूज्यं यष्टृतमं वा **यं** त्वाम् **इह** देवयजनदेशे **दधुः** धृतवन्तः । **मेध्यातिथिः** मेधार्हैरतिथिभिर्युक्तः **कण्वः** एतन्नामको महर्षिः **'यं** स्वां **धनस्पृतं** धनेन प्रीणयितारं कृत्वा दधे इति शेषः । तथा **वृषा** इन्द्रः यं त्वां दधे । तथा **उपस्तुतः** अन्योऽपि स्तोता यजमानो यं त्वां दधे । स त्वं सं सीदस्वेति पूर्वत्रान्वयः । दधुः । लिटि उसि कित्त्वे 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । यजिष्ठम् । यष्टृशब्दात् 'तुच्छन्दसि' (पा.सू.५.३.५९)

इति अगुणवचनादपि आतिशायनिक इष्ठन् । 'तुरिष्ठेमेयःसु' (पा.सू.६.४.१५४) इति तृलोपः । नित्त्वादाद्युदात्तत्वम् । हव्यवाहन । हव्यं वहतीति हव्यवाहनः । 'हव्येऽनन्तःपादम्' (पा.सू.३.२.६६) इति वहतेर्ञ्युट् । मेध्यातिथिः । मेध्या अतिथयो यस्येति बहुव्रीही पूर्वपद-प्रकृतिस्वरत्वम् । **धनस्पृतम्** । धनैरस्मान् स्पृणोति प्रीणयतीति धनस्पृत् । 'स्पृ प्रीतिबलयोः' । 'क्विप् च' इति क्विप् । ततः तुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । उपस्तुतः । 'क्तिच्क्तौ च संज्ञायाम्' इति कर्तरि क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् ।। ९ ।।

**सिद्धाञ्जनम्**– हे **हव्यवाहन**, हव्यं हविः वहति प्रापयति देवानिति हव्यवाहनः, तस्य सम्बोधनम्, अग्ने, **मनवे** मनुष्याणां मूलपुरुषाय, मन्त्रे पुरुषाय वा तदर्थं **यजिष्ठम्** यष्टृतमं **यम् त्वाम् इह** अत्र यजनशालायां अन्तरे **देवासः सर्वे** देवाः **दधुः** धृतवन्तः, **यम्** त्वां **कण्वः** मेघाविनं निदर्शनभूतऋषिर्यजमानः **मेध्यातिथिः** मेध्याः अतिथयो यस्य सः कण्वपुत्रो वा **धनस्पृतम्** धनेन स्वीयेन दिव्येन अस्मान् स्पृणोति प्रीणयति धनस्पत् तं तथाभूतं विधाय दध्रे । तथा **वृषा** इन्द्रः यं त्वामिह दधे, **उपस्तुतः** कोऽपि स्तोता यजमानः यं त्वां दधे, स त्वं संसीदस्वेति पूर्वेण संवन्धः ।। यजिष्ठम्-यष्टृशब्दादगुणवचनादपि इष्ठन्, छन्दसि । उपस्तुतः-कर्तरि क्तः । उपस्तुत इति एतनामकः पुरा प्रसिद्धो वा स्यात्, स्तोतॄणां दृष्टान्तभूतः ।।

।। इति प्रथमाष्टके तृतीयाध्याये नवमो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि ।**
**तस्य प्रेषो दीदियुस्तमिमा ऋचस्तमग्निं वर्धयामसि ।। ११ ।।**
**यम् । अग्निम् । मेध्यऽअतिथिः । कण्वः । ईधे । ऋतात् । अधि । तस्य । प्र । इर्षः । दीदियुः । तम् । इमाः । ऋचः । तम् । अग्निम् वर्धयामसि ।। ११ ।।**

## ऋग्भाष्यम्

**यं सुतो मे समीधेऽग्निं मेध्यातिथिऋतादधि ।**
**उक्त्वा सत्यां वेदवाचं देयान्यन्नानि तस्य हि ।**

**तं प्रतीमा ऋचः सर्वाः प्रकाशाद्वर्धयाम तम् ।**
**इन्धनं तु हरेर्नान्यत्कचिदस्ति प्रकाशनात् ।। ११ ।।**

**ऋग्भाष्यटीका– यम् अग्निम्** । यं सुतः । यमग्निम् । कण्वः पितापुत्रयोरभेदोपचारात् कण्वस्य मे सुतो मेध्यातिथिर्मेधातिथिः । **ऋतात्** यथार्थाद्वेदात् । ल्यब्लोपनिमित्तापञ्चमी । सत्यां वेदवाचमुक्त्वा अनूच्य (व्याख्याय) **अधि ईधे** समीधे दीपितवान् । तस्य तस्मा अग्नये । इषोन्नानि । प्रदीदियुः अस्माभिरपि प्रदेयानि हि । ददातेः कर्मणि लिङ् । अलाक्षणिकं छान्दसं द्रष्टव्यम् । किञ्च । तमग्निं प्रत्येवेमाः सर्वा ऋचः प्रवर्तनीयाः । ततश्च तमग्निं वयं वर्धयामसि वर्धयाम । कथं वर्धनं प्रकाशात् । तथा च तदीयां पूर्णतां प्रकाशयामेति । ईध इत्यनेन दीप्तिरहितस्य तदुत्पादनमुच्यते इत्यन्यथाप्रतीतिनिरासायाह । **इन्धनन्त्विति** । **प्रकाशनात्** । प्रज्ञापनात् ।

**मन्त्रार्थमञ्जरी– यम् अग्निम् । कण्वः,** पितापुत्रयोरभेदोपचारात् कण्वस्य मे सुतः । मेध्यातिथिः । **ऋतात्** यथार्थात्, वेदात् ल्यब्लोपनिमित्ता पञ्चमी, सत्यां वेदवाचमनूच्य । **अधि ईधे,** दीपितवान् । **तस्य,** तस्मै, अग्नये । **इषः,** अन्नानि । **प्र दीदियुः,** अस्माभिरपि प्रदेयानि हि, ददातेः कर्मणि लिट्, धातोरित्त्वम्, युस्प्रत्ययश्छान्दसः । किं च, तम् अग्निम् प्रत्येव इमाः सर्वाः **ऋचः** प्रवर्तनीयाः ततश्च तम् अग्निम् वयम् **वर्धयामसि,** वर्धयामः, तदीयपूर्णतां प्रकाशयाम (मः) इति ।। ११ ।।

**स्कन्द– यम् अग्निम् मेध्यातिथिः** । अत्रापीतिहासमाचक्षते– 'मेध्यातिथिरादित्या-दग्निमाहृत्य समीधे इति । तदेतदिहोच्यते– यम् अग्निम् मेध्यातिथिः **कण्वः** काण्वः अथवा कण्वः मेध्यातिथिश्च ईधे दीपितवान् । **ऋतात् अधि** आदित्योऽत्र ऋतशब्देनोच्यते । अधीति चोपसर्गश्रुतेर्योग्यक्रियाध्याहारः । आदित्यादधिगम्य लब्ध्वा । आदित्यादानीयेत्यर्थः । **तस्य** सम्बन्धिन्यः **इषः** अन्नानि **प्र दीदियुः** प्रकर्षेण दीप्यन्ते । केन पुनः सम्बन्धेन सम्बन्धीन्यन्नानि प्रदीप्यन्ते । तद्दत्ततया । तेन यानि यष्टृभ्योऽन्नानि दत्तानि तानि न कुतश्चिन्न्यूनानि भवन्ती-त्यर्थः । य ईदृशः, **तम् अग्निम् इमाः** अस्मदीया **ऋचः** वयं च **तम्** एव **अग्निम्** अन्याभिरपि स्तुतिभिः **वर्धयामसि** । स्तूयमाना हि देवता वीर्येण वर्धन्ते । अत एवमुच्यते– तमिमा ऋचो वयं चान्याभिरपि स्तुतिभिर्वर्धयाम इति ।। ११ ।।

**वेङ्कटमाधव– यम् अग्निम्** कण्वपुत्रः **मेध्यातिथिः** यज्ञात् जनयित्वा सम् **ईधे**, तदर्थमेतानि अन्नानि प्रदीप्यन्ते । तथा **तम् इमाः ऋचः** वर्धयन्ति । **तम्** वयं च वर्धयामः ।।११।।

**मुद्गल– मेध्यातिथिः** मेध्या यागमोग्याः अतिथय ऋत्विग्रूपा यस्य तादृशः **कण्वः** ऋषिः **ऋतात् अधि** आदित्यादध्याहृत्य **यम् अग्निम् ईधे** दीपितवान्, **तस्य** अग्नेः **इषः** गमनस्वभावाः रश्मयः **प्र दीदियुः** प्रकर्षेण दीप्यन्ते । तथा **तम्** अग्निम् **इमाः** अस्माभिः प्रयुज्यमानाः **ऋचः** वर्धयन्तीति शेषः । वयमपि **तम् अग्निम् वर्धयामसि** स्तोत्रैर्वर्धयामः ।। ११ ।।

**सायण–** मेध्यातिथिः यागयोग्या अतिथय ऋत्विग्रूपा यस्य तादृशः **कण्वः** ऋषिः **ऋतादधि** आदित्यादध्याहृत्य **यम् अग्निम् ईधे** दीप्तवान् **तस्य** अग्नेः **इषः** गमनस्वभावा रश्मयः । **प्र दीदियुः** प्रकर्षेण दीप्यन्ते । तथा **तम्** अग्निम् **इमाः** अस्माभिः प्रयुज्यमानाः **ऋचः** वर्धयन्तीति शेषः । वयमपि **तमग्निं वर्धयामसि** स्तोत्रैर्वर्धयामः । ईधे । ञिइन्धी दीप्तौ'। 'इन्धिभवतिभ्यां च' (पा.सू.१.२.६) इति लिटः कित्वात् 'अनिदिताम्' इति नकारलोपः । द्विर्भावहलादिशेषयोः कृतयोः सवर्णदीर्घः । प्रत्ययस्वरः । यदवृत्तयोगादनिघातः । इषः । 'इष गतौ' । इष्यन्ति गच्छन्तीति इषो रश्मयः । दीदियुः । दीदेति छान्दसो धातुर्दीप्तिकर्मा । लिटि उसि इयङादेशः । 'एरनेकाचः' इति यणादेशाभावः छान्दसः । वर्धयामसि । 'इदन्तो मसि' इति मस इकारागमः ।।

**सिद्धाञ्जनम्–** मेध्यातिथिः मेघ्या अतिथयो यस्य सः **कण्वः** मेधाविप्रतिमानभूतः, ऋषिः **ऋतादधि** ऊर्ध्वं सत्यात् ज्योतिषः उत्तमस्थानात् आहृत्य **यम् अग्निम् ईधे** दीप्तवान् अत्र पृथिवीस्थाने मानुषे यजनगृहान्तरे, **तस्य** अग्नेः **इषः** प्रेरणाः प्रेरणात्मिकाः ज्वालाः प्रदीदियुः प्रकर्षेण दीप्यन्ते, ज्वलन्ति । **तम्** अग्निं **इमाः** इदानीमस्माभिः प्रयुज्यमानाः **ऋचः** वर्धयन्ति इति पुरुषव्यत्ययेनाध्याहार्यः । **तम् अग्निम्** वयं **वर्धयामसि** वर्धयामः । दीदियुः दीदेतिः छान्दसो धातुः दीप्तिकर्मा, लिटि उसि इयङादेशः । वर्धयामसि मस इकारागमः ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**रायस्पूर्धि स्वधावोऽस्ति हितेऽग्ने देवेष्वाप्यम् । त्वं वाजस्य श्रुत्यस्य राजसि सनो मृळमहाँ असि ।। १२ ।।**

रायः । पूर्धि । स्वधाऽवः । अस्ति । हि । ते । अग्ने । देवेषु । आप्यम् । त्वम् । वाजस्य ।
श्रुत्यस्य । राजसि । सः । नः । मृळ । महान् । असि ॥ १२ ॥

## ऋग्भाष्यम्

**वित्तानि पूरयास्माकं देवेष्वप्याप्यमस्ति ते ।**
**यज्ञभागादिपूज्यत्वात्स्वधावः सुखवर्धकः ।**
**श्रुत्यवाजो यज्ञभागो राजा भवसि तस्य हि ॥ १२ ॥**

**ऋग्भाष्यटीका– रायः** । वित्तानि । हे **अग्ने** यस्य ते तव । देवेष्वपि **आप्यं** प्राप्यमस्ति । कुत इत्यत उक्तस्य हीत्यस्यार्थो यज्ञेति । यश्च त्वम् । **स्वधावः** सुखवर्धकः । सुखवाचिनि द्वितीयान्ते स्वधाशब्दे उपपदेऽन्तर्णीतर्ण्यर्थाद्वर्धतेर्डः । स त्वमस्माकं **रायो** वित्तानि । **पूर्धि** पूरय पूर्णानि कुरु । सुखवर्धकः स्वधावरिति सम्बोध्यत इति वा । तथात्वे विच् । यश्च त्वं **श्रुत्यस्य वाजस्य** राजा भवति । अस्य तात्पर्यं श्रुत्येति । श्रुतिसम्बन्धित्वात् श्रुत्यं वाजोऽन्नं यज्ञभाग इति यावत् । तस्मादग्निरेवमुच्यत इति शेषः । **महान्** चासि । सत्वं नोऽस्मान् **मृळ** मृळय सुखय रक्ष वा ॥ १२ ॥

**मन्त्रार्थमञ्जरी–** हे अग्ने । यस्य ते, तव । देवेषु । **आप्यम्,** प्राप्यम् । अस्ति हि यश्च त्वम् । **स्वधावः,** सुखवर्धकः, सुखवाचिनि द्वितीयान्ते स्वधाशब्द उपपदेऽन्तर्णीत-ण्यर्थाद्वर्धतेर्डः । सः त्वम् । अस्माकम् । **रायः,** वित्तानि । **पूर्धि,** पूरय, पूर्णानि कुरु । यश्च त्वम् । **श्रुत्यस्य,** श्रुतिसम्बन्धिनः । **वाजस्य,** अन्नस्य, यज्ञभागस्येति यावत् । **राजसि,** राजासि, यज्ञभागेन पूज्यत्वात् 'राजसि' इत्युच्यते । सः त्वम् । **नः,** अस्मान् । **मृळ** मृळय, मृडय सुखय रक्षवा । यश्च त्वम् । महान् असि । 'सः, नः, मृळ' इति पूर्वेणान्वयः ॥ १२ ॥

**स्कन्द– रायः** धनस्य **पूर्धि** पूरयास्मान् । अथवा राय इति द्वितीयाबहुवचनम् । पूर्धीत्यपि याञ्चाकर्म (तु.निघ.३,१९) । याञ्चया चात्र दानं लक्ष्यते । धनानि देहीत्यर्थः । हे **स्वधावः** । अन्नवन्! किं कारणम् । उच्यते । **अस्ति हि ते** हिशब्दो यस्मादर्थे । यस्मादस्ति ते तव । हे **अग्ने! देवेषु** निर्धारण एषा सप्तमी । देवानां मध्ये । **आप्यम्** आप्तव्यम् । यदस्माभिरर्थिभि-

र्मनुष्यैः देवेभ्यः आप्तव्यं तत् देवानां मध्ये यस्मात् तत्रैव अस्ति नान्यस्य कस्यचिदित्यर्थः। अथवा आप्यम् इति आपिशब्दस्य ज्ञातिवचनस्य भावप्रत्ययान्तस्य रूपम्। यस्मादस्ति तव देवेषु आपित्वं ज्ञातित्वम्। यस्मात् तव देवा ज्ञातयः। ज्ञातित्वाच्च तदीयानि धनानि त्वां ददतमनुमन्यन्त इत्यर्थः। परोऽर्धर्चो भिन्नं वाक्यम्। **सः नः मृळ** इति तच्छब्दात् यच्छब्दोऽध्याहार्यः। यः **त्वम् वाजस्य** अन्नस्य **श्रुत्यस्य** श्रोतव्यस्य अत्यन्तोत्कृष्टस्य, अथवा श्रुत्यस्य श्रुतस्य प्रख्यातस्य **राजसि** ईशिषे। स नः अस्मान् मृळ मृळय सुखय। किं कारणम्। यस्मात् **महान् असि** प्रभावतः। महाप्रभावाश्चश्रितानां सुखकरा भवन्ति ॥ १२ ॥

**वेङ्कटमाधव–** धनेन पूरय अन्नवन्! **अस्ति हि ते अग्ने! देवेषु** धनेश्वरेषु ज्ञातेयम्। **त्वम्** अग्रस्य धोतव्यस्य ईश्वरो भवसि। **सः** अस्मान् सुखय। **महान्** भवसि ॥ १२ ॥

**मुद्गल– हे स्वधावः!** अन्नवन्! अग्ने! अस्माकम् **रायः** धनानि **पूर्धि** पूरय। **हे अग्ने! ते** तव **देवेषु आप्यम्** प्रापणीयं सख्यम् **अस्ति हि** विद्यते खलु। **त्वम् श्रुत्यस्य** श्रवणीयस्य **वाजस्य** अन्नस्य **राजसि** ईश्वरो भवसि। **सः** त्वम् **नः** अस्मान् **मृळ** सुखय। **महान्** गुणैरधिक असि ॥ १२ ॥

**सायण–** हे **स्वधावः** अन्नवन् अग्ने। 'स्वधा अर्कः' (नि.२.७.१७) इति तन्नामसु पाठात्। अस्माकं **रायः** धनानि 'पूर्धि पूरय देहीति वा' इति यास्कः। हे **अग्ने ते** तव **देवेष्वाप्यं** प्रापणीयं सख्यम् **अस्ति हि** विद्यते खलु। **त्वं श्रुत्यस्य** श्रवणीयस्य **वाजस्य** अन्नस्य **राजसि** ईश्वरो भवसि। **सः** त्वं **नः** अस्मान् **मृळ** सुखय। **महान्** गुणैरधिक **असि** ॥ रायः। 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्। पूर्धि। 'पृ पालनपूरणयोः'। 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः। 'बहुलं छन्दसि' इति शपो लुक्। हेरपित्त्वेन ङित्त्वाद्गुणाभावे 'उदोष्ठ्यपूर्वस्य' (पा.सू.७.१.१०२) इति उत्वम्। 'हलि च' इति दीर्घः। स्वधावः। 'सम्बुद्धौ मतुवसोः' इति रुत्वम्। आप्यम्। अदुपधत्वाभावेऽपि व्यत्ययेन 'पोरदुपधात्'(पा.सू.३.१.९८) इति कर्मणि यत्। 'यतोऽनावः' इत्याद्युदात्तत्वम्। यद्वा। ण्यति छान्दसमाद्युदात्तत्वम्। श्रुत्यस्य। 'श्रु श्रवणे'। औणादिकः क्यप्। तुगागमः। यद्वा। श्रुतिशब्दात् 'भवे छन्दसि' इति यत्। मृळ। 'मृड सुखने'। शस्य ङित्त्वात् लघूपधगुणाभावः ॥ १२ ॥

**सिद्धाञ्जनम्–** हे **स्वधावः** स्वधारणसामर्थ्यरूपः स्वभावः स्वधा भवति, तेन सर्वपुष्टि-प्रदस्वभावसमृद्धः स्वधावान् भवति, भूमार्थे मतुप्, छन्दसि मतुवसो रुत्वम् । हे पोषण-सामग्रीसमृद्ध, **अग्ने, रायः** अस्माकं धनानि पूर्धि पूरय, पूर्णानि कुरु, मास्तु तेषां लोपः । यस्मात् **ते** तव **देवेषु आप्यम्** बन्धुत्वं, सख्यं **अस्ति**, तस्मात् 'रायस्पूर्धि' इति सम्बन्धः । **त्वम् श्रुत्यस्य** श्रवणीयस्य **वाजस्य** समृद्धिबलस्य **राजसि** राजा भवस्मि । **सः** तादृशस्त्वं **नः** अस्मान् **मृळ** सुखय । त्वं **महान् असि** प्रभावात् ऐश्वर्येण वा महांस्त्वम् । पूर्धि पृ पूरणे, छन्दसि हेर्धिरादेशः । अन्यच्च छान्दसम् । आप्यम्-आपनीयो बन्धुः आपिः, भवे छन्दसीति यत् । श्रुत्यस्य-श्रुतिशब्दाद् भवे यत् । **मृळ**-मृड सुखने, शस्य ङित्त्वाद् गणाभावः ।।

## ऋक्संहिता पदपाठसहिता

**ऊ॒र्ध्व ऊ॒ षु ण॑ ऊ॒तये॒ तिष्ठा॑ दे॒वो न स॑वि॒ता । ऊ॒र्ध्वो वाज॑स्य॒ सनि॑ता यद॒ञ्जिभि॑र्वा॒घद्भि॑र्वि॒ह्वया॑महे ।। १३ ।।**

ऊ॒र्ध्वः । ऊँ॒इति॑ । सु । नः॒ । ऊ॒तये॑ । तिष्ठ॑ । दे॒वः । न । स॒वि॒ता । ऊ॒र्ध्वः । वाज॑स्य । सनि॑ता । यत् । अ॒ञ्जिऽभिः॑ । वा॒घत्ऽभिः॑ । वि॒ऽह्वया॑महे ।। १३ ।।

## ऋग्भाष्यम्

**अस्मद्रक्षाकृते नित्यं सूद्यतो भव विष्णुवत् ।**
**विष्णुश्चेत्स्वात्मदृष्टान्तो नोऽन्नदाता तथोद्यमी ।**
**यत्स्तुवद्भिर्द्विजैर्युक्ताः स्नेहैस्त्वां विह्वयामहे ।। १३ ।।**

**ऋग्भाष्यटीका–** ऊर्ध्वः । अस्मत् । यस्त्वम् । **वाजस्य** अन्नस्य । **सनिता** सनयिता । नोऽस्मभ्यमन्नदाता । तथा ऊर्ध्व उत्थित उद्यमी सन् । **ऊतये** अस्मद्रक्षाकृते । सविता देवो न विष्णुवत् सु ऊर्ध्वस्तिष्ठ सूद्यतो भव । ऊशब्दार्थो नित्यमिति । नन्वत्र यदा प्राथ्यों विष्णुस्तदा कथं सविता नेति व्याख्येयमित्यत आह ।। **विष्णुश्चेदिति** ।। कुतः यद्यस्मात् **वाघद्भिः** वदद्भिः स्तुवद्भिर्द्विजैः ऋत्विग्भिर्युक्ता वयं त्वामञ्जिभिः अञ्ज सङ्गे भावे इकारः सङ्गैः स्नेहैर्भक्तिभिर्विह्वया-महे । तस्मात् ।। १३ ।।

**मन्त्रार्थमञ्जरी–** यः त्वम् । नः, अस्मभ्यम् । **वाजस्य,** अन्नस्य । **सनिता,** सनयिता, 'षणु दाने', अन्नदाता । तथा– **ऊर्ध्वः,** उत्थितः । उद्यमी । सः त्वम् । **नः ऊतये,** अस्मद्रक्षाकृते । **सविता देवः न,** सविता देवो यथा, विष्णुवत् । **ऊर्ध्वः** सु तिष्ठ, सूद्यतो भव उ विष्णुपक्षे स्वात्मदृष्टान्तः । कुतः ? यत् यस्मात् । **वाघद्भिः,** वदद्भिः, द्विजैः, ऋत्विग्भिः । युक्ता वयं त्वाम् **अञ्जिभिः,** 'अन्जू सङ्गे', इकारप्रत्ययः, सङ्गैः, स्नेहैः, भक्तिभिः । **विह्वयामहे,** आह्वयामः । तस्मात् इति ॥ १३ ॥

**स्कन्द–** **ऊर्ध्वः** इत्येतत् **तिष्ठ** इत्येतेन सम्बन्धयितव्यम् । ऊ **सु** इति पदपूरणौ । **नः** अस्माकम् **ऊतये** पालनाय ऊर्ध्वस्तिष्ठ उत्तिष्ठः । व्याप्रियस्वेत्यर्थः । कथम् । **देवः न सविता** यथा सविता देवः सर्वदा अस्माकं पालनाय उत्तिष्ठति तद्वत् । न च केवलाय पालनाय । किं तर्हि । **ऊर्ध्वः वाजस्य सनिता** सनितिर्लभः । चतुर्थ्याश्चायं डादेशः । अन्नस्यापि लाभाय ऊर्ध्वस्तिष्ठ । कस्मात् । उच्यते । **यत्** यस्मात् **अञ्जिभिः** छन्दांस्यत्र अञ्जय उच्यन्ते । तैः । **वाघद्भिः** 'वाघतः' (निघ.३,१८) इति ऋत्विङ्नाम । आत्मीयैः ऋत्विग्भिः **विह्वयामहे** ह्वयतिरत्रान्तर्णीतण्यर्थः । यज्ञेषु नित्यं विविधं ह्वयामः । यस्मात् नित्यं यज्ञेषु त्वामाहूय यजामह इत्यर्थः ॥ १३ ॥

**वेङ्कटमाधव–** यथा **सविता** सर्वरक्षार्थम् ऊर्ध्वः तिष्ठति, एवम् अस्मद्रक्षार्थम् **ऊर्ध्वः तिष्ठ** । तथा च सत् भव अन्नस्य दाता । यदा वयमाज्येन त्वाम् अञ्जद्भिः ऋत्विग्भिः विविधं हवामहे ॥

**मुद्गल–** हे यूप! **नः** अस्माकम् **ऊतये** रक्षणाय **ऊर्ध्वः** उन्नतः **तिष्ठ** । दृष्टान्तः । **सविता देवः न** यथा सूर्यो देव ऊर्ध्वः उन्नतस्तिष्ठति तद्वत् । **ऊर्ध्वः** उन्नतः सन् **वाजस्य** अन्नस्य **सनिता** दाता **सु** सुष्ठुः भवसि । **यत्** यस्मात् कारणात् **अञ्जिभिः** माज्येन यूपमञ्जद्भिः **वाघद्भिः** यज्ञं वहद्भिर्ऋत्विग्भिः सह **विह्वयामहे** अन्नदानाय त्वां विशेषेणाऽह्वयामः । तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः । ऊ इति पूरणः ॥ १३ ॥

**सायण–** यूपोच्छ्रयणे 'ऊर्ध्वं ऊ षु ण ऊतये' इति द्वे । पशाविष्टिः इति खण्डे सूत्रितम्- ऊर्ध्व ऊ षु ण ऊतय इति द्वे (आश्व,श्रौ ३-१.) इति । एते एवाभिष्टवेऽपि विनियुक्ते । अथोत्तरम् इति खण्डे सूत्रितम्- सखे सखायमभ्या ववृत्सोर्ध्व ऊ षु ण ऊतय इति द्वे (आश्व.श्रौ.४.७) इति ।

हे यूप यद्वा यूपात्मकदारुनिष्ठाग्ने **नः** अस्माकं **ऊतये** रक्षणाय ऊर्ध्वं उन्नतः **तिष्ठ** । तत्र दृष्टान्तः । **सविता देवो न** । यथा सूर्यो देव उन्नतस्तिष्ठति तद्वत् । **ऊर्ध्वः** उन्नतः सन् **वाजस्य** अन्नस्य **सनिता** दाता भविष्यसि । **यत्** यस्मात् कारणात् **अञ्जिभिः** आज्येन यूपम् अञ्जद्भिः **वाघद्भिः** यज्ञं वहद्भिर्ऋत्विग्भिः सह **विह्वयामहे** अन्नदानाय त्वां विशेषेणाह्वयामः । तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः । ऊ षु णः । इकः सुञि (पा.सू.६.३.१३४) इति संहितायां दीर्घः । सुञः (पा.सू.८.३.१०७) इति षत्वम् । नश्च धातुस्थोरुषुभ्यः (पा.सू.८.४.२७) इति णत्वम् । ऊतये । अवतेः क्तिनि 'ज्वरत्वर' इत्यादिना ऊठ् । ऊतियूति इत्यादिना क्तिन् उदात्तत्वम् । तिष्ठ । शपि 'पाघ्रा' इत्यादिना तिष्ठादेशः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । वाजस्य । 'क्रियाग्रहणं कर्तव्यम्' (पा.म.१.४.३२) इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । सनिता । 'षणु दाने' । लुटि तासिः । वलादिलक्षण इट् (पा.सू.७.२.३५)। तिपो डादेशः (पा.सू.२.४.८५) टिलोपः । उदात्तनिवृत्तिस्वरेण तिबादेशस्य उदात्तत्वे प्राप्ते 'तास्यनुदात्तेत्' इति तस्यानुदात्तत्वम् । धातुस्वरः । 'न लुट्' (पा.सू.८.१.२९) इति निघात-प्रतिषेधः । अञ्जिभिः । 'अ व्यक्तिम्रक्षणगतिषु'। 'स्वनिकष्यञ्जि' (उ.सू.४.५७९) इत्यादिना इप्रत्ययः । विह्वयामहे । 'निसमुपविभ्यो ह्वः' (पा.सू.१.३.३०) इति अकर्त्रभिप्रायेऽप्यात्मने-पदम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् यद्वृत्तयोगादनिघातः ।। १३ ।।

**सिद्धाञ्जनम्**– हे अग्ने ('यूपात्मकदारुनिष्ठाग्ने इति याज्ञिकाः, तर्हि यजमानो वै यूपः इति श्रुत्यनुसारेण यजमानशरीरस्थोऽग्निरिति व्याख्येयम्) **नः** अस्माकं **ऊतये** अभिवृद्धये **ऊर्ध्वः** उन्नतः **तिष्ठ** । क इव? **सविता देवः न** यथा सविता उत्तमस्थानो ज्योतिरात्मा सर्वदा ऊर्ध्व एव स्थितः, स इव तिष्ठति संबन्धः । **ऊर्ध्वः** उन्नतः सन् **वाजस्य** समृद्धेः **सनिता** दाता भव । **यत्** यस्मात् कारणात् **अञ्जिभिः** अञ्जद्भिः व्यञ्जद्भिः, गुप्तानि यानि दैव्यानि भवन्ति तानि व्यक्तानि कुर्वद्भिः **वाघद्भिः** स्तोतृभिः, तदुपलक्षितैः मन्त्रात्मकस्तोत्रवाग्भिः, वयं **विह्वयामहे** विविधं आह्वयामः, तस्मात् 'वाजस्य सनिता भव' इति पूर्वेणान्वयः । **ऊ षु णः**-संहितायां इको दीर्घः, सस्य षत्वम्, नस्य णत्वम् । उ-पादपूरणः । सु सुतरां तिष्ठेति वा संबन्धनीयः । अञ्जिभिः-अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, खनीत्यादिना इप्रत्ययः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ।। १४ ।।
ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वम् । सम् । अत्रिणम् । दह । कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ।। १४ ।।

## ऋग्भाष्यम्

ज्ञानेन पाहि नितरामुद्यम्युच्चगुणोऽपि नः ।
असुरा अत्रयः प्रोक्ता मार्गत्रयविवर्जिताः ।
स्वर्गापवर्गमानुष्यं त्यक्त्वा यान्ति तमो हि ते ।
अदन्तीत्यथ रक्षांसि वा त्रयोऽधिकभक्षणात् ।
भोगाय जीवनायापि स्वलोकचरणाय च ।
उत्तमान्कुरु नो नित्यं दोहनानि च लम्भय ।
देवेभ्योऽखिलकाम्यानि सदा नोऽतिमहान्ति च ।। १४ ।।

**ऋग्भाष्यटीका–** **ऊर्ध्वो नः** । ज्ञानेन । ऊर्ध्व उद्यमी उच्चगुणोऽपि त्वम् । नोऽस्मान्केतुना ज्ञानेन ज्ञानं दत्वेति यावत् । **अंहसः** पापात् **नि** नितरां **पाहि** । तदर्थं च **विश्वमत्रिणं** सं **दह** । अत्रिशब्दार्थमाह ।। **असुरा इति** ।। अर्थान्तरं चाह ।। **अदन्तीति** ।। अथवा रक्षांस्यत्रयः कस्मात् अदन्तीति । अदनं सर्वसाधारणमित्यत उक्तम् । **अधिकेति** । अदभक्षणे अस्मादिनिप्रत्ययो रुगागमश्चर्त्वं च । इकारोऽप्येवं प्रत्ययो भवतीत्यत्रय इत्युक्तम् । तथा च श्रुतिरत्रिर्ह्वै नामैतद्यदत्तिरितीति । किंच **नो** अस्मांन् **चरथाय** चरणाय । चर गतिभक्षणयोः । भक्षणाय भोगाय गतये च । स्वलोकं त्वदीयलोकं प्रति चरणाय च । **जीवसे** जीवनायापि । **ऊर्ध्वान्** उत्तमान् कृधि नित्यं कुरु । भोगादिविषयेऽस्मानुत्तमान्कुर्विति । किंच । देवेषु देवेभ्यः । **दुवो** दोहनानि च । नोऽस्मान्विदाः पञ्चमो लकारः । सदालम्भय । दोहनानि दर्शयति । अतिमहांत्येवाखिलकाम्यानीति ।। १४ ।।

**मन्त्रार्थमञ्जरी–** ऊर्ध्वः उद्यमी, उच्चगुणः । अपि त्वम् **नः** अस्मान् । **केतुना** ज्ञानेन,

ज्ञानं दत्त्वेति यावत् । **अंहसः,** पापात् । **नि** नितराम् । **पाहि** । तदर्थम् विष्णुम् । अत्रिणम् । **सम् दह,** भस्मसात्कुरु । स्वर्गापवर्गमानुषरूपमार्गत्रयहीनत्वादसुरोऽत्रिन्शब्दार्थः, अदन्त्यधिकमिति रक्षो वात्रिन्शब्दार्थः, 'अद भक्षणे' अस्मादि(नि)न्प्रत्ययो रिगागमश्चर्त्वं च । किं च, **नः,** अस्मान् । **चरथाय,** चरणाय, 'चर गतिभक्षणयोः' भक्षणाय, भोगाय च, स्वलोकं त्वदीयलोकं प्रति चरणाय च । जीवसे जीवनाय । अपि **ऊर्ध्वान्** उत्तमान् । **कृधि** नित्यं कुरु, भोगादिविषयेऽस्मानुत्तमान्कुरु इति । किं च, **देवेषु** देवेभ्यः । **दुवः** च दोहनानि च, दुहेः डुप्रत्ययः । **नः** अस्मान् । **विदाः** लेट्, सिप आडागमः सदा लम्भय ।। १४ ।।

**स्कन्द–** ऊर्ध्वतयाऽत्र यत्नो लक्ष्यते । **ऊर्ध्वः** यत्नवान् **नः** अस्मान् **पाहि अंहसः नि** नि नियमेन पाहि रक्ष अंहसः पापात् । किञ्च केतुना 'केतुः' (निघ.३,९) इति प्रज्ञानाम् । इह तु प्रज्ञानात्मकत्वात् दाहकत्वात् दाहकरणत्वोपपत्तेश्च ज्योतिषि वर्तते । स्वेन ज्योतिषा । **विश्वम्** सर्वम् **अत्रिणम्** अत्रिशब्दो रक्षोवचनः । अत्तारं राक्षसम् **सम् दह** । किञ्च **कृधि कुरु** । **नः** अस्मान् **ऊर्ध्वान्** ऊर्ध्वतयाऽत्र व्यापारसामर्थ्यम् अविकलशरीरता च लक्ष्यते । अविकलशरीरान् सर्वव्यापारसमर्थान् । किमर्थम् । **चरथाय** चरणाय गमनाय । **जीवसे** जीवनाय । किञ्च **विदाः** जानीहि । ज्ञानेन चात्र करणं प्रतिपाद्यते । कुरु । **देवेषु** षष्ठ्यर्थे सप्तम्येषा । देवानाम् । **नः** तादर्थ्ये एषा चतुर्थी । अस्माकमर्थाय । दुवः परिचर्याम् । अस्मदर्थं देवान् परिचरेत्यर्थः । अथवा नः इति षष्ठी । अस्माकं या देवानां परिचर्या तां जानीहि । यद्वयं देवान् परिचरामः तत् जानीहि । ज्ञात्वा च अनुरूपं फलं देहीत्यर्थः । यदा यूपोच्छ्रयणे विनियोगात् तत्र प्रयुज्यमाने यूपदेवत्ये एते ऋचौ भवतः, यदाश्रित्य शौनकेनोक्तम्– '**ऊर्ध्व ऊ षु ण ऊतये एते काण्व्यावृचौ यौप्यौ**' (बृदे.४,१००) इति, तदा ऊर्ध्वस्तिष्ठेत्युच्छ्रियमाणो यूप उच्यते, नाग्निः । ऊर्ध्वश्च सन् पशोर्बन्धनतामापद्यमानः नः पाहीति विशेषः । शिष्टं समानम् ।। १४ ।।

**वेङ्कटमाधव–** ऊर्ध्वः अस्मान् रक्षस **नि पाहि** । तेजसा **विश्वम्** रक्ष **सम् दह** । कुरु च अस्मान् **ऊर्ध्वान्** चरणाय जीवनाय च । वेदय **देवेषु अस्माकम्** परिचर्याम् ।।१४।।

**मुद्गल–** हे यूप! **ऊर्ध्वः** उन्नत सन् **नः** अस्मान् **केतुना** ज्ञानेन **अंहसः** पापात् **नि पाहि** नितरां पालय । **विश्वम् अत्रिणम्** सर्वमत्तारं भक्षकं राक्षसम् **सम् दह** सम्यग् भस्मीकुरु ।

**नः** अस्मान् **ऊर्ध्वान्** उन्नतान् **कृधि** कुरु । किमर्थम् । **चरथाय** लोके चरणाय **जीवसे** जीवनाय च । **नः** अस्माकम् **दुवः** धनं च हविस्वरूपम् **देवेषु** **विदाः** लम्भय ।। १४ ।।

**सायण–** हे यूप यद्वा तन्निष्ठाग्ने **ऊर्ध्वः** सउन्नतः सन् **नः** अस्मान् **केतुना** ज्ञानेन **अंहसः** पापात् **नि पाहि** नितरां पालय । **विश्वम् अत्रिणम्** सर्वमत्तारं भक्षकं राक्षसं **सं दह** सम्यग्भस्मीकुरु । **नः** अस्मान् **ऊर्ध्वान्** उन्नतान् **कृधि** कुरु । किमर्थम् । **चरथाय** लोके चरणाय **जीवसे** जीवनाय च **नः** अस्माकं **दुवः** धनं हविःस्वरूपं **देवेषु** **विदाः** लम्भय । अत्रिणम् । 'अद भक्षणे' । 'अदेस्त्रिनि च' (उ.सू.४.५०८) इति औणादिकः त्रिनिप्रत्ययः । यद्वा । अदतस्त्रायन्ते इति अत्राः । 'आतोऽनुपसर्गे कः' इति कः । अतो मत्वर्थीय इनिः । कृधि । 'श्रुशृणुपृकृवृभ्य छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घः । ऊर्ध्वान् । 'उभयथर्क्षु' (पा.सू.८.३.८) इति विकल्पविधानात् 'नश्छव्यप्रशान्' (पा.सू.८.३.७) इति नकारस्य रुत्वाभावः । चरथाय । चरेः औणादिको भावे अथप्रत्ययः । जीवसे । 'जीव प्राणधारणे'। 'तुमर्थे सेसेन्' इति असेप्रत्ययः । विदाः । 'विदॢ लाभे' । अस्मादन्तर्भावितण्यर्थात् लेटि सिपि 'लेटोऽडाटौ' इति आडागमः । तुदादित्वात् शः । 'शे मुचादीनाम्' इति नुम् न भवति, 'अनित्यमागम-शासनम्' इति वचनेन तस्यानित्यत्वात् । 'इतश्च लोपः' इति इकारलोपः आगमानुदात्तत्वे विकरणस्वरः ।। १४ ।।

**सिद्धाञ्जनम्–** हे अग्ने, **ऊर्ध्वः** उन्नतः सन् **नः** अस्मान् **अंहसः** दुरितात् **केतुना** दृष्टिरूपज्ञानेन **नि पाहि** नितरां रक्ष । **विश्वम्** सर्वं **अत्रिणम्** अत्तारं भक्षकं राक्षसं **सं दह** सम्यक् दग्धं कुरु, भस्मसात्कुवित्यर्थः । **चरथाय** चरणाय ऊर्ध्वं सञ्चाराय **जीवसे** ऊर्ध्वं जीवनाय, **नः** अस्मान् **ऊर्ध्वान्** उन्नतान् अत्रस्थान् इहैव ऊर्ध्वगान् **कृधि** कुरु । **नः** अस्माकं **दुवः** परिश्रमं **देवेषु** मध्ये **विदाः** लम्भय ज्ञापयेत्यर्थः । अत्रिणम्-अद भक्षणे, त्रिनिप्रत्ययः औणादिकः । कृधि-श्रुशृण्वादिभ्यः हेधिरादेशः, विकरणस्य लुक्, संहितायां दीर्घः । ऊर्ध्वान्-ऋक्षु विकल्पविधानात् नकारस्य रुत्वाभावः । चरथाय-भावे अथप्रत्ययः । जीवसे-तुमर्थे असेप्रत्ययः । विदाः -विदॢ लाभे, अस्मादन्तर्भावितण्यर्थात् लेट् ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।**
**पाहिरीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ।। १५, १० ।।**

पाहि । नः । अग्ने । रक्षसः । पाहि । धूर्तेः । अराव्णः । पाहि । रिषतः । उत । वा । जिघांसतः । बृहद्भानो इति बृहत्ऽभानो । यविष्ठ्य ।। १५, १० ।।

## ऋग्भाष्यम्

अरं छिद्रं प्रापयतीत्यरावा पापपूरुषः ।
धूत्कृतेस्तस्य नो रक्ष नश्यतोस्मद्वधाय च ।
यवीयस्सु स्थितत्वेन यविष्ठ्यो हरिरुच्यते ।
ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एव यत् ।
अग्निर्यविष्ठ्य इत्युक्तो यदाधिक्यार्थतोऽधिकम् ।। १५, १० ।।

**ऋग्भाष्यटीका– पाहि** । अरम् । हे **बृहद्भानो** यविष्ठ्याग्ने । **नो**ऽस्मान् **रक्षसो** राक्षसात् **पाहि** । **अरं** छिद्रं दुःखादिदोषमन्यान्प्रापयतीत्यरा वा पापपूरुषः । अरशब्दोपपदादाङ्पूर्वादन्तर्णीतण्यर्थाद्वातेरन्प्रत्ययः । तस्याराव्णो । धूर्तेर्धूत्कृतेर्हिंसारूपाद्वचनान्नः **पाहि** रक्ष । तथा **रीषतो** नश्यतः हिंसार्थत्वात् दुष्टात्पाहि । उत वाऽन्यच्च **जिघांसतः** अस्मद्वधाय अस्मद्धननाय प्रवर्तमानाच्च नः पाहीति । यविष्ठ्यशब्दं विष्णावग्नौ च क्रमेण व्याचष्टे ।। **यवीयःस्विति** ।। यविष्ठशब्दाद्भवार्थे भवे छन्दसीति यत् । अग्निश्च ब्रह्माद्यपेक्षया नित्यं यविष्ठतम एवेत्यतो यविष्ठ्य इत्युक्तः । कथमेतल्लभ्यत इत्यत आह ।। **यदिति** ।। यस्मादाधिक्यार्थेऽधिकशब्दरूपं भवति आधिक्येऽधिकमिति स्मरणात् । अतो यविष्ठशब्दात्परो यशब्दस्तमबर्थ इति ।। १५,१० ।।

**मन्त्रार्थमञ्जरी–** हे बृहद्भानो यविष्ठ्य, प्राक् व्याख्यातमिदं पदम् । अग्ने । **नः**, अस्मान् । **रक्षसः** राक्षसात् । **पाहि** । **अराव्णः** अरं छिद्रं दोषमन्यान् आवाति प्रापयतीत्यरावा पापपूरुषः, अरशब्दोपपदादाङ् पूर्वादन्तर्णीतण्यर्थाद्वातेः डनिन्प्रत्ययः, तस्याराव्णः । **धूर्तेः**, धूत्कृतेः, हिंसारूपाद्वचनात् । नः **पाहि,** रक्ष । तथा रिषतः, **नश्यतः**, नाशकात्, हिंसार्थत्वात् दुष्टात् । **पाहि** । उत वा, अन्यच्च । **जिघांसतः** अस्मद्धननाय प्रवर्तमानात् च नः पाहि इति ।। १५ ।।
इति दशमो वर्गः ।। १० ।।

**स्कन्द– पाहि नः हे अग्ने! रक्षसः** राक्षसात् । **पाहि धूर्तेः** हिंसितु मारयितुः । **अराव्णः** अदातुर्हविषाम् । अयागशीलादित्यर्थः । **पाहि रिषतः** रेषणं हिंसा ताडनलक्षणाऽत्राभिप्रेता । प्रहारैस्ताड्यतः । **उत वा जिघांसत** हन्तुमिच्छतः । हे **बृहद्भानो** । महादीप्ते **यविष्ठ्य** । युवतम ।। १५ ।।

**वेङ्कटमाधव– पाहि** अस्मान् **अग्ने! रक्षसः** । **पाहि** हिंसितु अदातुश्च । **पाहि** न्यूनीकर्तुः, अपि च ताडयितु महादीप्ते । युवतम ।। १५ ।।

**मुद्गल–** हे **बृहद्भानो!** महातेजः **यविष्ठ्य!** युवतम अग्ने! **नः** अस्मान् **रक्षसः** बाधकाद् राक्षसादेः **पाहि** पालय । तथा **अराव्णः** धनादीनामदातृरूपात् **धूर्तेः** हिंसकात् **पाहि** । तथा **रिषतः** हिंसकात् व्याघ्रादेः सकाशात् **पाहि** । **उत** वा अथवा **जिघांसतः** हन्तुमिच्छत शत्रोः सकाशात् पाहि ।। १५ ।।

**सायण–** हे **अग्ने** हे **बृहद्भानो** बृहन्तो भानवो यस्य तादृश हे **यविष्ठ्य** युवतम हे अग्ने **नः** अस्मान् **रक्षसः** बाधकादाक्षसादेः **पाहि** पालय। तथा **अराव्णः** धनादीनामदातृरूपात् **धूर्तेः** हिंसकात् **पाहि** । तथा **रिषतः** हिंसकाद्व्याघ्रादेः सकाशात् **पाहि** । **उत वा** अथवा **जिघांसतः** हन्तुमिच्छतः शत्रोः सकाशात् पाहि ।। धूर्तेः । धुर्वी हिंसार्थः । 'क्तिच्क्तौ च संज्ञायाम्' इति कर्तरि क्तिच् । 'तितुत्र' इत्यादिना इट्प्रतिषेधः । 'राल्लोपः' (पा.सू.६.४.२१) इति वकार-लोपः । 'हलि च' इति दीर्घत्वम् । अराव्णः । 'रा दाने'। 'आतो मनिन्' इत्यादिना वनिप् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पश्चम्येकवचने 'अल्लोपोऽनः' इति अनः अकारस्य लोपः । रिषतः । 'रिष हिंसायाम्' । लटः शतृ । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम् । जिघांसतः । हन्तेरिच्छार्थे सनि' अज्झनगमां सनि' (पा.सू. ६.४.१६) इति उपधादीर्घत्वम् । 'अभ्यासाच्च' (पा.सू.७.३.५५) इति अभ्यासादुत्तरस्य हकारस्य घत्वम् । 'सन्यतः' इति इत्वम् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे सनो नित्त्वात् नित्स्वरेण पदस्याद्युदात्तत्वम् । बृहद्भानो । 'आमन्त्रितस्य च' इति षाष्ठिकमाद्युदात्तत्वम् । पादादित्वात् आष्टमिकनिघाताभावः । यविष्ठ्य । 'स्थूलदूर' इत्यादिना यणादिपरस्य लोपः, पूर्वस्य च गुणः । यकारोपजनश्छान्दसः ।। १५ ।।

**सिद्धाञ्जनम्–** हे **बृहद्भानो**, बृहन्तो भानवो रश्मयो यस्य तादृश, हे यविष्ठ्य **युवतम**, अग्ने, नः **अस्मान्** रक्षसः **राक्षसादेः** पाहि रक्ष । अराव्णः **अदातुः** धूर्तेः **हिंसकात्** लोभाददानशीलाद् द्रोग्ध्रुहिंसतः मानुषरूपादमानुषात्पापात्मनो वा **पाहि** । **रिषतः** अविशेषेण हिंसकात् **पाहि** । **उत वा** अथवा **जिघांसतः** हन्तुमिच्छतो मानुषादमानुषाद्वा भूयात् पाहि । धूर्तेः- धुर्वी हिंसार्थः, क्तिच् । अराव्णः -रा दाने, वनिप् । रिषतः, जिघांसतः, अन्ये च प्रागुक्ताः ।।

**।। इति प्रथमाष्टके तृतीयाध्याये दशमो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**घनेव विष्वग्वि जह्यराव्णस्तपुर्जम्भ यो अस्मध्रुक् ।**
**यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ।। १६ ।।**

**घनाऽइव । विष्वक् । वि । जहि । अराव्णः । तपुःऽजम्भ । यः । अस्मऽध्रुक् । यः । मर्त्यः । शिशीते । अति । अक्तुऽभिः । मा । नः । सः । रिपुः । ईशत ।। १६ ।।**

## ऋग्भाष्यम्

**वायुर्मेघानिव जहि सर्वतः पापपूरुषान् ।**
**अस्मद्रोही च यस्तं च तापेनैवात्ति यत्ततः ।**
**तपुर्जम्भः शिशीते यस्तीक्ष्णो भवति सर्वदा ।**
**नेशो भवतु सोऽस्माकं दुरात्मा पापपूरुषः ।। १६ ।।**

**ऋग्भाष्यटीका– घनेव** । **वायुः** । यद्यस्मात्तपुषा तापेनैव । जम्भति । **अत्ति** संहरति । ततस्तपुर्जभस्तस्य सम्बुद्धिः । हे तपुर्जभाग्ने त्वमराव्णः । उक्तरीत्या पापपुरुषान्विष्वक्सर्वतो विजहि । कथम् । **घना** घनान्मेधानिव । वायुरिति शेषः । यश्च **अस्मद् ध्रुक्** अस्मद्रोही तं च विजहि । किञ्च यो मर्त्योऽत्यक्तुभिः । अतिरतिक्रमणार्थः । अक्तुः सङ्गः । स्नेहाभावैः स्नेहमात्रं परित्यज्येति यावत् । निस्नेहैः पुरुषैः सहेति वा । शिशीते शो तनूकरण इत्यस्येदं रूपम् । सर्वदा तीक्ष्णो भवति । निशितः कुठार इव स रिपुर्दुरात्मा पापपुरुषः **नोऽस्माकम्** । **मा ईशत** ईशो न भवतु ।। १६ ।।

**मन्त्रार्थमञ्जरी–** यद्यस्मात्तपुषा तापेनैव जम्भति संहरतीति तपुर्जम्भस्तस्य सम्बुद्धिः हे **तपुर्जम्भ,** अग्ने । त्वम् **अराव्णः,** प्राक् उक्तरीत्या पापपूरुषान् । **विष्वक्,** सर्वतः । **वि जहि,** नाशय । कथम् ? घनेव घनान्मेघानिव । वायुः इति शेषः । यः च **अस्मध्रुक्,** अस्मद्रोही । तं च वि जहि किं च, यः मर्त्यः । **अति अक्तुभिः,** अतिरतिक्रमणार्थः, अक्तुः सङ्गः, स्नेहाभावैः, स्नेहमात्रं परित्यज्येति यावत्, निःस्नेहैः पुरुषैः सह इति वा । **शिशीते,** 'शोतनूकरणे' श्लुविकरणम्, धातोरीकारः, द्विर्वचनम्, सर्वदा तीक्ष्णो भवति, निशितः कुठार इव । सः । **रिपुः,** दुरात्मा पापपूरुषः । **नः,** अस्माकम् । **मा ईशत,** ईशो मा भवतु, 'ईश ऐश्वर्ये' लङ् अडागमाभावः, शप् ।। १६ ।।

**स्कन्द– घना** तप्तं लोहं येन हन्यते स घन उच्यते । तृतीयैकवचनस्य चायमाकारः । घनेन इव यथा लोहकारः तप्तं लोहं घनेन हन्यात् एवं विष्वक् नानाभूतानपि **वि जहि** । **अराव्णः** अदातॄन् हविषः । अयष्टॄन् इत्यर्थः । **हे तपुर्जम्भ!** 'इमं जम्भसुतं पिब' (ऋ.८, ९१,२) इति प्रयोगदर्शनात् जम्भशब्दोऽत्र दंष्ट्रावचनः । तापयितृदंष्ट्र! तीक्ष्णदंष्ट्र! इत्यर्थः । न च केवलान् अराव्णः । किन्तर्हि । **यः अस्मध्रुक्** यश्चास्माकं द्रोग्धा तमपि । अथवा यः अस्मध्रुगिति परेण सम्बध्यते । यः अस्मध्रुक्, **यः** च **मर्त्यः** मनुष्यः **शिशीते अति** शो तनूकरणे । अतिशिशीते सुष्ठु तनूकरोति । केन । **अक्तुभिः** । अक्तुशब्दोऽत्र सामर्थ्या-दायुधवचनः । आयुधैः । सामर्थ्यात् अस्मान् आयुधैः तनूकरोति कर्शयति । ये अस्माकं सहायाः तानायुधैः उच्छिनत्ति इत्यर्थः । अथवा अक्तुभिरिति द्वितीयार्थे तृतीया । यश्च अक्तून्यायुधानि अति शिशीते सुष्ठु निश्यतीत्यर्थः । **मा नः** अस्माकम् **सः रिपुः** शत्रुः **ईशत** ईशिष्ट । मा तस्य वशवर्तितां समासेत्यर्थः ।। १६ ।।

**वेङ्कट–** यथा तप्तं लोहपिण्डं कर्मारो घनेन **विष्वक्** हन्ति एवम् अदातॄन् सर्वतोदिशम् **जहि** तापयितृदंष्ट्र! **यः** वा अस्मभ्यं द्रोग्धा **यः** वाऽस्मान् **मर्त्यः** । आयुधैः अत्यन्तं तनूकरोति, **सः मा** अस्माकम् **रिपुः** ईशिष्ट ।। १६ ।।

**मुद्गल–** हे तपुर्जम्भ! तप्यमानरश्मियुक्त! अग्ने! **अराव्णः** अस्मभ्यं देयस्य धनस्य अदातॄन् वैरिणः **विष्वक्** सर्वतः **वि जहि** विशेषेण मास्य । दृष्टान्तः । **घनेव** यथा कठिनेन दण्ड-पाषाणादिना भाण्डादिभङ्गं करोति तद्वत् । अन्योऽपि **यः** रिपुः **अस्मधृक्** अस्मद्विषय-द्रोहकारी

भर्त्सनादिना बाधते । **यः** च अन्यः **मर्त्यः** मनुष्यः शत्रुः **अक्तुभिः** आयुधैः **अति शिशीते** तनूकरोति । अस्मान् प्रहरतीत्यर्थः । **सः रिपुः** भर्त्सनप्रहारकारी द्विविधोऽपि शत्रुः **नः** अस्मान् प्रति **मा ईशत** ईश्वरः शक्तो मा भूत् ।। १६ ।।

**सायण–** हे **तपुर्जम्भ** तप्यमानरश्मियुक्ताग्ने **अराव्णः** अस्मभ्यं देयस्य धनस्य अदातॄन् वैरिणः **विष्वक्** सर्वतः **वि जहि** विशेषेण मारय । तत्र दृष्टान्तः । **घनेव** । यथा कठिनेन दण्डपाषाणादिना भाण्डादिभङ्गं करोति तद्वत् । **यः** अन्योऽपि रिपुः **अस्मध्रुक्** अस्मद्विषय-द्रोहकारी भर्त्सनादिना बाधते । **यः** च अन्यः **मर्त्यः** मनुष्यः शत्रुः **अक्तुभिः** आयुधैः **अति शिशीते** तनूकरोति अस्मान् प्रहरतीत्यर्थः । **सः रिपुः** भर्त्सनप्रहारकारी द्विविधोऽपि शत्रुः **नः** अस्मान् प्रति **मा ईशत** ईश्वरः शक्तो मा भूत् । घना इव । 'सुपां सुलुक्' इति तृतीयाया डादेशः । जहि । हन्तेर्लोटि हौ 'हन्तेर्जः' (पा.सू.६.४.३६) इति जादेशः । तस्य असिद्धत्वात् हेर्लुगभावः । तपुर्जम्भ । 'तप संतापे' । औणादिककरणे उसिन्प्रत्ययान्तः तपुस्शब्दो नित्त्वादा-द्युदात्तः । 'जभि नाशने' । जम्भ्यन्ते शत्रव एभिरिति जम्भान्यायुधानि । करणे घञ् । तपूंष्येव जम्भानि यस्यासौ तपुर्जम्भः ।

आमन्त्रिताद्युदात्तत्वम् । अस्मध्रुक् । 'गुह जिघांसायाम्' । 'सत्सूद्विष' इत्यादिना क्विप् । 'वा द्रुहमुहष्णुहष्णिहाम्' (पा.सू.८.२.३३) इति हकारस्य घत्वम् । भष्भावः । शिशीते । 'शो तनूकरणे' । व्यत्ययेनात्मनेपदम् । 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'आदेचः' इति आत्वम् । ततो द्विर्वचने 'बहुलं छन्दसि' (पा.सू.७.४.७८) इति अभ्यासस्य इत्वम् । 'ई हल्यघोः' इति ईत्वम् । व्यत्ययेनाद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । ईशत । लङि 'बहुलं छन्दसि' इति शपो लुगभावः । 'न माङ्योगे' इति अडागमाभावः ।। १६ ।।

**सिद्धाञ्जनम्–** हे **तपुर्जम्भ** तपूंषि सन्तापकरा रश्मयः जम्भानि आयुधानि यस्य तादृशाग्ने, **अराव्णः** अदातॄन् वैरिणः **विष्वक्** सर्वतः **घनेव** धनेन दण्डादिनेव **विजहि** विशेषेण मारय । **यः** अन्योऽपि **अस्मधृक्** अस्मद्रोहकारी **रिपुः** शत्रुर्भवति, **यः मर्त्यः** यश्च मनुष्योऽपि रिपुः **अक्तुभिः** तमोभिः अप्रकाशैरदिव्यैः करणैः **अतिशिशीते** तनूकरोति अस्मानिति शेषः, स द्विविधोऽपि वैरी नः अस्मान् प्रति **मा ईशत** ईश्वरो मा भूत्, शक्तो मा भूत् । घना इच-तृतीयायाः डादेशः । जहि-हन्तेर्लोट् । तपुर्जम्भ-तप सन्तापे, ओणादिक उसिन् प्रत्ययान्तः

'तपुस्' शब्द जभ्यन्ते नाश्यन्ते शत्रव एभिरिति जम्भान्यायुधानि, अन्यदुक्तम् । अस्मध्रुक्-दुह जिघांसायां, किप्, हस्य घत्वम् । शिशीते-शो तनूकरणे, व्यत्ययेनात्मनेपदम्, विकरणस्य श्लुः । अक्तुभिः-अजनादक्तुस्तमः, अत एव रात्रिपर्यायः, अत्र लक्षणया आयुधैरिति व्याख्यातं सायणीये ।। १६ ।।

## ऋक्संहिता पदपाठसहिता

**अ॒ग्निर्व॑व्ने सु॒वीर्य॑म॒ग्निः कण्वा॑य सौभ॑गम् ।**
**अ॒ग्निः प्राव॑न्मि॒त्रोत मेध्या॑तिथिम॒ग्निः सा॒ता उ॑पस्तु॒तम् ।। १७ ।।**

अ॒ग्निः । व॒व्ने । सु॒ऽवीर्य॑म् । अ॒ग्निः । कण्वा॑य । सौभ॑गम् । अ॒ग्निः । प्र । आ॒व॒त् । मि॒त्रा । उ॒त । मेध्य॑ऽअतिथिम् । अ॒ग्निः । सा॒तौ । उ॒प॒ऽस्तु॒तम् ।। १७ ।।

## ऋग्भाष्यम्

**सुवीर्यं सौभगं चैव ममेशः समभाजयत् ।**
**मेध्यातिथिं सुतं चैव मित्राणि च ररक्ष मे ।**
**उपस्तुतं चैव मुनिं सातौ लाभे ररक्ष ह ।। १७ ।।**

**ऋग्भाष्यटीका– अग्निवव्ने** । **सुवीर्यम्** । **अग्निः** ईशः **कण्वाय** कण्वस्य मम माम् । सुवीर्यं वव्ने अन्तर्णीतण्यर्थस्य वने रूपम् । **समभाजयत्** । अग्निरेव कण्वं सौभगं वव्ने । किंच अग्निरेव मेध्यातिथिं मे सुतं मेधातिथिं **च** । उत **मित्रा** मे मित्राणि च । **प्रावत्** ररक्ष । न केवलमेवं ममैवोपकारकः किन्तु । अग्निरेवोपस्तुतं मुनिं च । सातौ लाभे विषये । **प्रावत्** ररक्ष । हेतीतिहासमत्र सूचयति ।। १७ ।।

**मन्त्रार्थमञ्जरी– अग्निः**, ईशः । **कण्वाय** कण्वस्य, **मम** माम् । **सुवीर्यम्** । **वव्ने** समभाजयत्, किं च, अग्निः सौभगम् च कण्वाय वव्ने किं च, अग्निः एव मेध्यातिथिम्, मे सुतं मेध्यातिथिम् । च **उत मित्रा**, मे मित्राणि च । **प्र आवत्**, ररक्ष, अवतेः लङ् । न केवलमेवं ममैवोपकारकः, किं तु अग्निः एव **उपस्तुतम्**, मुनिम् । च **सातौ**, लाभविषये । प्र आवत् ररक्ष ।। १७ ।।

**स्कन्द– कण्वाय** इति सम्प्रदानचतुर्थीश्रुतेः 'वंस्वा नो वार्या पुरु' (ऋ.८,२३,२७) इति प्रयोगदर्शनाच्च वनिरत्र दानार्थः । **अग्निः वव्ने** दत्तवान् । **सुवीर्यम्** शोभन वीर्यम् । **अग्निः एव** मह्यम् **कण्वाय सौभगम्** सुधनतां दत्तवान् । **अग्निः प्र आवत्** प्रकर्षेण रक्षितवान् । **मित्रा** मित्राणि **उत मेध्यातिथिम्** ऋषिम् । **अग्निः एव सातौ** सन्यन्ते सभज्यन्ते यत्र धनानि योद्धृभिः सा साति, संग्रामोऽत्राभिप्रेतः, तत्र **उपस्तुतम्** नामानमपरमृषिम् ।। १७ ।।

**वेङ्कटमाधव– अग्निः** प्रायच्छत् **सुवीर्यम्** धनम् । **अग्निः कण्वाय** सुभगत्वम् । **अग्निः प्र अवत्** मित्राणि, अपि च **मेध्यातिथिम्** । **अग्निः** सङ्ग्रामे **उपस्तुतम्** चावत् ।। १७ ।।

**मुद्गल– अग्निः** देवः **सुवीर्यम्** शोभनवीर्योपेत धनमुद्दिश्य **वव्ने** याचितः । स **अग्निः** कण्वाय महर्षये **सौभगम्** शोभनधनादिरूपं भाग्यम् प्रायच्छदिति शेषः । तथा **अग्निः मित्रा** अस्मन्मित्राणि **प्र आवत्** प्रकर्षेण रक्षितवान् । **उत** अपि च **मेध्यातिथिम्** मेधयोग्यैरतिथिभिरुपेतम् ऋषिं प्रावत् । तथा **उपस्तुतम्** अन्यमपि स्तोतारं यजमानम् **सातौ** धनादिदाननिमित्तं प्रावदिति शेषः ।। १७ ।।

**सायण– अग्निः** देवः **सुवीर्यं** शोभनवीर्योपेतं धनमुद्दिश्य **वव्ने** याचितः । सः **अग्निः कण्वाय** महर्षये **सौभगं** शोभनधनादिरूपं भाग्यं प्रायच्छदिति शेषः । तथा **अग्निः मित्रा** अस्मन्मित्राणि **प्रावत्** प्रकर्षेण रक्षितवान् । **उत** अपि च 'मेध्यातिथिं मेधयोग्यैरतिथिभिरुपेतमृषिं प्रावत् । तथा **उपस्तुतम्** अन्यमपि स्तोतारं यजमानं **सातौ** धनादिदाननिमित्तं प्रावदिति शेषः । वव्ने । 'वनु याचने' । कर्मणि लिट् । 'न शसददवादिगुणानाम्' (पा.सू.६.४.२६) इति एत्वाभ्यासलोपयोः प्रतिषेधः । उपधालोपश्छान्दसः । सौभगम् । 'सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् तस्य भावः इत्येतस्मिन्नर्थे अञ् (पा.सू.५.१.१२९) । ञित्वादाद्युदात्तत्वम् । मित्रा । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । उपस्तुतम् । 'क्तिच्क्तौ च संज्ञायाम्' इति स्तौतेः कर्तरि क्तः । थाथादिना उत्तरपदान्तोदात्तत्वम् ।। १७ ।।

**सिद्धाञ्जनम्– अग्निः** देवः **सुवीर्यम्** शोभनवीर्योपेतं वस्तु उद्दिश्य **वव्ने** याचितः । सः **अग्निः कण्वाय** प्रसिद्धाय महर्षये, मेधाविलक्षणाय यजमानाय वा **सौभगम्** सौभाग्यं प्रावत् प्रकर्षेण रक्षितवान् । तथा **अग्निः मित्रा** मित्राणि प्रावत् । उत अपि च **मेध्यातिथिम्**

उक्तलक्षणं वा यजमानं, प्रसिद्धं कण्वपुत्रं ऋषिं प्रावत् । तया **अग्निः** उपस्तुतम् प्रागुपन्यस्तं कमपि स्तोतारं, तन्नामकं च **सातौ** सम्पल्लाभे निमित्तभूते, प्रावत् । वव्रे वनु याचने, कर्मणि लिट्, उपधालोपश्छान्दसः । सौभगम्-सुभगान्मन्त्रे इत्युद्गात्रादिषु पाठात्, तस्य भाव इत्यर्थे अञ् ।। १७ ।।

## ऋक्संहिता पदपाठसहिता

**अग्निना तुर्वशं यदुं परावतं उग्रादेवं हवामहे । अग्निर्नयन्नववास्त्वं बृहद्रथं तुर्वीतिं दस्यवे सहः ।। १८ ।।**

**अग्निना । तुर्वशम् । यदुम् । पराऽवतः । उग्रऽदेवम् । हवामहे । अग्निः । नयत् । नवऽवास्त्वम् । बृहत्ऽरथम् । तुर्वीतिम् । दस्यवे । सहः ।। १८ ।।**

## ऋग्भाष्यम्

**तुर्वशादींस्तथा राज्ञो वयं तेन हवामहे ।**
**तुरोऽपि यद्वशो विष्णुः स च तुर्वशनामवान् ।**
**यदस्ति तत उच्चत्वाद्यदुरुग्रोऽसुरान् प्रति ।**
**तमेव तत्प्रसादेन ह्वयामोऽनयदेव सः ।**
**नववास्त्वादिकान्राज्ञो बलं दस्युविनिग्रहे ।। १८ ।।**

**ऋग्भाष्यटीका– अग्निना** । अग्निविषये पूर्वार्धतात्पर्यमाह ।। **तुर्वशादीनिति** ।। तथाशब्दः समुच्चये । न केवलमेतावत् । किं तु वयं तुर्वशं यदुमुग्रदेवं चेत्येतांस्तुर्वशादीन्राज्ञो । यत्सत्कारार्थं परावतो दूरतो हवामहे तच्च । तेनाग्निना तद्बलेनैव । विष्णौ व्याख्यातुं तुर्वशादिशब्दांस्ताव-न्निर्वक्ति । **तुरोऽपीति** । तुरो वायुरपि । स विष्णुश्च । न केवलं राजा । तुरो वशो यस्यासौ तुर्वशः । यदस्ति तत उच्चत्वाद्यदुरिति मयूरव्यंसकादित्वात्साधुः । विष्णुरिति सर्वत्र सम्बध्यते । उग्रोऽसुरान्प्रति देवश्चेत्युग्रदेवः । इदानीं वाक्यार्थमाह ।। **तमेवेति** ।। तं तुर्वशादिनामकं विष्णुं तत्प्रसादेनैवेति सम्बन्धः । नय देवेत्यादिनोत्तरार्धं व्याख्याति । सोऽग्निरेव । नववास्त्वं बृहद्रथं तुर्वीतिमित्येतान्नववास्त्वादिकान्राज्ञो । दस्यवे लक्षणया तत्सम्बन्धिने । विनिग्रहाय दस्युविनिग्रहे विषये । **सहो** बलम् । **नयत्** अनयत् । अजां ग्राममनयदिति यथा । तान्दस्युवधौपयिक-बलवतोऽकार्षीत् ।। १८ ।।

**मन्त्रार्थमञ्जरी–** (वयम्) **तुर्वशम्, यदुम्,** उग्रदेवम् च इतीमाँस्तुर्वशादीन्राज्ञः । (अग्निना सह परावतः, दूरतः । **हवामहे,** आह्वयामः । अग्निः । 'नववास्त्वम्, **बृहद्रथम्,** तुर्वीतिम् च इतीमान्नववास्त्वादीन्राज्ञः) **दस्यवे,** लक्षणया दस्युसम्बन्धिने वि निग्रहाय, दस्युविनिग्रह-विषये । सहः बलम् । **नयत्,** अनयत्, अडभावश्छान्दसः, तान्दस्युवधौपयिकबलवतोऽकार्षीत् इति । विष्णुपक्षे– तुरो वायुर्वशो यस्य स तुर्वशस्तं विष्णुम्, उपपदान्तलोपः, यदस्ति तत उच्चत्वहेतुना यदुनामकम् विष्णुम् असुरान्प्रत्युग्रो देवश्च इत्युग्रदेवनामकं विष्णुम् । **अग्निना,** विष्णुप्रसादेन । एव हवामहे इति । शिष्टं स्पष्टम् ।। १८ ।।

**स्कन्द– अग्निना** सहयोगलक्षणैषा तृतीया । अग्निना सह परिचर्यातिशयेन तदनुचरता मापन्नम् **तुर्वशम् यदुम् उग्रदेवम्** च राजानम् **परावतः** दूरात् **हवामहे** ह्वयामः । परोऽर्धर्चो भिन्नं वाक्यम् । **अग्निः नयत्** नीतवान् । **नववास्त्वम्** नाम असुरम् **बृहद्रथम्** महारथम् **तुर्वीतिम्** तुर्वी थुर्वी हिंसार्थाः । हिंसाम् । नववास्त्वं हिंसितवानित्यर्थः । अथवा तुर्वीतिरिति असुरान्तरस्य नामधेयम् । अग्निः नयत् इति नयतिः सामर्थ्यात् वधार्थः । नववास्त्वं च तुर्वीतिं चाग्निर्हतवानित्यर्थः । **दस्यवे** द्वितीयार्थे चतुर्थ्येषा । दस्युं शत्रुम् । **सहः** बलनामैतत् (तु.निघ. २,९) । अन्तर्णीतमत्वर्थं चेह द्रष्टव्यम् । सहस्वन्तं बलवन्तम् । अथवा सह इति तृतीयार्थे द्वितीया । सहसा स्वबलेन नीतवान् इत्यर्थः । यद्यपि च 'अहं स यो नववास्त्वम्' (ऋ. १०,४९,६) इति दर्शनादिन्द्रेण नववास्त्वो हत इत्यवगम्यते, तथापि माहाभाग्यात् देव तानाम् 'अत एव च' दर्शनात् अग्निनापि हत एवेत्यवबोद्धव्यम् ।। १८ ।।

**वेङ्कटमाधव– अग्निना** सह दूरात् **तुर्वशम् यदुम् उग्रदेवम्** च राजर्षीन् आह्वयामः । **अग्निः** नव वास्त्वादींस्त्रीन् अनयत् उपक्षपयितुः अभिभविता ।। १८ ।।

**मुद्गल– अग्निना** सहावस्थितान् **तुर्वशम्** एतन्नामकम् **यदुम्** एतन्नामकम् **उग्रदेवम्** एतन्नामकम् च राजर्षीन् **परावतः** दूरदेशात् **हवामहे** आह्वयाम । स च **अग्निः नववास्त्वम्** एतन्नामकम् **बृहद्रथम्** एतन्नामकम् **तुर्वीतिम्** एतन्नामकम् राजर्षीन् च **नयत्** इहानयतु । कीदृशोऽग्निः । **दस्यवे सहः** अस्मदुपद्रवहेतोः चोरस्याभिभविता ।। १८ ।।

**सायण– अग्निना** सहावस्थितान् तुर्वशनामकं यदुनामकम् उग्रदेवनामकं च राजर्षीन् **परावतः**

दूरदेशात् **हवामहे** आह्वयामः । स च 'अग्निः नववास्तुनामकं बृहद्रथनामकं तुर्वीतिनामकं च राजर्षीन् नयत् इहानयतु । कीदृशोऽग्निः । दस्यवे सहः अस्मदुपद्रवहेनोवोरस्याभिभविता ।। नयत् । 'णीञ् प्रापणे' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । नवं वास्तवम् । नवं वास्तु यस्यासौ नववास्तुः । 'वा छन्दसि' इत्यनुवृत्तेः अभि पूर्वत्वाभावे यणादेशः । बृहद्रथम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। १८ ।।

**सिद्धाञ्जनम्– अग्निना** देवेन सह अवस्थितान्, पूर्वान् प्राप्तदिव्यप्रतिष्ठान् अन्वर्थनामधेयान् अवयवार्थसदृशप्रभावप्रतिमानभूतान् व्यक्तिविशेषान् शक्तिविशेषान्वा वक्ष्यमाणान् **हवामहे** आह्वयामः अस्माकं साहाय्यमनुग्रहीतुम् । कान् ? **तुर्वशम् यदुम् उग्रदेवम्** इत्येतान् । कस्मात् स्थानात् ? **परावतः** परमात् स्थानात् । **दस्यवे** उपद्रवहेतोः क्षपयितुः यजनविघातकस्य, षष्ठ्यर्थे चतुर्थी, सहः साहयिता, अभिभविता **अग्निः** स्वकर्मनिर्वाहाय सहायान् पूर्वान् इह **नयत्** आनयतु । कान् ? **नववास्त्वम्, बृहद्रथम् तुर्वीतिम्** एतन्नामकान् । तुर्वशः-तुर्वतेः क्षिप्रकारी जयवेगवान् । यदुः तुर्वशेन सह अन्यत्रापि पठितः इन्द्रानुग्रहपात्रं भवति, अविदितोऽवयवार्थः । उग्रदेवः- उग्रो देवः यस्यासौ । नववास्त्वः नवं वास्तु यस्यासौ नूतनवासप्रतिष्ठः । बृहद्रथः नववास्त्वेन सह अन्यत्रापि पठितः, नववास्त्वविशेषणं वा स्यात् । तुर्वीतिः तुर्वशवत् तुर्वतेः, क्षिप्रगमनः, जयज्वाली ।

अत्र नववास्त्वनामको राजर्षिरिति सायणः । अन्यत्र सोऽसुर इति व्याचष्टे । तदनुरोधेन व्याख्या च भवति । तुर्वीतिवत् इन्द्रेणानुगृहीतः प्रतिमानभूतो नववास्त्व इति गृहीत्वा व्याख्या नः प्रवर्तते । सह तुर्वीतिना हि पठित इह नववास्त्वः । तर्हि कस्याः सिद्धेः प्रतिमानभूतोऽसौ ? अवयवादवगन्तव्यः । नवं नूतनं वास्तु वेश्मभूपर्यायः यस्य सः नवीकृतशरीरात्मकवासभूसम्पन्न इत्यर्थः । तादृशं यजमानमृषिं इन्द्र इत उद्धृत्य ऊर्ध्वं नयन् रोचमानम्य ज्योतिर्लोकस्य दूरे पारे स्थापितवानित्यर्थको वैकुण्ठस्य मन्त्रवर्णो भवति (१०.४६.६)। उद्धरणसमये पीडा भवत्येव, सा च संस्करणार्था । 'दासं' क्षपयितारं वृत्रं वध्र्यं यथा अरुजं तथा अदासं भक्तं अपीडार्हमपि नववास्त्वं अपीडयम् । तथा निष्पीड्य 'दूरे पारे रजसो रोचनाकरम्' उज्ज्वलस्य लोकस्य दूरे पारे अस्थापयम् इति वैकुण्ठस्योक्तिः । अत्र सायणव्याख्या तु वृत्रमिव दासं नववास्त्वं अरुजम् इति भवति, अत एव यो राजर्षिरभूत् प्रथमे मण्डले स दशमेऽसुरः कृतः । एवं षष्ठेऽपि

(६.२०.११) नववास्त्वं असुरं 'परा' पराहत्य पित्रे 'नपातं' दत्तवानिति सायणः । 'परा नववास्त्वं अनुदेयं महे पित्रे ददाथ स्वं नपातम् अत्र महान् पिता उत्तमो ज्योतिर्मयो लोकः तस्मै 'महे पित्रे' अनुदेयं अनुक्रमेण दातव्यं नववास्त्वं स्वं नपातं स्वभूतं पुत्रं 'परा ददाथ' परस्ताद्दत्तवानित्यर्थः । अयमर्थः वैकुण्ठस्य मन्त्रवर्णेन संगच्छते । तत्र 'दूरे पारे रजसो रोचनाकरम्' इति स्थितम्, अत्र तु 'परा ददाथ' इति । तस्मान्नायममुरो नववास्त्व इति सिद्धम् । एवं सायणव्याख्यानुसारेण नववास्त्वमधिकृत्य यः पौर्वापर्यविरोध आपद्यते स परिहृतोऽस्मन्मन्त्रार्थविवरणे ।। १८ ।।

## ऋक्संहिता पदपाठसहिता

**नि त्वाम॑ग्ने मनु॑र्दधे ज्योति॒र्जना॑य॒ शश्व॑ते । दी॒देथ॒ कण्व॑ ऋ॒तजा॑त उ॒क्षि॒तो यं नम॑स्यन्ति॑ कृ॒ष्टय॑: ।। १९ ।।**

**नि । त्वाम् । अ॒ग्ने॒ । मनु॑: । द॒धे॒ । ज्योति॑:। जना॑य । शश्व॑ते ।। दी॒देथ॑ । कण्वै॑ ऋ॒तऽजा॑तः । उ॒क्षि॒तः । यम् । न॒मस्य॑न्ति॑ । कृ॒ष्टय॑: ।। १९ ।।**

## ऋग्भाष्यम्

**मनुष्यः सन्नहं त्वां तु ज्योतिर्मुक्तजनाय च ।**
**निदधे हृदि सत्त्वं च दीप्यसे मयि सर्वदा ।**
**ब्रह्मजोऽग्निर्ऋताद्वेदवाचोऽभिव्यज्यते हरिः ।**
**उक्षितः स्वगुणैः सर्वैर्युक्तः.......... ।। १९ ।।**

**ऋग्भाष्यटीका–** नित्वाम् । मनुष्यः । हे अग्ने । मनुर्मनुष्यः सन्नहम् । शश्वते शाश्वताय । जनाय मुक्तजनायापि । ज्योतिर्ज्ञानप्रदम् । त्वा तु हृदि निदधे । अहो मदीयं धाष्ट्यम् । यदल्पोप्यहं महान्तं त्वां द्रष्टुं चिन्तयामीति भावः । त्वदीयं च कृपालुत्वमाश्चर्यम् । **कथमिति** । यं त्वाम् । कृष्टयः सर्वाः प्रजाः । **नमस्यन्ति** । यश्चत्वम् ऋतजातः । अग्निश्चेद् ब्रह्मजः । ऋतात्परब्रह्मणो जात इति । हरिर्ऋतादर्थाव्यभिचारिणः वेदवाच इति यावत् । अभिव्यज्यत इत्यृतजातः । उक्षितः सिक्तः । सम्बन्धः । सर्वैः स्वगुणैर्युक्त इति यावत् । स एवं गुणकश्च त्वम् । कण्वे मयि । दीदेथ । सर्वदा दीप्यसे प्रतीयसे । व्यत्ययात् ।। १९ ।।

**मन्त्रार्थमञ्जरी–** हे अग्ने । **मनुः,** मनुष्यः सन् । **अहम् शश्वते,** शाश्वताय । **जनाय,** मुक्तजनाय । अपि **ज्योतिः,** ज्ञानप्रदम् । त्वाम् हृदि **निदधे,** अहो! मदीयं धाष्टर्यम्, यदल्पोऽप्यहं तं त्वां द्रष्टुं चिन्तयामि इति भावः । त्वदीयं च कृपालुत्वमाश्चर्यम् कथम्? **यम्,** त्वाम् । **कृष्टयः,** सर्वाः प्रजाः । नमस्यन्ति । **यश्च** त्वम् । **ऋतजातः,** ऋतादर्थाव्यभिचारिणो वेदवाक्यादभिव्यज्यत इत्यृतजातः, प्रसिद्धाग्निपक्षे ऋतात्परब्रह्मणो जातः इत्यर्थो ज्ञेयः । उक्षितः 'उक्ष सेचने' सिक्तः, सम्बद्धः, सर्वैः स्वगुणैर्युक्त इति यावत् । सः एवं गुणश्च त्वम् । **कण्वे,** मयि **दीदेथ,** सर्वदा दीप्यसे, 'दीपी दीप्तौ' इत्यस्य द्युत्यर्थस्य दीव्यतेः वा श्लुविकरणस्य धात्वन्तलोपे गुणे च रूपम् ।। १९ ।।

**स्कन्द– त्वाम्** हे **अग्ने! मनुः नि दधे** पृथिव्यां निहितवान् । **ज्योतिः** अन्तर्णीत-मत्वर्थमेतत् द्रष्टव्यम् । ज्योतिष्मन्तम् । **जनाय शश्वते** बहवे बहूनां मनुष्याणामर्थाय । **दीदेथ** दीप्यस्व । **कण्वे यस्य च भावेन भावलक्षणम्** (पा.२,३,३७) इत्येवमियं सप्तमी । तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः । यस्त्वं कण्वे यजति **ऋतजातः** ऋतो यज्ञः तत्र जातः उत्पन्नः । अथवा ऋत आदित्यः ततो जातः । आदित्यादाहृत इत्यर्थः । तदुक्तम्– **'यमग्निं मेध्यातिथिः कण्व ईध ऋतादधि'** (ऋ.१,३६,११) इति । **उक्षितः** उक्ष सेचने । आहुत्याज्येन सिक्तः । स त्वं । कीदृशः । उच्यते । **यम् नमस्यन्ति** परिचरणकर्माऽयम् (तु.निघ.३-५)परिचरन्ति । **कृष्टयः** मनुष्याः ।। १९ ।।

**वेङ्कटमाधव– नि दधे त्वाम् अग्ने मनुः** अनेकस्मै **जनाय** ज्योतिर्भूतम् । स दीप्यस्व कण्वे मयि यज्ञाज्जातो हविर्भिः **उक्षितः** । **यम्** त्वाम् **नमस्यन्ति** परिचरन्ति मनुष्याः ।।

**मुद्गल– हे अग्ने! ज्योतिः** प्रकाशरूपम् **त्वाम् शश्वते जनाय** बहुविधाय जनाय **मनुः** प्रतापति **नि दधे** देवयजनदशे स्थापितवान् । हे अग्ने त्वम् **ऋतजातः** ऋतेन यज्ञेन निमित्तभूतेनोत्पन्न **उक्षितः** हविर्भिः तर्पितः सन् **कण्वे** एतग्रामक महर्षौ **दीदेथ** दीप्तवानसि । **यम्** अग्निम् **कृष्टयः** मनुष्याः **नमस्यन्ति** नमस्कुर्वन्ति । स त्वमिति पूर्वत्रान्वयः ।।१९।।

**सायण–** हे **अग्ने ज्योतिः** प्रकाशरूपं **त्वां शश्वते** बहुविधाय **जनाय मनुः** प्रजापतिः **नि दधे** देवयजनदेशे स्थापितवान् । हे अग्ने त्वम् **ऋतजातः** ऋतेन यज्ञेन निमित्तभूतेनोत्पन्नः

**उक्षितः** हविभिस्तर्पितः सन् **कण्वे** एतन्नामके महर्षौ **दीदेथ** दीप्तवानसि । **यम्** अग्निं **कृष्टयः** मनुष्याः । 'कृष्टयः चर्षणयः' (नि.२.३.७) इति मनुष्यनामसु पठितत्वात् । 'नमस्यन्ति नमस्कुर्वन्ति । स त्वमिति पूर्वत्रान्वयः ।। दीदेथ । दीदेतिश्छान्दसो दीप्तिकर्मा । थलि द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम्' (का.६.१.८.१) इति द्विर्वचनाभावः । 'अनित्यमागमशासनम्' इति वचनात् इडभावः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । ऋतजातः । ऋते जन्यते इति ऋतजातः । 'श्वीदितो निष्ठायाम्' इति इट् प्रतिषेधः । 'जनसन' इत्यादिना आत्वम् । तृतीयापूर्वपदप्रकृतिस्वरत्वम् । नमस्यन्ति । 'नमोवरिवः' (पा.सू.३.१.१९) इति पूजार्थे क्यच् । अदुपदेशात् लसार्वधातुकानुदात्तत्वे क्यजन्तधातुस्वरः । कृष्टयः । 'कृप विलेखने' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् ।। १९ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, ज्योतिः** ज्योतिःस्वरूपं **त्वाम् शश्वते** शाश्वताय **जनाय** सार्वकालिकाय जन्मिने, सर्वदा मनुष्यजातये तदनुग्रहायेत्यर्थः (शवते वीर्याय शाश्वताय वीर्याय इति सायणः (३.३२.५) अत्र बहुविधाय जनायेत्याह)। **मनुः** मन्ता मनुष्याणां मूलपुरुषो देवः **निदधे** स्थापयामास । हे अग्ने, **ऋतजातः** ऋतात् सत्यादुतमस्थानात् जातः **उक्षितः** सिक्तः, तर्पितः सोमरूपैर्हविभिः त्वं **कण्वे** मेधाविनि यजमान ऋषौ, अधुना मयि, **दीदेथ** दीप्तवानसि **यम् कृष्टयः** प्रयत्नवन्तो मनुष्याः **नमस्यन्ति** नमस्कुर्वन्ति ।। दीदेथ-दीदेतिः छान्दसो धातुः । कृष्टयः-कृष विलेखने, क्तिच् ।। १९ ।।

## ऋक्संहिता पदपाठसहिता

**त्वेषासो अग्नेरमवन्तो अर्चयो भीमासो न प्रतीतये । रक्षस्विनः सदमिद्यातुमावतो विश्वं समत्रिणं दह ।। २०,११,३६ ।।**

त्वेषासः । अग्नेः । अमऽवन्तः । अर्चयः । भीमासः । न । प्रतिऽइतये । रक्षस्विनः । सदम् । इत् । यातुऽमावतः । विश्वम् । सम् । अत्रिणम् । दह ।। २०,११,३६ ।।

## ऋग्भाष्यम्

.........................अमेयाश्च शक्तयः ।

त्वेषा इत्युदितास्तस्य हरे रश्मय एव च ।
भीमा न प्रतिगन्तुं च शक्या राक्षसपक्षिणः ।
यातवो जंगमास्तेषां हिंसनावांस्तु राक्षसः ।
यातुमावानिति प्रोक्तो यातनानुभवात्कचित् ।
यातुरित्येव च प्रोक्तः सन्तं प्रत्यनुकूलतः ।
स्थितास्ताः शक्तयो विष्णोः............. ।। २०, ११, ४ ।।

**ऋग्भाष्यटीका– त्वेषासः** । अमेयाश्च । अग्रेस्तस्योक्तगुणस्य हरेस्त्वेषासः त्वेषा इत्युदिताः शक्तयश्च । यद्यपि त्विष दीप्ताविति पठ्यते । तथाप्यर्चय इति पृथगुक्तत्वाच्छक्तयोऽत्र ग्राह्याः । अर्चयो रश्मयश्चामवन्तः अमावतः अमेया एव । **भीमासो** भीमा भयंकराश्च । कथम् । **सदमित्** सर्वेषु स्थानेषु **यातुमावतो** रक्षस्विनः । रक्षांस्यस्य सन्तीति राक्षसपक्षिणः पुरुषस्य । प्रतीयते प्रतिगन्तुम् आभिमुख्येन गन्तुमपि । न शक्या इति शेषः । एवं भूतस्त्वं विश्वं समस्तमत्रिणं **सन्दह** । रक्षस्वी यातुमावान् कस्मादुक्त इत्यत आह ।। **यातव इति** ।। यातेस्तुन् । तेषां यातूनां हिंसना यातुमा । स्वार्थे णिजिति हिंसैव हिंसना । मीङ्हिंसायाम् । मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यत इत्यभिधानम् । तद्वान्यतस्तस्माद्राक्षसो रक्षस्वी यातुमावानिति प्रोक्तः । यातनानुभवाच्च यातुमावानिति प्रोक्तः । यातुर्यातना तस्य माऽनुभवो यातुमा । **तद्वानिति** । प्रसङ्गाच्छिष्यशिक्षार्थमाह ।। **कचिदिति** ।। उलूकयातुमित्यादौ । तत्रापि यातनैव निमित्तमिति भावः । यात्यत इति यातुः । रक्षस्विनो न प्रतीयत इति विशेषणं किमर्थमित्यत आह ।। **सन्तमिति** ।। ता विष्णोः शक्तयः रश्मयश्च सन्तं पुरुषं प्रत्यनुकूलतः स्थिताः आभिमुख्येन गन्तुं शक्याः । यथा प्रल्हादादेः अतो रक्षस्विन इति सार्थकं विशेषणम् ।। २०,११,४ ।।

**मन्त्रार्थमञ्जरी–** अग्रेः प्रागुक्तगुणस्य हरेः । **त्वेषासः**, 'त्वेषाः' इत्युक्ताः शक्तयः । च **अर्चयः**, रश्मयः । च **अमवन्तः**, अमावन्तः, मा मर्यादा, अमेयाः । एव **भीमासः**, भीमाः, भीकराः । च कथम्? **सदम् इत्**, सर्वेषु स्थानेषु । **यातुमावतः**, यातुर्यातना, तस्य मानुभवः, तद्वान्यातुमावान्, तस्य यातनानुभविनः । **रक्षस्विनः**, रक्षांस्यस्य सन्तीति राक्षसपक्षिणः पुरुषस्य । **प्रतीतये**, प्रतिगन्तुमभिमुखेन गन्तुम् । अपि न शक्यते इति शेषः । एवं भूतः त्वम् **विश्वम्**, समस्तम् । **अत्रिणम्**, प्राक् उक्तार्थमिदं पदम् । **सम् दह**, 'दह भस्मीकरणे' संहर इत्यर्थः ।। २० ।।

**स्कन्द–** **त्वेषासः** दीप्ताः **अग्नेः** स्वभूता **अमवन्तः** आत्मपर्यायममशब्दं व्याचक्षते । **आत्मवन्तः** । यत्नवन्त इत्यर्थः । अथवा मम गत्यादिषु । गमनवन्तः । अम रोगे । तमसो रोगवन्तः । तमसो भङ्गवन्त इत्यर्थः । **अर्चयः** ज्वालाः । **भीमासः न प्रतीतये** न प्रतिगमनाय कस्यचित् । न केनचित् प्रत्यभिभवितुं शक्या इत्यर्थः । परोऽर्धर्च प्रत्यक्षकृतो भिन्नं वाक्यम् । **रक्षस्विनः** रक्षोजातिमतः । राक्षसानित्यर्थः । कीदृशान् । उच्यते । **सदम् इत्** सदंशब्दः सदाशब्द पर्यायः । इच्छब्दः एवार्थे । सदैव । **यातुमावतः** मावत इति **वतुप्प्रकरणे युष्मदस्मभ्यां छन्दसि सादृश्य उपसंख्यानम्'** (पावा.५,२,३९) इत्येवं वतुप् । मावतो यातवो यातुमावन्तः । षष्ठीसमासे छान्दसत्वात् राजदन्तादित्वाद्वा परनिपातः । तान् यातुमावतः । मत्सदृशस्याप्युपरि रक्षोभूतानित्यर्थः । अथवा यातुधानैर्निर्मीयमाणत्वात् यातुमा हिंसा । तद्वतो यातुमावतः । **विश्वम्** सर्वं च **अत्रिणम्** अत्तारमस्माकं व्याघ्रादिकम् **सम् दह** ।। २० ।।

**वेङ्कटमाधव–** दीप्ताः **अग्नेः** बलवन्तः **अर्चयः** भयङ्करा **न** प्रतिगमनाय । रक्षोभिरभिभवितृभिर्युक्तात् सदा एव **यातुमावतः** यो मत्सदृशस्त्वामुपगच्छति तस्मात् **विश्वम्** रक्षः **सम् दह** इति ।। २० ।।

**मुद्गल–** **अग्नेः अर्चयः** ज्वालाः **त्वेषासः** दीप्ताः **अमवन्त** बलवन्तः **भीमासः** भयङ्कराः । अत **प्रतीतये** अस्माभिः प्रत्येतुम् न शक्या इति शेषः । हे अग्ने **रक्षस्विनः** बलवत **यातुमावतः** यातुधानान् असुरान् **सदम् इत्** सर्वदैव **सम् दह** सम्यग्भस्मीकुरु । तथा **विश्वम्** सर्वम् **अत्रिणम्** भक्षकम् अस्मद्बाधकं शत्रुं सन्दह ।। २० ।।

**सायण–** **अग्नेः अर्चयः** ज्वालाः **त्वेषासः** दीप्ताः **अमवन्तः** बलवन्तः **भीमासः** भयंकराः । अतः प्रतीतये अस्माभिः प्रत्येतुं न शक्या इति शेषः । हे अग्ने **रक्षस्विनः** बलवतः यातुमावतः यातुधानानसुरान् **सदमित्** सर्वदैव **सं दह** सम्यग्भस्मीकुरु । तथा **विश्वं** सर्वं **अत्रिणं** भक्षकं अस्मद्बाधकं शत्रु सं दह ।। त्वेषासः । 'त्विष दीप्तौ' । पचाद्यच् । 'चितः' इत्यन्तोदात्तत्वम् । अमवन्तः । 'अम रोगे' । अमति शत्रून् रुजतीति अमो बलम् । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । तदेषामस्तीत्यमवन्तः । प्रतीतये । 'तादौ च निति' इति गतेः प्रकृतिस्वरत्वम् । रक्षस्विनः । रक्षन्त्यनेनेति रक्षो बलम् । करणेऽसुन् । 'अस्मायामेधा' इति मत्वर्थीयो विनिः । यातुमावतः । यातवो यातनाः । तान् मिमते निर्मिमते इति राक्षसव्यापारा यातुमाः । 'आतोऽनुप-

सर्गे कः त्रः' इति कः । तदेषामस्तीति मतुप् । मतौ बह्वचोऽनजिरादीनाम् इति दीर्घत्वम् । सञ्ज्ञायाम् इति वत्वम् । मतुपः पित्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । अत्रिणम् । अदेस्त्रिनि च इति कर्तरि त्रिनिप्रत्ययः ।

'क्रीळं वः इति द्वितीयं सूक्तम् पञ्चदर्शचम् । अत्रेयमनुक्रमणिका क्रीळं पञ्चोना मारुतं हि गायत्रं तु इति । ऋषिश्चान्यस्मादृषेरवाविशिष्टः इति परिभाषया घोरपुत्रः कण्वः ऋषिः । इदमुत्तरं च गायत्रीच्छन्दस्के । इदमादिसूक्तत्रयं मरुद्देवताकं तुहिहवेति परिभाषितत्वात् । व्यूळ्हे द्वितीये छन्दोमे अग्निमारुतशस्त्रे एतत्सूक्तं निविद्धानीयम् । द्वितीयस्याग्निं वो देवम् इति खण्डे सूत्रितं क्रीळं वः शर्धोऽग्रे मृळेत्याग्निमारुतम् (आश्व.श्रौ-८-१०) इत्येषा प्रधानस्यानुवाक्या । तथा ततः इति खण्डे सूत्रितम् क्रीळं वः शर्धोऽग्रे मृळेत्याग्निमारुतम्' (आश्व.श्री.८.१०) इति । ब्राह्मणं च-क्रीळं वः शर्धो मारुतम्' (ऐ.बा.५.१९) इति । 'मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्त-कपालम्' इत्यस्यामिष्टौ 'क्रीळं वः' इत्येषा प्रधानस्यानुवाक्या । 'तथा ततः' इति खण्डे सूत्रितं-क्रीळं वः शर्धो मारुतमत्यासो न ये मरुतः स्वञ्चः (आश्व.श्रौ.२.१८) इति ।। २० ।।

**सिद्धाञ्जनम्– अग्नेः** देवस्य **अर्चयः** ज्वालाः **त्वेषासः** दीप्ताः **अमवन्तः** बलवन्तः **भीमासः** घोराः **प्रतीतये न** प्रत्येतुं प्रतिगन्तुं शत्रुभिः प्रत्यवस्थातुं न शक्या इत्यर्थः । तस्मात्, हे अग्ने **रक्षस्विनः** रक्षोवलयुक्तान् **यातुमावतः** यातुधानान् यजनविरोधिनः राक्षसविशेषान् **सदमित्** सदैव **संदह** भस्मीकुरु । तथा **विश्वम्** सर्वं **अत्रिणम्** भक्षकं शत्रु संदह । त्वेषासः-त्विष दीप्तौ, पचाद्यच् । अमवन्तः-अम रोगे अमति रुजति शत्रून इति अमः बलं तद्वन्तः । रक्षस्विनः रक्षः बलं रक्षन्त्यनेनेति व्युत्पत्तिं मन्यते सायणः । मत्वर्थीयो विनिः । रक्षांसि एषां सन्तीति युक्तम् । यातुमावतः यातवो यातनाः तान् मिमते निर्मिमत इति यातुमाः राक्षसव्यापाराः, ततो मतुप् ।। २० ।।

।। इति प्रथमाष्टके तृतीयाध्याये एकादशो वर्गः ।।

# ऋक्संहिता पदपाठसहिता

(सूक्तम् ३७)

१५ कण्वो घौरः । मरुतः । गायत्री ।

**क्रीळं वःशर्धो मारुतमनर्वाणं रथे शुभम् । कण्वा अभिप्रगायत ।। १ ।।**

**क्रीळम् । वः । शर्धः । मारुतम् । अनर्वाणम् । रथेऽशुभम् । कण्वाः । अभि । प्र । गायत ।। १ ।।**

## ऋग्भाष्यम्

**........क्रीडाशीलं च मारुतम् ।**
**शर्धः सुखबलाढ्यं वाप्यनर्वाणमनिन्द्रियम् ।**
**न वायोरिन्द्रियाणां हि देवाः सन्त्यभिमानिनः ।**
**अतोऽनिन्द्रियता तस्य रथे देहे शुभश्च सः ।**
**कण्वास्तं गायताभीक्ष्णं विष्णुं वा तादृशं गुणैः ।। १ ।।**

**ऋग्भाष्यटीका–** क्रीळम् । पञ्चदशर्चमिदं मारुतं सूक्तम् । तत्राद्या प्रधानमरुद्विषया । एवमेकवचनादन्यत्रापि ज्ञेयम् । शेषाः साधारणाः । क्रीडा । हे कण्वाः काण्वा मदीयाः । **क्रीळम्** । क्रीडं क्रीडाशीलम् । यद्यपि पचाद्यच् इगुपधलक्षणः को वा कर्तृमात्रे विहितः । तथापि जगत्पालनादिक्रीडयाऽस्य न किमपि प्रयोजनमिति ज्ञाप(यितुमेवमुक्तं)नायैवमुक्तम् । **शर्धः** सुखाढ्यम् । बलाढ्यमपि वेति योज्यम् । अनर्वाणमनिन्द्रियम् । 'इन्द्रियाणि हयानाहुः' इति श्रुतेः । 'यः स रथे प्राणिनां देहे शरीरं रथमेव च' इति श्रुतेः । शुभः शोभावांश्च तम् । वो युष्माकं स्वामिनमिति शेषः । मारुतं च गुणैस्तादृशं क्रीडाशीलत्वादिगुणैः क्रीडादिशब्दवाच्यं विष्णुं वा विष्णुं चाभिप्रागायत स्तुत । विष्णोः प्राकृतविग्रहविधुरत्वाद्युक्तानिन्द्रियता । वायोस्तु कथमित्यत आह ।। **नेति** ।। इन्द्रियशब्देन तदभिमानिनोऽत्र विवक्षिता इति भावः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'क्रीळं वः' इत्यादि पञ्चदशर्चं वर्गत्रयात्मकं मारुतं गायत्रं सप्तत्रिंशं सूक्तम् । तत्र आद्या (चतुर्थी पञ्चमीच) प्रधानमरुद्विषया, शेषाः साधारणाः । हे कण्वाः । **क्रीळम्,** क्रीडम्, क्रीडतेः पचाद्यच्, इगुपधलक्षणः कप्रत्ययो वा, क्रीडमानम् । **शर्धः,** सुखाढ्यम्, बलाढ्यमपि वा । **अनर्वाणम्,** अनिन्द्रियम्, इन्द्रियाभिमानिदेवताहीनम्, 'इन्द्रियाणि' हयानाहुर्

(का०उ०१।३४) इति श्रुतेः । यो रथे प्राणिनां देहे 'शरीरं रथमेव च' (का०उ०१।३।३) इति श्रुतेः शुभः शोभावाँश्च तम् (रथेशुभम्) । **वः**, युष्माकम् । स्वामिनम् इति शेषः । मारुतम् च क्रीडाशीलत्वादिगुणैः क्रीडादिशब्दवाच्यं विष्णुम् च अभि प्र गायत, स्तुवीत ।। १ ।।

**स्कन्द–** 'त्रीणि सूक्तानि मारुत' (तु.वृदे३,१०७) । त्रीण्येतानि सूक्तानि मरुद्देवत्यानि । **कीळम्** क्रीडनस्वभावकम् । **वः** प्रथमायाः स्थान इयं द्वितीया । यूयम् **शर्धः** बलम् **मारुतम्** मरुतां स्वभूतं मरुत्समूहरूपं वा । **अनर्वाणम्** ऋ गतौ । अन्यत्र आश्रिततया गन्ता अर्वा । आश्रित इत्यर्थः । ततोऽन्य अनर्वा । तमनर्वाणम् । शर्धसश्च नपुंसकस्य विशेषणत्वात् व्यत्यये-नात्र पुल्लिङ्गता । अन्यत्र अनाश्रितमित्यर्थः । **रथेशुभम्** रथेषु व्यवस्थितं यत् शोभते तत् रथेशुमम् । **हे कण्वाः!** मम कण्वस्य पुत्राः । पौत्राः । **च अभि प्र गायत** गायतिरर्चतिकर्मा (तु.निघ.३,१४) । अभिप्रेत्यनयोश्चात्र विपर्ययो द्रष्टव्यः । प्राभिगायत प्रकर्षेणाभिष्टुत ।।१।।

**वेङ्कटमाधव–** क्रीडमानं यूयं मरुतां वेगम् अप्रत्यृतमन्यस्मिन् रथे यः शोभते तम् कण्वाः । **अभि प्र गायत** ।। १ ।।

**मुद्गल–** 'क्रीळं वः' इति पञ्चदशर्चं द्वितीयं सूक्तम् । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । मरुतो देवताः ।।१।।

**सायण– हे कण्वाः** कण्वगोत्रोत्पन्ना महर्षयः । यद्वा । मेधाविन ऋत्विजः । **वः** युष्मदर्थ **मारुतं** मरुत्समूहरूपं **शर्धः** बलम् **अभि प्र गायत** अभितः प्रकर्षेण स्तुध्वम् । कीदृशं शर्धः । **क्रीळं** विहरणशीलम् **अनर्वाणं** भ्रातृव्यरहितम् । अत एव श्रुत्यन्तरब्राह्मणेन मन्त्रान्तरमेवं व्याख्यातम्-**अनर्वा** प्रेहीत्याह भ्रातृव्यो वा अर्वा भातृव्यापनुत्त्यै (तै.सं.६.३.८.४) इति । **रथेशुभं** स्वकीये रथेऽवस्थाय शोभमानम् ।। क्रीळम् । 'क्रीडृ विहारे' । पचाद्यच् । शर्धः । 'शृधु प्रसहने' । शर्धयत्यनेन शत्रूनिति शर्धो बलम् । असुन् । नित्त्वादाद्युदात्तत्वम् । मारुतं मरुतां सम्बन्धि । 'तस्येदम्' इति अण् । व्यत्ययेनाद्युदात्तत्वम् । यद्वा । समूहार्थे 'अनुदात्ता-देरञ्' (पा.सू.४.२.४४ ) इत्यनुदात्तादिलक्षणः अञ्प्रत्ययः । अनर्वाणम् । व्यत्ययेन पुंलिङ्गता । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । रथेशुभम् । 'शुभ दीप्तौ' । रथे शोभते इति रथेशुभम् । शुभ दीप्तौ । रथे शोभते इति रथेशुप् । क्विप् च इति क्विप् । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । गायत । 'कै गै रै शब्दे' । तिङ्ङतिङः' इति निघातः ।।

**सिद्धाञ्जनम्–** हे **कण्वाः**, मेधाविनः, कण्ववंश्या वा, **वः** युष्माकं सम्बन्धिनं **मारुतम्** मरुतामिदं **शर्धः** बलं, मरुद्गणं **अभि प्र गायत** अभितः प्रकर्षेण स्तुत । कीदृशं शर्धः ? **क्रीळम्** विहरणशीलं **अनर्वाणम्** युद्धाश्वरहितं, (अर्वा युद्धाश्वः) **रथेशुभम्** रथे शोभमानम् ।। क्रीळम्-कीडतेः पचाद्यच् । शर्धः-शृधु प्रसहने शर्धयत्यनेन शत्रूनिति शर्धो बलं सैन्यम् । रथेशुभम्-रथे शोभत इति रथेशुप् क्विप्, तत्पुरुषे कृति बहुलमित्यलुक् ।। मरुतोऽधिकृत्य प्रागुक्तम् । मरुतश्चण्डवेगाः प्राणमयधामानः ऐन्द्रज्योतिर्बलदीपितानां धीवृत्तीनां दिव्यगतिविधायिनः प्रवातप्रायवेगाः देवविशेषा इत्युक्तम् ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**ये पृष॑तीभिर्ऋ॒ष्टिभि॑ः सा॒कं वाशी॑भिर॒ञ्जिभि॑ः । अजा॑यन्त॒ स्वभा॑नवः ।।२।।**

**ये । पृष॑तीभिः । ऋ॒ष्टिऽभि॑ः । सा॒कम् । वाशी॑भिः । अ॒ञ्जिऽभि॑ः । अजा॑यन्त । स्वऽभा॑नवः ।।**

## ऋग्भाष्यम्

पृषत्यो वाहनान्येषामन्यदायुधमुच्यते ।
स्वप्रकाशोथ वा विष्णुस्तल्लिङ्गैर्व्यज्यते सह ।
तत्तद्देवगतस्यापि विष्णोर्लिङ्गं च तद्भवेत् ।। २ ।।

**ऋग्भाष्यटीका–** **ये पृषतीभिः** । अत्र पृषत्यादिशब्दार्थमाह ।। **पृषत्य इति** ।। एषां मरुताम् । अन्यदृष्ट्यादित्रयम् आयुधमायुधविशेषः ये स्वभानवोऽनागन्तुकतेजस्काः पृषतीभिर्ऋष्टिभिर्वाशीभिरंजिभिश्चसाकमजायन्त आजन्मन एवमाद्युपेताः । उत्तरत्र सम्बन्धः । विष्णावेतद्घटयितुमाह ।। **स्वप्रकाश इति** ।। स्वः स्वविषयो भानुः प्रकाशो ज्ञानं यस्यासौ स्वर्भानुरित्यर्थः । बहुरूपत्वाद्बहुवचनमित्युक्तमेव । तैः पृषत्यादिभिर्लिङ्गैः सह व्यज्यत इत्यनेन जन्मसमर्थितं तल्लिङ्गसाहित्यं कथमित्यत आह ।। तत्तदिति । विष्णोरपीति सम्बन्धः । तच्च तदेव ।।

**मन्त्रार्थमञ्जरी–** ये । **स्वभानवः,** अनागन्तुकतेजस्काः । **'पृषतीभिः,** वाहनैः । ऋष्टिभिः वाशीभिः अञ्जिभिः च, ऋष्ट्यादिनामकायुधविशेषैः । **साकम् अजायन्त,** आजन्मन एवायुधाद्युपेताः । विष्णुपक्षे तु स्वः स्वविषयो भानुः प्रकाशो ज्ञानं येषां ते स्वभानवः । ये,

भगवद्रूपविशेषाः, बहुरूपत्वाद्बहुवचनम्, 'ॐ गुहां प्रविष्टावात्मानौ' (१।२।११) इत्युक्तन्यायात् । पृषतीभिः ऋष्टिभिः वाशीभिः अञ्जिभिः च पृषत्यादिनामकवाहनायुधविशेषैः । उत्पद्यमानमरुत्सु व्यज्यन्त इति विष्णुरूपविशेषा अपि 'पृषत्यादिभिः साकम् अजायन्त' इति युज्यते, 'ॐ द्युभ्वाद्यायतनं स्वशब्दात् ॐ' (१।३।१) इत्यत्राजस्यापि व्यक्तिरूपजनेरुक्तत्वात्, मरुत्त्वलिङ्गानामपि 'ॐ शास्त्रदृष्ट्या तूपदेशो' (१।१।३०) इत्युक्तन्यायेन तत्तदन्तर्यामिगतत्वेनोपपत्तेः इति । अत्र यद्शब्दस्योत्तरत्र अन्वयः ।। २ ।।

**स्कन्द–** ये मरुतः **पृषतीभिः** अत्र आदिष्टोपयोजनमेतत् अश्वनाम । पृषद्वर्णाभिः वडवाभिः । **ऋष्टिभिः 'अंसेषु व ऋष्टयः'** (ऋ.५,५४,११) इत्यंसस्थत्वदर्शनात् तूणाः शक्तयो वा ऋष्टय उच्यन्ते, ताभिश्च । **साकम्** सह । **वाशीभिः** आयुधविशेषाः वाश्यः ताभिश्च । अञ्जिभिः रत्नप्रायाण्यामरणानि अञ्जय उच्यन्ते, तैश्च । **अजायन्त स्वभानवः** स्वदीप्तयः । अपराश्रयविभूतयः सर्वोपकरणैः सहैव ये जाता इत्यर्थः । तेषां शर्ध अभिप्रगायतेत्येवं यच्छब्दश्रुतेः पूर्वया ऋचा एकवाक्यता परया वा ।। २ ।।

**वेङ्कटमाधव–** ये वृषद्वर्णैरश्वैः **ऋष्टिभिः** च अंसस्थैः **साकम् वाशीभिः** च कटाहाकारैरायुधैः आभरणैश्चाञ्जनसाधनैः सह प्रादुर्भवन्ति स्वदीप्तयः, तेषां शर्धः अभिप्रगायत इति ।।

**मुद्गल– ये** मरुतः **पृषतीभिः** पृषत्यादिभिः साकं स्वभानवः स्वकीयदीप्तियुक्ताः **अजायन्तः** सम्पन्नाः । पृषत्यो बिन्दुयुक्ता मृग्यः मरुद्वाहनभूताः । ऋष्टयः आयुधानि । वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः । अञ्जयः अलङ्करणानि । तान् स्तुम इति शेषः ।। २ ।।

**सायण–** 'ये मरुतः पृपत्यादिभिः 'साकं स्वभानवः स्वकीयदीप्तियुक्ताः 'अजायन्त इति' संपनाः । पृषस्यो बिन्दुयुका मृग्यो मरुद्वाहनभूताः । 'पृपत्यो मरुताम्' (नि.१.१५.६) इति निघण्टावुक्तस्वात् । ऋष्टय आयुधानि । वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः । 'वाशी वाणी' (नि.१.११.११) इति वाङ्नामसु पठितस्वात्। अञ्जयोऽलंकरणानि । तान् स्तुम इति शेषः ।। अजायन्त । 'जनी प्रादुर्भावे' । श्यनि 'ज्ञाजनोर्जा' (पा.सू.७.३.७९) इति जादेशः । अडागम उदात्तः । स्वभानवः । स्वकीया भानवो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वस्वम् ।।

**सिद्धाञ्जनम्–** ये मरुतः **पृषतीभिः** बिन्दुयुक्तमृगीभिः वाहनभूताभिः **ऋष्टिभिः** आयुधैः **साकम्**

सह, तथा **अञ्जिभिः** अलङ्करणैः **वाशीभिः** वाग्भिः साकं **स्वभानवः** स्वकीयरश्मियुक्ता **अजायन्त** सम्पन्नाः । प्रागुक्तमरुद्गणतत्त्वग्रहणेन पृषत्यादीनां लाक्षणिकत्वं सुगमं स्यात् । पृषत्यः प्रवातवेगचुश्रवःप्राणभूसमुद्भवं धीवृत्तीनां दिव्यगतिविधायिनं मरुद्गणं वहन्ति । ऋष्टयः (ऋषतेर्दर्शनार्थात्) दृष्टयः, हिंसार्थात् आयुधानि । प्रचण्डवेगानां मरुतां दृष्टय एव आयुधानि भवन्ति । अञ्जिभिः वाशीभिरित्यत्र, व्यञ्जयन्तीभिः वाग्भिरिति उभयोः सामानाधिकरण्यं ग्राह्यम् ।। मरुतां प्रवातवेगोत्थाः शब्दा वाचः गहनानि गुप्तानि वा विभिद्य व्यञ्जयन्ति, प्रकाशयन्ति । अत एव मरुतः 'अञ्जिभिः वाशीभिः' साकं स्वभावोचितचित्प्रकाशरश्मिभिर्युक्ताः प्रादुर्भूताः ऋषेरन्तर्यागप्रवृत्तस्येति बोध्यम् । ये मरुतः पृषतीभिः बिन्दुयुक्तमृगोभिः वाहनभूताभिः ऋष्टिभिः आयुधैः **साकम्** सह, तथा **अञ्जिभिः** अलङ्करणैः **वाशीभिः** वाग्भिः साकं **स्वभानवः** स्वकीयरश्मियुक्ता **अजायन्त** सम्पन्नाः । प्रागुक्तमरुद्गणतत्त्वग्रहणेन पृषत्यादीनां लाक्षणिकत्वं सुगमं स्यात् । पृषत्यः प्रवातवेगचुश्रवः प्राणभूसमुद्भवं धीवृत्तीनां दिव्यगतिविधायिनं मरुद्गणं वहन्ति । ऋष्टयः (ऋषतेर्दर्शनार्थात्)दृष्टयः, हिंसार्थात् आयुधानि । प्रचण्डवेगानां मरुतां दृष्टय एव आयुधानि भवन्ति । अञ्जिभिः वाशीभिरित्यत्र, व्यञ्जयन्तीभिः वाग्भिरिति उभयोः सामानाधिकरण्यं ग्राह्यम् । मरुतां प्रवातवेगोत्थाः शब्दा वाचः गहनानि गुप्तानि वा विभिद्य व्यञ्जयन्ति, प्रकाशयन्ति । अत एव मरुतः 'अञ्जिभिः वाशीभिः' साकं स्वभावोचितचित्प्रकाशरश्मिभिर्युक्ताः प्रादुर्भूताः ऋषेरन्तर्यागप्रवृत्तस्येति बोध्यम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**इहेव शृण्व एषां कशा हस्तेषु यद्वदान् । नियामञ्चित्रमृञ्जते ।। ३ ।।**

इहऽइव । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ।। ३ ।।

## ऋग्भाष्यम्

**यत्ते वदन्ति वचनं मेघनादात्मकं हि तत् ।**
**इहापि श्रूयत इव वर्णाव्यक्तेरिवेति च ।**
**हस्तेष्वेषां कशाः सन्ति चित्रं मार्गेऽधिगम्यते ।**

रेण्वादिसर्ववस्तूनां गमनान्मार्गचित्रता ।
विष्णोस्सर्वं जगच्चित्रं मार्गे सम्प्रेर्यतेऽमुना ।। ३ ।।

**ऋग्भाष्यटीका– इहेव** । **यत्ते** । ते मरुतः । यद्वचनम् । **वदान्वदन्ति** । लेट्याटीकार-संयोगान्तलोपयोः कृतयो रूपमेतत् । तदिहापि पृथिव्यां स्थितैरपि शृण्व इव श्रूयत इति । इवेति कस्मादुक्तमित्यत आह ।। **वर्णेति** ।। तदपि कुत इत्यत आह ।। **मेघेति** ।। तैःकृता मेघनादाः श्रूयन्त इत्यर्थः । कथं ते मेघनादान् जनयन्ति । एषां मरुतां हस्तेषु मेघताडनार्थाः कशाः सन्ति । किञ्च । एषां मरुतां यामन् याम्नि । यान्त्यस्मिन्नित्यतो मनिन् । मार्गे । **चित्रम्** आश्चर्यम् । निऋंजते ऋज्यते अधिगम्यते अनेकार्थत्वात् । कथं मार्गचित्रतेत्यत आह ।। **रेण्वादीति** ।। मरुत्सु गच्छत्स्विति शेषः । वस्तूनां तन्मार्गस्थितानाम् । विष्णावुत्तरार्धमन्यथा व्याचष्टे ।। **विष्णोरिति** ।। विवक्षायामेवं व्याख्येयमिति शेषः । **चित्रं** नानाविधम् । सर्वं जगद्यामन्मार्गे स्वीये निऋंजते ऋज्यते सम्प्रेर्यतेऽमुना मरुद्वतेनेति । षष्ठ्यन्तं प्रकृतम् अर्थवशा-त्तृतीयान्तमनुवर्तते ।। ३ ।।

**मन्त्रार्थमञ्जरी–** ते मरुतः । **यत्**, वचनम् । **वदान्**, वदन्ति, 'वद व्यक्तायां वाचि' इत्यतः 'लेटोऽडाटौ' इत्याकारसंयोगान्तलोपयोः कृतयो रूपम् । तत् इहेव शृण्वे इहापि पृथिव्यां स्थितैरपि शृण्व इव श्रूयत इव, तैर्वर्णानामभिव्यक्तेरिव इत्युक्तम्, तैः कृता मेघनादाः श्रूयन्ते इत्यर्थः । ते कथं मेघनादाञ्जनयन्ति ? इति **एषाम्**, मरुताम् । **हस्तेषु** । मेघ-ताडनार्थाः कशाः सन्ति किं च, एषाम् **यामन्**, याम्नि, यान्त्यस्मिन्नित्यतो मनिन्, मार्गे । **चित्रम्**, आश्चर्यम् । नि ऋञ्जते, अधिगम्यते, 'ऋञ्ज गतौ' मरुत्सु गच्छत्सु रेण्वादिसर्ववस्तूनां तैः सह गमनान्मार्गे चित्रता ज्ञेया । विष्णुविवक्षायां तु– चित्रम् नानाविधम्, सर्वं जगत् । **यामन्**, मार्गे, स्वीये स्वीये मार्गे । **नि ऋञ्जते**, न्यृज्यते, सम्प्रेर्यते मरुद्वतेन रूपेण इति योज्यं शिष्टं स्पष्टम् ।। ३ ।।

**स्कन्द– इहेव** इवशब्दः 'अस्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः (तु.या.७.३१) इति पदपूरणः । एवशब्दार्थे वा । ये वृषत्यादिभिः सहैव अजायन्त तेषाम् **एषाम्** इहेव पृथिव्यामेव **शृण्वे** लिट्येतत् कर्मणि व्यत्ययेन रूपम् । लडर्थे च लिट् । श्रूयते । किम् । सामर्थ्यात् शब्दः । कदा । उच्यते । **कशाः** अश्वघ्न्यः कशा उच्यन्ते, ताः । **हस्तेषु** सप्तमीनिर्देशात्

स्थिता इति शेषः । **यत्** यदा । **वदान्** वदन्ति । हस्तैर्गृहीताः कशाः अश्वानाध्नन्त्यः शब्दं यदा कुर्वन्तीत्यर्थः । यदा च **यामन्** रथम् **चित्रम्** विचित्रं पूज्यं वा ऋञ्जते ऋञ्जतिः प्रसाधनकर्माऽन्यत्र, इह तु सामर्थ्यात् गत्यर्थोऽन्तर्णीतण्यर्थश्च । निगमयन्ति नियतेन मार्गेण गमयन्ति । यदा अश्वैः रथेन वा गच्छन्तीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** यदा अमी गमनप्रारम्भे हस्तस्थाः वादयन्ति अश्वाजनीः तदानीं समीपस्थितानामिव कशानामाहननशब्दः श्रूयते । किञ्चैते गमनप्रारम्भे प्रसाधनमात्मनः **चित्रं** कुर्वन्ति ।।

**मुद्गल– एषाम्** मरुताम् **हस्तेषु** स्थिताः **कशाः** स्वस्ववाहनताडनहेतवः **यत् वदान्** यद्वदन्ति यं ध्वनिं कुर्वन्ति, तं ध्वनिम् **इहेव** अत्रैव स्थित्वा **शृण्वे** शृणोमि । स ध्वनिविशेषः **यामन्** सङ्ग्रामे **चित्रम्** विविधं शौर्यम् **नि ऋञ्जते** नितरामलङ्करोति ।। ३ ।।

**सायण– एषां** मरुतां **हस्तेषु** स्थिताः **कशाः** स्वस्ववाहनताडनहेतवः **यद्वदान्** यद्वदन्ति यं ध्वनिं कुर्वन्ति तं ध्वनिम् **इहेव** अत्रेव स्थित्वा **शृण्वे** शृणोमि । स ध्वनिविशेषः **यामन्** सङ्ग्रामे **चित्रं** विविधं शौर्यं **नि ऋञ्जते** नितरामलंकरोति । 'ऋञ्जतिः प्रसाधनकर्मा' (निरु.६.२१) इति यास्कः । शृण्वे । 'श्रु श्रवणे' । व्यत्ययेनात्मनेपदम् । 'श्रुवः शृ च' इति श्नुः। 'हुश्नुवोः सार्वधातुके' इति यणादेशः । वदान् । 'वद व्यक्तायां वाचि' । लेटि आडागमः । 'इतश्च लोपः' इति इकारलोपे संयोगान्तलोपः । आगमानुदात्तत्वे धातुस्वरः शिष्यते । यद्वृत्तयोगादनिघातः । यामन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । 'न ङिसम्बुद्ध्योः' (पा.सू. ८.२.८) इति नलोपप्रतिषेधः । ऋञ्जते । 'ऋजि भृजी भर्जने' । अत्र प्रसाधनार्थः ।। ३ ।।

**सिद्धाञ्जनम्– एषाम्** मरुतां **हस्तेषु** स्थिताः वशवर्तिन्य इत्यर्थः **कशाः** वाहनप्रेरणसाधनभूताः वाचः (कशा वादनाम) **यत् वदान्** यद्वदन्ति तत् इहेव अत्रैव ध्यानमास्थितोऽहं **शृण्वे** शृणोमि । स वाग्विशेषः **यामन्** यामनि यत्नायां मदीयेऽस्मिन्नन्तर्यागे **चित्रम्** अद्भुतं, विविधं वा व्यापारं नि ऋञ्जते नितरां प्रसाधयति, यत्नायां विचित्रशोभावहो भवति श्रूयमाणः शब्दः । शृण्वे-व्यत्ययेनात्मनेपदम् । वदान्-वदतैर्लेटि आडागमः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**प्र वः शर्धाय घृष्वये त्वेष द्युम्नाय शुष्मिणे । देवत्तं ब्रह्म गायत ।। ४ ।।**
**प्र । वः । शर्धाय । घृष्वये । त्वेषऽद्युम्नाय । शुष्मिणे । देवत्तम् । ब्रह्म । गायत ।।**

## ऋग्भाष्यम्

**शोधकाय प्रधानाय वो बलाय च वायवे ।**
**शुद्धाय वा सुप्रकाशज्ञानायातिबलाय च ।**
**गायत ब्रह्म देवत्तं देवेषु ततमीश्वरम् ।**
**प्रीतिर्वायोर्विष्णुगानाद्वेदाख्यं ब्रह्म विष्णवे ।**
**देवैरधीयमानत्वाद्देवत्तं ब्रह्म वैष्णवम् ।। ४ ।।**

**ऋग्भाष्यटीका–** प्र वः । शोधकाय । हे कण्वा वो युष्माकम् । **शर्धाय** बलाय । बलप्रदाय सुखप्रदाय च । **घृष्वये** घर्षतेः किः । जागृविरिति यथा । घर्षणेन शुद्धिर्लक्ष्यते । शोधकाय शुद्धाय वा । त्वेषद्युम्नाय सुप्रकाश ज्ञानायाप्रतिबद्धज्ञानाय । **शुष्मिणे** वीर्यवते । अतिबलाय च । प्रधानाय वायव इति प्रकरणादितो लभ्यते । देवत्तं देवेषु ततम् । तनोतेस्तोडित् । **ब्रह्म** ईश्वरम् । **प्र गायत** प्रकर्षेण स्तुत । वाय्वर्थे विष्णुं स्तुतेति कथं सङ्गच्छत इत्यत आह ।। **प्रीतिरिति** ।। ततश्च विष्णुगानेन वायुं प्रीणयतेत्यर्थः । विष्णौ व्याख्याति । **वेदाख्यमिति** । शर्धादिपदोदिताय विष्णवे वेदाख्यं ब्रह्म गायतेति योज्यमिति । देवत्तमिति विशेषणं वेदे कथमित्यत आह ।। **देवैरिति** ।। वैष्णवं ब्रह्म विष्णुविषयो वेदः । निर्वचनं तु पूर्वकृतमेव । इदं तु तदुपपादनम् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** हे कण्वाः वः युष्माकम् । **शर्धाय,** बलाय, बलप्रदाय, सुखप्रदाय च । **घृष्वये,** घर्षतेः किन्, 'जागृविः' इति यथा, घर्षणेन शुद्धिर्लक्ष्यते, शोधकाय, शुद्धाय वा । त्वेषद्युम्नाय, सुप्रकाशज्ञानाय । **शुष्मिणे,** वीर्यवते, अतिबलाय च । प्रधानाय वायवे इति प्रकरणादितो लभ्यते । **देवत्तम्,** देवेषु ततम्, तनोतेः तप्रत्ययो डिच्च । **ब्रह्म,** ईश्वरम् । **प्र गायत,** प्रकर्षेण स्तुत, वाय्वर्थे विष्णुं स्तुत इति, विष्णुगानेन वायुं प्रीणयत इत्यर्थः । विष्णुपक्षे तु शर्धादिपदोदिताय विष्णवे । **देवत्तम्,** देवैरधीयमानत्वेन देवेषु ततम् । वेदाख्यम् । ब्रह्म । गायत इति योज्यम् (शिष्टं स्पष्टम्) ।। ४ ।।

**स्कन्द–** वः इति प्रथमार्थे द्वितीया । यूयम् अस्मत्पुत्रादय ऋत्विजो वा । **शर्धाय** बलाय मारुताय । **घृष्वये** अपठितमपि महन्नामैतत् महते । **त्वेषद्युम्नाय** द्युम्नं द्योततः, यश इहाभिप्रेतं दीप्तयशसे । **शुष्मिणे** बलवते । देवत्तम् देङ् रक्षणे इत्यस्यायं छान्दसत्वादनुपसर्गादपि देवशब्दात् 'अच उपसर्गातः' (पा.७,४,४७) इत्येवं तकारः । देवेभ्यो मरुद्भ्यो दत्तं रक्षितं देवत्तम् । अस्माभिर्मरुदर्थमुपकल्पितमित्यर्थः । अथवा देवत्तमिति ददातेरेव रूपम् । देवेनेन्द्रेण दत्तं देवत्तमिति । अत्र चेतिहासमाचक्षते– 'दितिः किल शत्रुहननसमर्थं पुत्रमिच्छन्ती कश्यपमुपचचार । तां स परितुष्ट उवाच । जनिष्यते तवेदृशः पुत्रः, यदि **गर्भं प्रयता** वर्षसहस्रं धारयिष्यसीति । तथेति दितिः प्रतिपेदे । तच्छ्रुत्वेन्द्रः छिद्रान्वेषी तां शुश्रूषाञ्चक्रे । सा कदाचित् इन्द्रस्य उत्सङ्गे शिरो निधाय मुक्तकेशी विपृतोपस्थद्वारा सुष्वाप । तामप्रयतामासाद्येन्द्रः तस्या उपस्थं प्रविश्य तं गर्भं सप्तधा वज्रेण चिच्छेद । स च्छिन्नो रुरोद । तमिन्द्रः प्रत्येकं पुनः सप्तधा चिच्छेद । त एव सप्त सप्तका मरुतां गणाः । तत् प्रबुद्धा दितिर्ज्ञात्वा इन्द्रमुवाच । ममैवायमपराधः, तेन न त्वां शपामि, किन्तु **तैः** सह सख्यमुपेहि, भागधेयमेषां प्रकल्पयेति । तैः सहेन्द्रः सख्यमुपेत्य तान् स्तुतिभाजो हविर्भाजश्च चकार इति । तदेतदुच्यते । देवेनेन्द्रेण दत्तं **ब्रह्म** स्तुतिलक्षणम् । **प्र गायत** । कै गै शब्दे । प्रशब्दयत । प्रकर्षेण उच्चारयतेत्यर्थः ॥

**वेङ्कटमाधव–** **प्र गायत** यूयं वेगवते वृक्षादीनां घर्षणं कुर्वते दीप्तयशसे बलवते मारुताय देवत्तम् देवदत्तं भाग्यलब्धं **ब्रह्म** ॥ ४ ॥

**मुद्गल–** हे ऋत्विजः! **वः** युष्माकं सम्बन्धिने **शर्धाय** प्रसहनशीलाय धृष्वये शत्रुघर्षणयुक्ताय **त्वेषद्युम्नाय** दीप्यमानयशसे **शुष्मिणे** बलवते एवंभूताय मरुद्गणाय **ब्रह्म** हविर्लक्षणमन्नमुद्दिश्य **प्र गायत** स्तुध्वम् । कीदृशं ब्रह्म । **देवत्तम्** देवैर्दत्तं देवतानुग्रहाल्लब्धम् ॥ ४ ॥

**सायण–** हे ऋत्विजः **वः** युष्माकं सम्बन्धिने 'शर्धाय प्रसहनशीलाय' घृष्वये शत्रुघर्षणयुक्ताय त्वेषद्युम्नाय दीप्यमानयशसे । 'द्युम्नं द्योततेर्यशोवान्नं वा' (निरु.५.५) इति यास्कः । **शुष्मिणे** बलवते । 'शुष्मं शुष्णम्' (नि.२.९.११) इति बलनामसु पाठात् । एवंभूताय मरुद्गणाय **ब्रह्म** हविर्लक्षणमन्नमुद्दिश्य **प्र गायत** स्तुध्वम् । कीदृशं ब्रह्म । देवत्तं देवैर्दत्तं देवतानुग्रहाल्लब्धम् ॥ शर्धाय । 'शृधु प्रसहने' । शर्धयत्यभिभवतीति शर्धो बलम् । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । घृष्वये । 'घृष संघर्षे' । 'कृविघृष्वि' (उ.सू.४.४९६) इत्यादिना

क्विन्प्रत्ययान्तो निपातितः । त्वेषद्युम्नाय । 'त्विष दीप्तौ' । पचाद्यच् । त्वेषं दीप्तं द्युम्नं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । देवत्तं देवैर्दत्तम् । छान्दसो वर्णलोपः । उक्तं च- द्वौ चापरौ वर्णविकारनाशौ (का.६.३.१०९) इति । तृतीया कर्मणि इति पूर्वपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे कण्वाः, सखायो वा, **वः** युष्माकं सम्बन्धिने **शर्धाय** मरुतां गणाय **देवत्तम्** देवैर्दत्तं देवताप्रसादाल्लब्धं **ब्रह्म** मन्त्रं **प्र गायत** प्रकर्षेण स्तुत । कीदृशाय शर्धाय ? धृष्वये घर्षणयुक्ताय, **त्वेषद्युम्नाय** त्वेषं दीप्तं द्युम्नं द्योतनं, प्रकाशो, यस्य तं, (द्युम्नं यश इत्युक्त्या च प्रकाश एव लक्ष्यते) **शुष्मिणे** शुष्मं बलमस्येति शुष्मी, तस्मै । धृष्वयै-कृविधृष्वीत्यादिना क्विन्प्रत्ययान्तो निपातितः । देवत्तम्-देवदत्तम्, छान्दसो दवर्णलोपः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतम् । जम्भे रसस्य वावृधे ।।५,१२।।**

**प्र । शंस । गोषु । अघ्न्यम् । क्रीळम् । यत् । शर्धः । मारुतम् । जम्भे । रसस्य । ववृधे ।। ५, १२ ।।**

## ऋग्भाष्यम्

**अहं तव्यत्वतस्त्वघ्न्यं वायुं वृषभरूपिणम् ।**
**क्रीडंतं वेदरूपासु गोषु तं स्तुहि मारुतम् ।**
**माभिर्वेदैः स्तुतत्वेन मारुतो विष्णुरेव वा ।**
**भक्षणार्थं रसस्यासौ ववृधे मरुतां पिता ।। ५, १२ ।।**

**ऋग्भाष्यटीका– प्रशंस** । अहं तव्यत्वतः । आत्मानं प्रत्येवेदमुच्यते । हे कण्व । योऽसौ । रसस्य सोमस्य जम्भे । तादर्थ्ये सप्तमी । भक्षणार्थम् । **वावृधे** प्रकटो बभूव । यच्च वस्तु शर्धः सुखाढ्यं बलाढ्यं वा । तमहंतव्यत्वतः कारणादघ्न्यम् । वेदरूपासु गोषु वेदाभिमानिनीषु धेनुषु क्रीळं क्रीडन्तम् । अर्थाद्वृषभरूपिणं मारुतं वायुम् । **प्रशंस** स्तुहि । मारुत शब्दार्थो वायुरित्युक्तं विष्णुरेव वा मारुतः कथं माभिः प्रमाणैः वेदैरिति यावत् रुतत्वेन शब्दितत्वेन स्तुतत्वेन । रु शब्दे । यद्वा मरुतामयं मारुतः सम्बन्धश्च पितापुत्रत्वरूप इत्याह । मरुतां पितेति ।। ५,१२ ।।

**मन्त्रार्थमञ्जरी–** आत्मानं प्रत्येवेदमुच्यते हे कण्व यत् यः, असौ । **रसस्य,** सोमस्य । जम्भे, तादर्थ्ये सप्तमी, भक्षणार्थम् । **ववृधे,** प्रकटो बभूव । यत् च यश्च । **शर्धः,** सुखाढ्यः, बलाढ्यो वा तम् । अहन्तव्यत्वतः कारणात् अघ्न्यम् । वेदरूपासु गोषु, वेदाभिमानि नीषु धेनेषु क्रीळम्, **क्रीळन्तम्,** क्रीडन्तम्, अर्थात् वृषभरूपिणम् । **मारुतम्,** वायुम् । **प्र शंस,** स्तुहि । माभिः प्रमाणैरुतत्वेन स्तुतत्वेन मारुतम्, विष्णुं वा । प्र शंस । इत्यर्थः ।।

**स्कन्द– क्रीळम् यत्** इति यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहार्यः । तत् **प्र शंस** शंस स्तुतौ । आत्मन एवायमन्तरात्मनः प्रैषः । प्रकर्षेण स्तुहि हे अन्तरात्मन्! **गोषु** इति निमित्त एषा सप्तमी । प्रयोजनस्य निमित्तत्वेन विवक्षा । गोषु निमित्तभूतासु । गवार्थमित्यर्थः । **अघ्न्यम्** अहन्तव्यं शत्रुभिः हन्तुमशक्यम् कतमत् । उच्यते । क्रीळं यत् **शर्धः मारुतम्** तत् । किं करोति । उच्यते । **जम्भे** जम्भतिरत्र सामर्थ्यात् पानार्थः । तृतीयार्थे च सप्तमी । जम्भेन पानेन **रसस्य** सोमरसस्य **ववृधे** वीर्येण वर्धते ।। ५ ।।

**वेङ्कटमाधव– प्र** स्तुहि **गोषु** स्थितम् अहन्तव्यं क्रीळमानम् । **यत् शर्धः मारुतम्** तत् **रसस्य** पयसः अन्तः ववृधे । जम्भशब्द उदरवचनः । 'पृश्नियै वै पयसो मरुतो जाताः' (तैसं.२,२,११,४) इति ब्राह्मणम् ।। ५ ।।

**मुद्गल–** गोषु मरन्मातृभूतपृश्निप्रभृतिषु धेनुषु अवस्थितम् **अघ्न्यम्** अहन्तव्यम् **कीळम्** विहारोपेतम् **मारुतम्** मरुत्सम्बन्धि **शर्धः** प्रसहनशीलम् तेजः **यत्** अस्ति तत् **प्र शंस** हे ऋत्विक्समूह! स्तुहि । **रसस्य** गोक्षीररूपस्य सम्बन्धि तत्तेजः जम्भे मुखे **ववृधे** वृद्धमभूत् ।।

**सायण– गोषु** मरुन्मातृभूतपृश्निप्रभृतिषु धेनुष्ववस्थितम् । 'पृश्नियै वै पयसो मरुतो जाताः' (तै.सं.२.२.११.४) इति श्रुत्यन्तरात् । **अध्न्यम्** अहन्तव्यं **क्रीळं** विहारोपेतं **मारुतं** मरुत्सम्बन्धि **शर्धः** प्रसहनशीलं तेजो **यत्** अस्ति तत् **प्र शंस** हे ऋत्विक्समूह स्तुहि । **रसस्य** गोक्षीररूपस्य संबन्धि तत् तेजः **जम्भे** मुखे उदरे वा **ववृधे** वृद्धमभूत् ।। शंस । 'शंसु स्तुतौ' । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । गोषु । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तस्य न गोश्वन्साववर्ण ' इति प्रतिषेधः । अध्न्यम् । 'घ्नो हननम्' । घञर्थेकविधानम् (पा. सू.३.३. ५८.४) इति कः । 'गमहन' इत्यादिना उपधालोपः । 'हो हन्तेः' (पा.सू.७.३.५४) इति

घत्वम् । तदर्हतीति ध्न्यम् । 'छन्दसि च' इति यः । न घ्न्यम् अघ्न्यम् । अव्ययपूर्वपद-प्रकृतिस्वरत्वम् । क्रीळादयो गताः । जम्भे । 'जभि नाशने' । जम्भ्यते भक्ष्यतेऽनेनेति जम्भमास्यम् । करणे घञ् । ववृधे । 'वृधु वृद्धौ' । लिट् । छान्दसं संहितायामभ्यासदीर्घत्वम् ।।

**सिद्धाञ्जनम्– गोषु** तेजस्सु अवस्थितं **अघ्न्यम्** अहन्तव्यं गां वृषवद्बलिनं **क्रीळम्** विहारयुक्तं **यत् मारुतं शर्धः** यत् मरुद्गणात्मकं बलं वर्तते, तत् **प्रशंस** स्तुहि, हे यजमानं, (अन्तरात्मनः सम्बोधनम्)। तच्च मारुतं शर्धः **रसस्य** आनन्दस्य सोमात्मकस्य **जम्भे** उदरे, आस्ये वा ववृधे वृद्धमभूत् । सांशयिकस्तृतीयः पादः । 'रसस्य गोक्षीररूपस्य सम्बन्धि तत्तेजः (गर्धः) जम्भे मुख उदरे वा ववृधे इति सायणः, मारुतं बलं गोक्षीरसंबन्धि तेजः किल, तत्र उदरे मुखे वा वृद्धमभूत् इति कथनेन विवक्षितं न ज्ञायते । अतिस्पष्टार्थं पादमिव व्याचष्टे । जम्भे जभि नाशने जम्भ्यते भक्ष्यते अनेनेति जम्भमास्यं करणे घञ् इति सापणीयप्रक्रिया-जभिधातोर्भक्षणार्थो गौणोऽभ्युपगतश्चेत्, जम्भो जम्भनं भक्षणं, प्राशनमित्यपि वक्तुं युक्तम् । तर्हि 'रसस्य जम्भे वावृधे' सोमस्य पाने ववृधे-इति सुलभं स्यात् तात्पर्यम् । मारुतं शर्धः रसप्राशनेन वृद्धमभूत् । इदं च अन्तर्यजने मरुद्गणस्य प्रादुर्भावात्परं तस्य सोमरसेन वृद्धिर्भवतीत्युपपन्नं स्यात् ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये द्वादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः । यत्सीमन्तं न धूनुथ ।।६।।**

**कः । वः । वर्षिष्ठः । आ । नरः । दिवः । च । ग्मः । च । धूतयः । यत् । सीम् । अन्तम् । न । धूनुथ ।। ६ ।।**

## ऋग्भाष्यम्

आसमंतादुत्तमः कः प्रधानो वायुरेव वः ।
विष्णोराक्षेप एवस्यात्कोनामास्ति परस्त्विति ।
त्वत्पर्यंतं च वर्षिष्ठः को भवेदिति वा भवेत् ।

**आधूतयो दिवो ग्मश्च भूम्या इत्यन्वयो भवेत् ।**
**तस्मादन्तं प्रतीवैतज्जगत्संधूनुथाखिलम् ।। ६ ।।**

**ऋग्भाष्यटीका– को वः** । अत्राद्यं पदचतुष्टयं मरुद्विषये तावद्व्याख्याति ।। **आसमन्तादिति** ।। कःप्रजापतिरुद्दिष्टः को वायुरिति शब्दित इति वचनात्कः प्रधानो वायुः । वो मध्ये । सर्वोत्तमे विष्णौ कथमिदं व्याख्येयमित्यत आह ।। **विष्णोरिति** ।। विवक्षायामिति शेषः । आक्षेप एव स्यात्क इति शब्द इत्यर्थः । तं प्रकारमेव स्फुटयति । **को नामेति** । वः सकाशादिति शेषः । न केवलमुत्तमस्याक्षेपोऽनेन क्रियते । किं नाम समस्यापीति भावेन प्रकारान्तरेण व्याचष्टे । **त्वदिति** । त्वं यावान्वर्षिष्ठस्तावदपीति भावः । नन्वेवं वः सकाशादासम्यक् समंताद्वा वरिष्ठः को भवेदित्याक्षेपे व्याख्यायमाने ईषद्वरिष्ठादिसद्भावप्रसङ्गः । अन्यथा विशेषण वैयर्थ्यादित्याशंक्य न पूर्ववदाशब्दोऽत्र वर्षिष्ठशब्देन सम्बध्यते किं त्वन्यत्रेति दर्शयन् ग्मश्चेति पदार्थमप्याह । **आधूतय इति** । उत्तरार्धं व्याख्याति । **तस्मादिति** । यच्छब्दश्रवणात्तस्मादित्ययमध्याहारः ।

ततश्चायमर्थः । **हे नरो** मरुतो वो मध्ये । **कः** प्रधानो वायुः **आवर्षिष्ठः** उत्तम इति यावत् । कालज्यैष्ठ्यस्य सर्वज्यैष्ठ्योपलक्षणत्वात् । एवंभूतस्वामिसम्पत्त्या यूयमपि महान्त इति भावः । किञ्च । यूयं दिवः स्वर्गस्य च । **ग्मः** पृथिव्याश्च । **धूतयः** कम्पयितारः स्थ । कथं यद्यस्मादेतदखिलं जगदन्तं **न अन्तं** प्रतीव प्रलयं कर्तुमिव । **सीं** सम्यक् । **धूनुथ** सन्धूनुथ । कम्पयथ तस्मादिति । विष्णौ तु स्पष्टम् ।। ६ ।।

**मन्त्रार्थमञ्जरी–** हे **नरः** मरुतः । **वः** युष्माकं मध्ये । **कः** प्रधानवायुः, 'को वायुरिति शब्दितः ।' इत्युक्तेः । **आ वर्षिषः** आ समन्तात् उत्तमः अधिकवयोयुक्ततम इति यावत्, कालज्यैष्ठ्यस्य सर्वज्यैष्ठ्योपलक्षणत्वात्, एवं भूतस्वामि सम्पत्त्या यूयमपि महान्तः इति भावः । किं च, यूयम् **दिवः**, स्वर्गस्य । च । **ग्मः**, पृथिव्याः । च । धूतयः, कम्पितारः । च कथम् ? **यत्**, यस्मात् । एतत् अखिलं जगत् । **अन्तम् न**, अन्तं प्रतीव, प्रलयं कर्तुमिव । सीम्, सम्यक् । **धूनुथ**, कम्पयथ । अतः इति योजना । विष्णुपक्षे तु हे **नरः**, मरुद्गतविष्णुरूपविशेषाः । वः युष्माकं सकाशात् । **वर्षिष्ठः**, उत्तमः । कः भवेत् न कोऽपि त्वं यावान्वर्षिष्ठस्तावान्वा त्वत्समो वेति यावत्, को भवेत् ? न कोऽपि । आङः 'आ धूतयः' इत्यन्वयः । शिष्टं प्राग्वत् ।। ६ ।।

**स्कन्द– कः वः** निर्धारण एषा षष्ठी । युष्माकं मध्ये **वर्षिष्ठः** वृद्धतमः । न कश्चिदपि वृद्धतमः । सर्वे सवयस्का इत्यर्थः । हे **नरः** । मनुष्याकाराः! दिवः च ग्मः च द्युलोकस्य च पृथिव्याश्च **आ धूतयः!** आकम्पयितारः! कीदृशाः यूयम् । उच्यते । **यत्** ये **सीम्** इति परिग्रहार्थीयः । सर्वं जगत् **अन्तम् न** अन्तमिव । यथा कश्चित् शाखाया वंशस्य वा अन्तं धूनुयात् एवं **धूनुथ** । भयेन कम्पयथेत्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** यदा समीपम् इव सर्वमेव परगृह्य कम्पयथ, तदानीं मरुतः! युष्माकम् **कः** वर्षितृतमः दिवश्च पृथिव्याश्च कम्पयितारः! आकारः पूरणः ।। ६ ।।

**मुद्गल–** दिवः च द्युलोकस्यापि **ग्मः च** भूलोकस्यापि **धूतयः** कम्पनकारिणः **नरः!** नेतारो हे मरुतः वः युष्माकं मध्ये **आ** समन्तात् **वर्षिष्ठः** वृद्धतमः कः । **यत्** यस्मात् कारणात् **सीम्** सर्वतः **अन्तम् न** वृक्षाग्रमिव **धूनुथ** चालयथ । तस्मात् कारणात् कम्पयितॄणां युष्माकं मध्ये कः प्रबल इति प्रश्नः ।। ६ ।।

**सायण–** दिवश्च द्युलोकस्यापि **ग्मश्च** भूलोकस्यापि । 'गौः ग्मा' (नि.१.१.२) इति भूनामसु पठितत्वात् । **धूतयः** कम्पनकारिणो हे **नरः** नेतारो मरुतः **वः** युष्माकं मध्ये **आ** समन्तात् **वर्षिष्ठः** वृद्धतमः **कः** । **यत्** यस्मात् कारणात् **सीं** सर्वतः **अन्तं न** वृक्षाग्रमिव **धूनुथ** चालयथ । तस्मात् कारणात् कम्पयितॄणां युष्माकं मध्ये कः प्रबल इति प्रश्नः ।। वर्षिष्ठः । वृद्धशब्दात् इष्टनि प्रियस्थिर' (पा.सू.६.४.१५७) इत्यादिना वर्षादिशः । नित्वादाद्युदात्तः । ग्मः । ग्माशब्दात् षष्ट्येकवचने 'आतो धातोः' इत्यत्र आत इति योगविभागः कर्तव्यः (का.६.४.१४०) इत्युक्तत्वात् आकारलोपः उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । धूतयः । 'धूञ् कम्पने' । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । तितुत्र इत्यादिना इट्प्रतिषेधः । 'आमन्त्रितस्य च' इति सर्वानुदात्तत्वम् । धूनुथ । 'स्वादिभ्यः श्नुः' । 'सनिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति वचनात् सनिशिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते । अतस्तिङ एव स्वरः । यद्वृत्तयोगादनिघातः ।। ६ ।।

**सिद्धाञ्जनम्– दिवश्च** द्युलोकस्यापि **ग्मश्च** भूलोकस्य च **धूतयः** कम्पयितारः, हे नरः नेतारः बलिनः, **वः** युष्माक मध्ये **आ** समन्तात् **वर्षिष्ठः** वृद्धतमः कः? **यत्** यस्मात् **सीम्**

सर्वतः **अन्तम् न** वाससोऽन्तमिव, वृक्षाग्रमिव (सायणः) **घूनुथ** चालयथ । सर्वेऽपि प्रबला लक्ष्यन्ते मरुतः अयं बलाधिकोऽयं नेति न शक्यं वदितुम् । 'अन्तं न' इत्यत्र सुखेन चालयितुं योग्यं वस्तु विवक्षितम् । तत् वस्त्राञ्चलं वृक्षाग्रं वा भवतु । ग्मः ग्मा भूनाम, पष्ठ्येकवचने आकारलोपः । धूतयः-धून कम्पने क्तिच् । धूनुथ स्वादिभ्यः श्नुः ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**नि वो यामाय मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥ ७ ॥**

**नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥**

## ऋग्भाष्यम्

**नीचैर्धृतो मानुषो वो मार्गायोग्राय मन्यवे ।**
**न पूर्यते च कोपाय स्वल्पत्वान्मानुषः क्वचित् ।**
**बहुपर्वयुतोत्युच्चगिरिर्मार्गे हि वोऽत्यजत् ।**
**मूलम्................................ ॥ ७ ॥**

**ऋग्भाष्यटीका– निवः** । नीचैः । हे मरुतो वो युष्माकम् । **यामाय** यांत्यस्मिन्निति मार्गायोग्राय मन्यवे च **मानुषो निदध्रे** नीचैर्धृतः । किमुक्तं भवतीत्यत आह ॥ **नेति** ॥ पूर्यते शक्तो भवति कोपाय कोपस्याभिमुखी भवितुम् । चशब्दान्मार्गे स्थातुं च । कथं पर्वतः पर्ववान् । बहुवर्षावच्छेदयुतस्तेन लभ्यतेऽत्युच्च इति । एवंभूतोऽपि गिरिर्वो मार्गे स्थितो जिहीतात्यजद्धि मूलमिति शेषः । उन्मूलोऽभवदित्यर्थः ॥ ७ ॥

**मन्त्रार्थमञ्जरी–** हे मरुतः वः, युष्माकम् । **यामाय,** यान्त्यस्मिन्निति व्युत्पत्त्या मार्गाय । उग्राय । मन्यवे च, कोपाय च । मानुषः । **नि दध्रे,** नीचैर्धृतः, भवन्मार्गे स्थातुं भवत्कोपस्याभिमुखीभवितुं चाल्पत्वान्मानुषः शक्तो न भवेत्– इत्यर्थः । कथम् ? **पर्वतः,** पर्ववान्, मत्वर्थे तप्, बहुवर्षावच्छेदयुक्तः, तेन अत्युच्चः' इत्यर्थो लभ्यते । एवं भूतोऽपि गिरिः वो मार्गे स्थितः । **जिहीत,** 'ओहाक् त्यागे' अत्यजत् । हि मूलम् इति शेषः, उन्मूलोऽभवत् इत्यर्थः ॥ ७ ॥

**स्कन्द–** **वः** युष्माकं स्वभूतम् **यामाय** द्वितीयार्थे चतुर्थ्येषा । यामं रथम् **मानुषः** मनुष्य **नि दध्रे** धृ धारणे । नियमेन स्वयज्ञे धारयति । अथवा यामशब्दो यागवचनः । स्वार्थं एव च तादर्थ्ये चतुर्थी । युष्माकं यागाय । यूयं यज्ञे यास्यथ इत्येवमर्थं मनुष्यो नियमेन धारयति । किम् । सामर्थ्यात् सोमलक्षणानि हवींषि । किमर्थम् । **उग्राय मन्यवे** मन्युर्मन्यतेर्दीप्तिकर्मणः, दीप्तिरिहाभिप्रेता । उग्रायै दीप्त्यै । प्रकृष्टायैश्वर्यायेत्यर्थः । किञ्च **जिहीत** ओहाङ् गतौ । अन्यत्र गच्छति । युष्मद्भयान्नश्यतीत्यर्थः । कीदृशः । **पर्वतः** पर्ववान् बह्ववयवकः । महानपि सन्नित्यर्थः । कः । **गिरिः** मेघो महीधरो वा । अथवा पर्वतो गिरिरिति समुच्चीयमानार्थे । एते न परस्परविशेषणविशेष्यभूते । पर्वतश्च गिरिश्च । मेघश्च महीधरश्चेत्यर्थः । अथवा एवमन्यथा अस्या ऋचोऽर्थं योजना । व इति द्वितीयाबहुवचनम् । यान्त्यस्मिन् देवा इति यामो यज्ञः । युष्मान् यज्ञाय मनुष्यो नियमेन धारयति । किञ्च उग्राय मन्यवे जिहीत । **'मन्युः'** (निघ.२, १३) इति क्रोधनाम । पञ्चम्यर्थे चतुर्थी । उग्रात् क्रोधात् गच्छति । उग्रेभ्यः क्रुद्धेभ्यो युष्मत् बिभ्यन्नश्यतीत्यर्थः । कः । पर्वतो गिरिरपि महान् गिरिः किमुत अन्य इत्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** **नि मानुषः दध्रे** स्थूणादिकं युष्माकं **यामाय** उद्धूर्णाय अभिमन्त्रे । स्थिरं स्थूणादिकं दृढम् निहन्ति मानुषः, पर्ववान् गिरिः च कम्पते ।। ७ ।।

**मुद्गल–** हे मरुत । **वः** युष्माकम् **यामाय** गमनार्थम् **मानुषः** गृहस्वामी कश्चिन्मनुजः **नि दध्रे** गृहदार्ढ्यार्थं दृढं स्तम्भं निक्षिप्तवान् । भवदीयगमनेन चालितं गृहं पतिष्यतीति भीत्या तन्निवारणाय दृढस्तम्भप्रक्षेपः । कीदृशाय यामाय । **उग्राय** तीव्राय **मन्यवे** चालनार्थम् अभि मन्यमानाय । युज्यते हि भवद्गमनात् भीतिः । यतः भवद्गत्या चालितः **पर्वतः** बहुविधपर्वयुक्तः **गिरिः** शिखरी जिहीत गच्छेत् ।। ७ ।।

**सायण–** हे मरुतः **वः** युष्माकं **यामाय** गमनार्थं **मानुषः** गृहस्वामी कश्चिन्मनुजः **नि दध्रे** ग्रहदाढ्यार्थं दृढं स्तम्भं निक्षिप्तवान् । भवदीयगमनेन चालितं गृहं पतिष्यतीति भीत्या तन्निवारणाय दृढस्तम्भप्रक्षेपः । कीदृशाय यामाय । **उग्राय** तीव्राय **मन्यवे** चालनार्थ-मभिमन्यमानाय । युज्यते हि भवद्गमनाद्भीतिः । यतो भवद्गत्या चालितः **पर्वतः** बहुविधपर्वयुक्तः **गिरिः** शिखरी **जिहीत** गच्छेत् । मानुषः । मनोर्जातावञ्यतौ षुक् च (पा.सू. ४.१.१६१)

इति मनुशब्दात् अपत्यार्थे अञ् पुगागमश्च । 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वम् । दध्रे । 'धृञ् अवस्थाने' इत्यस्य लिटि कित्वाद्गुणाभावे रति यणादेशः । प्रत्ययस्वरः । पावादित्वात् न निघातः । जिहीत । 'ओहाङ् गतौ' । लिङि जुहोत्यादित्वात् शपः श्लुः । 'भृञामित्' (पा.सू.७.४.७६ ) इति अभ्यासस्य इत्वम् । 'श्नाभ्यस्तयोरातः 'इति आकारलोपः । पर्ववान् पर्वतः । मत्वर्थीयः तप्रत्ययः ॥ ७ ॥

**सिद्धाञ्जनम्–** हे मरुतः, **वः** युष्माकं **यामाय** गमनाय **मानुषः** मनुजः देवतरहस्यवित् **निदध्रे** दृढं निक्षिप्तवान् आधारस्तम्भं इति शेषः । चण्डवेगेन मरुतां गमने अन्तर्याजिनो गृहं शरीररूपं पतेद्वेति भिया, दार्ढ्याय शरीरगृहं स्तम्भाधारयुक्तं करोतीत्यर्थः । कीदृशाय यामाय ? **उग्राय** तीव्राय, **मन्यवे** चालनमभिमन्यमानाय चण्डभावयुक्ताय । तथा हि **पर्वतः** बहुपर्वयुक्तः गिरिः सानुमान् जिहीत गच्छेत् । तादृशः प्रबलो युष्माकं वेगः ॥ दध्रे-धृञ् अवस्थाने, लिट् । जिहीत-ओहाङ् गतौ लिङ् । पर्वतः-मत्वर्थीयः तप्प्रत्ययः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**येषा॒मज्मे॑षु पृथि॒वी जु॑जु॒र्वाँ इ॑व वि॒श्पति॑ः । भि॒या यामे॑षु॒ रेज॑ते ॥ ८ ॥**

**येषा॑म् । अज्मे॑षु । पृ॒थि॒वी । जु॒जु॒र्वान्ऽइ॑व । वि॒श्पति॑ः । भि॒या । यामे॑षु । रेज॑ते ॥**

## ऋग्भाष्यम्

**......येषां तथाज्मेषु मार्गेष्वति भिया धरा ।**
**कम्पते जीर्णराजेव.........................** ॥ ८ ॥

**ऋग्भाष्यटीका– येषाम्** । तथाऽन्यच्च । येषां मरुतामज्मेषु ज्मा पृथिवी तदसम्बन्धिष्वन्तरिक्षाश्रितेषु यामेषु मार्गेषु सत्सु । तैर्मार्गैर्मरुत्सु गच्छत्स्विति यावत् । पृथिवी धराऽतिभिया **रेजते** कम्पते । किमिव **जुजुर्वान्** जीर्णः । जीर्यतेः क्वसौ रूपम् । विश्पतिः राजेव । यथा दुर्बलो राजा परेभ्यो भीतः कम्पते तथेति । उत्तरत्र सम्बन्धः ॥ ८ ॥

**मन्त्रार्थमञ्जरी– येषाम्,** मरुताम् । **अज्मेषु,** ज्मा पृथिवी, तदसम्बन्धिषु, अन्तरिक्षाश्रितेषु । **यामेषु,** मार्गेषु सत्सु, तैर्मार्गैर्मरुत्सु । गच्छत्स्विति यावत् । **पृथिवी,** धरा अति

भिया । रेजते, कम्पते । क इव ? जुजुर्वानिव विश्पतिः जुजुर्वाञ्जीर्णः, जीर्यतेः लिटि 'कसुश्च' इति कसौ द्विर्वचनोत्वादौ रूपम्, विश्पती राजेव, यथा दुर्बलो राजा परेभ्यो भीतः कम्पते, **तथा इति** । यद्शब्दस्याग्रे अन्वयः ।। ८ ।।

**स्कन्द–** कीदृशा यूयम् । उच्यते । **येषाम्** युष्माकम् **अज्मेषु** अज गतिक्षेपणयोः । गमनेषु । **पृथिवी जुजुर्वान् इव विश्पतिः** । पुत्रपौत्रादीनां मनुष्याणां पतिः विश्पतिः । कुलज्येष्ठोऽत्राभिप्रेतः, न राजा । यथा जीर्णोऽऽत्यन्तं वृद्धः । **भिया** भयेन **रेजते** कम्पते । **यामेषु** इत्येतत्तु अज्मेषु इत्येतेन सम्बन्धयितव्यम् । तृतीयार्थे चात्र सप्तमी । यामैः रथैः अज्मेष्विति । येषु युष्मासु रथैर्गच्छत्सु कमप्येते हन्तुं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते । किमुत अन्ये इत्यर्थः । अथवा येषामित्येतत् भियेत्येतेन सम्बन्धयितव्यम् । तत्सम्बन्धे च 'भीत्रार्थानाम्' (पा.१,४,२५) इत्यपादानत्वात् पञ्चम्यर्थे षष्ठी । अज्मेषु इत्यप्यज्मशब्दो गृहनाम (तु.निघ.३,४) । अज्मेषु यामेष्वित्येतच्च समुच्चीयमानार्थे एते । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । येभ्यो युष्मत् अज्मेषु यामेषु च गृहेषु रथेषु च व्यवस्थितेभ्यः भिया भयेन पृथिवी रेजत इति । येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थः । तेषां वो यामाय मानुष इत्येवं तच्छब्दश्रुतेः पूर्वया ऋचैकवाक्यता परया वा ।।

**वेङ्कटमाधव– येषाम्** उत्क्षेपकेषु गमनेषु **पृथिवी** ओषधिवनस्पतियुक्ता, जीर्णः राजेव परबलागमेन, कम्पते **भिया** । पूर्वत्र सम्बन्धः ।। ८ ।।

**मुद्गल–** हे मरुतः **येषाम्** युष्माकम् **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु **पृथिवी** भूमिः **भिया रेजते** कम्पते । दृष्टान्तः । **जुजुर्वान् इव विश्पतिः** । यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ।। ८ ।।

**सायण–** हे मरुतः **येषां** युष्माकं **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु **पृथिवी** भूमिः **रेजते** कम्पते । तत्र दृष्टान्तः । **जुजुर्वा** इव **विश्पतिः** । यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ।। अज्मेषु । 'अज गतिक्षेपणयोः' । बहुलग्रहणात् औणादिको मन् । 'अजेर्व्यघञपोः' (पा.सू.२.४.५६) इति वीभावो न भवति, 'वलादावा-र्धधातुके विकल्प इष्यते' (का.२.४.५६.२) इति वचनात् । नित्त्वादाद्युदात्तत्वम् । जुजुर्वान् ।

'जृष वयोहानौ' । लिटः क्वसुः । 'बहुलं छन्दसि' (पा.सू.७.१.१०३) इति उत्वम् । अभ्यास-हलादिशेषौ । 'वस्वेकाजाद्घसाम्' इति नियमात् इडागमाभावः । 'ऋच्छत्यृताम्' (पा.सू. ७.४.११) इति गुणः, 'हलि च' इति दीर्घत्वं च संज्ञापूर्वको विधिरनित्यः' इति वचनात् न भवति । विशां पतिर्विश्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादि छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । भिया । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । यामेषु । 'यम उपरमे' । भावे घन् । 'कर्षात्वतो घञः' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । रेजते । 'रेज कम्पने' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगाद-निघातः ॥ ८ ॥

**सिद्धाञ्जनम्–** येषाम् मरुतां **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु, **पृथिवी** भूमिः **भिया रेजते** कम्पते, तत्र दृष्टान्तः-**जुजुर्वान् इव विश्पतिः** वयसा जीर्णः दुर्बलः प्रजानां पालको राजा यथा शत्रुभयात् कम्पते तद्वत् । अज्मेषु-अज गतिक्षेपणयोः, औणादिको मन् । जुजुर्वान्-ज वयोहानौ, लिटः क्वसुः, छन्दसि उत्वम् । यामेषु-यमधातोः धञ् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥ ९ ॥**

स्थिरम् । हि । जानम् । एषाम् । वयः । मातुः । निःऽएतवे । यत् । सीम् । अनु । द्विता । शवः ॥ ९ ॥

## ऋग्भाष्यम्

............स्थिरं वो जननं यतः ।
जाता वायोर्दिवि वयो मातुः प्राप्ता निरेतवे ।

निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनाय हि ।
यौवनं ते युवानो हि निसर्गान्मातुरा जनेः ।
मातुरेव प्रसादेन सम्यक्तद्विविधं बलम् ।
प्रज्ञाबाहुबलं यस्मात्तस्मात्............ ॥ ९ ॥

भिया । रेजते, कम्पते । क इव ? जुजुर्वानिव विश्पतिः जुजुर्वाञ्जीर्णः, जीर्यतेः लिटि 'कसुश्च' इति कसौ द्विर्वचनोत्वादौ रूपम्, विश्पती राजेव, यथा दुर्बलो राजा परेभ्यो भीतः कम्पते, **तथा इति** । यद्शब्दस्याग्रे अन्वयः ॥ ८ ॥

**स्कन्द–** कीदृशा यूयम् । उच्यते । **येषाम्** युष्माकम् **अज्मेषु** अज गतिक्षेपणयोः । गमनेषु । **पृथिवी जुजुर्वान् इव विश्पतिः** । पुत्रपौत्रादीनां मनुष्याणां पतिः विश्पतिः । कुलज्येष्ठोऽत्राभिप्रेतः, न राजा । यथा जीर्णोऽऽत्यन्तं वृद्धः । **भिया** भयेन **रेजते** कम्पते । **यामेषु** इत्येतत्तु अज्मेषु इत्येतेन सम्बन्धयितव्यम् । तृतीयार्थे चात्र सप्तमी । यामैः रथैः अज्मेष्विति । येषु युष्मासु रथैर्गच्छत्सु कमप्येते हन्तुं गच्छन्तीत्यजानती पृथिव्यपि भयेन कम्पते । किमुत अन्ये इत्यर्थः । अथवा येषामित्येतत् भियेत्येतेन सम्बन्धयितव्यम् । तत्सम्बन्धे च 'भीत्रार्थानाम्' (पा.१,४,२५) इत्यपादानत्वात् पञ्चम्यर्थे षष्ठी । अज्मेषु इत्यप्यज्मशब्दो गृहनाम (तु.निघ.३,४) । अज्मेषु यामेष्वित्येतच्च समुच्चीयमानार्थे एते । सप्तमीनिर्देशाच्च योग्यक्रियाध्याहारः । येभ्यो युष्मत् अज्मेषु यामेषु च गृहेषु रथेषु च व्यवस्थितेभ्यः भिया भयेन पृथिवी रेजत इति । येभ्यः स्वस्थेभ्यश्चासीनेभ्यो युद्धाभिमुखेभ्यश्च भयेन पृथिवी कम्पत इत्यर्थः । तेषां वो यामाय मानुष इत्येवं तच्छब्दश्रुतेः पूर्वया ऋचैकवाक्यता परया वा ॥

**वेङ्कटमाधव– येषाम्** उत्क्षेपकेषु गमनेषु **पृथिवी** ओषधिवनस्पतियुक्ता, जीर्णः राजेव परबलागमेन, कम्पते **भिया** । पूर्वत्र सम्बन्धः ॥ ८ ॥

**मुद्गल–** हे मरुतः **येषाम्** युष्माकम् **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु **पृथिवी** भूमिः **भिया रेजते** कम्पते । दृष्टान्तः । **जुजुर्वान् इव विश्पतिः** । यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ॥ ८ ॥

**सायण–** हे मरुतः **येषां** युष्माकं **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु **पृथिवी** भूमिः **रेजते** कम्पते । तत्र दृष्टान्तः । **जुजुर्वा** इव **विश्पतिः** । यथा वयोहानिरोगादिना जीर्णः प्रजापालको राजा वैरिभयात् कम्पते तद्वत् ॥ अज्मेषु । 'अज गतिक्षेपणयोः' । बहुलग्रहणात् औणादिको मन् । 'अजेर्व्यघञपोः' (पा.सू.२.४.५६) इति वीभावो न भवति, 'वलादावार्धधातुके विकल्प इष्यते' (का.२.४.५६.२) इति वचनात् । नित्त्वादाद्युदात्तत्वम् । जुजुर्वान् ।

'जृष वयोहानौ' । लिटः क्वसुः । 'बहुलं छन्दसि' (पा.सू.७.१.१०३) इति उत्वम् । अभ्यास-हलादिशेषौ । 'वस्वेकाजाद्धसाम्' इति नियमात् इडागमाभावः । 'ऋच्छत्यृताम्' (पा.सू. ७.४.११) इति गुणः, 'हलि च' इति दीर्घत्वं च संज्ञापूर्वको विधिरनित्यः' इति वचनात् न भवति । विशां पतिर्विश्पतिः । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'परादि छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । भिया । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । यामेषु । 'यम उपरमे' । भावे घन् । 'कर्षात्वतो घञः' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । रेजते । 'रेज कम्पने' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ॥ ८ ॥

**सिद्धाञ्जनम्– येषाम्** मरुतां **यामेषु** गमनेषु **अज्मेषु** क्षेपकेषु सत्सु, **पृथिवी** भूमिः **भिया रेजते** कम्पते, तत्र दृष्टान्तः-**जुजुर्वान् इव विश्पतिः** वयसा जीर्णः दुर्बलः प्रजानां पालको राजा यथा शत्रुभयात् कम्पते तद्वत् । अज्मेषु-अज गतिक्षेपणयोः, औणादिको मन् । जुजुर्वान्-ज वयोहानौ, लिटः क्वसुः, छन्दसि उत्वम् । यामेषु-यमधातोः धञ् ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥ ९ ॥**

स्थिरम् । हि । जानम् । एषाम् । वयः । मातुः । निःऽएतवे । यत् । सीम् । अनु । द्विता । शवः ॥ ९ ॥

### ऋग्भाष्यम्

............स्थिरं वो जननं यतः ।
जाता वायोर्दिवि वयो मातुः प्राप्ता निरेतवे ।

निर्गन्तुं तत्क्षणेनैव सर्वलोकाटनाय हि ।
यौवनं ते युवानो हि निसर्गान्मातुरा जनेः ।
मातुरेव प्रसादेन सम्यक्तद्विविधं बलम् ।
प्रज्ञाबाहुबलं यस्मात्तस्मात्............ ॥ ९ ॥

**ऋग्भाष्यटीका– स्थिरं हि** । स्थिरं वः । हे मरुतः एषामुक्तगुणानां वो । **जानं** जननं **स्थिरं हि** । स्थिरत्वेनोत्तमतां लक्षयति । कथमित्यत आह भाष्यकारः ।। यत इति ।। यस्मान्मरुतो वायोः प्रधानाद्दिवि भारत्यां जातास्तस्माद्विशिष्ट मातापितृसम्बन्धादेषां जननमुत्तमम् । अनेन हिशब्दो व्याख्यातो भवति । किं च ते मरुतो **निरेतवे** निर्गन्तुं तत्क्षणेनैव जन्मोत्तरक्षण एव । सर्वलोकाटनायेति यावत् । **मातुः** भारत्याः प्रसादेनेति शेषः । **वयो** वयोविशेषं यौवनं हि प्राप्ता इति शेषः । यौवनप्राप्तिः सर्वसाधारण्यान्न वर्ण्येत्यतस्तात्पर्यार्थमाह ।। त इति ।। मातुः प्रसादेन । निसर्गादित्यस्यैव विवरणम् आजनेरिति । किञ्च । **यत्** यस्मादेषां मरुताम् । **अनुमातुः** प्रसादमिति शेषः । हेतौ कर्मप्रवचनीयः । मातुः प्रसादेनैव **सीं** सम्यक् । **द्विता शवः** द्वितया द्वित्वेनोपेतं द्विविधमिति यावत् । शवस्तत्प्रसिद्धं बलमस्ति । किं तत् । प्रज्ञाबलं बाहुबलं च । तस्मादित्युत्तरत्र साध्यनिर्देशो द्रष्टव्यः ।। ९ ।।

**मन्त्रार्थमञ्जरी– हे मरुतः** एषाम्, उक्तगुणानां वः । **जानम्,** जननम् । स्थिरम् हि, स्थिरत्वेनोत्तमतां लक्षयति 'उत्तमं हि' इति, वायोर्भारत्यां जातत्वेन विशिष्टमातापितृसम्बन्धात् 'उत्तमं जन्म' इति हि शब्दार्थः । किं च, ते मरुतः । **निरेतवे** निर्गन्तुम्, निरुपसर्गपूर्वादिणः तुमर्थे तवेन्प्रत्ययः, जन्मोत्तरक्षण एव सर्वलोकाटनायेति यावत् । **मातुः** भारत्याः । **प्रसादेन** इति शेषः । **वयः,** वयोविशेषं यौवनम् । **प्राप्ताः** इति शेषः । जन्मारभ्य ते युवानः प्रसिद्धाः । किं च, **यत्** यस्मात् । एषाम् मरुताम् । अनु, मातुः प्रसादमनु, हेतौ कर्मप्रवचनीयः, मातुः प्रसादेनैव । **सीम्** सम्यक् । **द्विता शवः** द्वितया द्वित्वेनोपेतम्, द्विविधमिति यावत्, शवः प्रसिद्धं प्रज्ञाबलं बाहुबलं च । अस्ति तस्मात् इत्युत्तरत्र साध्यनिर्देशो ज्ञेयः ।।

**स्कन्द– हि** शब्दः पदपूरणः । येषाम् अज्मेषु येभ्यो वा भिया पृथिवी रेजते, तेषाम् **एषाम्** मरुताम् **स्थिरम् जानम्** जन्म **वयः** च यौवनलक्षणम् । यथा मनुष्याः जाताः शीघ्रमेव वृद्धीभवन्ति म्रियन्ते च, न तद्वत् ते मरुत इत्यर्थः । किमर्थम् । उच्यते । **मातुः निरेतवे** । मातुः सकाशात् निर्गन्तुम् । मातुरुदरे पुनःपुनर्गर्भवासमननुभवितुमित्यर्थः । यो हि वृद्धीभवति म्रियते च, तेनावश्यं मातुरुदरे पुनः पुनर्गर्भवासोऽनुभवितव्यः । कीदृशा मरुतः । उच्यते । **यत्** षष्ठ्या अत्र लुक् । येषाम् । **सीम् अनु** सीमिति परिग्रहार्थीयः । अन्विति लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । सर्वं प्रति **द्विता** द्विधा द्विविधमपि सांयोगिकं च हस्त्यश्वादि शारीरं च **शवः** बलम् । ये द्विविधेनापि बलेन न कुतश्चिन्न्यूना इत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– स्थिरम्** हि जन्म मरुताम् **वयः** च **मातुः** निर्गमनाय । न पुनर्जननाय मातरं प्रविशन्ति । **यत्** चैषां सर्वं जगत् अनुप्रविशति तत् बलं द्विधा भवति दिवि च पृथिव्यां चेति ।। ९ ।।

**मुद्गल– एषाम्** मरुताम् **जानम्** जन्मस्थानमाकाशम् **स्थिरम् हि** चलनरहितं खलु । **मातुः मरुतां** जननीस्थानीयादाकाशात् **वयः** पक्षिणः **निरेतवे** निर्गन्तुं समर्था भवन्तीति शेषः । तादृशात् आकाशात् जन्मेति मरुतां स्तुतिः । **यत्** यस्मात् कारणात् **शवः** भवदीयं बलम् अनुक्रमेण **सीम्** सर्वतः **द्विता** द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते । अतो भवदीयं जानं स्थिरं हि इति पूर्वत्रान्वयः ।। ९ ।।

**सायण– एषां** मरुतां **जानं** जन्मस्थानमाकाशं **स्थिरं हि** चलनरहितं खलु । **मातुः** मरुतां जननीस्थानीयादाकाशात् **वयः** पक्षिणः **निरेतवे** निर्गन्तुं समर्था भवन्तीति शेषः । तादृशा-दाकाशाद्भवजन्मेति मरुतां स्तुतिः । **यत्** यस्मात् कारणात् **शवः** भवदीयं बलम् अनुक्रमेण **सीं** सर्वतः **द्विता** द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते । अतो भवदीयं जानं स्थिरं हि इति पूर्वत्रान्वयः । जानम् । जन्यतेऽस्मिन्निति जानमन्तरिक्षम् । अधिकरणे घञ् । एषाम् । 'इदमोऽन्वादेशे' इति अशादेशोऽनुदात्तः । विभक्तिश्च सुप्त्वादनुदात्ता । न च 'ऊडिदम्' इत्यादिना विभक्त्युदात्तत्वम्, अन्तोदात्तात् इदं शब्दात् तस्य विधानात् । निरेतवे । 'इण् गतौ' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ।। ९ ।।

**सिद्धाञ्जनम्– एषां** मरुतां **जानम्** जन्मस्थानं **स्थिरम् हि** ध्रुवं खलु । **मातुः** प्राणभुवोऽन्तरिक्षस्थानात् **वयः** पक्षिणः, **इमे** मरुतः, **निरेतवे** निर्गन्तुं समर्था इति शेषः । **यत्** यस्मात् कारणात् मरुतां **शवः** दीप्तं बलं **सीम्** सर्वतः **द्विता** द्वित्वेन **अनु** वर्तते, तस्मात् 'स्थिरं हि जानं' इति पूर्वेणान्वयः । मरुतः 'पृश्निमातरः' (१.२३.१०) इत्यत्र व्याख्यातम-वधेयम् । मरुतां माता पृश्निश्चित्रवर्णा गौः । सङ्केतरहस्यमिदम् । प्राणशक्त्याविर्भाव-विलासक्षेत्र-भूता अन्तर्हितधीवृत्तिरश्मिप्रसूः अदितिवदखण्डाकारान्तरिक्षस्थाना विविधाविष्कारकलासम्पन्ना सत्त्वमयी शक्तिर्माता मरुतां चित्रवर्णा गौः पृश्निरुच्यते । मरुतां बलं द्विरूपं क्रियाज्ञान-शक्त्यात्मकं, अत एव 'द्विता' इत्युक्तम् । धीवृत्तीनां पक्षिरूपत्वं वर्णयन्त्यन्यत्र च मन्त्राः । मरुतः प्राणात्मका अपि धीवृत्तिरूपतां प्राप्ता इत्युक्तमवधेयम् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ।।१०,१३।।**
**उत् । ऊँइति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ।। १० ।।**

## ऋग्भाष्यम्

**..............................दिशउदापिरे ।**
**ते गिरः सूनवो देव्या वाश्रा वचनशीलिनः ।**
**अभिजन्मानुसारेण गुणान्यातुमुदापिरे ।। १०,१३ ।।**

**ऋग्भाष्यटीका–** उदु । दिशः । **गिरो** देव्या भारत्याः । **सूनवो वाश्राः** वचनशीलिनः । वचनं शास्त्रव्याख्यानं तदेव शीलं तदेषामस्तीति । शब्दमात्रे वाशतिमङ्गीकृत्य ताच्छीलिको रो विहितः । **त्येते** । मरुतोऽज्मेषु उ अज्मेष्वेव मार्गेषु खेचरा एव भूत्वा । काष्ठा दिशः । उदत्नत अततेर्लङि रूपमेतत् उदापिरे । किमर्थम् । यद्दिश उदापिरे तदभिज्ञु अभिपूर्वाज्जने-रुङ्प्रत्ययो भावे गमहनेत्यादिनोपधालोपः । अभिजन्म अनुसृत्येति शेषः । अभि जन्मानुसारेणेति यावत् । **यातवे** यातुं प्राप्तुं गुणानिति शेषः । भारतीपुत्राः व्याख्यानसामर्थ्योपेताश्च यदि नाम लोकोद्धारणाय न दिग्विजयं कुर्युः । कथं तर्हि तदभिजन्मसफलं स्यात् कथं च गुणिनः स्युरिति भावः । तत्र सामर्थ्यसद्भावरूपो हेतुः पूर्वत्रोक्तः ।। १०,१३ ।।

**मन्त्रार्थमञ्जरी–** गिरः, देव्या भारत्याः । **सूनवः** पुत्राः, वाश्राः, 'वाशृ शब्दे' इत्यस्मा-त्ताच्छीलिको रक्प्रत्ययः, व्याख्यानशीलाः । **त्ये** ते, मरुतः । अज्मेषु, **अमार्गेषु** अन्तरिक्षा-श्रितमार्गेषु । खेचरा एव भूत्वा काष्ठाः, दिशः । उत् **अत्नत** अततेः लङ्येतद्रूपम्, उदापिरे । उ किमर्थम् ? यद्दिश उदत्नत उ तत् अभिज्ञु, अभिपूर्वाज्जनेः उङ्प्रत्ययो भावे, 'गमहन-जनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपः, अभिजन्म । अनसृत्य इति शेषः, अभि-जन्मानुसारेणेति यावत् । **यातवे,** यातुम्, प्राप्तुम् । गुणान् इति शेषः । भारतीपुत्रा व्याख्यान-सामर्थ्योपेताश्च, यदि नाम लोकोद्धरणाय न दिग्विजयं कुर्युः कथं तर्हि तदाभिजन्म सफलं स्यात् ? कथं च गुणिनः स्युः? इति भावः । अत्र सामर्थ्यसद्भावरूपहेतुः पूर्वत्र उक्तः ।। १० ।।

**स्कन्द–** **उत्** इत्युपसर्गः **अतन्न** इत्याख्यातेन सम्बन्धयितव्यः । उ इति पदपूरणः । ये उक्तगुणाः **त्ये** ते मरुतः । **सूनवः** पुत्राः । कस्य । पृश्नेर्वा रुद्रस्य वा । कुत एतत्– **'पृश्नेः पुत्रा उपमासो रभिष्ठाः'** (ऋ ५,५८,५) **'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः'** (ऋ.६,६६,३) इत्यादिषु मन्त्रान्तरेषु दर्शनात् । **गिरः काष्ठाः** आपोऽत्र काष्ठा उच्यन्ते (तु.या.२,१५) । गर्जितलक्षणा वाचः अपश्च । **अज्मेषु** तृतीयार्थे सप्तमी । अज्मैः अजनैः स्वगमनैः उदतन्नत ऊर्ध्वं विस्तारयन्ति । मेघं प्रति स्वयं गत्वा गर्जन्ति । तदीयाश्चापो विक्षिपन्तीत्यर्थः । कीदृशीरपः । **वाश्राः** वाशनशीलाः शब्दकारिणीः । बह्वीरित्यर्थः । कथमुदतन्नत । **अभिज्ञु** क्रियाविशेषणमेतत् । अभिगतं जानु यस्मिन् उत्तानने तदभिज्ञु । निपात्य जानुं महता यत्नेनेत्यर्थः । किमर्थम् । **यातवे** । पृथिव्यां पातनायेत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** उदतन्नत उत्तता अकुर्वन् विस्तीर्णौषधीरकुर्वन् अभी प्रेरयितारः शब्दयन्तः दिशः गमनेषु । यदा गच्छन्त्योषधिभिः विस्तारयन्ति दिश इति । तया धेनूश्च अभिगतजानुकं यातुमकुर्वन् । ओषधिसद्भादादुत्क्षिप्तपादाः चरन्ति धेनव इति ।। १० ।।

**मुद्गल–** **त्ये** पूर्वप्रकृताः **गिरः सूनवः** वाच उत्पादका मरुतः । वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्ति । **अज्मेषु** स्वकीयेषु गमनेषु सत्सु **काष्ठाः** अपः **उत्** उ उत्कर्षेणैव **अत्नत** विस्तारितवन्तः । उदकं विस्तार्य तत्पानार्थम् **वाश्राः** हम्भारवोपेता गाः **अभिज्ञु** जान्वभिमुखं यथा भवति तथा **यातवे** गन्तुं प्रेरितवन्त इति शेषः ।। १० ।।

**सायण–** **त्ये** पूर्वप्रकृताः **गिरः सूनवः** वाच उत्पादका मरुतः । वायवो हि ताल्वोष्ठादिषु संचरन्तो वाचमुत्पादयन्ति । **अज्मेषु** स्वकीयेषु गमनेषु सत्सु **काष्ठाः** अपः । 'आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्ति' (निरु.२.१५) इति यास्कः । **उदु** उत्कर्षेणैव **अत्नत** अतनिषत विस्तारितवन्तः । उदकं विस्तार्य तत्पानार्थं **वाश्राः** हम्भारवोपेता गाः **अभिज्ञु** जान्वाभिमुख्यं यथा भवति तथा **यातवे** गन्तुं प्रेरितवन्त इति शेषः । सूनवः । 'षू प्रेरणे' । 'सुवः कित्' (उ.सू.३.३१५) इति नुप्रत्ययः । कित्त्वाद्गुणाभावः । अत्नत । 'तनु विस्तारे' । लङि झस्य अदादेशे' 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'तनिपत्योश्छन्दसि' (पा.सू.६.४.९९) इति उपधालोपः । अडागमः । अभिजु । अभिगते जानुनी यस्य तदभिज्ञु । 'प्रसंभ्यां जानुनोर्ज्ञुः' (पा.सू.५.४.१२९) इति व्यत्ययेनाभिपूर्वस्यापि जानुशब्दस्य ज्ञुशब्दादेशः समासान्तः । यातवे । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । तादौ च इति गतेः प्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्– गिरः सूनवः** वाचः प्रेरकाः, पूर्वप्रकृतस्य 'इहेव शृण्वे' 'साकं वाशीभिः' इति प्रस्तुतस्य वाग्रूपस्य शब्दस्योत्पादकाः **त्ये** ते मरुतः **अज्मेषु** स्वीयगमनेषु **काष्ठाः** अपः उदु उत्कर्षणैव **अत्नत** अतनिषत विस्तारितवन्तः । तथा तननेन तेजसां रसादानं सुकरमित्याह । **वाश्राः** हम्भारवोपेताः गाः **अभिज्ञु** अभिमुखजानु पथा तथा **यातवे** यातुं प्रेरितवन्त इति शेषः । मरुतां घोषवाग्विभवं वर्णयति । शिखरिणोऽपि (मं.१,अनु.८,मू.३७) भग्ना भवन्तीति प्रागुक्तम्, अधुना आपो वितन्यन्ते गावश्च अपः आजानु प्रविश्य आददतामिति ताश्च प्रेर्यन्त इत्युक्तम् । इन्द्रभ्रातरो मरुतः प्रसिद्धाः । इन्द्रकृत्यानुरोधिनः सन्तः अप्सङ्केतितपोषणधारणादिक्रियाशक्ति-विस्तरणेन गोसङ्केतितचिद्रश्मिविषयकरसपोषणप्रेरणार्था भवन्तीति बोध्यम् । सूनवः-षू प्रेरणे, सुवः किदिति नुप्रत्ययः । अत्नत-तनु विस्तारे, लङ, विकरणस्य लुक्, छान्दसम् । अभिज्ञु-अभिगते जानुनी यस्य तत् । प्रसंभ्यां जानुनोः ज्ञुरादेशः । यातवे तुमर्थे तवेन्प्रत्ययः ।।१३।।

।। इति प्रथमाष्टके तृतीयाध्याये त्रयोदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्यंचिद्धा दीर्घं पृथुं मिहोनपातममृध्रम् । प्र च्यावयन्ति यामभिः ।। ११ ।।**

त्यम् । चित् । घ । दीर्घम् । पृथुम् । मिहः । नपातम् । अमृध्रम् । प्र । च्यवयन्ति । यामऽभिः ।। ११ ।।

## ऋग्भाष्यम्

पद्भ्यां भूमिरिति श्रुत्या सुता विष्णोर्वसुंधरा ।
तज्जत्वात्पर्वता विष्णोर्नप्तारः सेचनाद्धिमिट् ।
हरिस्तमपि मेर्वादिं मरुतश्च्यावयन्ति हि ।
अमृध्रमप्रधृष्यत्वात् .............।। ११ ।।

**ऋग्भाष्यटीका– त्यंचिद्धा दीर्घं पृथुम्** । अत्र को मिट् कश्च तस्य नपात् कथं चेत्यत आह ।। **पद्भ्यामिति** ।। अत्र मिडिति विष्णुर्वाचीत्युक्तम् । तत्कथमित्यत आह ।। **सेचनाद्धीति** ।। मिह सेचने अस्मात्किप् । इदानीमृचं व्याख्याति ।। तमपीति ।। मरुतो । दीर्घमायामवन्तम् । **पृथुं** विस्तारवन्तम् । अप्रधृष्यत्वात् **अमृध्रम्** । मृधेः क्लेदनार्थात्कर्मणि

रः । तत्राक्लेद्यत्वेनाप्रधृष्यत्वमुपलक्ष्यते । **मिहो नपातं** पर्वतम् । त्यंचित् तमपि प्रसिद्धमेर्वादिकमपि । **यामभिः** । भावेमः । गमनैः । प्रच्यावयन्ति स्वस्थानाच्युतं कारयन्ति । घ हि ॥ ११ ॥

**मन्त्रार्थमञ्जरी–** मरुतः **दीर्घम्,** आयामवन्तम् । **पृथुम्** विस्तारवन्तम् । अप्रधृष्यत्वात् अमृध्रम्, मृधेः क्लेदनार्थात्कर्मणि रक्, तत्राक्लेद्यत्वेनाप्रधृष्यत्वमुपलक्ष्यते । **मिहः** सेचकस्य, हरेः, 'मिह सेचने' क्विप् । प॒द्भ्यां भू॒मिर्' (ऋ०म०१०।९०।१४) इति श्रुत्या पुत्रीभूतधरा-जन्यत्वात्पर्वतजातं 'नप्तृ' इत्युच्यते **नपातम्,** नप्तारम्, पौत्रभूतम् । **त्यम्** चित्, तमपि, प्रसिद्धं मेर्वादिकमपि । **यामभिः** यातेः भावे मनिन् प्रत्ययः, गमनैः । प्र च्या(च्य)वयन्ति, स्वस्थानाच्युतं कारयन्ति । **घ हि** ॥ ११ ॥

**स्कन्द–** न च केवला गिरः काष्ठाश्च । किं तर्हि । **त्यम् चित्** चिदित्यप्यर्थे । व इति पदपूरणः । तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽप्याहर्तव्यः । योऽयं वैद्युतो नामाग्निः तमपि **दीर्घम् पृथुम् मिहः नपातम्** मिह सेचने । सेचनात् मिट् मेघ उच्यते । नपादिति अपत्यनाम । मेघस्य अपत्यभूतम् । मेघाद्धि वैद्युतोऽग्निर्जायते । अथवा नपादिति पौत्रस्यैव नाम, न पुत्रस्य । तत्रादित्यो मिडुच्यते । सोऽपि हि रश्म्याहृताभिरद्भिर्मध्यमं सिञ्चति । ताभ्यश्चाद्भ्यो मेघो जायते । मेघात् वैद्युत इत्येवमादित्यपौत्रत्वमस्य । अमृध्रम् मृधिर्हिंसार्थः । अहिंस्यम् अहिंसितारं वा साधूनाम् । अथवा मृध्रशब्दो मृदुपर्यायः । तथाहि यास्केन दर्शितम्– 'दनो विश इन्द्रः मृध्रवाचः' (ऋ.१,१७४,२) । '**दानमनसो नो मनुष्यानिन्द्र मृदुवाचः कुरु**' (या.६,३१) इति । अमृध्रम् अमृदुं तीक्ष्णम् । अथवा मृध्रशब्दो निर्वीर्यवचनः । एवं हि छागलेयिनां श्रुतौ प्रयोगः– '**दक्षिणेन हस्तेन देवानसृजत् । सव्येनासुरान् । तेन देवा वीर्यवन्तोऽभवत् । मृध्रा असुराः**' इति । अत्र च वीर्यवत्प्रतियोगित्वेनोपादानात् मृध्रशब्दो निर्वीर्यवचन इति गम्यते । अमृध्रं वीर्यवन्तं **प्र च्यावयन्ति** मेघात् **यामभिः** यानैः । विद्युतमपि स्वगमनैरेव कुर्वन्तीत्यर्थः । अथवा दावलक्षणोऽग्निरभिप्रेतः । न वैद्युतः । स हि मिहो नपात् । कथम् । मेधात् वृष्टिद्वारेण ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्यः स इति । तं ग्रीष्मे प्रवृद्धं प्रच्यावयन्ति अपगमयन्ति यामभिः यानैः । कस्य । समार्थ्यात् वृष्टिलक्षणानामपाम् । योऽयं दावरूपोऽग्निः, तमपि वृष्टिं गमयन्तोऽपनयन्तीत्यर्थः ॥ ११ ॥

**वेङ्कटमाधव– त्यम् चित्** खलु **दीर्घम्** विस्तीर्णम् मेघस्य पुत्रम् अमृदुम् गमनैः **प्र च्यावयन्ति** मरुतः । इदं शिलोच्चयाभिप्रायमिति ॥ ११ ॥

**मुद्गल– त्यं चित् घ** प्रसिद्धो यो मेघः तमपि मेघम् **यामभिः** स्वकीयगमनैः **प्र च्यावयन्ति** मरुतः प्रकर्षेण गमयन्ति । कीदृशम् । **दीर्घम्** आयामोपेतम् **पृथुम्** तिर्यग्विस्तृतम् **मिहः नपातम्** सेचनी यस्य जलस्य न पातयितारम् । वृष्टिमकुर्वन्तमित्यर्थः । **अमृध्रम्** केनापि अहिंस्यम् ॥ ११ ॥

**सायण– त्यं चिद्ध** प्रसिद्धो यो मेघस्तमपि मेघं **यामभिः** स्वकीयगमनैः **प्र च्यावयन्ति** मरुतः प्रकर्षेण गमयन्ति । कीदृशम् । **दीर्घम्** आयामोपेतं **पृथुं** तिर्यग्विस्तृतं **मिहो नपातं** सेचनीयस्य जलस्य न पातयितारं वृष्टिमकुर्वन्तमित्यर्थः । **अमृध्रं** केनाप्यहिंस्यम् ॥ घ । ऋचि तुनुघ' इत्यादिना दीर्घः । मिहः । 'मिह सेचने' । मेहति सिञ्चतीति मिट् वृष्टिः । 'क्विप् च' इति क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । नपातम् । न पातयतीति नपात् । 'नभ्राननपात्' । इत्यादिना नञः प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अमृध्रम् । 'शृधु मृधु उन्दने' । मति उदकेन उनत्तीति मृध्रः । बहुलवचनात् औणादिको रक्प्रत्ययः । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा । संग्रामवाचिना मृधशब्देन हिंसा लक्ष्यते । मत्वर्थीयो रः । पूर्ववत् स्वरसमासौ । च्यावयन्ति । 'च्युङ् गतौ' । णिचि वृद्ध्यावादेशौ । पदकाले ह्रस्वछान्दसः ॥ ११ ॥

**सिद्धाञ्जनम्– त्यं चित्** घ तमपि, योऽपामावरकः प्रसिद्धस्तमपि तमोघनं **यामभिः** गमनैः **प्रच्यावयन्ति** प्रकर्षणाधो गमयन्ति अपो वर्षयन्ति, कीदृशम् ? **दीर्घम्** आयतम् **पृथुम्** विस्तृतं **मिहो नपातम्** मेहते सिञ्चतीति मिट् अपां आवारको मेघस्तमोघनस्तस्य नपातं सन्तानभूतं **अमृघ्रम्**-केनाप्यनिष्पीड्यम् ॥ नपातम्-न पातयितारमिति सायणः । प्रसिद्धमर्थ नप्तारं अङ्गीकुर्मः । अमृध्रम्-मृधु उन्दने, हिंसार्थे च, औणादिको रक्प्रत्ययः । च्यवयन्ति-पदपाठे ह्रस्वश्छान्दसः ॥ ११ ॥

## ऋक्संहिता पदपाठसहिता

**मरुतो यद्धवो बलं जनाँ अचुच्यवीतन । गिरीँरचुच्यवीतन ।। १२ ।।**
**मरुतः । यत् । ह । वः । बलम् । जनान् । अचुच्यवीतन । गिरीन् । अचुच्यवीतन ।।**

## ऋग्भाष्यम्

...........बलं यदपि वोऽखिलम् ।
जनांश्च्यावयितुं स्थानाच्छक्ताः सम्यग्गिरीनपि ।। १२ ।।

**ऋग्भाष्यटीका– मरुतः** । बलम् । हे मरुतो । यद्यस्माद्वो युष्माकं बलं ह । अखिलमपि बलमस्ति । तस्माद्यूयं जनान् **अचुच्यवीतन** । गिरींश्चाचुच्यवीतन । च्यवतेर्ण्यन्तात्परस्य लुङो मध्यमपुरुषबहुवचनस्य तप्तनप्तनथनाश्चेति तनः । स्वस्थानात् च्युतानचीकरत । एतत्प्रमाण-विरुद्धम् । पर्वतादीनां स्वस्थान एव स्थितत्वदर्शनादित्यतस्तात्पर्यमाह ।। जनान् गिरीनपि स्थानाच्यावयितुं शक्ता स्थेति । द्विःक्रियाभिधानस्य प्रयोजनमाह ।। **सम्यगिति** ।। १२ ।।

**मन्त्रार्थमञ्जरी–** हे **मरुतः । यत्,** यस्मात् । **वः,** युष्माकम् । **बलम्** ह अखिलमपि बलमस्ति । तत् तस्मात् । यूयम् जनान् अचुच्यवीतन गिरीन् च अचुच्यवीतन, च्यवतेः ण्यन्तात्परस्य लुङो मध्यमपुरुषबहुवचनस्य 'तप्तनप्तनथनाश्च' इति तनादेशः, स्वस्था-नाच्युतानचीकरत, जनान्गिरीनपि स्वस्थानाच्यावयितुं शक्ताः स्थ इति तात्पर्यान्न प्रमाणबाधः, द्विष्क्रियाभिधानं सम्यक्छक्तिमत्त्वद्योतनाय ।। १२ ।।

**स्कन्द– हे मरुतः । यत्** वः बलम् । ह इति पदपूरणः । यद् वो बलं **जनान्** असुरजनान् **अचुच्यवीतन** स्वराष्ट्रेभ्यः च्यावितवत् । यच्छब्दश्रुतेस्तच्छब्दोऽप्याहार्यः । तदेव । **गिरीन्** अपि मेघान् पर्वतान् वा **अचुच्यवीतन** च्यावयति ।। १२ ।।

**वेङ्कटमाधव– हे मरुतः! यत्** ह वः **बलम्** तत् **जनान्** च्यावयति । तत् शिलोच्चयानपि च्यावयति ।। १२ ।।

**मुद्गल– हे मरुतः! यत्** ह यस्मादेव कारणात् यः युष्माकम् **बलम्** अस्ति अस्मादेव कारणात् **जनान्** प्राणिनः **अचुच्यवीतन** स्वस्वव्यापारेषु प्रैरयत । तथा **गिरीन्** मेघान् **अचुच्यवीतन** प्रेरयत ।। १२ ।।

**सायण–** हे '**मरुतः यद्ध** यस्मादेव कारणात् **वः** युष्माकं **बलम्** अस्ति अस्मादेव कारणात् **जनान्** प्राणिनः **अचुच्यवीतन** स्वस्वव्यापारेषु प्रेरयत । तथा **गिरीन्** मेघान् **अचुच्यवीतन** प्रेरयत । मरुतः । आमन्त्रिताद्युदात्तत्वम् । अचुच्यवीतन । च्यवतेर्लङि व्यत्ययेन परस्मैपदम् । 'तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' (पा.सू.७.३.९७) इति ईडागमः । गुणावादेशौ । 'तिङ्ङतिङः' इति निघातः । गिरीन् । 'दीर्घादटि समानपादे । इति संहितायां नकारस्य रुत्वम् । 'अत्रानुनासिकः' इति ईकारस्यानुनासिकः ।। १२ ।।

**सिद्धाञ्जनम्– हे मरुतः, यत् ह** यस्मादेव **वः** युष्माकं **बलम्** अस्ति, तस्मादेव कारणात् **जनान्** जन्मिनः **अचुच्यवीतन** प्रेरयत, तथा **गिरीन्** मेघान् उक्तलक्षणान् अपां विसृष्टये **अचुच्यवीतन** प्रेरयत । अचुच्यवीतनच्यवतेर्लिङि व्यत्ययेन परस्मैपदम्, तनबादेशः, शपः श्लुः । अन्यच्च छान्दसम् ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**यद्ध यान्ति मरुतः सं ह ब्रुवतेऽध्वन्ना । शृणोति कश्चिदेषाम् ।। १३ ।।**
**यत् । ह । यान्ति । मरुतः । सम् । ह । ब्रुवते । अध्वन् । आ । शृणोति । कः । चित् । एषाम् ।। १३ ।।**

## ऋग्भाष्यम्

**कुर्वन्ति शास्त्रसंवादं मार्गे शृण्वन्ति केचन ।**
**तेषां मध्ये हि मरुताम्......... ।। १३ ।।**

**ऋग्भाष्यटीका– यद्ध ।। कुर्वन्ति ।।** मरुतो यद्यदा **यान्ति** तदेषां तेषां मरुतां मध्ये । केचनाध्वन्नध्वनि मार्गे । **सम्ब्रुवते** ह शास्त्रविषयं संवादं कुर्वन्ति हि । कश्चित्केचित् । **आ** सम्यक् । शृणोति ह शृण्वन्ति हि । सर्वदापि शास्त्राभ्यासतत्परा इति ।। १३ ।।

**मन्त्रार्थमञ्जरी–** मरुतः । **यत्** यदा । **यान्ति** तदा । **एषाम्,** मरुतां मध्ये । कश्चित् केचन । **अध्वन्** अध्वनि, मार्गे । **सम् ब्रुवते ह** शास्त्रविषयं संवादं कुर्वन्ति

हि । **कः चित्** केचित् । आ, सम्यक् । **शृणोति ह** शृण्वन्ति हि, सदा शास्त्राभ्यासतत्पराः इति भावः ।। १३ ।।

**स्कन्द– यत्** यदा **यान्ति मरुतः**, यान्तश्च **सम् ब्रुवते** परस्परेण सम्भाषन्ते **अध्वन् आ** । आ इत्युप सर्गोऽत्राध्यर्थे । अध्वनोऽधि अध्वन उपरि । अध्वनीत्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा **शृणोति कः चित् एषाम्** मरुतां सम्भाषणम्, न सर्वः । यस्यैवैते मरुतः प्रसादवन्तः, स एवैतान् गच्छतः अध्वनि भाषमाणान् शृणोति, नापर इत्यर्थः ।।१३।।

**वेङ्कटमाधव–** यदा खलु **यान्ति मरुतः**, तदानीं मार्गेऽमी सह शब्दं कुर्वन्ति । तं शब्दम् **एषाम् कः चित्** अपि **शृणोति** । सर्वो जनः आगोपालं शृणोति ।। १३ ।।

**मुद्गल– यत् ह** यदा खलु **मरुतः यान्ति** गच्छन्ति । तदानीम् **अध्वन् आ** मार्गे सर्वतः **सम् ब्रुवते ह** सम्भूय ध्वनिम् अवश्यं कुर्वन्ति । **एषाम्** मरुतां सम्बन्धिनं शब्दम् **कश्चित्** यः कोऽपि शृणोति ।। १३ ।।

**सायण– यद्ध** यदा खलु **मरुतः यान्ति** गच्छन्ति तदानीम् **अध्वन्ना** मार्गो सर्वतः सं ब्रुवते **ह** संभूय ध्वनिमवश्यं कुर्वन्ति । **एषां** मरुतां संबन्धिनं शब्दं **कश्चित्** यः कोऽपि **शृणोति** । यान्ति । 'या प्रापणे' । अदादित्वात् शपो लुक् । 'झोऽन्तः' इति अन्तादेशस्य उपदेशिवद्भावात् अन्तीत्येतदाद्युदात्तत्वम् । धातुना सहैकादेश एकादेशस्वरः। यद्वृत्तयोगादनिघातः । ब्रुवते । 'ब्रूञ् व्यक्तायां वाचि' । झस्य अदादेशे कृते परत्वात् प्राप्तस्य गुणस्य ङित्त्वेन बाधितत्वात् उवङादेशः । अध्वन् । 'सुपां सुलुक्' इति सप्तम्या लुक् । शृणोति । तिपः पित्वादनुदात्तत्वे विकरणस्वरः ।। १३ ।।

**सिद्धाञ्जनम्–** यत् ह यदा खलु **मरुतः यान्ति** गच्छन्ति, तदा **आ** सर्वतः **अध्वन्** मार्गे **संब्रुवते** ह एते मरुतः गणात्मकत्वात्, संभूय वाचं प्रयुञ्जत एव, शब्दं कुर्वन्तीत्यर्थः । स च शब्दः न सर्वेषां श्रवणगोचरो भवतीत्याह-**एषाम्** मरुतां तं शब्दं **कश्चित्** अन्तर्मुखः, विकसितान्तरिन्द्रियः अन्तर्याजी **शृणोति**, नान्यः, साधारणश्चेदयं शब्दः सर्वेऽपि जनाः शृणुयुः, नायं तथा । अध्वन्-सप्तम्या लुक् ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**प्र या॑त॒ शीभ॑मा॒शुभिः॑ स॒न्ति कण्वे॑षु वो॒ दुवः॑ । तत्रो॒ षु मा॑दयाध्वै ॥१४॥**
**प्र । या॒त॒ । शीभ॑म् । आ॒शुऽभिः॑ । सन्ति॑ । कण्वे॑षु । व॒ः । दुवः॑ । तत्रो॒ इति॑ । सु । मा॒दया॒ध्वै ॥ १४ ॥**

## ऋग्भाष्यम्

**....................शीभं क्षिप्रं प्रयातनः ।**
**मदं कुरुत तत्रैव दोहनान्यत्र सन्ति हि ॥ १४ ॥**

**ऋग्भाष्यटीका– प्रयात । शीभम् ।** हे मरुतो यूयम् । **आशुभिः** वाहनैः । **शीभं** शीघ्रम् । नोऽस्मान्प्रति । **प्रयात** आगच्छत । आगत्य च । तत्र उ तत्रैवास्मद्गृहेष्वेव । **सु** सम्यङ् **मादयाध्वै** मदं कुरुत सुखिनो भवत । कथम् । अत्र **कण्वेषु** कण्वगृहेषु । **वो** युष्माकमर्थे । **दुवो** दोहनानि सन्ति हि ॥ १४ ॥

**मन्त्रार्थमञ्जरी– हे मरुतो** यूयम् अशुभिः, वाहनैः । **शीभम्** शीघ्रम् । नः अस्मान्प्रति । **प्र यात,** आगच्छत । आगत्य च तत्रो, तत्रैव, अस्मद्गृहेषु । **सु,** सम्यक् । **मादयाध्वै,** मदं कुरुत, सुखिनो भवत । कथम् ? अत्र **कण्वेषु,** कण्वगृहेषु । **वः,** युष्माकमर्थे । **दुवः,** दोहनानि । सन्ति हि ॥ १४ ॥

**स्कन्द– प्र** इत्येष उपेत्येतस्य स्थाने । उप **यात** अस्मान् **शीभम्** क्षिप्रनामैतत् (तु.निष. २,२५) । क्षिप्रम् **आशुभिः** शीघ्रैः अश्वैः । किं कारणम् । उच्यते । यस्मात् **सन्ति कण्वेषु** एकस्मिन्नेवात्मनि 'अस्मदो द्वयोश्च' (पा.१,२,५९) इत्येवं बहुवचनम् । पुत्रपौत्राद्यपेक्षं वा । अस्मासु कण्वेषु । **वः** युष्माकम् **दुवः** परिचर्याः । यस्मादागतान् युष्मान् वयं परिचरिष्याम इत्यर्थः । आगत्य च **तत्रो षु** तच्छब्दश्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । योऽस्मदीयो यज्ञो वेदिर्वा तत्र सुष्ठु **मादयाध्वै** मद तृप्तौ । तर्पयत आत्मानम् ॥ १४ ॥

**वेङ्कटमाधव–** उद्युक्ता भवत क्षिप्रं शीघ्रैरश्वैः । **सन्ति कृण्वेषु वः** परिचर्याः । **तत्र** सुष्ठु मदयत ॥ १४ ॥

**मुद्गल–** हे मरुतः! **आशुभिः** वेगवद्भिः स्वकीयैर्वाहनैः **शीभम्** शीघ्रम् **प्र यात** प्रकर्षेण कर्मभूमिं गच्छत । **कण्वेषु** मेधाविषु अनुष्ठातृषु वः युष्माकम् **दुवः** दुवांसि परिचरणानि सन्ति । **तत्रो षु** तेष्वेव परिचारकेषु कण्वेषु **मादयाध्वै** तृप्ता भवत ।। १४ ।।

**सायण–** हे मरुतः '**आशुभिः** वेगवद्भिः स्वकीयैर्वाहनैः **शीभं** शीघ्रम् । 'शीभं तृषु तूयम्' (नि.२.१५.९) इति क्षिप्रनामसु पाठात् । **प्र यात** प्रकर्षेण कर्मभूमिं गच्छत । **कण्वेषु** मेधाविष्वनुष्ठातृषु **वः** युष्माकं **दुवः** दुवांसि परिचरणानि **सन्ति** । **तत्रो षु** तेष्वेव परिचारकेषु कण्वेषु मादयाध्वै तृप्ता भवत ।। आशुभिः । 'अशू व्याप्तौ' । 'कृवापाजि' इत्यादिना उण् । प्रत्ययस्वरः । सन्ति । 'श्नसोरल्लोपः' इति अकारलोपः । मादयाध्वै । 'मद तृप्तियोगे' । चुरादिः । आकुस्मीय आत्मनेपदम् । लेटि आडागमः । टेः एत्वम् । 'वैतोऽन्यत्र' (पा.मू.३.४.९६) इति एकारस्य ऐकारादेशः ।। १४ ।।

**सिद्धाञ्जनम्–** हे **मरुतः**,**आशुभिः** वेगवद्भिः स्वीयवाहनः **शीभम्** शीघ्रं क्षिप्रनाम **प्रयात** प्रस्थानं कुरुत अस्मदीययजनभुवं प्रति, **वः** युष्मदर्थं **कण्वेषु** मेधाविषु, एतन्नामकेष्वस्मासु वा **दुवः** दुवांसि परिश्रमात्मकानि कर्माणि **सन्ति** वर्तन्ते । **तत्रो** तन तेषु कण्वेषु, तेषु दुवःसु वा **सु** सुतरां **मादयाध्वै** तृप्ता भवत ।। आशुभिः- अशू व्याप्तौ उण् । **मादयाध्वै–** मद तृप्तियोगे चुरादिः आत्मनेपदी, लेट्याडागमः, एकारस्य ऐकारादेशः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**अस्ति हिष्मा मदाय वः स्मसि ष्मा वयमेषाम् । विश्वं चिदायुर्जीवसे ।।**

अस्ति । हि । स्म । मदाय । वः । स्मसि । स्म । वयम् । एषाम् । विश्वम् । चित् । आयुः । जीवसे ।। १५, १४, ३७ ।।

## ऋग्भाष्यम्

**सर्वमायुर्जीवसेऽस्ति प्रसादान्मरुतां हि नः ।। १५, १४, ५ ।।**

**ऋग्भाष्यटीका– अस्ति** । अत्रोत्तरार्धमपूर्णं शेषपूरणेन व्याख्याति ।। **सर्वमिति** ।। हे मरुतो **वो** युष्माकम् । **मदाय** सुखाय । अस्मद्गृहेषु हविरादिसाधनमस्ति हि स्म सुप्रसिद्धमेतत् ।

किञ्च । वयमेषां मरुतां सम्बन्धिनः । **स्मसि स्म** भवामो हि । कथम् । नोऽस्माकं मरुतां प्रसादात् **जीवसे** जीवनाय । **विश्वं चित्** सर्वं सम्पूर्णमप्यायुरस्ति हि । तत्प्रसादलब्धायुराद्या वयं कथं तदीया न भवामः । तस्मादस्मानगच्छतेति ।। १५, १४, ५ ।।

**मन्त्रार्थमञ्जरी– हे मरुतः** वः, युष्माकम् । **मदाय** सुखाय । अस्मद्गृहेषु हविरादिसाधनम् अस्ति । **हि स्म** सुप्रसिद्धमेतत् । किं च, वयम् । **एषाम्** मरुतां सम्बन्धिनः । **स्मसि स्म** भवामो हि । कथम् ? नः अस्माकम् । मरुतां प्रसादात् जीवसे, जीवनाय, तुमर्थेऽसेन् प्रत्ययः । **विश्वम् चित्,** सर्वं सम्पूर्णमपि आयुः अस्ति हि तत्प्रसादलब्धायुराद्या वयं कथं तदीया न भवामः, तस्मात् 'अस्मानागच्छत' इति ।। १५ ।।

**स्कन्द–** कस्मात् । उच्यते । **हिशब्दो** यस्मादर्थे । **स्म** इति पदपूरणः । यस्मात् तत्र **अस्ति मदाय वः** । किम् । सामर्थ्यात् सोमः । यस्मात् युष्मन्मदकरणसमर्थः सोमोऽस्तीत्यर्थः । यस्माच्च **स्मसि स्म वयम्** स्मेति पदपूरणः । विद्यामहे वयमपि **एषाम्** युष्माकं मरुतां स्वभूताः । यस्मात् वयमपि युष्माकं परिचारकाः सोमस्यार्पयितारः स्तुतिकराश्च विद्यामह इत्यर्थः । यस्माच्च **विश्वम् चित् आयुः । 'विश्वम्'** (निघ.३,१) इति बहुनाम । चिच्छब्दोऽप्यर्थे, आयुरित्यस्माच्च परो द्रष्टव्यः । आयुः इत्येतच्च अत्र अन्ननाम (निघ.२,७) । अन्नमपि बह्वस्तीत्यर्थः । किमर्थम् । **जीवसे** जीवनाय जीवितुम् । अस्मद्धीदनार्थम् । यत् सोमेन आत्मानं तर्पयित्वा जीवनाय अस्मभ्यमन्नं दास्यथ, तदपि बह्वस्तीत्यर्थः ।। १५ ।।

**वेङ्कटमाधव– अस्ति हि मदाय यः** अस्मासु स्तोत्रम् । तथा **एषाम्** भवतां स्तोतारः **वयम्** परिपूर्णम् **आयुः** जीवितुं भवामः ।। १५ ।।

**मुद्गल–** हे मरुतः! **वः** युष्माकम् **मदाय** तृप्तये **अस्ति हि ष्म** अस्माभिः प्रयुज्यमानं हविः विद्यते खलु । **एषाम्** युष्माकं भृत्यभूताः **वयम् स्मसि स्म** विद्यामहे खलु । **जीवसे** जीवितुम् **विश्वम् चित् आयुः** सर्वमप्यायुः प्रयच्छतेति शेषः ।। १५ ।।

**सायण–** हे मरुतः **कद्ध** कदा खलु **नूनम्** अवश्यं हस्तयोः **दधिध्वे** यूयमस्मान् हस्ते धारयथ । तत्र दृष्टान्तः । **पिता पुत्रं न हस्तयोः** । यथा लोके पिता हस्तयोः स्वकीयं पुत्रं धारयति तद्वत् । कीदृशा मरुतः । **कधप्रियः** स्तुतिर्प्रीताः **वृक्तबर्हिषः** । वृक्तं छिन्नं बर्हिर्दर्भो

येषां मरुतां यजमानाय ते मरुतः तथाविधाः । कत् कदा । द्वौ चापरौ वर्णविकारनाशौ (का.६.३.१०९) इत्युक्तत्वात् आकारलोपः । कधप्रियः । कथा स्तुतिः । तया प्रीणन्तीति कधप्रियः । 'प्रीञ् प्रीतौ' । क्विप् । पूर्वपदस्य 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' (पा.सू.६.३.६३) इति ह्रस्वत्वम् । धकारश्छान्दसः । आमन्त्रितनिघातः । दधिध्वे । दधातेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट् । क्रादिनियमात् इट् । प्रत्ययस्वरः वृक्तबर्हिषः । आमन्त्रितनिघातः ।।१५।।

**सिद्धाञ्जनम्–** हे मरुतः, **वः** युष्माकं **मदाय** तृप्तये **अस्ति हि स्म** अस्त्येव खलु यदस्माभिर्देयं तदित्यर्थः । **एषाम्** युष्माकं सम्बन्धिनः **वयम् स्मसि स्म** विद्यामहे खलु । **विश्वम् चित् आयुः** सर्वमप्यायुः **जीवसे** जीवितुं युष्मदीयाः वयं स्म इति संबन्धः ।। स्मसंहितायां दीर्घः । स्मसि-इदन्तो मसिः ।। १६ ।।

**।। इति प्रथमाष्टके तृतीयाध्याये चतुर्दशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ३८)**

**१५ कण्वो घौरः । मरुतः । गायत्री ।**

**कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः । दधिध्वे वृक्तबर्हिषः ।। १ ।।**

**कत् । ह । नूनम् । कधऽप्रियः । पिता । पुत्रम् । न । हस्तयोः । दधिध्वे । वृक्तऽबर्हिषः ।।**

## ऋग्भाष्यम्

**कदानयोर्हस्तयोर्देवा दधिध्वे प्रियतातवत् ।**
**कदाऽपि यत्प्रियस्तातः कधप्रिय इतीरितः ।**
**स्तृतं बर्हिर्यद्विषये ते प्रोक्ता वृक्तबर्हिषः ।। १ ।।**

**ऋग्भाष्यटीका– कद्ध** । एतदपि पञ्चदशर्चं मारुतं सूक्तम् । कदा । हे देवा मरुतो यूयम् । माङ्कत् कदा । अनयोर्न तु जन्मान्तरभाविनोः । हस्तयोर्नूनं निश्चितम् । **दधिध्वे** धध्वे । देत्यास्वादने । क(कइव)मिव । **कधप्रियः** पिता । **पुत्रं न** पुत्रं प्रियतातवत् । कथमेतल्लभ्यत इत्यत आह ।। कदापीति ।। यद्यस्मात्तस्मात् कधेति निपातः कदापि सदापीत्यर्थे वर्तमानः ।

प्रियशब्देन समस्त इत्यर्थः । वृक्तबर्हिष इति मरुतां सम्बोधनम् । तद्घटयन्व्याख्याति ।। स्तृतमिति ।। सप्तम्यर्थे बहुव्रीहिः ।। १ ।।

**मन्त्रार्थमञ्जरी**– अथ 'कद्ध' इत्याद्यपि पञ्चदशर्चं वर्गत्रयात्मकं मारुतं गायत्रीछन्दस्कमष्टात्रिंशं सूक्तम् । हे **वृक्तबर्हिषः** वृक्तं विस्तृतं बर्हिर्यद्विषये ते वृक्तबर्हिषः, सप्तम्यर्थे बहुव्रीहिः । मरुतो यूयम् **कत्** कदा । अनयोः, न तु जन्मान्तरभाविनोः हस्तयोः । **नूनम्** निश्चितम् । **दधिध्वे** दधातेः लिटि मध्यमपुरुषबहुवचनम् । 'ह' इत्यास्वादन (ने)म् । कधप्रियः, 'कध' इति निपातः 'सदा' इत्यर्थे, सदाप्रियः । **पिता पुत्रम् न** पुत्रं प्रियतातवत् ।। १ ।।

**स्कन्द**– कत् शब्दः कदेत्यस्य पर्यायः । **ह नूनम्** इति पदपूरणौ । कदा हे **कधप्रियः!** कम् उदकम् तद् दधाति धारयतीति कधो मेघः । स प्रीः प्रियो येषां ते कधप्रियः । अथवा कध आदित्यः, उदकस्य धारयितृत्वात् प्रजापतिना वा प्रकाशाद्यर्थं निहितत्वात् । प्रीञ् तर्पणे । प्रीः प्रियः तर्पयिता । आदित्यस्तर्पयिता येषां ते कधप्रियः । मरुतो हि वर्षासु रश्म्याहृतैरुदकैरादित्येन तर्प्यन्ते । तेषां सम्बोधनं हे कधप्रियः । **पिता पुत्रम् न हस्तयोः** यथा पिता बालकं पुत्रं लालयन् हस्तयोर्धारयति, एवम् **दधिध्वे** लालयन्तो धारयिष्यथ । कम् । सामर्थ्यात् अस्मान् । कदा अस्मान् लालयन्तो धारयिष्यथेत्यर्थः । हे **वृक्तबर्हिषः** । सर्वैः मनुष्यैः वृक्तमास्तीर्णं बर्हिर्येषां ते वृक्तबर्हिषः । सर्वमनुष्यैः कृतयागा इत्यर्थः । तेषां सम्बोधनं हे वृक्तबर्हिषः ।। १ ।।

**वेङ्कटमाधव**– सुखं पुरा स्तोत्रप्रीताः **पिता पुत्रम्** इव **हस्तयोः** अस्मान् **दधिध्वे** यज्ञार्थं छिन्नबर्हिषो मरुतः ।। १ ।।

**मुद्गल**– कद्ध नूनम् इति पञ्चदशर्चं तृतीयं सूक्तम् । **घोरपुत्रः कण्व ऋषिः** । गायत्री छन्दः । मरुतो देवताः ।।

हे मरुतः! **कत् ह** कदा खलु **नूनम्** अवश्यम् **हस्तयोः दधिध्वे** यूयम् **अस्मान्** **हस्ते** धारयथ । दृष्टान्तः । **पिता पुत्रम् न** हस्तयो **यथा** लोके पिता हस्तयोः स्वकीयं पुत्रं धारयति तद्वत् । कीदृशा मरुतः । **कधप्रियः** स्तुतिप्रीताः **वृक्तबर्हिषः** वृक्तं छिन्नं बर्हिः दर्भो येषां मरुताम् ते ।। १ ।।

**सायण– हे मरुतः कद्ध** कदा खलु नूनम् अवश्यं हस्तयोः **दधिध्वे** यूयमस्मान् हस्ते धारयथ । तत्र दृष्टान्तः । **पिता पुत्रं न हस्तयोः** । यथा लोके पिता हस्तयोः स्वकीयं पुत्रं धारयति तद्वत् । कीदृशा मरुतः । **कधप्रियः** स्तुतिप्रीताः वृक्तबर्हिषः । वृक्तं छिन्नं बर्हिर्दर्भो येषां मरुतां यजमानाय ते मरुतः तथाविधाः । कत् कदा । द्वौ चापरौ वर्णविकारनाशौ (का.६.३.१०९) इत्युक्तत्वात् आकारलोपः । कधप्रियः । कथा स्तुतिः । तया प्रीणन्तीति कधप्रियः । प्रीञ् प्रीतौ । क्विप् । पूर्वपदस्य ङ्यापोः संज्ञाच्छन्दसोर्बहुलम् (पा.सू.६.३.६३) इति ह्रस्वत्वम् । धकारश्छान्दसः । आमन्त्रितनिघातः । दधिध्वे । दधातेः छन्दसि लुङ्लङ्लिटः इति वर्तमाने लिट् । क्रादिनियमात् इट् । प्रत्ययस्वरः वृक्तबर्हिषः । आमन्त्रितनिघातः ।

**सिद्धाञ्जनम्–** हे मरुतः, **कत् ह** कदा खलु **वृक्तबर्हिषः** वृक्तं बर्हिः आस्तीर्णं यस्तानस्मान् **कधप्रियः** स्तुतिप्रीताः यूयं **नूनम्** अवश्यं **हस्तयोः दधिध्वे** हस्ते धारयथ ! तत्र दृष्टान्तः **पिता पुत्रम् न** यथा पिता पुत्र हस्ते धारयति, तद्वत् ।। कत्-कदा आकारलोपः छान्दसः । कधप्रियः कथया स्तुत्या प्रीणयन्ति, क्विप्, यस्य धः, ह्रस्वश्च छान्दसः । दधिध्वे-छन्दसि वर्तमान लिट् । वृक्तबर्हिषः मरुत इति सायणः, व्याख्यातं प्राक् (१.३.३) ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**क्व॑ नू॒नं कद्वो॒ अर्थं॒ गन्ता॑ दि॒वो न पृ॑थि॒व्याः । क्व॑ वो॒ गावो॒ न र॑ण्यन्ति ।।**

क्व॑ । नू॒नम् । कत् । वः॒ । अर्थ॑म् । गन्त॑ । दि॒वः । न । पृ॒थि॒व्याः । क्व॑ । वः॒ । गावः॑ । न । र॒ण्य॒न्ति ।। २ ।।

## ऋग्भाष्यम्

**दिवः पृथिव्याश्चेदानीं क्व गच्छथ च किं फलम् ।**
**न गच्छथक्वाप्येतज्ज्ञातव्यं तत्प्रसादतः ।**
**आह्वयन्ति क्व वो गावो यथैव यवसार्थिनः ।**
**फलार्थिनः स्तुवन्तो वः क्वाह्वयन्ति तथैव च ।। २ ।।**

**ऋग्भाष्यटीका–** क्व नूनं दिवः । हे मरुतः । ते यूयम् । नूनमिदानीम् । दिवः स्वर्गात्पृथिव्याश्च । क्व गन्त क्व गच्छथ । गमने च वो युष्माकम् । कत् अर्थम् । कोऽर्थः । किं

फलम् । न क्वापि गच्छथ । किमपि फलं नास्ति वा । एतन्मरुतः प्रति किमिति पृच्छन्तु इत्यत आह ।। एतदिति ।। ज्ञातव्यं खल्वेतत् । पुरुषार्थहेतुत्वात् । तत्प्रसादत एव च ज्ञायते नान्यथा । अन्यस्य तथाविधस्य वक्तुरभावात् । अतो युक्तमेतत् । एवमुत्तरत्रापि । किञ्च । **वो** युष्मान् **क्व रण्यन्ति** रणन्ति आह्वयन्तीति यावत् । **गावो** नेति दृष्टान्तं विवृण्वन् दार्ष्टान्तिके कर्तुरनिर्देशात्तमपि विवृणोति ।। यथैवेति ।। यथैव यवसार्थिनो गावो यवसदातृनाह्वयन्ति । तथैव मोक्षादिफलार्थिनः स्तुवन्तः साधकाः वः क्वाह्वयन्ति । दुर्लभं ह्येतदिति चशब्दः ।।२।।

**मन्त्रार्थमञ्जरी–** हे मरुतो यूयम् **नूनम्** इदानीम् । **दिवः** स्वर्गात् । **पृथिव्याः** च । क्व गन्त, क्व गच्छथ, गमेः छादेशाभावश्छान्दसः । गमने च **वः** युष्माकम् । **कत् अर्थम्** कोऽर्थः किं फलम् । न क्वापि गच्छथ । किं च, **वः** युष्मान् । क्व । **रण्यन्ति** क्व रणन्ति क्वाह्वयन्तीति यावत् । कथम् ? **गावः न** यथा यवसार्थिनो गावो यवसदातृनाह्वयन्ति, तथैव मोक्षादिफलार्थिनः स्तुवन्तः साधका वः क्वाह्वयन्ति, दुर्लभं ह्येतत् इति भावः ।। २ ।।

**स्कन्द– नूनम् कत्** इति पदपूरणौ । क्व दशे कदा दशे वा वः अर्थम् ऋ गतौ इत्यस्य रूपम् । अर्थं गमनमुच्यते । युष्माकं गमनम् । क्व कदा वा यूयं गन्तारः स्थेत्यर्थः । किमुच्यते । येन पुनः पुनराहूयमानाः **गन्त दिवो न पृथिव्याः** । द्वितीयार्थे षष्ठ्येषा । गच्छथ द्युलोकान्न पृथिवीम् । एतदुक्तं भवति– स्वस्मिन् स्थाने नूनमसन्निहिता एव स्थ । येनाहूयमाना अपि नागच्छथेति । **क्व वः गावः** अश्वा अत्र गाव उच्यन्ते । क्व वो युष्माकं स्वभूता गन्तारः **अश्वा न रण्यन्ति** न रमन्ते । एतदुक्तं भवति– सर्वत्रैव वोऽश्वा रमन्ते । अतः अस्मत्समीपं किं नागच्छथेति ।। २ ।।

**वेङ्कटमाधव– क्व** सम्प्रति यूयं स्थ । क्व वः गमनं भवति । गच्छत द्युलोकात् । इहागताश्च न गच्छत्र पृथिव्याः । क्व युष्मान् पशून् इव रमयन्ति ।। २ ।।

**मुद्गल–** हे मरुतः! **नूनम्** इदानीम् **क्व** यूयं कुत्र स्थिता । **कत्** कदा **वः** युष्माकम् **अर्थम्** अरणम् देवयजनदेशे गमनम् । विलम्बं मा कुरुतेत्यर्थः । **दिवो गन्त** द्युलोकात् गच्छत । **पृथिव्याः न** गन्त भूलोकात् मा गच्छत । व युष्मान् क्व **रण्यन्ति** देवयजनरूपाया पृथिव्या अन्यत्र कुत्र शब्दयन्ति यजमाना स्तुवन्ति । दृष्टान्तः । **गावः न** यथा गावः रणन्ति शब्द यन्ति तद्वत् ।। २ ।।

**सायण–** हे मरुतः **नूनम्** इदानीं **क** यूयं कुत्र स्थिताः । **कत्** कदा **वः** युष्माकम् **अर्थम्** अरणं देवयजनदेशे गमनम् । विलम्बं मा कुरुतेत्यर्थः । **दिवः गन्त** द्युलोकाद्गच्छत । **पृथिव्याः न** गन्त भूलोकान्मा गच्छत । **वः** युष्मान् **क रण्यन्ति** । देवयजनरूपायाः पृथिव्या अन्यत्र कुत्र शब्दयन्ति । यजमानाः स्तुवन्ति । तत्र दृष्टान्तः । **गावो न** । यथा गावो रणन्ति शब्दयन्ति तद्वत् । क । किंशब्दात् सप्तम्यन्तात् 'किमोऽत्' (पा.सू.५.३.१२) इति अत्प्रत्ययः। 'काति' (पा.सू.७.२.१०५) इति किमः कादेशः । 'तित्स्वरितः' इति स्वरितत्वम् । अर्थम् । 'ऋ गतौ' । 'उषिकुषिगार्तिभ्यस्थन्' (उ.सू.२.१६१) इति भावे थन् । नित्त्वादाद्युदात्तत्वम् । गन्त । 'गमेर्लोटि' 'बहुलं छन्दसि' इति शपो लुक् । थादेशस्य तस्य 'तप्तनप्तनथनाश्च' इति तबादेशः । अत एव ङित्त्वाभावात् 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपो न भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । दिवः । ऊडिदम् इति विभक्तेरुदात्तत्वम् । पृथिव्याः । उदात्तयणो हल्पूर्वात् इति विभक्तेरुदात्तत्वम् । रण्यन्ति । रणतिः शब्दार्थः । व्यत्ययेन श्यन् ।। २ ।।

**सिद्धाञ्जनम्–** हे मरुतः, **नूनम् क** यूयं इदानी कुत्र गताः । **कत्** कदा **वः** युष्माकं **अर्थम्** गन्तव्यं स्थानं, प्राप्तव्यं वस्तु वा यूयं प्राप्नुथेति शेषः । दिवः धुलोकात् गन्त गच्छत, **पृथिव्याः** न पृथिवीस्थानात् न गच्छत अयमर्थः सायणानुसारी, दुर्घटो भावः । अथ नशब्दः उपमार्थीयश्चेत् क्लेशो नश्यति, सुगमो भवति मन्त्रार्थः । **दिवो न** द्युस्थानादिव **पृथिव्याः** पृथिवीस्थानात् **गन्त** गच्छत । मरुतां देवताविशेषत्वात् द्युलोकाद्गमनं सुलभम्, जडघननत्वात् प्रतिबन्धकबाहुल्यात् पृथिवीस्थानादाविर्भूय गमनं तु न तथा । तस्मादाह- दिव इव पृथिव्याश्च स्थानात् गमनं सुखं भवतु युष्माकमिति । अथ कस्मिन् स्थाने युष्मानाह्वयन्ति आह्वातार इति प्रश्नेन तत् स्थानं ज्ञापयत अपरोक्षाः भवत चेति गमयति तृतीयः पादः । **गावो न** गावः दोहार्थमिव वः युष्मान् प्रति **क** कुत्र **रण्यन्ति** शब्दं कुर्वन्ति आह्वयन्ति स्तोतारः ।। रण्यन्तिरणतिः शब्दकर्मा, व्यत्ययेन श्यन् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**क्व॑ वः॒सु॒म्ना नव्यां॑सि॒ मरु॑तः॒ क्व॑ सु॒वि॒ता । क्वो॒३॑विश्वा॑नि॒ सौभ॑गा ।। ३ ।।**

क्व । वः । सुम्ना । नव्यांसि । मरुतः । क्व । सुविता । क्वो३इति । विश्वानि । सौभंगा ।।

## ऋग्भाष्यम्

स्तुत्यानि वः सुखानि च कथं ज्ञेयानि नः सदा ।
इत्यभिप्रायतः प्रश्नः कस्मिन्नो ज्ञापकस्त्विति ।
सुवितानि सुभद्राणि सौभगं लक्षणं परम् ।। ३ ।।

**ऋग्भाष्यटीका–** क्व वः । अत्राद्यपादं व्याचष्टे ।। **स्तुत्यानीति** ।। चशब्दः क्वेत्यस्यानुकर्षणार्थः । अनुपपन्नोऽयं प्रश्नः । तदीयसुखादेस्तद्गतत्वस्य निश्चितत्वादित्यत आह ।। **कथमिति** ।। अनेन क्वेत्यस्य कथं भूतानि । केनोपायेन वेत्यर्थान्तरसंचारेण । ज्ञेयानीति पदाध्याहारेण प्रश्नः समर्थितः । इदानीं तु क्वेत्यस्य स्वार्थापरित्यागेन प्रश्नं समर्थयते ।। **कस्मिन्निति** ।। कस्मिन्नाचार्ये निमित्ते सति । ज्ञापक इत्येकवचनं भगवदपेक्षया । तुशब्दश्चार्थः । इति च प्रश्नः । सुवितसौभगशब्दार्थमाह ।। **सुवितानीति** ।। **परं लक्षणमिति** ।। द्वात्रिंशत्स्वेकमित्यर्थः । यस्मिन् सति जना वशा भवन्ति तत्सौभाग्यमित्युच्यते ।

ततश्चैवं योजना । **हे मरुतो वो** युष्माकम् । **नव्यांसि** नव्यानि स्तुत्यानि **सुम्नानि** सुखानि **क्व सुविता** सुवितानि सुभद्राणि । चरितानि **क्व** । विश्वानि सम्पूर्णानि **सौभगा** सौभगानि । सौभाग्यानि च क्वैवेति ।। ३ ।।

**मन्त्रार्थमञ्जरी–** हे **मरुतः** । वः युष्माकम् । **नव्यांसि** स्तुत्यानि । सुम्ना सुम्नानि, सुखानि । **क्व** 'क्व' इत्यस्य कथं भूतानि, केनोपायेन ज्ञेयानि इत्यर्थः । **सुविता** सुवितानि, सुभद्राणि चरितानि । च क्व । **विश्वानि** सम्पूर्णानि । **सौभगा** सौभगानि, सौभाग्यानि, यस्मिँल्लक्षणे सति जना वशा भवन्ति तत्सौभाग्यमुच्यते, तानि । च क्वो क्वैव ।। ३ ।।

**स्कन्द–** **क्व** अन्यत्र वः युष्माकम् **सुम्ना** 'सुम्नम्' (निघ.३,६) इति सुखनाम । परिचर्यासुखानि । **नव्यांसि** नवतराणि अस्माभिरनुत्पादितपूर्वाणि । यदिच्छया यूयमन्यत्र गताः । **हे मरुतः** । **क्व सुविता** सुवितशब्दः सुगतवचनः । क्व वा सुगतानि स्थानानि । यत्र च पुनः पुनर्गम्यंते तत् सुगतं भवति । अतोऽनेन गमनौचित्यं प्रतिपाद्यते । क्व अन्यत्र भवतामुचितं

गमनमित्यर्थः । को विश्वानि सौभगा । 'विश्वम्' (निघ.३,१) इति बहुनाम । 'भगः' (निघ.२,१०) इति धननाम । शोभनानि धनानि सुभगानि । सुभगान्येव सौभगानि । स्वार्थिकस्तद्धितः । क वाऽन्यत्र बहूनि शोभनानि हविर्लक्षणानि धनानि । कान्यत्र परिचर्यातिरेके सुखं वा गमनौचित्यं वा हविरतिरेको वा येन अस्मत्समीपं मागच्छथेति समस्तार्थः ।। ३ ।।

**वेङ्कटमाधव– क वः** सुखानि नवतराणि **मरुतः! क वा** शोभनगमनानि कल्याणानि । अत्र यास्कः– 'सुविते' सु इते सूते सुगते प्रजायामिति वा' (या.४.१७) इति । क वा वः सर्वाण्येव सौभगानि ।। ३ ।।

**मुद्गल– हे मरुतः! वः** युष्माकं सम्बन्धीनि **नव्यांसि** नवतराणि **सुम्ना** प्रजापशुरूपाणि रत्नानि **क** कुत्र वर्तन्ते । **विश्वानि** सर्वाणि **सुविता** सुवितानि शोभनफलानि रत्नादीनि **क** वर्तन्ते । **सौभगा** सौभाग्यरूपाणि गजाश्वादीनि क कुत्र वर्तन्ते । भवदीयैः सुम्नादिभिः सर्वैः सहागन्तव्यमित्यर्थः ।। ३ ।।

**सायण–**हे **मरुतः वः** युष्माकं संबन्धीनि नव्यांसि नवतराणि **सुम्ना** प्रजापशुरूपाणि धनानि प्रजा वै पशवः सुम्नम्' (तै.सं.५.४.६.६) इति श्रुत्यन्तरात् । **क** कुत्र वर्तन्ते । तथा **सुविता** शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि **क** कुत्र वर्तन्ते । **विश्वानि** सर्वाणि **सौभगा** सौभाग्यरूपाणि गजाश्वादीनि **को** कुत्र वा वर्तन्ते । भवदीयैः सुम्नादिभिः सर्वैः सहागन्तव्यमित्यर्थः । सुम्ना । 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । नव्यांसि । नवशब्दात् ईयसुनि ईकारलोपश्छान्दसः । सुविता । सुष्टु इतानि सुवितानि । तन्वादीनां छन्दसि बहुलमुपसंख्यानम्' (पा.सू.६.४.७७.१) इति उवङादेशः । सौभगा । 'सुभगान्मन्त्रे' (पा.सू.५.१.१२९ ग.) इति तस्य भावः इत्यर्थे अञ् । पूर्ववत् शेर्लोपः ।। ३ ।।

**सिद्धाञ्जनम्–**हे **मरुतः, वः** युष्माकं सम्बन्धीनि नव्यांसि नवतराणि **सुम्ना** सुम्नानि सुखानि सुखहेतुभूतानि वा, (धनानि इति पूर्वे) **क** कुत्र वर्तन्ते ? तथा **सुविता** सुवितानि दुरितप्रतिद्वन्द्वीनि भद्राणि **क**? विश्वानि **सौभगा** सर्वाणि सौभाग्यानि ऐश्वर्याणि **को** क, कुत्र वर्तन्ते? एभिः सर्वैर्युक्ताः प्रसीदतेति भावः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यद्यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ।। ४ ।।**

**यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ।।**

## ऋग्भाष्यम्

**पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः ।**
**ज्ञेयस्तस्यापि विज्ञाता मारुतश्चेत्सुता गिरः ।**
**मानुषा यदि यूयं वः स्तोता देवो भवेदपि ।। ४ ।।**

**ऋग्भाष्यटीका–** यत् । अत्र पृश्निमातृशब्दं हरौ तावद्व्याख्याति ।। **पृश्निरिति** ।। वेदः पृश्निः । कथं प्रश्नयोग्यः । पृच्छतेः कर्मणि निङ् यतो हरिस्तस्य वेदस्य ज्ञेयः । तस्य विज्ञातापि । ततः प्रकारद्वयेन पृश्निमाता । पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः । समासान्ताभावः छान्दसः । पृश्नेर्माता ज्ञातेति च । उभयत्र दीर्घाभावः छान्दसः । मरुत्सु व्याख्याति ।। **मरुत इति** ।। मरुतो विवक्षिताश्चेत्तदा पृश्निमातर इत्यस्य गिरः सुता इत्यर्थः । पृश्निर्गीर्भारतीति वाङ्नामसु पाठात् । सा माता येषामिति । इदानीमृचं व्याचष्टे ।। **मानुषा इति** ।। हे **पृश्निमातरो** मरुतो यूयम् । यद्यदि । **मर्तासो** मानुषाः **स्यातन** स्यात । तदापि वः **स्तोता**ऽमृतो देवः । स्याद्भवेत् । मानुषावतारेऽपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयमिति ।।

**मन्त्रार्थमञ्जरी–** हे **पृश्निमातरः** पृश्निर्भारती माता येषामिति पृश्निमातरो मरुतः, विष्णुश्चेत्– प्रश्नयोग्यत्वात्पृश्निर्वेदः, पृच्छतेः कर्मणि निः, पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः, पृश्नेर्वेदस्य मातरः माता ज्ञाता(रः) इति वा, आद्येऽर्थे बहुव्रीहौ 'नद्यृतश्च' इति कप्प्रत्यये रूपम्, समासान्ताभावश्छान्दसः, मातृशब्दस्य जनन्यर्थत्वे तृजन्तत्वा-भावेन दीर्घाभावेऽपि ज्ञातृत्वपक्षे तृजन्तत्वेन 'अप्तृन्तृच्स्वसृनप्तृत्वष्टृक्षत्तृहोतृ' इत्यादिना प्राप्तदीर्घाभावश्छान्दसः । यूयम् । **यत्** यदि । **मर्तासः** मनुष्याः । **स्यातन** स्यात । तथापि वः स्तोता । **अमृतः** देवः । **स्यात्** भवेत् । मानुषावतारेऽपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयम् इति भावः ।। ४ ।।

**स्कन्द– यत्** शब्दो यदिशब्दस्यार्थे । यदि **यूयम् हे पृश्निमातरः** । पृश्निवर्णा गौः

पृश्निः, सा माता येषां ते पृश्निमातरः । कुत एतत् । **गोमातरो यच्छुभयन्ते अञ्जिभिः** (ऋ.१.८५,३) इति दर्शनात् । अथवा पृश्निर्गौरिति उभे अपि द्युनामनी । द्यौर्माता येषां ते पृश्निमातरः । **मर्तासः** मनुष्याः **स्यातन** भवेत् । **स्तोता च वः** अस्मदादिः **अमृतः** देवः **स्यात्** । ततः सर्वकामान् युष्माकं संवर्धयेदिति वाक्यशेषः । कुत एतत् । साकाङ्क्षत्वात् । 'यदग्ने स्यामहं त्वम्' (ऋ.८,४४,२३), 'यदिन्द्र यावतस्त्वम्' (ऋ.७,३२,१८) इत्यादिषु चैवंरूपेषु मन्त्रेषु दृष्टत्वात् । अथवा यदिति वचनात् तत इत्येतत् तृतीय एव पादेऽध्याहर्तव्यम् यदि यूयं मर्तासो मनुष्याः स्यातन, ततो युष्मत्प्रसादेन स्तोता वः अमृतः मरणवर्जितः स्यादिति । एतद् उक्तं भवति– यूयं चेन्मनुष्या अभविष्यत, अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत, फलेन स्तोतारं समयोजयिष्यत । देवास्तु भवन्तः । अतो वयं न जानीमः किं यूयं प्रसत्स्यथ, न । फलेन वा स्तोतारं संयोजयिष्यथ, नेति ।। ४ ।।

**वेङ्कटमाधव–** यद्यपि **यूयम् पृश्निमातरः!** मर्ताः भवथ तथापि युष्माकम् स्तोता भवति **अमृत** इति ।। ४ ।।

**मुद्गल–** हे **पृश्निमातरः!** पृश्निनामकधेनुपुत्राः! **यूयम् यत्** यद्यपि **मर्तासः** मनुष्याः **स्यातन** भवेत, तथापि **वः** युष्माकम् **स्तोता** यजमानः **अमृतः स्यात्** देवो भवेत् ।।४।।

**सायण–** हे पृश्निनामकधेनुपुत्राः मरुतः **यूयं** यद्यपि **मर्तासः** मनुष्याः **स्यातन** भवेत तथापि **वः** युष्माकं **स्तोता** यजमानः **अमृतः स्यात्** देवो भवेत् ।। पृश्निमातरः । पृश्निर्माता येषां ते । समासान्तविधेरनित्यत्वात् 'नद्यृतश्च' (पा.सू.५.५.१५३) इति कबभावः । मर्तासः । 'असि हसि' इत्यादिना म्रियतेः तन्प्रत्ययः । 'आज्जसेरसुक्' । स्यातन । अस्तेर्लिङि तस्य 'तप्तनप्तनथनाश्च' इति तमादेशः । यासुट उदात्तत्वम् । अमृतः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे **पृश्निमातरः** पृश्निर्माता येषां ते मरुतः, **यूयम् यत्** यदा **मर्तासः** मनुष्याः **स्यातन भवेत**, तदा **वः** युष्माकं **स्तोता** यजमानः अमृतः स्यात् अमृतत्वं देवभावं प्राप्नुयात् । मरुतां मानुषे लब्धजन्मत्वं प्राग्विवृतम् (१.६.सू.) ।। पृश्निमातरः व्याख्यातः । मर्तासः- म्रियतेस्तन्, आज्जसेरसुक् । स्यातन-अस्तेर्लिङि तस्य तनादेशः ।

## ऋक्संहिता पदपाठसहिता

**यद्यूयं पृश्निमातरो मर्तासः स्यातन । स्तोता वो अमृतः स्यात् ॥ ४ ॥**

**यत् । यूयम् । पृश्निऽमातरः । मर्तासः । स्यातन । स्तोता । वः । अमृतः । स्यात् ॥**

## ऋग्भाष्यम्

**पृश्निर्वेदः प्रश्नयोग्यः पृश्निमाता हरिस्ततः ।**
**ज्ञेयस्तस्यापि विज्ञाता मारुतश्चेत्सुता गिरः ।**
**मानुषा यदि यूयं वः स्तोता देवो भवेदपि ॥ ४ ॥**

**ऋग्भाष्यटीका–** यत् । अत्र पृश्निमातृशब्दं हरौ तावद्व्याख्याति ॥ **पृश्निरिति** ॥ वेदः पृश्निः । कथं प्रश्नयोग्यः । पृच्छतेः कर्मणि निङ् यतो हरिस्तस्य वेदस्य ज्ञेयः । तस्य विज्ञातापि । ततः प्रकारद्वयेन पृश्निमाता । पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः । समासान्ताभावः छान्दसः । पृश्नेर्माता ज्ञातेति च । उभयत्र दीर्घाभावः छान्दसः । मरुत्सु व्याख्याति ॥ **मरुत इति** ॥ मरुतो विवक्षिताश्चेत्तदा पृश्निमातर इत्यस्य गिरः सुता इत्यर्थः । पृश्निर्गीर्भारतीति वाङ्नामसु पाठात् । सा माता येषामिति । इदानीमृचं व्याचष्टे ॥ **मानुषा इति** ॥ हे **पृश्निमातरो** मरुतो यूयम् । यद्यदि । **मर्तासो** मानुषाः **स्यातन** स्यात । तदापि वः **स्तोता**ऽमृतो देवः । स्याद्भवेत् । मानुषावतारेऽपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयमिति ॥

**मन्त्रार्थमञ्जरी–** हे **पृश्निमातरः** पृश्निर्भारती माता येषामिति पृश्निमातरो मरुतः, विष्णुश्चेत्– प्रश्नयोग्यत्वात्पृश्निर्वेदः, पृच्छतेः कर्मणि निः, पृश्निर्माता ज्ञाता यस्येति करणे कर्तृत्वोपचारः, पृश्नेर्वेदस्य मातरः माता ज्ञाता(रः) इति वा, आद्येऽर्थे बहुव्रीहौ 'नद्यृतश्च' इति कप्प्रत्यये रूपम्, समासान्ताभावश्छान्दसः, मातृशब्दस्य जनन्यर्थत्वे तृजन्तत्वा-भावेन दीर्घाभावेऽपि ज्ञातृत्वपक्षे तृजन्तत्वेन 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृ' इत्यादिना प्राप्तदीर्घाभावश्छान्दसः । यूयम् । **यत्** यदि । **मर्तासः** मनुष्याः । **स्यातन** स्यात । तथापि वः स्तोता । **अमृतः** देवः । **स्यात्** भवेत् । मानुषावतारेऽपि भक्तेभ्यो देवत्वादि दातुं समर्था यूयम् इति भावः ॥ ४ ॥

**स्कन्द– यत्** शब्दो यदिशब्दस्यार्थे । यदि **यूयम् हे पृश्निमातरः** । पृश्निवर्णा गौः

पृश्निः, सा माता येषां ते पृश्निमातरः । कुत एतत् । **गोमातरो यच्छुभयन्ते अञ्जिभिः** (ऋ.१.८५,३) इति दर्शनात् । अथवा पृश्निर्गौरिति उभे अपि द्युनामनी । द्यौर्माता येषां ते पृश्निमातरः । **मर्तासः** मनुष्याः **स्यातन** भवेत् । **स्तोता च वः** अस्मदादिः **अमृतः** देवः **स्यात्** । ततः सर्वकामान् युष्माकं संवर्धयेदिति वाक्यशेषः । कुत एतत् । साकाङ्क्षत्वात् । 'यदग्ने स्यामहं त्वम्' (ऋ.८,४४,२३), 'यदिन्द्र यावतस्त्वम्' (ऋ.७,३२,१८) इत्यादिषु चैवंरूपेषु मन्त्रेषु दृष्टत्वात् । अथवा यदिति वचनात् तत इत्येतत् तृतीय एव पादेऽध्याहर्तव्यम् यदि यूयं मर्तासो मनुष्याः स्यातन, ततो युष्मत्प्रसादेन स्तोता वः अमृतः मरणवर्जितः स्यादिति । एतद् उक्तं भवति– यूयं चेन्मनुष्या अभविष्यत, अवश्यमीदृशीभिः स्तुतिभिः प्रासत्स्यत, फलेन स्तोतारं समयोजयिष्यत । देवास्तु भवन्तः । अतो वयं न जानीमः किं यूयं प्रसत्स्यथ, न । फलेन वा स्तोतारं संयोजयिष्यथ, नेति ।। ४ ।।

**वेङ्कटमाधव–** यद्यपि **यूयम् पृश्निमातरः!** मर्ताः भवथ तथापि युष्माकम् स्तोता भवति **अमृत** इति ।। ४ ।।

**मुद्गल–** हे **पृश्निमातरः!** पृश्निनामकधेनुपुत्राः! **यूयम् यत्** यद्यपि **मर्तासः** मनुष्याः **स्यातन** भवेत, तथापि **वः** युष्माकम् **स्तोता** यजमानः **अमृतः स्यात्** देवो भवेत् ।।४।।

**सायण–** हे पृश्निनामकधेनुपुत्राः मरुतः **यूयं** यद्यपि **मर्तासः** मनुष्याः **स्यातन** भवेत तथापि **वः** युष्माकं **स्तोता** यजमानः **अमृतः स्यात्** देवो भवेत् ।। पृश्निमातरः । पृश्निर्माता येषां ते । समासान्तविधेरनित्यत्वात् 'नद्यृतश्च' (पा.सू.५.५.१५३) इति कबभावः । मर्तासः । 'असि हसि' इत्यादिना म्रियतेः तन्प्रत्ययः । 'आज्जसेरसुक्' । स्यातन । अस्तेर्लिङि तस्य 'तप्तनप्तनथनाश्च' इति तमादेशः । यासुट उदात्तत्वम् । अमृतः । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे **पृश्निमातरः** पृश्निर्माता येषां ते मरुतः, **यूयम् यत्** यदा **मर्तासः** मनुष्याः **स्यातन भवेत**, तदा **वः** युष्माकं **स्तोता** यजमानः अमृतः स्यात् अमृतत्वं देवभावं प्राप्नुयात् । मरुतां मानुषे लब्धजन्मत्वं प्राग्विवृतम् (१.६.सू.) ।। पृश्निमातरः व्याख्यातः । मर्तासः- म्रियतेस्तन्, आज्जसेरसुक् । स्यातन-अस्तेर्लिङि तस्य तनादेशः ।

## ऋक्संहिता पदपाठसहिता

**मा वो मृगो न यवसे जरिता भूदजोष्यः । पथा यमस्य गादुप ॥५,१९॥**
**मा । वः । मृगः । न । यवसे । जरिता । भूत् । अजोष्यः । पथा । यमस्य । गात् । उप ॥ ५, १९ ॥**

## ऋग्भाष्यम्

**न स्यादसेव्यः स्तोताऽत्र यथा यवसगोचरे ।**
**गोप्राप्ये तु मृगोऽसेव्यो यममार्गं न च व्रजेत् ।**
**याच्ञारीति विशेषोऽयं निन्दा स्तुत्येकदेशयुक् ॥ ५, १९ ॥**

**ऋग्भाष्यटीका– मा वः** । न स्यात् । हे मरुतो । **वो जरिता** स्तोता । कथंचित्कृतपातकोऽपि । अत्र जन्मन्यजोष्योऽसेव्योऽसंव्यवहार्यः । माभूत् न स्यात् । यवसे मृगो नेति तत्र दृष्टान्तः । सोऽनुगुणो न भवतीत्यतो व्यतिरेक दृष्टान्तोऽयमिति भावेन व्याचष्टे ॥ **यथेति** ॥ यथा गोप्राप्ये यज्ञे । धेनुभिर्भक्षणीये । यवसगोचरे यवसे विषये । मृगो व्याघ्रादिरसेव्योऽनुपादेयो भवति । तथा नायं पूजादावसेव्यो भवतीति । न केवलमिहासंव्यवहार्यो न भवति । किन्तु । अमुत्र च यमस्य पथामोपगात् यममार्गं च न व्रजेत् । नन्वसेव्यत्वाभावे सेव्यः कश्चिदृष्टान्तो वक्तव्यः । व्यतिरेकमुखेनासेव्यो व्याघ्रादिः कथमुच्यत इत्यत आह ॥ **याच्ञेति** ॥ तस्मादस्मानपि युष्मत्स्तोतृन्कुरुतेति याच्ञायां ह्यत्र तात्पर्यम् । याच्ञा चैवमेव भवति । यत्परनिन्दैतत्स्तुतिलक्षणैकदेशयुक् । अतो युक्तमुक्तम् ॥ ५, १९ ॥

**मन्त्रार्थमञ्जरी–** हे मरुतः वः । **जरिता** स्तोता । कथञ्चित्कृतपातकोऽप्यत्र जन्मनि **यवसे,** गोप्राप्ये यवसगोचरे । मृगः न अजोष्यः यथा मृगोऽसंसेव्यः । तथा **अजोष्यः** असंसेव्यः, असंव्यवहार्यः, अनुपसेव्यः । मा भूत्, न स्यात्, न भवतीति यावत् न केवलम् 'इहासंव्यवहार्यो न भवति' इति, किं तु अमुत्र च यमस्य पथा मा **उप गात्** यममार्गं च न व्रजेत् ॥ ५ ॥

**स्कन्द– मा** इति प्रतिषेधार्थो **भूत्** इत्येतेन सम्बन्धयितव्यः । वः इत्यपि षष्ठ्यन्तः **जरिता** इत्येतेन सम्बन्धयितव्यः । **मृगः न यवसे** यवसशब्दः सस्यवचनः । सामर्थ्याच्छात्रान्तर्णीत-

मत्वर्थः । यथा सस्यवति देशे सस्यविनाशको मृगः सर्वस्याप्रियः, एवं वो जरिता 'जरिता' (निघ.३,१६) इति स्तोतृनाम । युष्माकं स्तोता अस्मदादिः मा भूत् **अजोष्यः** अप्रियः । कस्य । सामर्थ्यात् सर्वस्य । सर्वस्यैव प्रियोऽस्त्वित्यर्थः । एतत्तावज्जीवतः स्तोतुराशास्यते । मरणोत्तरकालमपि **पथा यमस्य** यम आदित्यः तस्य यः पन्थाः देवयानस्तेन **गात् उप** उपगच्छतु । देवयानेन पथा स्वर्गलोकमुपगच्छत्वित्यर्थः । अथवा व इत्येतदजोष्य इत्येतेन सम्बध्यते । पथा यमस्येत्यपि यमशब्दो यज्ञवचनः । गादित्यपि मध्यमपुरुषबहुवचनस्य स्थाने प्रथमपुरुषैकवचनम् । मा कदाचिदपि स्तोता युष्माकमप्रियो भूत् । किं तर्हि । सर्वदैव यज्ञस्य यो नियतः पन्थाः तेन उपगच्छत स्तोतारमित्यर्थः ।। ५ ।।

**वेङ्कटमाधव– मा भूत्** युष्माकम् **मृगः** इव **यवसे** स्तोता आसव्यः, मा वा उप गमत् **यमस्य पथा** । नोपगच्छतु मृतः वैवस्वतस्य पथेति ।। ५ ।।

**मुद्गल–** हे मरुतः! **वः** युष्माकम्, **जरिता** स्तोता **अजोष्यः** असेव्य **मा भूत्** । दृष्टान्तः । **मृगः न यवसे** यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति, किन्तु सर्वदा तृणं भक्षयति, तद्वत् । किञ्च स्तोता **यमस्य पथा** यमलोकसम्बन्धिमार्गेण मा **उप गात्** मा गच्छतु । तस्य मरणं मा भूदित्यर्थः ।। ५ ।।

**सायण–** हे मरुतः । **वः** युष्माकं **जरिता** स्तोता **अजोष्यः** असेव्यः **मा भूत्** । तत्र दृष्टान्तः । **मृगो न यवसे** । यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति किंतु सर्वदा तृणं भक्षयति तद्वत् । किं च स स्तोता **यमस्य** पथा यमलोकसम्बन्धिमार्गेण मा **उप गात्** मा गच्छतु । तस्य मरणं मा भूदित्यर्थः । जरिता । 'जॄष् वयोहानौ' । स्तुतिकर्मेति (निरु.१०.८) यास्कः । तृचि इडागमः । चित्त्वादन्तोदात्तत्वम् । भूत् । लुङि 'गातिस्था' इति सिचो लुक् । 'न माङ्योगे' इति अडभावः । अजोष्यः । 'जुषी प्रीतिसेवनयोः' । 'ऋहलोर्ण्यत्' इति कर्मणि ण्यत् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । पथा । तृतीयैकवचने 'भस्य टेर्लोपः' (पा.सू.७.१.८८) इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । गात् । एतेर्लुङि 'इणो गा लुङि' (पा.सू.२.४.४५) इति गादेशः । 'गातिस्था' इति सिचो लुक् । पूर्ववत् अडभावः ।। ५ ।।

**सिद्धाञ्जनम्–** हे मरुतः, **वः** युष्माकं संबन्धी **जरिता** स्तोता **अजोष्यः** अप्रीण्यः **मा भूत्** । तत्र दृष्टान्तः **मृगो न यवसे** यथा भक्षणीये 'यवसे' तृणादौ मृगः पशुः अत्यन्तलोभात् अतृप्तः 'अजोष्यः' भवति, तथा **मृग इव** अत्यन्ततृषितो मा भूत् तव स्तोता भक्त इत्यर्थः । किं तु **यमस्य** नियन्तुर्देवस्य **पथा** मार्गेण **उप गात्** उप गच्छतु, नियन्त्रिततृष्णः सुप्रीतो भवतु । अयं चार्थः 'मो षु णः' इत्युत्तरचर्चा संगच्छते । सायणस्तु तथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति, तथा स्तोतापि असेव्यो मा भूदिति व्याचष्टे, यमलोकसंबन्धिमार्गेण तस्य मरणं मा भूदिति च । पूर्वोत्तरसंबन्धो मृग्यः । अजोष्यः-जुषी प्रीतिसेवनयोः, कर्मणि ण्यत् । अन्यत् गतम् ।। ५ ।।

**।। इति प्रथमाष्टके तृतीयाध्याये पञ्चदशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**मो षुणः परापरा निर्ऋतिर्दुर्हणा वधीत् । पदीष्ट तृष्णया सह ।। ६ ।।**
**मो इति । सु । नः । पराऽपरा । निःऽऋतिः । दुःऽहना । वधीत् । पदीष्ट । तृष्णया । सह ।। ६ ।।**

## ऋग्भाष्यम्

**मा वधीन्नः कचिन्मृत्युः परतः परतोऽपि च ।**
**दुर्हणादुःखदा हन्त्री यातु सा तृष्णया सह ।। ६ ।।**

**ऋग्भाष्यटीका– मो षुणः** । **मावधीत्** । हे मरुतो । भवतां प्रसादाद्दुःखदा हन्त्री चेति दुर्हणा । निर्ऋतिर्नामकाचिद्देवता मृत्युरिति यावत् । नोऽस्मान्परापरा । परतः परस्मिन्काले । परतोऽपि च ततोऽपि परस्मिन्काले । सु । कचित् । मावधीत् उ । नैव हन्यात् । किंतु सा निर्ऋतिस्तृष्णया सह **पदीष्ट** पदगतौ । यातु यत्र कच न गच्छतु ।। ६ ।।

**मन्त्रार्थमञ्जरी–** हे मरुतः भवतां प्रसादात् **दुर्हणा** दुःखदा हन्त्री चेति दुर्हणा । **निर्ऋतिः** निर्ऋतिनामिका काचिद्देवता, मृत्युरिति यावत् । **नः** अस्मान् परापरा, परतः परस्मिन्काले परतोऽपि ततोऽपि परस्मिन्काले । **सु** कचित् । **मो वधीत्** नैव हन्यात् । किं तु (सा)

निर्ऋतिः । तृष्णया सह । **पदीष्ट** 'पद गतौ' लिङ्, आत्मनेपदी, सीयुटः सकारलोपः तस्य सुडागमः, यातु, यत्र क्वच गच्छतु ॥ ६ ॥

**स्कन्द–** गो इति निपातसमाहारो निपातान्तरं वा मा इत्यस्यार्थे वर्तते । सु इति पदपूरणः । **नः** अस्मान् **परापरा** अत्यन्तपराः । युष्मत्प्रसादादेव दूरवर्तिनीत्यर्थः । **निर्ऋतिः** मृत्युदेवता । **दुर्हणा** दुःखं हन्तीति दुर्हणा । मा **वधीत्** । किन्तर्हि । **पदीष्ट** पद गतौ । शुद्धोऽपि चात्र सोपसर्गार्थे द्रष्टव्यः । अस्मत्तोऽपगच्छतु । अथवा परापरेत्येतत् पदीष्ट इत्येतेन सम्बध्यते । परापरा गच्छतु । दूरं गच्छत्वित्यर्थः । न च केवलाः । किन्तर्हि । **तृष्णया सह** तृष्णा नाम निर्ऋतेर्दुहिता, अन्यायेन वार्थाभिलाषः तृष्णा, तया सह ॥ ६ ॥

**वेङ्कटमाधव– मा** एव अस्मान् अधोऽधः दुःखेन हन्तव्यं दारिद्र्यम् **वधीत्** । सा **निर्ऋतिः** मदीयया **तृष्णया सह** पततु । धनसद्भावे हि तृष्णा विनश्यति ॥ ६ ॥

**मुद्गल–** हे मरुत ! **नः** अस्मान् **निर्ऋतिः** रक्षोजातिदेवता **मो षु वधीत्** सर्वथा वधं मा कार्षीत् । कीदृशीः । **परापरा** उत्कृष्टादप्युत्कृष्टा । अतिबलेत्यर्थः । अत एव **दुर्हणा** केनापि निहन्तुम् अशक्या । सा निर्ऋतिः **तृष्णया सह पदीष्ट** पततु । अस्मदीया तृष्णा, बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ ६ ॥

**सायण–** हे मरुतः **नः** अस्मान् **निर्ऋतिः** रक्षोजातिदेवता **मो पु वधीत्** सर्वथा वधं मा कार्षीत् । कीदृशी । **परापरा** उत्कृष्टादप्युत्कृष्टा अतिबलेत्यर्थः । अत एव **दुर्हणा** केनापि हन्तुं दुःशक्या । सा निर्ऋतिः **तृष्णया सह पदीष्ट** पततु । अस्मदीया तृष्णा बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ मो षु णः । 'सुञः' इति षत्वम् । 'नश्च धातुस्थोरुषुभ्यः' इति णत्वम् । दुर्हणा । 'ईषद्दुःसुषु' इत्यादिना हन्तेः कर्मणि खल् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । वधीत् । लुङि हन्तेः 'लुङि च' (पा.सू.२.४.४३) इति वधादेशः । सिचि इडागमः । वधादेशस्य अदन्तत्वात् 'एकाच उपदेशे' इति इट्प्रतिषेधो न भवति । अतो लोपे सति तस्य स्थानिवत्वात् 'अतो हलादेः' (पा.स.७.२.७) इति वृद्ध्यभावः । 'इट ईटि' (पा.सू.८.२.२८) इति सिचो लोपः । पदीष्ट । 'पद गतौ' । आशीर्लिङि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् सलोपः । आर्धधातुकत्वात् सुडागमः । प्रत्ययस्वरः । तृष्णया । 'ञितृषा पिपासायाम्' । 'तृषिशुषिरसिभ्यः किञ्च' (उ.सू.३.२९२) इति नप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ॥ ६ ॥

**सिद्धाञ्जनम्–** हे मरुतः, **नः** अस्मान् **निर्ऋतिः** पापदेवता, मायात्मिका वा **मो षु वधीत्** सर्वथा हतान् मा कार्षीत् । कीदृशी निर्ऋतिः? **परापरा** अत्यन्तमुत्कृष्टा बलेन, अतिबलेत्यर्थः । **दुर्हणा** दुःखेन हन्तुं शक्या, केनापि हन्तुं दुःशक्या । सा **तृष्णया सह** बहुदोषप्रसूर्हि तृष्णा दुराशा, तस्मात् तया सह निर्ऋतिः **पदीष्ट** पततु विनश्यतु इति प्रार्थना । पूर्वया अस्मदुक्तार्थयर्चा सङ्गच्छत एवेदम् ।। मो षु णः-सुत्रः षत्वं, नस्य णः । पदीष्ट-पद गतौ आशीर्लिङि सलोपः छान्दसः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः । मिहं कृण्वन्त्यवाताम् ।।७।।**

**सत्यम् । त्वेषाः । अमऽवन्तः । धन्वन् । चित् । आ । रुद्रियासः । मिहम् । कृण्वन्ति । अवाताम् ।। ७ ।।**

## ऋग्भाष्यम्

**अप्रमेया यथा सत्यं धन्वन्नपि हि सेचनम् ।**
**रुजां विद्रावकस्यैव वायोः पुत्रा हि रुद्रियाः ।**
**विनाऽप्यचेतनं वातं वृष्टिं कृण्वन्ति हीच्छया ।। ७ ।।**

**ऋग्भाष्यटीका– सत्यम्** । अप्रमेयाः । **त्वेषा** दीप्तिमन्तोऽ**मवन्तः** मा प्रमा परिच्छेदः । तद्वन्तो मावन्तः । न मावन्तोऽमावन्तः । त एवामवन्तः । न विद्यते मा यस्य सामर्थ्यस्य तदमम् । तद्वन्त इति वा । अप्रमेया अपरिमितसामर्थ्याः । यस्माद्रुजां विद्रावकत्वाद्रुद्रस्य वायोरेव पुत्राः । तस्माद्रुद्रियासो रुद्रियाः । रुद्रशब्दादपत्ये घः । मरुतः । सत्यं क्रियाविशेषणमेतत् । सत्यं यथा तथा । न तु मायया । धन्वंचित् धन्वन्नपि धन्वदेशेऽपि । **अवातां** वातरहिताम् । अचेतनं वा तं विनापीति यावत् । **मिहं** सेचनम् । सम्पदादित्वात्क्विप् । वृष्टिमिति यावत् । आ सम्यक् । इच्छयैव । **कृण्वन्ति** कुर्वन्ति हि । विशेषणसद्भावप्रसिद्धौ प्रथमो हिशब्दः । वातशब्दो मरुत्सु देवेष्वपि वर्तत इत्यचेतनमित्युक्तम् ।। ७ ।।

**मन्त्रार्थमञ्जरी– त्वेषाः** दीप्तिमन्तः । **अमवन्तः** मा प्रमा परिच्छेदः, तद्वन्तो मावन्तः,

न मावन्तोऽमावन्तः, **अमावन्त** एवामवन्तः, न विद्यते मा यस्य सामर्थ्यस्य तदमम्, तद्वन्त इति वा, अप्रमेया अपरिमितसामर्थ्याश्च इत्यर्थ. । यस्माद्रुजो विद्रावकत्वाद्रुद्रस्य वायोरेव पुत्रस्तस्मात् रुद्रियासः, रुद्रियाः रुद्रशब्दादपत्यार्थे घः, 'रुद्रः' इत्यत्र च रुजूशब्द उपपदे 'द्रु गतौ' इत्यतोऽन्तर्णीतण्यर्थाड्डुप्रत्यय उपपदान्तस्य लोपः । **सत्यम्,** क्रियाविशेषणमेतत् सत्यं यथा, तथा, न तु मायया । **धन्वन् चित्,** धन्वन्नपि, धन्वदेशेऽपि, मरुदेशेऽपि । **अवाताम्,** वातरहिताम्, अचेतनं वातं विनापीति यावत् । **मिहम्,** 'मिहसेचने' सम्पदादित्वाद्भावे क्विप्, वृष्टिमिति यावत् । आ, सम्यक्, इच्छयैव । **कृण्वन्ति,** कुर्वन्ति ।। ७ ।।

**स्कन्द– सत्यम्** एतत् । **त्वेषाः** दीप्ताः मरुतः । **अमयन्तः** अमशब्दः आत्मपर्यायः । आत्मवन्तः । यत्नवन्त इत्यर्थः । अथवा अम गत्यादिषु । गमनवन्तः । अथवा अम रोगे । शत्रूणां रोगवन्तः । रोगभूताः । उच्छेदका इत्यर्थः । **धन्वन् चित् आ 'धन्व'** (निघ.१,३) इत्यन्तरिक्षनाम । चिच्छब्दोऽप्यर्थे । आ इत्याकारः उपसर्गः अध्यर्थे । अन्तरिक्षेऽप्यधिः । निरालम्बनस्य अन्तरिक्षस्याप्युपरीत्यर्थः । **रुद्रियासः** अपत्येऽर्थे धप्रत्ययो द्रष्टव्यः । रुद्रपुत्राः । **मिहम्** सेचनात् मिट् वृष्टिरुच्यते । तां **कृण्वन्ति अवाताम्** वातवर्जितां वातेनानपहार्याम् । निरालम्बनेऽप्यन्तरिक्षे स्थिता निवातं वर्षन्तीत्यर्थः । अथवा धन्वेति मरुदेश उच्यते । तस्याप्युपरि वृष्टिं कुर्वन्ति । अत्यन्तनिरुदकानपि देशान् वृष्ट्योदकवतः कुर्वन्तीत्यर्थः ।।७।।

**वेङ्कटमाधव– सत्यम्** दीप्ताः बलवन्तः निरुदके अपि देशे रुद्रपुत्राः वृष्टिं कुर्वन्ति निरन्तराम् ।। ७ ।।

**मुद्गल– धन्वन् चित्** मरुदेशेऽपि **रुद्रियासः** रुद्रेण पालितत्वात् तदीया मरुतः **आ** सर्वतः **अवाताम्** वायुरहिताम् **मिहम्** वृष्णिम् **कृण्वन्ति** कुर्वन्ति, तदेतत् **सत्यम्** । कीदृशा रुद्रियासः । **त्वेषाः** दीप्ताः **अमवन्तः** बलवन्तः ।। ७ ।।

**सायण–** धन्वश्चित् मरदेशेऽपि **रुद्रियासः** रुद्रेण पालितत्वात् तदीया मरुतः **आ** सर्वतः **अवातां** वायुरहितां **मिहं** वृष्टि **कृण्वन्ति** कुर्वन्ति तदेतत् **सत्यम्** । कीदृशा रुद्रियासः । **त्वेषाः** दीप्ताः **अमवन्तः** बलवन्तः । मरुतां रुद्रपालनमाख्यानेषु प्रसिद्धम् । धन्वन् । रिवि रवि धवि गत्यर्थाः । इदित्त्वात् नुम् । 'कनिन्युवृषितक्षि' इत्यादिना कनिन् । नित्त्वादाद्युदात्तत्वम् ।

'सुपां सुलुक्' इति सप्तम्या लुक् । रुद्रियासः । रुद्रस्येमे रुद्रियाः । तस्येदम् इत्यर्थे घः । 'आज्जसेरसुक्' । मिहम् । 'मिह सेचने' । 'क्विप् च' इति क्विप् । कृण्वन्ति । 'कृवि हिंसा-करणयोश्च' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः, तत्सन्नियोगेन वकारस्य च अकारादेशः । अतो लोपेन लुप्तस्य स्थानिवद्भावात् लघूपधगुणाभावः । कारीर्यां 'मारुतं सप्तकपालम्' इत्यस्य हविषः 'वाश्रेव विद्युत्' इत्येषानुवाक्या । 'वर्षकामेष्टिः' इति खण्डे सूत्रितं-'वाश्रेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिभाय'(आश्व.श्रौ.२.१३) इति ।। ७ ।।

**सिद्धाञ्जनम्–** **त्वेषाः** दीप्ताः **अमवन्तः** बलवन्तः **रुद्रियासः** रुद्रस्य इमे सम्बन्धिनः (घोरकर्मत्वं मरुतां प्रसिद्धम्) मरुतः **धन्वन् चित् आ** मरुदेशेऽपि **अवाताम्** वायुरहितां **मिहम्** वृष्टिं **कृण्वन्ति** कुर्वन्ति । **सत्यम्** सत्यमेतत् । वृष्टिविघातकवायुवर्जं प्रचण्डवातवेगा अपि मरुतो वृष्टिं विदधते ।। 'धन्वनि' नीरसे जडे पार्थिवे शरीरेऽपि रसमादधत इति रहस्यम् ।। त्वेषादयो व्याख्याताः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि ।। ८ ।।**

**वाश्राऽइव । विऽद्युत् । मिमाति । वत्सम् । न । माता । सिसक्ति । यत् । एषाम् । वृष्टिः । असर्जि ।। ८ ।।**

## ऋग्भाष्यम्

**एषां सकाशाद्वृष्टिश्च विद्युद्भूमिं प्रकाशयेत् ।**
**गौर्वत्समिव भूम्यां च.............. ।। ८ ।।**

**ऋग्भाष्यटीका–** **वाश्रेव** । एषाम् । यद्यदैषां मरुतां सकाशाद्वृष्टिरसर्जि सृष्टा । यदैते वृष्टिं सृजन्तीति यावत् । तदा विद्युन्मिमाति प्रकाशार्थोऽयं भूमिं प्रकाशयेत् । कथम् । **वाश्रेव** वत्सला माता यथा अपत्यं पश्येत्तथा । किंश्च । माता गौर्वत्सं न वत्समिव । भूम्यां स्थिता-न्सिषक्ति ।। **आलिङ्गति** ।। चशब्दौ मिथः समुच्चये । एतद्विद्युत्कर्माप्येषां सकाशादेवेति ।।

**मन्त्रार्थमञ्जरी–** यत् एषाम्, मरुतां सकाशात् । वृष्टिः । **असर्जि,** सृष्टा । यदैते वृष्टिं

सृजन्तीति यावत् । तदा विद्युत् । **मिमाति,** प्रकाशार्थोऽयम्, भूमिं प्रकाशयेत् । कथम् ? **वाश्रेव,** शिशुवत्सला माता यथापत्यं पश्येत् प्रकाशयेत्, तथा । किं च, **माता** गौः । **वत्सम् न** वत्समिव । भूम्यां स्थितान् **सिष (स)क्ति,** आलिङ्गति । एतद्विद्युत्कर्माण्येषां सकाशात् इति भावः ।। ८ ।।

**स्कन्द–** **विद्युत्** यथा **वाश्रा** वाशनशीला अभिनवप्रसूता गौस्तद्वत् **मिमाति** मिमातिः शब्दकर्मा । मेघान् स्फोटयति । गर्जितलक्षणं शब्दं करोति । **वत्सम् न माता** यथा च माता वत्सम्, तद्वत् **सिषक्ति** सेवते । उपगच्छतीत्यर्थः । कम् । सामर्थ्यात् मेघं वा मरुतो वा । कदा । उच्यते । **यत्** यदा **एषाम्** मरुतां स्वभूता **वृष्टिः असर्जि** सृज्यते क्षिप्यते । यदैते मरुतः वर्षन्तीत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** अभिनवप्रसूता धेनुरिव **विद्युत्** गर्जितशब्दं करोति, **वत्सम्** इव **माता** सचते लोकम्, **यत्** एभिर्मरुद्भिः वृष्टिः सृज्यते ।। ८ ।।

**मुद्गल–** **वाश्रेव** शब्दयुक्ता प्रस्तुतस्तनवती धेनुरिव **विद्युत्** मेघस्या दृश्यमाना सती **मिमाति** शब्दं करोति । विद्युद्वेलायां हि मेघगर्जनं प्रसिद्धम् । **माता** धेनुः **वत्सम् न** वत्समिव **सिषक्ति** इय विद्युत् मरुत सेवते । यत् यस्मात्कारणात् एषाम् मरुता सम्बन्धिनी वृष्टिः असर्ति गर्जनसहिते विद्युत्काले वृष्टा भवति, तस्माद्विद्युतः मरुत्सेवनमुपपन्नम् ।। ८ ।।

**सायण–** **वाश्रेव** शब्दयुक्ता प्रस्नुतस्तनवती धेनुरिव **विद्युत्** मेघस्था दृश्यमाना सती **मिमाति** शब्दं करोति । विद्युद्वेलायां हि मेघगर्जनं प्रसिद्धम् । **माता** धेनुः **वत्सं न** वत्समिव **सिषक्तिं** इयं विद्यत् मरुतः सेवते । सिषक्तिः सेवनार्थः । 'सिषक्तु सचत इति सेवमानस्य' (निरु.३.२१) इति यास्केनोक्तत्वात् । **यत्** यस्मात् कारणात् **एषां** मरुतां सम्बन्धिनी **वृष्टिरसर्जि** गर्जनसहिते विद्युत्काले वृष्टा भवति, तस्मात् विद्युतो मरुत्सेवनमुपपन्नम् । वाव । 'वाशृ शब्दे' । 'स्फायितश्चि' इत्यादिना रक् । मिमाति । 'माङ् माने शब्दे च' । व्यत्ययेन परस्मैपदम् । जुहोत्यादित्वात् श्लुः । 'भृञामित्' (पा.सू.७.४.७६) इति अभ्यासस्य इत्वम् । सिषक्ति । 'पच समवाये' । लटि 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसि' इति अभ्यासस्य इत्वम् । असर्जि । 'सृज विसर्गे' । कर्मणि लुङ् । 'चिण् भावकर्मणोः' (पा.सू.३.१.६६)

इति चिण्। 'चिणो लुक्' (पा.सू.६.४.१०४) इति तशब्दस्य लुक् । गुणः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः ।। ८ ।।

**सिद्धाञ्जनम्– वाश्रा इव** शब्दायमाना **विद्युत्** विद्योतमाना तडित् **मिमाति** शब्दं करोति । **माता वत्सं न** धेनुर्वत्समिव **सिषक्ति** सेवते । **यत्** यस्मात् कारणात् **एषाम्** मरुतां संबन्धिनी **वृष्टिः असर्जि** विसृष्टा भवति । विद्युत्काले मेघगर्जनं ततो वृष्टिश्च मरुतां व्यापाराद्भवतीति स्थूलोऽर्थः स्यात् । अन्तर्यागे चलति, दशाविशेषेषु मध्यमस्थाने ज्योतिदर्शनं दिव्यनादश्रवणं रसवृष्टिश्च मरुत्प्रसादाद्भवन्तीति प्रोक्तं भवति । वाश्रेव- वाशृ शब्दे रक्प्रत्ययः । मिमाति- माङ् माने शब्दे च व्यत्ययेन परस्मैपदम् । सिषक्ति-षच समवाये (सेवायां च) शपः श्लुः । असर्जि सृज विसर्गे, कर्मणि लुङ् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**दिवा॑चित्तमः॑ कृण्वन्ति पर्जन्ये॑नोदवाहेन॑ । यत्पृ॑थिवीं व्युन्दन्ति॑ ।। ९ ।।**

**दिवा॑ । चित् । तमः॑ । कृण्वन्ति । पर्जन्ये॑न । उदऽवाहेन॑ । यत् । पृथिवीम् । विऽउन्दन्ति॑ ।।**

## ऋग्भाष्यम्

**...........लोकं सिञ्चन्ति मातृवत् ।। ९ ।।**

**ऋग्भाष्यटीका– दिवा चित्** । अत्र पृथिवीं व्युंदन्तीत्येतावद्व्याचष्टे **।। लोकमिति ।।** मरुतो यद्यदा पृथिवीं लोकं व्युन्दन्ति । उन्दी क्लेदने । मातृवत्सिञ्चन्ति । यथा माता गौर्वत्संपयसा सिंचति तथा । पृथिवी यदा वृष्ट्यासिंचन्ति तदोदवाहेन पर्जन्येन । सजलेन मेघमण्डलेन दिवाचिद्दिवापि । **तमः कृण्वन्ति** कुर्वन्ति ।। ९ ।।

**मन्त्रार्थमञ्जरी–** मरुतः यत्, यदा पृथिवीम्, **लोकम्** । व्युन्दन्ति, 'उन्दी क्लेदने' मातृवत्सिञ्चन्ति, यथा माता गौर्वत्सं पयसा सिञ्चति, तथा पृथिवीं यदा पृष्ट्या सिञ्चन्ति । तदा उदवाहेन । पर्जन्येन । मेघमण्डलेन । दिवा चित्, दिवापि । **तमः । कृण्वन्ति,** कुर्वन्ति ।। ९ ।।

**स्कन्द– दिवा चित् तमः कृण्वन्ति** दिवा अपि तमः कुर्वन्ति मरुतः **पर्जन्येन उदवाहेन** उदकवाहिना । उदकवता मेघेनादित्यं छादयन्तो दिवाऽपि तमः कुर्वन्तीत्यर्थः । कदा । उच्यते । **यत्** यदा **पृथिवीं व्युन्दन्ति** विविधं क्लेदयन्ति । यदा वर्षन्तीत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव–** अहनि अपि अन्धकारम् कुर्वन्ति पर्जन्येन उदकवाहेन यदा **पृथिवीम्** क्लेदयन्ति ॥ ९ ॥

**मुद्गल–** मरुतः **उदवाहेन** उदकधारिणा **पर्जन्येन** मेघेन सूर्यमाच्छाद्य **दिवा चित्** अहन्यपि **तमः कृण्वन्ति** अन्धकारं कुर्वन्ति । **यत्** यदा **पृथिवीम्** भूमिम् **व्युन्दन्ति** विशेषेण क्लेदयन्ति तदानीमेते वृष्टिकाले तमः कुर्वन्तीति पूर्वत्रान्वयः ॥ ९ ॥

**सायण–** ते मरुतः **उदवाहेन** उदकधारिणा **पर्जन्येन** मेघेन सूर्यमाच्छाद्य **दिवा चित्** अहन्यपि तमः **कृण्वन्ति** अन्धकारं कुर्वन्ति । **यत्** यदा **पृथिवीं** भूमिं **व्युन्दन्ति** विशेषेण क्लेदयन्ति तदानीमतिवृष्टिकाले तमः कुर्वन्तीति पूर्वत्रान्वयः ॥ उदवाहेन । उदकानि वहतीति उदवाहः । 'कर्मण्यण्' । मेघविशेषस्येयं संज्ञा । 'उदकस्योदः संज्ञायाम्' (पा.सू.६.३.५७) इति उदकशब्दस्य उदभावः कृदुत्तरपदप्रकृतिस्वरत्वम् । व्युन्दन्ति । 'उन्दी क्लेदने' । रुधादित्वात् श्नम् । 'श्नान्नलोपः' (पा.सू.६.४.२३) इति नलोपः । यद्वृत्तयोगादनिघातः ॥ ९ ॥

**सिद्धाञ्जनम्– उदवाहेन** उदकवाहिना **पर्जन्येन** मेघेन **दिवा चित्** दिनवेलायामपि **तमः** अन्धकारं **कृण्वन्ति** कुर्वन्ति । **यत्** यदा **पृथिवीम्** भूमिम् **व्युन्दन्ति** विशेषेण क्लेदयन्ति । तदा तमः कृण्वन्तीति पूर्वेणान्वयः । अन्तर्यागे सत्यपि नित्ये ज्योतिर्विलासे रसवर्षातिरेकात् क्वचित् विश्वं तमोवृतमिव भवति, इदं च तात्कालिकं मरुद्वेगकृत्यं कादाचित्कमिति बोध्यम् । उदवाहेन-उदकानि वहतीत्युदवाहः, उदकशब्दस्य उदभावः । व्युन्दन्ति-उन्दी क्लेदने रुधादिः ॥

## ऋक्संहिता पदपाठसहिता

**अधं स्वनान्मरुतां विश्वमा सद्म पार्थिवम् । अरेजन्त प्र मानुषाः ॥१०,१६॥**

अधं । स्वनात् । मरुताम् । विश्वम् । आ । सद्म । पार्थिवम् । अरेजन्त । प्र । मानुषाः ॥

## ऋग्भाष्यम्

**मानुषादित्वमन्यच्चाबिभेदेषां स्वनादपि ।**
**गृहमानिनो गृहाद्यं वा चचालैषां स्वनादपि ।। १०, १६ ।।**

**ऋग्भाष्यटीका– अध** । मानुषादित्वम् । **अध** अथ । अन्यच्च ब्रूमः । किं तत् । एषां मरुतां स्वनादपि ध्वनिमात्रेण । **आ** समन्ताद्वर्तमानं **विश्वं** समस्तम् । **पार्थिवं** पृथिव्यां भवम् । **सद्म** गृहजातम् । तत्रस्था मानुषाश्च । **प्रारेजन्त** । मानुषादित्वं सर्वमबिभेत् । मानुषादिकमिति वक्तव्ये त्वप्रत्ययो जातिव्यक्त्यभेदज्ञापनार्थः । तथैव च क्वचित्पाठः । यद्वा परमेश्वरविषया-त्स्तुतिरूपात् **स्वनात्** कर्मफलरूपं यन्मानुषत्वं यश्च गृहाद्यभिमानस्तत्सर्वम् । भीतमिव पलायत इत्यर्थसूचनार्थं भावप्राधान्येन व्याख्यातम् । ननु गृहाणामचेतनानां कथं भयमित्यत आह ।। गृहमानिन इति ।। अत्र सद्मशब्देन विवक्षिता इति शेषः । यद्वा प्रारेजन्तेति न भयार्थं किन्तु चलनार्थम् । तथा च सद्मशब्दस्य प्रसिद्धार्थत्वेऽपि न विरोध इति भावेनाह ।। गृहाद्यं वे(चे)ति ।।

**मन्त्रार्थमञ्जरी– अध** अथ । अन्यच्च ब्रूमः, किं तत् ? एषाम् मरुताम् । स्वनात् अपि, ध्वनिमात्रेण । आ, समन्तात् । वर्तमानम् **विश्वम्** समस्तम् । **पार्थिवम्** पृथिव्यां भवम् । सद्म, गृहजातम्, गृहाभिमानिजातम् । तत्रस्थाः मानुषाः च । **प्र अरेजन्त,** मानुषादिकं सर्वमबिभेत्, चचाल इति वा ।। १० ।।

**स्कन्द–** अधशब्दः पदपूरणः, अपिचेत्यस्य वार्थे । अपि च **स्वनात्** शब्दादपि **मरुतां विश्वं** सर्वम् । आकारस्तु पदपूरणः । **सद्म** सदनं स्थावरम् । **पार्थिवं** पृथिव्यां भवम् । **अरेजन्त प्र मानुषा** च प्रारेजन्त । **'भ्यसते रेजते इति भयवेपनयोः'** (या.३.२१) । प्रकर्षेण बिभ्यति भयेन कम्पन्ते । मनुष्यग्रहणं चात्र जङ्गममात्रोपलक्षणार्थम् । शब्दादपि मरुतां सर्वं स्थावरं जङ्गमं च प्रकर्षेण बिभेति भयेन कम्पत इत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** अनन्तरः **मरुताम् स्वनात् पार्थिवम् विश्वम् सद्म अरेक्षत** अकम्पत । सीदन्ति अस्मिन्निति सद्म गृहम् । प्रकर्षेण **मानुषाः** च अरेजन्त ।। १० ।।

**मुद्गल– मरुताम्** सम्बन्धिनः **स्वनात् अध** ध्वनेर्गर्जनरूपादनन्तरम् **पार्थिवम्**

पृथिवीसम्बन्धि **विश्वम् सद्म** सर्वं गृहम् **आ** समन्तात् अरेजतेति शेषः । तथा **मानुषाः** गृहवर्तिनो मनुष्या अपि **प्र अरेजन्त** प्रकर्षेण कम्पितवन्तः ।। १० ।।

**सायण– मरुतां** संबन्धिनः **स्वनात् अध** ध्वनेगर्जनरूपादनन्तरं **पार्थिवं** पृथिवीसंबन्धि **विश्वं सद्म** सर्वं गृहम् **आ** समन्तात् अरेजत इति शेषः । तथा **मानुषाः** गृहवर्तिनो मनुष्या अपि **प्र अरेजन्त** प्रकर्षेण कम्पितवन्तः । अध । छान्दसं धत्वम् । सद्म । 'षद्लृविशरण-गत्यवसादनेषु' । 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । पार्थिवम् । पृथिव्याः संबन्धि । 'पृथिव्या ञाञौ' (पा.सू.४.१.८५.२) इति प्राग्दीव्यतीयः अञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वम् । अरेजन्त । 'रेज कम्पने' ।। १० ।।

**सिद्धाञ्जनम्– मरुताम्** संबन्धिनः **स्वनात्** ध्वनेः **अध** अनन्तरं **पार्थिवम्** पृथिवीसंबन्धि **विश्वं** सर्वं **सद्म** गृहं **आ** समन्तात् अरेजतेति शेषः । **मानुषाः** मनुष्या अपि **प्रारेजन्त** प्रकर्षेण अकम्पन्त । अत्र सर्वं सद्म सर्व यजमानशरीरं भवति । मानुषाः शरीरिणः जीवाः आत्मानः, न केवलं शरीरे कम्पः, अन्तरेऽपि । तथाविधो मारुतः क्रियावेगः । अध-थस्य धः छान्दसः । अरेजन्त-रेजृ कम्पने ।। १० ।।

।। इति प्रथमाष्टक तृतीयाध्याये षोडशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु । यातेमखिद्रयामभिः ।। ११ ।।**

**मरुतः । वीळुपाणिऽभिः । चित्राः । रोधस्वतीः । अनु । यात । ईम् । अखिद्रयामऽभिः ।।**

## ऋग्भाष्यम्

**अखिन्नैर्गमनैश्चैव दृढस्वीयैश्च पाणिभिः ।**
**अनुयात नदीश्चित्राः.................... ।। ११ ।।**

**ऋग्भाष्यटीका– मरुतः** । अखिन्नैः । **हे मरुतो** यूयम् । **वीळुपाणिभिः** दृढस्वीयैः पाणिभिश्च । दृढाश्च ते स्वीयाश्च । बहुलवचनाद्विशेषणयोरेव समासः । अखिद्रयामभिरीम् अखिन्नैरेव गमनैश्च । खिद दैन्ये अस्माद्रः । **चित्राः** विचित्राः । **रोधस्वतीः** नदीः **अनुयात**

चालनेऽप्यश्रमान्हस्तांश्चालयन्ते वेगवद्भिर्गमनैर्यद्रोधः सु वयं तपस्यन्तः स्मः ता नदीः प्रति यातेति । यद्वा यामगमनशब्दौ करणार्थौ । ततो हस्तपादोपेता यूयं न त्वचेतनवायुरूपा इत्यर्थः ।।

**मन्त्रार्थमञ्जरी–** हे मरुतः यूयम् वीळुपाणिभिः, दृढस्वीयपाणिभिः । **च** अखिद्रयामभिः ईम्, अखिन्नैरेव गमनैश्च, 'खिद दैन्ये' अस्माद्रक् । **चित्रा,** विचित्राः । **रोधस्वतीः** नदीः । **अनु यात,** चालनेऽप्यसमर्थास्ताश्चालयन्तो वेगवद्भिर्गमनैर्यद्रोधःसु वयं च पश्यन्तः स्मस्ता नदीः प्रति यात इति, यद्वा यामन्गामनशब्दौ ऋगृग्भाष्यस्थौ करणार्थौ, ततः हस्तपादोपेता यूयम्, न त्वचेतनवायुरूपाः इत्यर्थः ।। ११ ।।

**स्कन्द– हे मरुतः! वीळुपाणिभिः** वीळुशब्दोऽत्र दृढवचनः । पाणिशब्दोऽप्यत्राश्वानामग्रपादे खुरे या वर्तते । दृढाग्रपादैः दृढखुरैर्वा । चित्राः रोधस्वतीः अनु 'रोधस्वत्यः' निघ.१,१३) इति । नदीनाम । अनुशब्दोऽपि लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । विचित्रा नदीः प्रति । **यात** गच्छत । **ईम्** इति पदपूरणः । **अखिद्रयामभिः** अखिन्नगामिभिरश्वैः । सर्वदाऽश्रान्तैरश्वैरित्यर्थः । यज्ञेष्वागच्छन्तः क्रीडार्थं विचित्रा नदीरपि प्रति गच्छतेति समस्तार्थः ।।

**वेङ्कटमाधव–** मरुतः । दृढैः पाणिभिः सह **चित्राः** नदीः लक्षीकृत्य ताः पूरयितुम् **यात** अच्छिद्रैर्गमनैः ।। ११ ।।

**मुद्गल–** हे **मरुतः !** यूयम् **वीळुपाणिभिः** दृढहस्तैः सहिताः चित्राः रोधस्वतीः अनुकूलयुक्ता नदीः अनुलक्ष्य **अखिद्रयामभिः** अच्छिद्रगमनैः **यात् ईम्** गच्छतैव ।। ११ ।।

**सायण–** हे **मरुतः** यूयं **वीलुपाणिभिः** दृढहस्तैः सहिताः सन्तः **रोधस्वतीरनु** कूलयुक्ता नदीरनुलक्ष्य **अखिद्रयामभिः** अच्छिन्नगमनैः **यातें** गच्छतैव ।। मरुतः । आमन्त्रिताद्युदात्तत्वम् । वीळुपाणिभिः । वीडु इति बलनाम, 'वीळु च्यौत्नम्' (नि.२.९.१४) इति तन्नामसु पाठात् । तेन च तद्वान् लक्ष्यते । वीळवश्च ते पाणयश्च । 'समासस्य' इत्यन्तोदात्तत्वम् । रोधस्वतीः । 'रुधिर् आवरणे' । रुणद्धि स्रोतः इति रोधः कूलम् । 'रोधः कूलं निरुणद्धि स्रोतः' (निरु.६.१) इत्युक्तत्वात् । असुनो नित्त्वादाद्युदात्तत्वम् । तद्युक्ता रोधस्वत्यः । 'मादुपधायाः' इति मतुपो वत्वम् । 'उगितश्च' इति ङीप् । मतुब्ङीपोः पित्त्वादनुदात्तत्वे असुनः स्वर एव शिष्यते । यात । 'या प्रापणे' । अदादित्वात् शपो लुक् । ईम् । 'चादयोऽनुदात्ताः' इत्यनुदात्तत्वम् ।

गुणे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वम् । अखिद्रयामभिः । 'खिद दैन्ये' । 'स्फायितञ्चि' इत्यादिना रक् । खिद्रं यान्तीति खिद्रयामानः । न खिद्रयामानः अखिद्रयामानः । तैः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। ११ ।।

**सिद्धाञ्जनम्–** हे **मरुतः**, यूयं **वीळुपाणिभिः** वीळु बलनाम, वीळवः दृढाः पाणयः हस्ताः तैः सहिताः सन्त, **चित्राः** दर्शनीयाः **रोधस्वतीः अनु** कूलयुक्ता नदीरनुलक्ष्य **अखिद्रयामभिः** अच्छिद्रगमनैः **ईम्** एनं यजमानमुद्दिश्य **यात** गच्छत। कूलस्थानीयं शरीरं नद्यः शक्तिधारावाहिन्यः प्राणस्थानाः । रोधस्वतीः-रुधिर् आवरणे, रुणद्धि स्रोत इति रोधः कूलं, असुन् । तद्वत्यः मतुपो वत्वम् । अखिद्रयामभिः-खिद दैन्ये रक्, खिद्रं यान्तीति खिद्रयामानः न ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**स्थिरा वः सन्तु नेमयो रथा अश्वास एषाम् । सुसंस्कृता अभीशवः ।।१२।।**

**स्थिराः । वः । सन्तु नेमयः । रथाः । अश्वासः । एषाम् । सुसंस्कृताः । अभीशवः ।**

## ऋग्भाष्यम्

........................स्थिरास्सन्ति रथादयः ।। १२ ।।

**ऋग्भाष्यटीका– स्थिरावः** । स्थिराः सन्ति । हे मरुतो । **वो** युष्माकमिहागमनाय । **स्थिरा** दृढाः । **सुसंस्कृताः** सम्यक् संस्कारवन्तः **अभीशवः** अभीशुवन्तस्तेजस्विनो रथाः । **अश्वासः** अश्वाश्च । **सन्तु** सन्ति । **एषां रथानां नेमयश्च स्थिराः** सन्ति । तैरागच्छतेति भावः ।। १२ ।।

**मन्त्रार्थमञ्जरी–** हे मरुतः वः युष्माकम् । इहागमनाय स्थिराः, दृढाः । **सुसंस्कृताः**, सम्यक्संस्कारवन्तः । **अभीशवः** अभीशुमन्तः, तेजस्विनः । रथाः (सन्तु) सन्ति । **एषाम्**, रथानाम् । नेमयः च (स्थिराः) (सन्ति) सन्ति । तद्योगिनः (अश्वासः) अश्वाः । च **स्थिराः** (सन्तु) सन्ति । तैरागच्छत इति भावः ।। १२ ।।

**स्कन्द– स्थिराः** अविचलाः वः युष्माकं स्वभूताः सन्तु नेमयः रथचक्रधाराः, **रथाः** च,

**अश्वासः** च **एषां** रथानां सम्बन्धिनः **सुसंस्कृताः** सुष्ठु च संस्कृता **अभीशवः** अश्वप्रग्रहाः । भवताम् **आगच्छतां** सर्वाण्यागमनसाधनानि सुदृढानि भवन्त्वित्यर्थः ।। १२ ।।

**वेङ्कटमाधव–** आगच्छतां भवता रथनेमय **स्थिराः सन्तु** । अथ परोक्षः । रथाः अश्वाश्च **एषाम्** स्थिराः सन्तु । **सुसंस्कृताः** च अश्वप्रग्रहा भवन्तु ।। १२ ।।

**मुद्गल–** हे मरुतः! **एषाम् वः** युष्माकम् **नेमयः** रथचक्रवलयाः **स्थिराः सन्तु** । **रथा अश्वासः** अश्वाश्च स्थिराः सन्तु । **अभीशवः** अङ्गुल्य **सुसंस्कृताः** अश्वबन्धनरज्जुपरिग्रहणे स्वलङ्कृताः सावधानाः सन्तु ।। १२ ।।

**सायण–** हे मरुतः **एषां वः** युष्माकं **नेमयः** रथचक्रवलयाः **स्थिराः सन्तु** । तथा **रथा अश्वासः** अश्वाश्च स्थिराः सन्तु । **अभीशवः** अङ्गुलयः, अभीशवः दीधितयः' (नि.२.५.२०) इति तन्नामसु पाठात् । **सुसंस्कृताः** अश्वबन्धनरज्जुपरिग्रहणे स्वलंकृताः सावधानाः सन्तु । सुसंस्कृताः । संपूर्वात् करोतेः कर्मणि क्तः । 'संपर्युपेभ्यः' (पा.सू.६.१.१३७) इति सुट् । पुनः सुशब्देन प्रादिसमासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अभीशवः । अभिपूर्वात् अश्नोतेः कृवापाजि इत्यादिना उण् । वर्णव्यत्ययेन आकारस्य इकारः । उक्तं च– वर्णागमो वर्णविपर्ययश्च' (का.६.३.१०९) इति । 'अभीशवोऽभ्यश्नुवते कर्माणि' (निरु.३.९) इति निरुक्तम् ।।१२।।

**सिद्धाञ्जनम्–** हे मरुतः **एषाम् वः** युष्माकं **नेमयः** रथाङ्गवलयाः **स्थिराः सन्तु** । तथा **रथाः अश्वासः** अश्वाश्च स्थिराः सन्तु । **अभीशवः** रथबन्धनरज्जवः **सुसंस्कृताः** परिकृताः सन्तु । अभीशवः- अभिदश्नोतेः उण् । अङ्गुलय इति निघण्टुः । किरणाः इत्यर्थान्तरम् ।। रथयुक्ताश्वस्थानीयप्राणशक्तिविभवानां बन्धनरज्जुस्थानीया चिद्रश्मयः संस्कृताः स्वच्छाः सन्त्वित्युक्तं भवति ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**अच्छा॑ वदा॒ तना॑ गि॒रा ज॒रायै॒ ब्रह्म॑ण॒स्पति॑म् । अ॒ग्निं मि॒त्रं न द॑र्श॒तम् ।।१३।।**

अच्छ॑ । व॒द॒ । तना॑ । गि॒रा । ज॒रायै॑ । ब्रह्म॑णः । पति॑म् । अ॒ग्निम् ।मि॒त्रम् । न । द॒र्श॒तम् ।।

## ऋग्भाष्यम्

ब्रह्मणश्च पतिं विष्णुं यथावद्व्याप्तया गिरा ।
जरायै संस्तुतित्वेन तृतीया भावरूपिणी ।
सर्वा विभक्तयश्चेत्थं भाववाचिन्य एव च ।
महाव्याकरणे सूत्रमिति संस्तुतिरूपतः ।
वद विष्णुं स्वप्रकाशमग्निवत्सूर्यवत्तथा ।
आह चात्मानमेवात्र दार्ढ्ये स्वप्रतियोगिता ।
इति सूत्रात्........................... ।। १३ ।।

**ऋग्भाष्यटीका–** **अच्छ** । ब्रह्मणश्च । **ब्रह्मणस्पतिं** ब्रह्मणो हिरण्यगर्भस्य पतिं विष्णुम् । चशब्दात् ब्रह्मणो वाचः पतिं वायुं च । **तना** व्याप्तया । तनोतेः पचाद्यच् ततः स्त्रीलिङ्गात्तृतीयाया याडाप इति नाश्रितम् । बहुविषयया गिरा । **जरायै** संस्तुतित्वेन जराशब्दः स्तुतिवाची भाव-प्रधानः । सुपां सुपो भवन्तीति चतुर्थी तृतीयार्थे । **अच्छ वद** यथावद्वद । तृतीया कस्मिन्नर्थ इत्यत आह ।। **तृतीयेति** ।। भावरूपिणी इत्थंभूतलक्षणार्था । माभूद्वा विभक्तिव्यत्ययः चतुर्थ्येवेत्थं भूतलक्षणार्था व्याख्येया । कथमित्यत आह ।। **सर्वा इति** ।। आद्यश्चशब्दोऽभिविधौ द्वितीयः पक्षान्तरे । इत्थंभाव इत्थंभूतलक्षणम् । तृतीयैवेत्थंभूतलक्षणे स्मर्यते । न चतुर्थ्याद्याः । तत्कुत एतदित्यत आह ।। **महाव्याकरण इति** ।। इत्यस्यार्थस्य प्रतिपादकमस्ति । ततः कोऽर्थः सम्पद्यत इत्यत आह ।। **संस्तुतीति** ।। संस्तुतिरूपेणोपेतया गिरेत्यर्थः । उत्तरार्ध-व्याख्यानं विष्णुमित्यादि । अग्निं न अग्निवत् । मित्रं न तथा सूर्यवद्दर्शतं स्वप्रकाशं स्वाधीनः प्रकाशोऽस्येति । यद्यपि दर्शतशब्दो दृश्यमात्रवाची तथाप्यग्न्यादिदृष्टान्तोपादानसामर्थ्यात्स्वप्रकाश-मित्युक्तम् । यथाऽग्निसूर्यावालोकान्तरानपेक्षया स्वमहिम्ना दृश्येते । तथा स्वप्रसादेनैव दृश्यमिति । मित्रं न दर्शतमग्निमित्यन्यथाप्रतीतिनिरासाय पुनर्विष्णुमित्युक्तम् । ब्रह्मणस्पतिशब्दोक्तं विष्णुमेव । अन्यथा मारुतत्वव्याकोपात् । नन्वत्र कं प्रति वदेत्युच्यत इत्यत आह ।। **आह चेति** ।। युष्मद्युपपदे मध्यमस्य विधानादात्मनश्च युष्मदर्थत्वादभावात्कुत एतदित्यत आह ।। **दार्ढ्य इति** ।। स्वस्य प्रतियोगिता युष्मदर्थता ।। १३ ।।

**मन्त्रार्थमञ्जरी–** हे कण्व त्वम् **ब्रह्मणः पतिम्,** ब्रह्मणो हिरण्यगर्भस्य पतिं विष्णुम्,

ब्रह्मणो वाचः पतिं वायुं च । **तना,** व्याप्तया, तनोतेः पचाद्यच्, ततः स्त्रीलिङ्गात्तृतीयायाः 'आङि चापः' इति नाश्रितम्, बहुविषयया । **गिरा । जरायै,** संस्तुतित्वेन जराशब्दः स्तुतिवाची, भावप्रधानः, 'सुपां च सुपो भवन्तीति वाच्यम्' इति वार्त्तिकेन चतुर्थी तृतीयार्थम् । **अच्छ** वद, यथावद्वद । कीदृशम् ? अग्निम् न अग्निमिव । **मित्रम् न,** सूर्यमिव । **दर्शतम्,** दृशेः कर्मण्यतच्प्रत्ययः, यथाग्निसूर्यावालोकान्तरानपेक्षया स्वमहिम्ना दृश्येते, तथा स्वप्र(काशे) सादेनैव दृश्यमानम् । 'ब्रह्मणः पतिम् अच्छ वद' इति पूर्वेणान्वयः ।। १३ ।।

**स्कन्द– अच्छ वद** अच्छशब्द आप्तुमित्यस्यार्थे । वदेत्यात्मन एवायमन्तरात्मनः प्रैषः । हे अन्तरात्मन् आप्तुं वद । कान् । प्रकरणात् मरुतः । केनाप्तुम् । **तना** धननामैतत् (तु.निघ. २,१०) । हविर्लक्षणेन धनेन । **गिरा जरायै** 'गीः' (नघ.१,११) इति वाङ्नाम । जरा स्तुतिः । जरतेः स्तुतिकर्मणः (तृ.निघ.३,१४) । तृतीयायाश्च स्थाने चतुर्थी । वाचा स्तुति-लक्षणया । युष्मानहं हविषा स्तुत्या च आप्तवानित्येतत् मरुतो वदेत्यर्थः । अथवा अच्छा वदेति अच्छ अभेः स्थाने । अभिवद । स्तुहीत्यर्थः । तना हेतावियं तृतीया । धनेन हेतुना । धनलाभार्थमित्यर्थः । केन स्तवानि । उच्यते । गिरा जरायै वाचा स्तुतिलक्षणया । कथमच्छा वदानि । उच्यते । **ब्रह्मणस्पतिम् अग्निम् मित्रम् न** नशब्दः उपमार्थीयस्त्रिभिरप्येतैः सम्बन्धयितव्यः । ब्रह्मणस्पतिमिव च अग्निमिव च मित्रमिव च । कीदृशं मित्रम् । **दर्शतम्** दर्शनीयम् । अथवा दर्शतमिति मरुतागणाभिधानम्, न मित्रस्य । गणाभिप्रायं चैकवचनम् । अच्छा वद दर्शनीयं मरुतां गणमिति ।। १३ ।।

**वेङ्कटमाधव–** अभि वद तया **गिरा** स्तोतुम् **ब्रह्मणस्पतिम् अग्निम् मित्रम्** इव च दर्शनीयं मारुतं गणम् ।। १३ ।।

**मुद्गल–** हे ऋत्विक्समूह । **तना** तनया देवतास्वरूपं प्रकाशयन्त्या **गिरा** वाचा **ब्रह्मणस्पतिम्** मन्त्रस्य पालकं मरुद्गणम् **अग्निम् दर्शतम्** दर्शनीयम् **मित्रम् न** मित्रमपि **जरायै** स्तोतुम् **अच्छ** आभिमुख्येन **वेद** ब्रूहि ।। १३ ।।

**सायण–** हे ऋत्विक्समूह **तना** तनया देवतास्वरूपं प्रकाशयन्त्या **गिरा** वाचा **ब्रह्मणस्पतिं** मन्त्रस्य हविर्लक्षणस्यान्नस्य वा पालकं मरुद्गणम् **अग्निं दर्शतं** दर्शनीयं **मित्रं न** मित्रमपि **जरायै** स्तोतुम् **अच्छ** आभिमुख्येन **वद** ब्रूहि । अच्छ । 'निपातस्य च' इति संहितायां दीर्घत्वम् ।

वद । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घः । तना । 'तनु विस्तारे' । तनोति देवतामाहात्म्यं विस्तारयतीति तना । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । तृतीयाया डादेशः । गिरा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । ब्रह्मणः । षष्ठ्याः पतिपुत्र' इति संहितायां सत्वम् ।।१३।।

**सिद्धाञ्जनम्–** ऋषेरात्मसम्बोधनम् । मारुतेऽस्मिन् सूक्ते मरुद्गणस्वरूपप्रकाशनाय मरुत्सखस्य अग्नेः प्रसादात् वाक् प्रयुज्यतामित्याह- **तना** तनया देवतास्वरूपं विस्तारयन्त्या प्रकाशयन्त्या **गिरा** वाचा **जरायै** स्तुतये **अग्निम्** वाचोऽधिदैवतं **अच्छ** आभिमुख्येन **वद** ब्रूहि । कीदृशं अग्निम् ? **ब्रह्मणः पतिम्** मन्त्रस्य पालकं अधिदैवतं, **मित्रम् न दर्शतम्** मित्रमिव प्रियसुहृदमिव दर्शनीयम् । अग्निः होतृवाग्विशिष्टोऽपि सामान्येन सर्वस्याश्च वाचो देवता । तत्र वाग्विशेषस्य मन्त्रस्य तु सर्वदेवात्मकोऽग्निरेव ब्रह्मणस्पतिर्भवति । तना-तनु विस्तारे, पचाद्यच्, तना, तृतीयाया डादेशः ।। १३ ।।

## ऋक्संहिता पदपाठसहिता

**मिमीहि श्लोकमास्ये पर्जन्यं इव ततनः । गाय गायत्रमुक्थ्यम् ।। १४ ।।**

मिमीहि । श्लोकम् । आस्ये । पर्जन्यःऽइव । ततनः । गाय । गायत्रम् । उक्थ्यम् ।।

## ऋग्भाष्यम्

**..............कीर्तिमस्य विष्णोः कुरु मुखे सदा ।**

**विस्तारयति पर्जन्यो यद्वद्वृष्टिं तथैव च ।**
**विस्तृणीहि तथेशस्य तथा कीर्तिं जगत्यपि ।। १४ ।।**

**ऋग्भाष्यटीका– मिमीहि** । कीर्तिम् । अत्राप्यात्मानमेवाह कण्वः । त्वमस्य प्रकृतस्य ब्रह्मणस्पतेर्विष्णोः । **श्लोकं** कीर्तिम् । **आस्ये** मुखे । **मिमीहि** निर्मिमीष्व सदा कुरु । तथा अन्यच्च । पर्जन्य इव पर्जन्यो मेघो यद्वद्यथा वृष्टिं विस्तारयति च । न केवलं स्वस्मिन् जलं कुरुते तथैव । त्वमीशस्य । तथा तथाभूताम् । सत्यां कीर्तिम् । जगत्यपि । **ततनः** । तनोतेर्लोडर्थे लुङि गुपेः छन्दसीत्यत्र छन्दसीति योगविभागाच्चङ् विस्तृणीहि । शिष्येभ्योऽप्युपदिश । किञ्च । उक्थ्यं प्राणो वा उक्थमिति श्रुतेरुक्थं ब्रह्मणस्पतिः । तद्विषयं **गायत्रं** साम गाय ।।

**मन्त्रार्थमञ्जरी–** हे आत्मँस्त्वम् अस्य प्रकृतस्य ब्रह्मणः पतेर्विष्णोः । **श्लोकम्,** कीर्त्तिम् । **आस्ये,** मुखे । **मिमीहि,** निर्मिमीष्व, सदा कुरु, 'माङ् माने' श्लुविकरणम्, परस्मैपदं छान्दसम् । किं च, पर्जन्य इव, पर्जन्यो मेघो यथा वृष्टिं विस्तारयति, न केवलं स्वस्मिन्नलं कुरुते, तथैव । त्वमीशस्य सत्यां कीर्तिं जगत्यपि ततनः, तनोतेः लोडर्थे लुङि 'गुपेश्छन्दसि' इति योगविभागाच्चङ् द्विर्वचनम्, विस्तृणीहि, शिष्येभ्योऽप्युपदिश । किं च, **उक्थ्यम्,** 'प्राणो वा उक्थम्' इति श्रुतेरुक्थो ब्रह्मणः पतिस्तद्विषयमुक्थम् । **गायत्रम्,** साम । **गाय** ।। १४ ।।

**स्कन्द– ममीहि** मिमीहीत्यात्मन एवायमन्तरात्मन प्रैषः । निर्मिमीष्व कुरु हे अन्तरात्मन् **श्लोकम्** वाङ्नामैतत् (तु.निघ.१,११) । स्तुतिलक्षणं शब्दम् । **आस्ये** तृतीयार्थे सप्तम्येषा । आस्येनात्मीयेन वदनेन निर्माय च **पर्जन्यः इव ततनः** यथा पर्जन्य स्वशब्दं विस्तारयति तद्वद् विस्तारय । विस्तारितेन च तेन **गाय** गायतिरर्चतिकर्मा (तु.निघ.३,१४) । **स्तुहि गायत्रम्** स्तुत्यम् **उक्थ्यम्** प्रशस्यम् । एकवचननिर्देशात् प्रकरणात् उत्तरस्याश्चर्चि दर्शनात् मारुतं गणम् ।। १४ ।।

**वेङ्कटमाधव–** निर्मिमीहि पूर्वम् **श्लोकम् आस्ये** । अथ तम् **पर्जन्य इव** वृष्टिं विस्तारय । **गाय गायत्रम्** च साम उक्थार्हं स्तोतः ।। १४ ।।

**मुद्गल–** हे ऋत्विक्समूह! **आस्ये** स्वकीयमुखे **श्लोकम्** स्तोत्रम् **मिमीहि** निर्मितं कुरु । तं च श्लोकम् **ततनः** विस्तारय । दृष्टान्तः । **पर्जन्य इव** यथा मेघो वृष्टिं विस्तारयति तद्वत् । **उक्थ्यम्** शस्त्रयोग्यम् **गायत्रम्** गायत्रीच्छब्दस्कं सूक्तम् **गाय** पठ ।। १४ ।।

**सायण–** हे ऋत्विक्समूह **आस्ये** स्वकीयमुखे **श्लोकं** स्तोत्रं **मिमीहि** निर्मितं कुरु । तं च श्लोकं **ततनः** विस्तारय । तत्र दृष्टान्तः । **पर्जन्य इव** । यथा मेघो वृष्टिं विस्तारयति तद्वत् । **उक्थ्यं** शस्त्रयोग्यं **गायत्रं** गायत्रीच्छन्दस्कं सूक्तं **गाय** पठ । मिमीहि । 'माङ् माने' । जौहोत्यादिकः । व्यत्ययेन परस्मैपदम् । 'भृञामित्' इति अभ्यासस्य इत्वम् । आस्ये । 'असु क्षेपणे' । अस्यते क्षिप्यतेऽस्मिन्निति आस्यम् । 'कृत्यल्युटो बहुलम्' (पा.सू.३.३.११३) इत्यधिकरणे ण्यत् । 'तित्स्वरितम्' इति स्वरितत्वम् । ततनः । 'तनु विस्तारे' । लेटि सिपि 'बहुलं छन्दसि' इति विकरणस्य श्लुः । 'लेटोऽडाटौ' इति अडागमः । 'इतश्च लोपः' इति

इकारलोपः । गायत्रम् । गायत्र्याः संबन्धि । 'तस्येदम्' इति अण् । यद्वा । गायतस्त्रायते इति गायत्रम् । 'आतोऽनुपसर्गे कः' ।। १४ ।।

**सिद्धाञ्जनम्–** अत्रापि ऋषेरात्मसम्बोधनं युक्तम् । आस्ये स्वीये मुखे **श्लोकम्** स्तोत्रं **मिमीहि** मितं कुरु, यः श्लोकः हृदये प्रादुर्भूतः, तं मुखे आविष्कृतं धेहि । ततः तं **पर्जन्य** इव मेघः वर्षमिव **ततनः** विस्तारय । **उक्थ्यम्** शस्त्रयोग्यं मन्त्रविशेषं **गायत्रम्** गायत्रीच्छन्दस्कं **गाय** गानं कुरु । वाचा स्तोत्रोच्चारणस्य वैभवं देवताप्रीणनं भवतीति बोध्यम् । ततनः-तनु विस्तारे, लेट्, विकरणस्य श्लुः ।। १४ ।।

## ऋक्संहिता पदपाठसहिता

**वन्दस्व मारुतं गणं त्वेषं पनस्युमर्किणम् । अस्मे वृद्धा असन्निह ।।**
**वन्दस्व । मारुतम् । गणम् । त्वेषम् । पनस्युम् । अर्किणम् । अस्मे इति । वृद्धाः । असन् । इह ।। १५,१७,३८ ।।**

## ऋग्भाष्यम्

**पनस्युं ज्ञानशीलं च विज्ञेयं गणमर्किणम् ।**
**अभवन् ज्ञापका वृद्धा अस्माकं तदनुग्रहात् ।। १५,१७,६ ।।**

**ऋग्भाष्यटीका–** **वन्दस्व** । **पनस्युम्** । **त्वेषं** प्रकाशवन्तम् । **पनस्युं** पनतिरिह ज्ञानार्थः । ततस्ताच्छीलि(कः स्युः)को स्युः । ज्ञानशीलम् । चो विशेषणसमुच्चये । **अर्किणं** विज्ञेयमृग्भिरिति शेषः । अर्काः ऋचः । ता अस्य सन्ति ज्ञापिका इत्यर्की तम् । यद्वा ऋ गतौ । अस्मात्कर्मणीन् तस्य कागमः । मरुतामयं मारुतस्तं मारुतं गणम् । **वन्दस्व** स्तुहि । न च स्तोतुं न जानामीति वाच्यं यतो **अस्मे** अस्माकम् । **इह** निमित्तसप्तम्येषा । एतेषु मरुत्सु निमित्तेषु । तदनुग्रहात् **वृद्धा** **असन्** आसन् अभवन् । ज्ञापका इति शेषः ।। १५,१७,६ ।।

**मन्त्रार्थमञ्जरी–** अत्राप्यात्मानमाह (हे आत्मँस्त्वम्) त्वेषम् प्रकाशवन्तम् । **पनस्युम्,** पनतिः इह ज्ञानार्थः, ततस्ताच्छीलिकोऽस्युप्रत्ययः, ज्ञानशीलम् । **अर्किणम्,** अर्का ऋचस्ता अस्य सन्ति ज्ञापिका इत्यर्की, तमृग्भिर्ज्ञेयम् । मरुतामयं मारुतस्तम् मारुतम् गणम् । **वन्दस्व,**

स्तुहि । न च 'स्तोतुं न जानामि इति वाच्यम्, यतः **अस्मे,** अस्माकम् । **इह,** निमित्त-सप्तम्येषा, एतेषु मरुत्सु निमित्तेषु । तदनुग्रहात् वृद्धाः । असन् **आसन्,** अभवन् । (ज्ञापकाः) इति शेषः ।। १५ ।।

**स्कन्द– वन्दस्व मारुतम् गणम् त्वेषम्** दीप्तम् **पुनस्युम्** । स्तुतिकामिनमित्यर्थः । अथवा पनस्यतिरर्चतिकर्मा (तु.निघ.३.१४) । स्तुत्यमित्यर्थः । **अर्किणम्** स्तोतृप्रयुक्तैर्गुणैर्मन्त्रवन्तमन्नवन्तं वा । किं कारणम् । यस्मात् **अस्मे** अस्माकं स्वभूते **वृद्धाः** वीर्येण परिवृद्धाः मरुतः **असन्** नित्यं भवन्ति **इह** कर्मणि । यस्मादस्मदीये कर्मणि नित्यं मरुतः सन्निहिता भवन्ति, तस्माद् वन्दस्व मारुतं गणमिति समस्तार्थः । अथवा वन्दस्व मारुतं गणमित्यर्धर्च एव समाप्तं वाक्यम् । तृतीयस्तु पादः **आशीः** भिन्नमेव वाक्यम् । मरुतां प्रसादेनास्माकं परिवृद्धा असन् भवन्तु । काः । सामर्थ्यात् सम्पदः ।। १५ ।।

**वेङ्कटमाधव–** स्तुहि **मारुतम् गणम्** दीप्तं स्तुतिकामं शस्त्रवन्तम् । अस्मासु भवन्तु प्रवृद्धाः इह मरुतः ।। १५ ।।

**मुद्गल–** हे ऋत्विक्संघ! **मारुतम्** मरुत्सम्बन्धिनम् **गणम्** समूहम् **वन्दस्व** नमस्कुरु । कीदृशं गणम् । **त्वेषम्** दीप्तम् । **पनस्युम्** स्तुतियोग्यम् । **अर्किणम्** अर्चनोपेतम् । **अस्मे** अस्माकम् **इह** अस्मिन् कर्मणि **वृद्धाः असन्** मरुतः प्रवृद्धा भवन्तु ।। १५ ।।

**सायण–** हे ऋत्विक्संघ **मारुतं** मरुत्संबन्धिनं **गणं** समूह **वन्दस्व** नमस्कुरु स्तुहि वा । कीदृशं गणम् । **त्वेषं** दीप्तं **पनस्युं** स्तुतियोग्यम् **अर्किणम्** अर्चनोपेतम् । **अस्मे** अस्माकम् **इह** अस्मिन् कर्मणि **वृद्धा असन्** मरुतः प्रवृद्धाः भवन्तु । वन्दस्व । वदि अभिवादनस्तुत्योः । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । पनस्युम् । पन च इति स्तुत्यर्थो धातुः । असुन् । पनः स्तोत्रमात्मन इच्छतीति पनस्युः । 'सुप आत्मनः क्यच्' । 'क्याच्छन्दसि' इति उप्रत्ययः । अर्किणम् । ऋच स्तुतौ । 'पुंसि संज्ञायाम्' इति घः । अर्कोऽस्यास्तीति अर्की । 'अत इनिठनौ' । असन् । 'बहुलं छन्दसि' इति शपो लुगभावः । 'इतश्च लोपः' इति इकारलोपः । 'तिङतिङः' इति निघातः ।। १७ ।।

**सिद्धाञ्जनम्**–सर्वोऽपि देवभक्तः प्रेर्यते । **मारुतम्** मरुत्संबन्धिनं **गणम्** समूहं **वन्दस्व**

स्तुहि, नमस्कुरु वा । कीदृशं गणम् ? **त्वेषम्** दीप्तम् **पनस्युम्** स्तोत्रकामम् **अर्किणम्** अर्कः दीप्तः स्तवः सोऽस्यास्तीति अर्की तम् । **अस्मे** अस्मासु इह अस्मिन्नन्तर्यागे **वृद्धाः** वृद्धिं प्राप्ता **असन्** भवन्तु मरुतः ।। वन्दस्व- वदि अभिवादनस्तुत्योः । पनस्युम् पन स्तुती असुन्, पनः स्तोत्रं आत्मन इच्छति पनस्युः, क्यच् ।

।। इति प्रथमाष्टके तृतीयाध्याये सप्तदशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ३९)

१० कण्वो घौरः । मरुतः । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः ।

**प्र यदित्था परावतः शोचिर्न मानमस्यथ । कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ।। १ ।।**

प्र । यत् । इत्था । पराऽवतः । शोचिः । न । मानम् । अस्यथ । कस्य । क्रत्वा । मरुतः । कस्य । वर्पसा । कम् । याथ । कम् । ह । धूतयः ।। १ ।।

## ऋग्भाष्यम्

परावतो हरेः स्थानान्मानं शोचिरिवास्यथ ।
सूर्यादयो यथा शोचिर्दूरादस्यंति जंतुषु ।
एवं ज्ञानं सम्प्रदायान्मरुतो विष्णुरेव वा ।
इत्थं यथा सर्वदृश्यं तत्तथा भवतां कृतम् ।
एवं यत्र क वा ज्ञानाद्बलाद्वा गच्छथ कचित् ।
स्वतन्त्रत्वात् परापेक्षा न हि वः कचिदिष्यते ।
किं चियाथ बलात्किंचिद्धूनुथ स्वबलाद्धि तत् ।। १ ।।

**ऋग्भाष्यटीका– प्रयत्** । एतदपि दशर्चं मारुतं सूक्तम् । **परावतः** । हे मरुतो यूयम् । **परावतो** दूरतः । हरेः स्थानात्स्वलोके स्थित्वैव । जन्तुषु **शोचिर्न** शोचिरिव प्रकाशमिव । **मानं** ज्ञानं प्रकर्षेण **आस्यथ** क्षिपथ । एतदेव स्पष्टयति ।। सूर्यादय इति ।। एवेति मुख्यार्थतां द्योतयति । किंच यदित्था यद्यत्सर्वं दृश्यं प्रमितमिति यावत् । इत्थम् एवं प्रकारम् । तत्तथा

मरुतां युष्माकं कृतमिति शेषः । सप्रकारं कार्यजातं युष्माभिरेव निर्मितमित्यर्थः । एवमन्यच्च । यद्यूयं ज्ञानाद्यत्र क वागच्छथ । यत्किंचिज्ज्ञाना विषयं कुरुथ जानीथ । तत्कस्य किमधीनेन । **क्रत्वा** क्रतुना ज्ञानेन । यच्च बलात्कचिद्गच्छथ बलविषयं कुरुथ । तत्कस्य किमधीनेन **वर्पसा** बलेन । आक्षेपस्य तात्पर्यमाह ।। स्वतन्त्रत्वादिति ।। कचित् । ज्ञाने । बलेन । किन्तु । यत्कंचिद्याथ जानीथ । तत्स्वाधीनादेव ज्ञानादिति शेषः । यच्च बलात्कं ह कस्यचित् धूतयो यूयं कंचिद्धूनुथेति यावत् । तत्स्वबलाद्धीति शेषः ।। १ ।।

**मन्त्रार्थमञ्जरी–** अथ 'प्र यदित्था' इति दशर्चं वर्गद्वयात्मकं मारुतं (षट्त्रिंशत् सूक्तवत्) प्रागाथं नवत्रिंशं सूक्तम् । हे मरुतः यूयम् **परावतः,** दूरतः, हरेः स्थानात्स्वर्गलोके स्थित्वैव । जन्तुषु शोचिः न, शोचिरिव प्रकाशमिव । **मानम्,** ज्ञानम् । **प्र** प्रकर्षेण । **अस्यथ** क्षिपथ इदमुक्तं भवति 'सूर्यादयो यथा शोचिर्दूरादस्यन्ति जन्तुषु, एवं ज्ञानं सम्प्रदायान्मरुतो(विष्णुरेव वा, ऋ.भा.)ऽस्यन्ति, मरुन्नामकविष्णुरूपविशेषा वा' इति किं च, यत् इत्था, यद्यत्प्रमितमेवं प्रकारम् । तत्तथा मरुतां युष्माकं कृतम् इति शेषः, सप्रकारं कार्यजातं युष्माभिरेव निर्मितम्– इत्यर्थः । एवमन्यच्च यद्यूयं ज्ञानाद्यत्र क वा गच्छथ, यत्किञ्चिज्ज्ञानविषयं कुरुथ, जानीथ, तत् कस्य, किमधीनेन । **क्रत्वा,** क्रतुना, ज्ञानेन । यच्च बलात्कचिद्गच्छथ, बलविषयं कुरुथ, तत् कस्य, किमधीनेन । **वर्षसा,** बलेन । स्वतन्त्रत्वाज्ज्ञाने बले च न परापेक्षा, किं तु कम् यत्किञ्चित् याथ, जानीथ । तत् **स्वाधीनादेव ज्ञानात्** इत्याक्षेपे तात्पर्यं ज्ञेयम् । यच्च बलात्– कम्, कस्यचित् । **धूतयः,** यूयं कं (किं) चिद्धूनुथेति यावत् । तत् स्वबलाद्धि इति शेषः । ह ।। १ ।।

**स्कन्द–** हे मरुतः ! **यत्** ये यूयम् **इत्था** सत्यनामैतत् (तु.निघ.३,१०) । सत्यमेव **परावतः** दूरात् **शोचिः न** शोचिर्दीप्तिरुच्यते । यथा अग्निरादित्यो वा सर्वत्र स्वदीप्तिं प्रास्यति एवम् मानम् वृष्टिद्वारेण सर्वस्य निर्मातारं मेघम् प्र अस्यथ प्रकर्षेण सर्वत्र क्षिपथ । अथवा मानो गर्व उच्यते । शोचिरित्यपि प्रथमान्तं क्षेप्तृवचनम्, न क्षिप्यमाणवचनम् । यथा अग्नेरादित्यस्य वा शोचिर्दीप्तिः दूरात्तमांसि प्रास्यति एवं शत्रूणां मानं गर्वं दूरात् प्रास्यथ क्षिपथ । नाशं गमयथेत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ते कस्य नत्वा हेताविदं तृतीया । कस्य यजमानस्य कर्मणा हेतुना । कस्य वा **वर्पसा** रूपेण । **कम्** वा यजमानं प्रति **याथ**

गच्छथ । **कम्** सुखनामैतत् (प्र.निघ.३,६) । क्रियाविशेषणं चैतत् द्रष्टव्यम् । सुखम् । अक्लेशेनेत्यर्थः । निपातो वा कंशब्दः पदपूरणः । हे **धूतयः!** कम्पयितारः! शत्रूणाम् । यत्कर्म कुर्वन्तं यद्रूपं वा यं वा यजमानं प्रति यूयमक्लेशेन गच्छथ, तं मह्यं कथयत, सुखमहमपि तत्कर्मा तद्रूपः स एव च भवामीति । आगमनविलम्बनादुपालम्भोऽयम् ॥ १ ॥

**वेङ्कटमाधव– प्रास्यथ** इत्थं मरुतः! दूरात् **यत्** तेजः इवात्मीयम् शब्दम्, तत् **कस्य** कर्मणा **मरुतः** । केन वा वेष्टिताः । **कम्** च देशं यूयम् याथ, कम्, या तत्र पुरुषं हे कम्पयितारः! ॥ १ ॥

**मुद्गल–** प्र यदित्था इति दशर्चं चतुर्थं सूक्तम् । घोरपुत्रः कण्वः ऋषिः । युजः सतोबृहत्यः । अयुजो बृहत्यः । मरुतो देवताः ।

**हे धूतयः** । स्थावरादीनां कम्पनकारिणः **मरुतः यत्** यदा **मानम्** मननीयं युष्मद्बलम् **परावतः** दूरात् **इत्था** अस्मादन्तरिक्षात् **प्र** अस्यथ भूमौ प्रक्षिपथ । दृष्टान्तः । **शोचिः न तेज इव** । यथा सूर्यस्य तेजोऽन्तरिक्षात् भूमौ प्रक्षिप्यते तद्वत् । तदानीं यूयम् **कस्य** यजमानस्य **क्रत्वा** क्रतुना सह सगच्छध्वे इति शेषः । तथा **कस्य** यजमानस्य **वर्पसा** स्तोत्रेण सङ्गच्छध्वे । **कम्** यजमानमुद्दिश्य **याथ** देवयजनदेशे गच्छथ । **कम् ह** कम् खलु यजमानम् अनुगृह्णीयेति शेषः ॥ १ ॥

**सायण– हे धूतयः** स्थावरादीनां कम्पनकारिणः **मरुतः यत्** यदा **मानं** मननीयं युष्मद्बलं **परावतः** दूरात् । 'आरे परावतः' (लि.३.२६.५) इति दूरनामसु पाठात् । **इत्था** अस्मादन्तरिक्षात् **प्र अस्यथ** भूमौ प्रक्षिपथ । तत्र दृष्टान्तः । **शोचिर्न** तेज इव । यथा सूर्यस्य तेजोऽन्तरिक्षात् भूमौ प्रक्षिप्यते तद्वत् । तदानीं यूयं **कस्य** यजमानस्य **क्रत्वा** क्रतुना संगच्छध्वे इति शेषः । तथा **कस्य** यजमानस्य **वर्पसा** स्तोत्रेण संगच्छध्वे । **कं** यजमानमुद्दिश्य **याथ** देवयजनदेशे गच्छथ । **कं ह** कं खलु यजमानमनुगृह्णीथेति शेषः । इत्था । था हेतौ च च्छन्दसि (पा.सू.५.३.२६) इति इदंशब्दात् प्रकारवचने थाप्रत्ययः । यदि तत्र इदंशब्दस्य नानुवृत्तिः तर्हि थमुप्रत्ययान्तात् इदंशब्दादुत्तरस्या विभक्तेयस्ययेन 'सुपां सुलुक्' इति डादेशः । प्रथमपक्षे प्रत्ययस्वरः । द्वितीयपक्षे तु उदात्तनिवृत्तिस्वरः । अस्यथ । 'असु क्षेपणे' ।

अदुपदेशात् लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । क्रत्वा । 'जसादिषु च्छन्दसि वा वचनम्' (पा.सू.७.३.१०९.१) इति नाभावस्य विकल्पितावादभावः । वर्पसा । 'वृङ् सम्भक्तौ' । 'वृद्ध शीभ्यां रूपस्वाङ्गयोः पुक्च' (उ.सू.४.६४०) इति असुन् तत्सन्नियोगेन पुगागमश्च । नित्त्वादाद्युदात्तत्वम् । अत्र रूपाभिधायिना वर्पस्शब्देन देवता-स्वरूपप्रकाशकं स्तोत्रं लक्ष्यते क्रतुना साहचर्यात् ।। १ ।।

**सिद्धाञ्जनम्–** हे **धूतयः** कम्पनकारिणः **मरुतः**, **यत्** यदा **शोचिर्न** तेज इव **मानम्** मननीयं बलं इति सायणः, मननीयां मतिं इति वयम्, **परावतः** दूराद्दूर्ध्वदेशात् **इत्था** इत्थं अन्तरिक्षात् **प्रास्यथ** प्रक्षिपथ, ऊर्ध्वदेशात् यथा ज्योतींषि तेजः प्रक्षिपन्ति भूमौ तथा मरुतः स्वमतिं सङ्कल्परूपां मर्त्ये प्रक्षिपन्ति । यदैवं कुरुथ, तदानीं **कस्य** पुण्यपुरुषस्य **वर्पसा** रूपेण सङ्गताः भवथ ? कम् याथ कं क्रत्वा ऋतुना प्रज्ञाकर्मणा सङ्गच्छध्वे यूयम् ? कस्य पुण्यपुरुषस्य वर्पसा रूपेण सङ्गताः भवथ ? कम् याथ के भक्तं प्राप्नुथ ? **कम् ह** कं वा अनुग्रहास्पदं कुरुथ ? (अ.१,अ.३,व.१८) (मं.१,अनु.८,सू.३६) मरुतः स्वमतिप्रक्षेपेण द्वारेण पुरुषस्य प्रज्ञाकर्मवलेन रूपेण च एकतां प्राप्य तमाविश्य अनुगृह्णन्ति । कस्य ऋत्वा 'वर्पसा' इत्यत्र अन्यथाप्यध्याहारो घटते । कस्य ऋतुना प्रेरिताः कस्य 'वर्पसा' रूपव्यक्त्या आकृष्टाः युष्मदीयां मतिं प्रक्षिपथेति तात्पर्यमुपपद्यते । उभयथापि, 'कीदृशी स्यात् तस्य योग्यता यस्मिन् पुरुषे युष्मदीयः सङ्कल्पः पतेदिति तात्पर्यं भवति । 'मानम्' इत्यत्र विविधमाचक्षते वेदार्थचिन्तकाः । मन ज्ञाने इति धातोरेव निष्पन्नं मन्यते सायणः, मानं मननीयं बलमित्याह । मानं ज्ञानमिति कश्चित् । 'माङ् माने' इति धातोर्निष्पादयन्ति नव्यानामेके, आहुश्च मरुद्व्यापारस्य लक्ष्यभूतानां तरुगिरिशृङ्गादीनां मरुतां च अन्तरं कियद्दूरमिति निर्णये मरुतो 'मानम्' गन्तव्यदेशमानं कामपि मानरेखां प्रक्षिपन्तीति ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**स्थिरा वः सन्त्वायुधा पराणुदे वीळू उतप्रतिष्कभे । युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ।। २ ।।**

स्थिरा । वः । सन्तु । आयुधा । पराऽनुदे । वीळु । उत । प्रतिऽस्कभे । युष्माकम् । अस्तु । तविषी । पनीयसी । मा । मर्त्यस्य । मायिनः ।। २ ।।

## ऋग्भाष्यम्

**शत्रूणामपनोदाय सन्ति वस्त्विह हेतयः ।**
**स्तम्भनाय च शत्रूणां सुदृढान्येव ताः सदा ।**
**स्थिरत्वं दीर्घकालत्वं वीळुत्वं दृढता तथा ।**
**युष्माकं तविषी तेजो बलमस्त्युत्तमं सदा ।**
**मायिनो न हि मर्त्यस्य बलं तेजोऽथवोत्तमम् ।। २ ।।**

**ऋग्भाष्यटीका– स्थिरा वः** । शत्रूणां । हे मरुतो **वो** युष्माकम् । **पराणुदे** सम्पदादित्वात्किप् । इह जगति शत्रूणामपनोदाय । **उत प्रतिष्कभे** शत्रूणां स्तम्भनाय वा । **आयुधा** आयुधानि हेतयः । **सन्तु** सन्ति । न केवलमायुधामात्रं किन्तु । तास्तान्यायुधानि । **स्थिरा** स्थिराणि । **वीळू** वीळूनि । सदासुदृढान्येव । स्थिरत्ववीळुत्वयोः को भेद इत्यत आह ।। **स्थिरत्वमिति** ।। हेतुहेतुमद्भाव एवैतयोर्न त्वैक्यमिति भावः । तथा अन्यच्च । **युष्माकं** तविषी तेजो बलं वा **अस्तु** अस्तु । कथं भूतं पनीयसी पनतेः स्तुत्यर्थात्कर्मणि ईयसुन् । स्तुत्या सदोत्तमम् । **मायिनो** मर्त्यस्य । छद्मिनां दैत्यादीनाम् । **पनीयसी** तविषी उत्तमं बलम् अथवा तेजः । **मा** नास्ति हि । अतोऽस्मत्तपोविघ्नान्दैत्यादीन् हतेति ।। २ ।।

**मन्त्रार्थमञ्जरी–** हे मरुतः वः, युष्माकम् । **पराणुदे,** सम्पदादित्वात्क्विप्, इह जगति शत्रूणामपनोदनाय । **उत प्रतिष्कभे,** शत्रूणां स्तम्भनाय । **आयुधा,** आयुधानि च, हेतयः । सन्तु, सन्ति, व्यत्ययात् । न केवलमायुधमात्रम्, किं तु तान्यायुधानि स्थिरा, स्थिराणि । वीणु, वीळूनि, सदा सुदृढान्येव, स्थिरत्वादीर्घकालत्वात् 'वीळूनि' इत्येवं हेतुहेतुमद्भावो ज्ञेयः । किं, च युष्माकम् । **तविषी,** तेजः, बलं वा । **अस्तु,** अस्ति । कथं भूतम् ? **पनीयसी,** पनतेः स्तुत्यर्थात्कर्मणीयसुन्, **स्तुत्या,** सदोत्तमम् । **मायिनः मर्त्यस्य,** छद्मिनां दैत्यानाम् । **पनीयसी** तविषी, उत्तमं बलम्, अथ वा उत्तमं तेजः । मा अस्तु नास्ति । हि अतः– अस्मत्तपोविघ्नान्हत' इति ।। २ ।।

**स्कन्द– स्थिरा** स्थिराण्यविचलानि नित्यसन्निहितानि **वः सन्तु आयुधा** आयुधानि । किमर्थम् । **पराणुदे** नुद प्रेरणे । अस्मच्छत्रूणां प्रेरणाय स्वस्थानादपकालनाय । **वीळु** चास्तु ।

वीळु दृढमभेद्यमेकचित्तमत्रोच्यते । एकचित्तं चास्त्वित्यर्थः । किं तत् । सामर्थ्यात् सेनालक्षणं बलम् । न च पराणुद एव केवलाय । किं तर्हि **उत** प्रतिष्कभे । ष्टभि स्कभि प्रतिबन्धे । प्रतिबन्धा यापि शत्रूणाम् । एतदुक्तं भवति– सर्वस्यैव द्विविधाः शत्रवः । उच्छेद्याः उच्छेदका वा । तत्र येऽस्माकमुच्छेद्या शत्रवः तेषां स्थानादपकालनाय, ये तूच्छेदकास्तेषां प्रतिबन्धाय युष्माकमायुधानि नित्यं सन्निहितानि सन्तु । सेनालक्षणं बलं चाभेद्यमस्त्विति । अथवा वीळू इति दीर्घत्वदर्शनादायुधानां च प्रकृतत्वात् तत्समानाधिकरणप्रथमाबहुवचनान्तो वीळूशब्द इति व्याख्यातव्यम् । स्थिराणि चायुधानि वीळूनि चेति । अस्मच्छत्रूणामपकालनाय प्रतिबन्धाय च नित्य सन्निहितानि दृढानि च युष्माकमायुधानि भवन्त्वित्यर्थः । अथवा वीळू इत्यूकारस्य प्रगृह्यत्वदर्शनाद् वीळूशब्दो द्विवचनान्तः । स्थिराणि वः आयुधानि सन्त्वस्मच्छत्रूणां पराणोदाय । किञ्च वीळू उत वीळू च स्ताम् । कौ । द्विवचननिर्देशात् युद्धोपकरणाच्च इषुधी वा रथाश्वौ वा । किमर्थम् । प्रतिक्रमे प्रतिबन्धायापनयनाय, धारणाय वेत्यर्थः । कस्य । सामर्थ्यात् रिपूणां वा युष्माकं वा रथस्थानाम् । पदकाराभिप्रायश्च एवं सति पर्येष्यः । किञ्च **युष्माकम् अस्तु तविषी पनीयसी** मा अस्त्वित्येतत् मेत्येतेन सबन्धयितव्यम् । तत्सम्बन्धाच्च लुङर्थे लोट् द्रष्टव्यः । 'तविषी' (निघ.२,९) इति बलनाम । पनीयसीति पनतेः स्तुत्यर्थस्य तृजन्तस्यादि-शयप्रत्यये रूपम् । व्यत्ययेन चात्र तृच् कर्मणि द्रष्टव्यः । युष्माकं स्वभूतं बलमतिशयेन स्तोतव्यं भा अस्तु मा भूत् । कस्य । मर्तस्य मायिनः मायावतः । युष्मश्लमशठस्यैवातिशयेन स्तुत्यतां प्रतिपद्यतां मा शब्दस्येत्यर्थः ।। २ ।।

**वेङ्कटमाधव–** स्थिराणि युष्माकम् **सन्तु** आयुधानि शत्रूणां प्रेरणाय । अपि च दृढं च प्रतिष्कम्भितुं **युष्माकम् अस्तु** वलम् अतिशयेन स्तोतव्यम् । मा मायावतः **मर्त्यस्य** अयजमानस्य ।। २ ।।

**मुद्गल–** हे मरुतः! **वः आयुधा** युष्माकम् आयुधानि **पराणुदे** पराणां शत्रूणामपनोदनाय **स्थिरा सन्तु** स्थिराणि भवन्तु । **उत** अपि च **प्रतिष्कमे** शत्रूणां प्रतिबन्धाय **वीळु** सन्तु दृढानि सन्तु । **युष्माकम् तविषी** बलम् पनीयसी अतिशयेन स्तोतव्यम् अस्तु भवतु । अस्मासु **मायिनः** छद्मचारिणः **मर्त्यस्य** मनुष्यस्य शत्रोः **मा बलम्** भवतु ।। २ ।।

**सायण–** हे मरुतः **वः आयुधा** युष्माकमायुधानि **पराणुदे** शत्रूणामपनोदनाय **स्थिरा सन्तु**

स्थिराणि भवन्तु । उत अपि च **प्रतिष्कभे** शत्रूणां प्रतिबन्धाय **वीळु** सन्तु दृढानि सन्तु । **युष्माकं तविषी** बलं **पनीयसी** अतिशयेन स्तोतव्यं भवतु । **मायिनः** अस्मासु छद्मचारिणः **मर्त्यस्य** मनुष्यस्य शत्रोः मा बलं मा भवतु । स्थिरा आयुधा । उभयत्र 'शेश्छन्दसि बहुलम्' इति शेर्लोपः । पराणुदे । 'णुद प्रेरणे'। सम्पदादिलक्षणः क्विप् । 'उपसर्गादसमासेऽपि' (पा.सू. ८.४.१४) इति णत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । वीलु । 'सुपां सुलुक्' इति विभक्तेर्लुक् । ईषाअक्षादित्वात्प्रकृतिभावः (पा.सू.६.१.१२७.२)। प्रतिष्कमे । स्कम्भुः सौत्रो धातुः । सम्पदादिलक्षणो भावे क्विप् । 'अनिदिताम्' इति नलोपः । पनीयसी । पनतिः स्तुत्यर्थः । अस्मात् औणादिकः कर्मणि असुन् । तत ईयसुनि 'टेः' इति टिलोपः । 'उगितश्च' इति ङीप् । ईयसुनो नित्त्वादाद्युदात्तत्वम् । मायिनः । मायाशब्दस्य व्रीह्यादिषु पाठात् 'व्रीह्यादिभ्यश्च' इति मत्वर्थीय इनिः ।। २ ।।

**सिद्धाञ्जनम्–** हे मरुतः, **वः** युष्माकं **आयुधा** आयुधानि **परा नुदे** शत्रूणां अपनोदनाय **स्थिरा सन्तु** स्थिराणि भवन्तु । उत अपि **च प्रतिष्कभे** प्रतिबन्धाय, प्रत्यवरोधाय **वीळु** दृढानि सन्तु । **युष्माकं** सम्बन्धिनी **तविषी** बलं **पनीयसी** अतिशयेन स्तोतव्यं **अस्तु** । **मायिनः** माया कूटयुक्तिः तद्वतः **मर्त्यस्य** मनुष्यस्य तविषी पनीयसी **मा** भूत् । यद्यपि मानुषबलेन शत्रुजयः सम्भवेत् तथापि तत् मायाख्यानृतप्रज्ञावशंवदत्वात् न स्पृहणीयं स्तुत्यं भवति, तादृशेन मानुषबलेन जयो मा भूत्, अतः तद्बलं स्तुत्यं न भवति, मा भूच्च । मारुतबलमेव जयप्रदं स्यात् अतः स्तुत्यम् । स्थिरा, आयुधा उभयोः शेर्लोपः । पराणुदे- णुद प्रेरणे क्विप्, उपसर्गादिसमासेऽपि णत्वम् । वीळु वीळूनि, विभक्तेर्लुक् । प्रतिष्कभे-स्कम्भुः सौत्रो धातुः, सम्पदादिलक्षणो भावे क्विप् । पनीयसी- पनतिः स्तुतिकर्मा, औणादिकः असुन्, तत ईयसुनि टेर्लोपः, ङीप् । मायिनः-मत्वर्थीय इनिः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**परा॑ ह॒ यत् स्थि॒रं ह॒थ नरो॑ व॒र्तय॑था गु॒रु । वि या॑थन व॒निनः॑ पृथि॒व्या व्याशाः॒ पर्व॑तानाम् ।। ३ ।।**

परा॑ । ह॒ । यत् । स्थि॒रम् । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु । वि । या॒थ॒न॒ । व॒निनः॑ । पृथि॒व्याः । वि । आशाः॑ । पर्वतानाम् ।। ३ ।।

## ऋग्भाष्यम्

**स्थिरं चाज्ञानपापादि तद्भक्ताय पराहथ ।**
**गुरूनपि नरान्नित्यं गुणैर्वर्तयथांजसा ।**
**पर्वतानां पृथिव्याश्च दिशो नित्यं वियाथन ।**
**वनिनश्च तरून्सम्यग्भजनीयान्सुरान्हरिः ।। ३ ।।**

**ऋग्भाष्यटीका– परा** । स्थिरं च । हे मरुतो यूयं यत्स्थिरं दीर्घकालमनाद्यज्ञानपापादि तच्च । भक्ताय युष्मद्भक्तस्य । **पराहथ ह** विनाशयथ । किंच । **गुरु** गुरूनुत्तमानपि । **नरो** नरान् पुरुषान्नित्यमंजसा गुणैर्गुणान् दत्वा । **वर्तयथ** । किंच । यूयं **वनिनो** वनसम्बन्धिनस्तरून् **वियानथ** विशेषेण याथ । **पर्वतानां** पृथिव्याश्चाशा दिशः पर्यंतान्नित्यं वियाथन । युष्माकमगम्यं नास्तीति । विष्णुपक्षे वनिन इत्यस्यार्थान्तरमाह ।। **सम्यगिति** ।। **हरिर्वियाति** ।। वनतेः कर्मणीन् । पृथिवीपर्वतशब्दौ तु प्रागेव व्याख्यातौ ।। ३ ।।

**मन्त्रार्थमञ्जरी–** हे मरुतो यूयम् यत् । स्थिरम्, दीर्घकालम्, अनाद्यज्ञानपापादि । तच्च भक्ताय, युष्मद्भक्तस्य । **पराहथ,** विनाशयथ । ह किं च । गुरु, गुरून्, उत्तमान् । अपि नरः, नरान् पुरुषान् । नित्यमञ्जसा गुणान्दत्त्वा वर्तयथ । किं च यूयम् वनिनः, वनसम्बन्धिनः, तरून्, हरिपक्षे वनिनः, भजनीयान्, सुरान्प्रति इत्यर्थः, वनतेः कर्मणीनिप्रत्ययः । **वि याथन,** विशेषेण याथ, गच्छथ । पर्वतानाम् पृथिव्याः च । **आशाः,** दिशः, पर्यन्तान् । नित्यम् वि याथन युष्माकमगम्यं नास्ति इति भावः । पृथिवीपर्वतशब्दौ हरिपक्षे प्रागेव व्याख्यातौ ।। ३ ।।

**स्कन्द– परा** इत्युपसर्गः **हथ** इत्याख्यातेन सम्बन्धयितव्यः । हशब्दः पदपूरणः । **यत् स्थिरम्** अविचलं स्वस्मात्प्रदेशात् चालयितुमशक्यम् यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तद् यूयं परा हथ स्वप्रदेशस्थितं मुष्टिभिश्चूर्णयथ । हे **नरः**! मनुष्याकारा मरुतः! यत्तु स्वस्मात् । प्रदेशाच्चालयितुमशक्यं तत् **वर्तयथ** गमयथ । प्रलोपयथेत्यर्थः । **गुरु** गुर्वपि । दुष्प्रलोपमपीत्यर्थः । किञ्च **वि याथन** विगच्छथ । लङ्घयथेत्यर्थः । किम् । **वनिनः** वृक्षान् । कुतः । **पृथिव्याः** पृथिवीतः । भूमितः उड्डीय वृक्षानपि लङ्घयथेत्यर्थः । न च पृथिवीत एव केवलातः ।

किं तर्हि । **व्याशाः** 'आशाः' (निघ.१,६) इति दिङ्नाम । दिशोऽपि विगच्छथ **पर्वतानाम्** सम्बन्धिनीः । कः पुनः पर्वतानां दिग्भिः सम्बन्धः । दिक्षु पर्वता व्यवतिष्ठन्ते । अथवा पर्वतानामिति द्वितीयार्थे षष्ठी । दिशः पर्वतांश्च विगच्छथ इति । ऊर्ध्वं तिर्यक् च लङ्घनसमर्थाः स्थेत्यर्थः । अथवा वियाथनेति यातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । विगमयथ वनिनः पृथिव्याः । भूमितः वृक्षान् उत्खनयथेत्यर्थः । व्याशाः पर्वतानाम् आशाशब्द इच्छावचनः । पर्वत इत्यपि मेघनाम (तु.निघ.१,१०) । अस्माभिर्वर्षितव्यमित्येवंरूपा आशा मेघानां विगमयथ । नाशयथेत्यर्थः ।। ३ ।।

**वेङ्कटमाधव– परा** हथ यदा **स्थिरम्** पर्वतादिकम्, यदा वा **नरः** । गुरुभारमपि शिलादिकं तृणमिव चलयथ, तदा **पृथिव्याः** वृक्षाणां मध्येन गच्छथ, तथोपरि च **पर्वतानाम्** दिशः मध्येन गच्छय विविश्नन्तः ।। ३ ।।

**मुद्गल– हे नरः!** नेतारः! मरुतः! **यत्** यदा **स्थिरम्** वस्तु **परा हथ** वृक्षादिकं **पराहतं** भग्नं कुरुथ । गुरु गुरुत्वोपेतम् पाषाणादिकं **वर्तयथ** प्रेरयथः । तदानीं **पृथिव्याः** सम्बन्धिनः **वनिनः** वनवतो वृक्षान् **वि याथन** वियुज्य मध्ये गच्छथ ह । अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वात् इतरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति खलु । तथा **पर्वतानाम् आशाः** पर्वतपार्श्वदिशः वि याथन वियुज्यमानाः गच्छथ ।। ३ ।।

**सायण–** हे **नरः** नेतारो मरुतः **यत्** यदा **स्थिरं** वस्तु **परा हथ** वृक्षादिकं पराहतं भग्नं कुरुथ । **गुरु** पाषाणादिकं गुरुत्वोपेतं **वर्तयथ** प्रेरयथ । तदानीं **पृथिव्याः** **सम्बन्धिनः** **वनिनः** वनवतो वृक्षान् **वि याथन** वियुज्य मध्ये गच्छथ । अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वादितरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति । तथा **पर्वतानाम् आशाः** पर्वतपार्श्वदिशः **वि** याथन वियुज्य गच्छथ । हथ । 'हन हिंसागत्योः' । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः । यद्वृत्तयोगादनिघातः । नरः । पादादित्वात् आमन्त्रितनिघाताभावः । वर्तयथ । अदुपदेशात् लसार्वधातुकानुदात्तत्वे णिचः स्वर एव शिष्यते । यच्छब्दानुषङ्गात् निघाताभावः । याथन । 'तप्तनप्तनथनाश्च' इति थनादेशः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **नरः** नेतारः मरुतः, **यत्** यदा **स्थिरम्** वस्तु **परा ह हथ** पराहतं कुरुथ,

**गुरु** दुर्भरं अलघु वस्तु **वर्तयथ** प्रेरयथ तदा **पृथिव्याः** सम्बन्धिनः **वनिनः** वनवतः पृथिवीरुहान् **वियाथन** वियुज्य गच्छथ, **पर्वतानाम्** सानुमतां **आशाः** पार्श्वदिशः **वि** वियाथनेति सम्बन्धः । अत्र 'स्थिर' वृक्षादिकं 'गुरु' पाषाणादिकं इति मन्यते सायणः । मन्त्रे तु रहस्यार्थद्योतनाय 'इदं स्थिरं इदं गुरु' इत्यनुक्त्वा, उतरार्धे च स्थिरा पृथिवी गुरवः पर्वता इति पूर्वार्धश्रुतस्थिर-गुरुशब्दक्रमानुसारेण बोधनीयतया विसृष्टम् । एवं मरुतां पृथिव्यां अन्नमयभुवि प्रवेशः अन्नमयशरीरसंभूतानां वननीयानां सुखानां द्वारेण साध्यो भवति । ततः उपर्युपरि अवस्थितैः पर्वभिः युक्तानां पर्वतानां आशाः प्रदेशाः अन्नमयप्राणमयाद्याः ऊर्ध्वकक्ष्याः मरुद्भिः प्रवेश्या भवन्ति । याथन-थनादेशः । अन्ये च गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**नहि वः शत्रुर्विविदे अधि द्यवि न भूम्यां रिशादसः । युष्माकमस्तु तविषी तना युजा रुद्रा(द्रा)सो नू चिदाधृषे ।। ४ ।।**

**नहि । वः । शत्रुः । विविदे । अधि । द्यवि । न । भूम्याम् । रिशादसः ।। तना । युजा । रुद्रा (द्रा) सः । नु । चित् । आऽधृषे ।। ४ ।।**

## ऋग्भाष्यम्

**भूमौ दिवि च वः शत्रुः क्वचिन्नैव हि लभ्यते ।**
**रिशादसः सुसुखिनः सुखेन शमदन्ति यत् ।**
**बलं तेजोऽपि वो ह्यस्ति व्याप्तानित्यतया युजा ।**
**अद्याप्याधर्षणायैव निखिलाशुभसन्ततेः ।। ४ ।।**

**ऋग्भाष्यटीका– न हि वः** । भूमौ । हे **रिशादसः** सुसुखिनः । कुत एतल्लभ्यते । यद्यस्मात्सुखेन धनार्जनाद्यायासेन विना शं सुखं मदन्त्यनुभवन्ति तस्मात् । **वो** युष्माकम् । **द्यवि** दिवि स्वर्गे । **शत्रुः** शातयिता । **नाधिविविदे** नैव लभ्यते । **भूम्यां** भूमौ च नाधिविविदे । उपलक्षणमेतत् । क्वचिच्च नैव लभ्यते । कुतः । हे **रुद्रासो** रुद्रा रुजां द्रावका मरुतो युष्माकं **वो नू चित्** । अद्यापि सदेति यावत् । **आधृषे** निखिलाशुभसन्ततेराधर्षणायैव । सकलदैत्य-निबर्हणाय । **तना** व्याप्ता । कथं नित्यतया । **युजा** योगेन सहिता । **तविषी** बलं तेजोऽपि वोऽस्तु अस्ति हि ।। ४ ।।

**मन्त्रार्थमञ्जरी–** हे **रिशादसः,** सुसुखिनः, रमेः भावे डिः, रिणा सुखेन साधनार्जनाद्यायासेन विना शं सुखमदन्त्यनुभवन्तीत्यत्तेः असुन् । **वः,** युष्माकम् । **द्यवि,** दिवि, स्वर्गे । **शत्रुः,** शातयिता । **नहि अधि** विविदेः, नैव लभ्यते । **भूम्याम्,** भूमौ । च न अधि विविदे उपलक्षणमेतत् कचिच्च नैव लभ्यते कुतः ? हे रुद्रा (द्रा) सः रुद्रा (द्राः) **रुजां,** द्रावकाः मरुतः युष्माकम् । **नु चित्,** अद्यापि, सर्वदेति यावत् । **आधृषे,** निखिला (शुभ) घसंततेराधर्षणायैव, सकलदैत्यनिबर्हणाय । **तना,** व्याप्ता । कथम् ? नित्यतया युजा, योगेन सहिता । **तविषी,** बलम्, तेजो वा । **अस्तु,** अस्ति । हि ॥ ४ ॥

**स्कन्द– नहि वः शत्रुः** शातयिता **विविदे** विद्यते । **अधि द्यवि** दिव उपरि । द्युलोक इत्यर्थः । **न** अपि **भूम्याम् हे रिशादसः** । रिशिर्हिंसार्थः । असु क्षेपणे । रिशतोऽस्यन्तीति रिशादसः । हिंसितॄणां प्रति हिंसितार इत्यर्थः । तेषां सम्बोधनं हे रिशादसः । किञ्च **युष्माकम् अस्तु तविषी तना युजा** । 'तना' (निघ.२,१०) इति धननाम । युष्मदीयं बलं हविर्लक्षणेन धनेन युक्तम् अस्तु अस्मदीयं हविरुपभुङ्क्तामित्यर्थः । **हे रुद्रासः!** पितृशब्दोऽयं सोऽयमित्यभिसम्बन्धात् पुत्रेषु प्रयुक्तः । रुद्रपुत्रा इत्यर्थः । कुत एतत् । **'रुद्रस्य ये मीळ्हुष सन्ति पुत्राः'** (ऋ.६,६६,३) इत्यादिषु मरुतां रुद्रपुत्रत्वदर्शनात् । किमर्थम् । **नू चित् आधृषे** । 'नु' (निघ.२,१५) इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । क्षिप्रमस्मच्छत्रूणाम् धर्षणाय अभिभवाय । अथवा नू चिदाधृष इत्येतत् पूर्वानपेक्षं भिन्नमेव वाक्यम् । नूचिच्छब्दश्चात्र नशब्दस्यार्थे । **'नू चित् स भ्रेषते जनो न रेषन्'** (ऋ.७,२०,६) इति यथा । नाधृषे नाभिभवाय । कः । सामर्थ्याद् यूयम् । प्रकृतत्वाद्वा तविष्याः युष्मदीया तविषी । यूयं युष्मदीयं वा बलं न कुतश्चिदभिभवं प्राप्नुथेत्यर्थः ॥ ४ ॥

**वेङ्कटमाधव– नहि वः शत्रुः** ज्ञायते स्वर्गे, न च **भूम्याम्** रिशतामसितारः । **युष्माकम् अस्तु** बलं हविर्लक्षणेन धनेन सहायेन **रुद्रपुत्राः** क्षिप्रं शत्रूणामाधर्षणाय ॥ ४ ॥

**मुद्गल–** हे **रिशादसः!** शत्रुहिंसका मरुत अधि द्यपि द्युलोकत्वोपरि व युष्माकम् शत्रु नहि विविद न च बभूव । तथा भूम्याम् अपि शत्रु न वभूय । हे रुद्रास! रुद्रपुत्रा भरत । युष्माकम् एवोनपञ्चाशत्संख्याना मवताम् युजा योगेन परस्परैकमत्येन आधृषे वैरिणा सर्वतो धर्षणाय तविषी बलम् नू चित् क्षिप्रमेव तेना सुविस्तृता अस्तु भवतु ॥ ४ ॥

**सायण–** हे रिशादसः शत्रुहिंसकाः मरुतः । **अधि द्यवि** द्युलोकस्योपरि **वः** युष्माकं **शत्रुः नहि विविदे** न च बभूव । तथा **भूम्याम्** अपि शत्रुः **न बभूव** । हे **रुद्रासः** रुद्रपुत्राः । मरुतः **युष्माकम्** एकोनपञ्चाशत्संख्यानां भवतां **युजा** योगेन परस्परैकमत्येन **आधृषे** वैरिणां सर्वतो धर्षणाय **तविषी** बलं **नू चित्** क्षिप्रमेव **तना अस्तु** विस्तृता भवतु । विविदे । 'विद सत्तायाम्' । लिटि प्रत्ययस्वरः । द्यवि नहि विविदे भूम्यां च न विविदे इति चशब्दार्थप्रतीतेः 'चादिलोपे विभाषा' इति प्रथमायाः तिङ्विभक्तेर्निघातप्रतिषेधः । प्राथम्यं च अनुषक्तक्रियापेक्षया । रिशादसः । 'रिश हिंसायाम्' । रिशन्ति हिंसन्तीति रिशाः । इगुपधलक्षणः कः । तान् अदन्तीति रिशादसः । असुन् आमन्त्रित निघातः । युजा । 'युजिर् योगे' । 'ऋत्विक्' इत्यादिना किन् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । रुद्रासः । रुद्रशब्देन तत्संबन्धिनो मरुतो लक्ष्यन्ते । 'आज्जसेरसुक्' । नू चित् । 'ऋचि तुनुघ' इत्यादिना दीर्घः । आधृषे । ञिधृषा प्रागल्भ्ये । संपदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **रिशादसः** हिंसकानां भक्षकाः शत्रुनाशनाः, **अधि द्यवि** द्युलोकस्योपरि **वः** युष्माकं **शत्रुः नहि विविदे** न विद्यते, **न भूम्याम्** पृथिव्यामपि शत्रुर्न भवति । हे **रुद्रासः** रुद्राः रुद्रसम्बन्धिनः भयङ्कराः मरुतः, **युष्माकम्** गणात्मकानां सर्वेषां **युजा** योगेन परस्परसङ्गत्या **आधृषे** सर्वतः शत्रूणां धर्षणाय **तविषी** बलं **नु चित्** क्षिप्रमेव **तना अस्तु** विस्तृता भवतु, प्रकटिता भवतु । विविदे-विद सत्तायाम् लडथे लिट् । रिशादसः रिश हिंसायाम्, अद भक्षणे, रिशान् अदन्ति इति रिशादसः, असुन् । युजा युजिर् योगे किन् ऋत्विगित्यादिना । अन्ये गताः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्रवे॑पयन्ति॒ पर्व॑तान्विवि॑ञ्चन्ति॒ वन॒स्पती॑न् । प्रो आ॑रत मरुतो दु॒र्मदा॑ इव॒ देवा॑सः॒ सर्व॑या वि॒शा ।। ५, १८ ।।**

**प्र । वे॒प॒य॒न्ति॒ । पर्व॑तान् । वि । वि॒ञ्च॒न्ति॒ । व॒न॒स्पती॑न् । प्रो इति॑ । आ॒र॒त॒ । म॒रु॒तः॒ । दु॒र्मदाः॑ऽइव । देवा॑सः । सर्व॑या । वि॒शा ।। ५, १८ ।।**

## ऋग्भाष्यम्

प्रवेपयन्ति पर्वतान्विविंचन्ति वनस्पतीन् ।
जनिपर्ववतो जीवान्संप्रेरयति केशवः ।
भजनीयपतीन्ब्रह्मपूर्वांश्च फलदानतः ।
तारतम्येन सम्यक् च विवेचयति सर्वदा ।
सर्वपजास्वतिष्ठन्त प्राप्तास्ताभिस्सहैव च ।
मत्ता इव प्रेरयंति शुभाशुभकृतौ नरान् ।। ५, १८ ।।

**ऋग्भाष्यटीका– प्रवेपयन्ति** । मरुतो देवाः । **पर्वतान् प्रवेपयन्ति** कम्पयन्ति । वनस्पतींश्च **विविंचन्ति** मूलतः पृथक्कुर्वन्ति । विष्णौ पूर्वार्धं व्याख्याति ।। जनीति ।। तारतम्येन फलदानतः । किश्च मरुतः । **सर्वया विशा** ताभिः सर्वाभिः प्रजाभिः सहैव । आरतप्राप्ताः सङ्गताः । सर्वप्रजास्वतिष्ठन्तेति यावत् । किंच । **दुर्मदा इव** मत्ता इव स्वप्रयोजनानुसन्धानहीना एव । नरान् । शुभाशुभकृतौ प्रेरयन्तीति शेषः ।। ५ ।।

**मन्त्रार्थमञ्जरी– मरुतः । देवासः** देवाः । **पर्वतान् । प्र वेपयन्ति,** कम्पयन्ति । वनस्पतींन्, तरून् । च वि विश्चन्ति, मूलतः पृथक्कुर्वन्ति । किं च, मरुतः **सर्वया विशा,** सर्वाभिः प्रजाभिः सह । एव **प्रो आरत,** प्राप्ताः, संगताः, सर्वप्रजास्वतिष्ठन्तेति यावत् । किं च, दुर्मदा इव मत्ताइव, स्वप्रयोजनानुसन्धानहीना एव । नराञ्छुभाशुभकृतौ प्रेरयन्ति इति शेषः । विष्णुपक्षे तु **पर्वतान्,** जन्मपर्ववतो जीवान् । **प्र वेपयन्ति** (सं) प्रेरयन्ति । **वनस्पतीन्,** भजनीयपतीन्ब्रह्मादीन् । फलदानतस्तारतम्येन **वि विश्चन्ति** विवेचयन्ति । इति व्याख्या । शिष्टं प्राग्वत् ।। ५ ।।

**स्कन्द– प्रवेपयन्ति** कम्पयन्ति **पर्वतान्** मरुतः । **वि विश्चन्ति** विचिर् पृथग्भावे । पृथक् कुर्वन्ति । उत्खनन्तीत्यर्थः । कान् । **वनस्पतीन्** । प्रत्यक्षकृतः परोऽर्धर्चो भिन्नं वाक्यं पूवस्मादर्थर्चात् । **'प्रो आरत'** अर्तिर्गत्यर्थः । प्रागच्छत **हे मरुतः** ! मा च केवला एव । किं तर्हि । **सर्वया विशा** 'विशः' (निघ.२,३) इति मनुष्यनाम । सर्वया स्वपरिचारक-मनुष्यजात्या सह । सर्वैः परिचारकैः सहेत्यर्थः ।। ५ ।।

**वेङ्कटमाधव–** **प्र** कम्पयन्ति शिलोच्चयान्, पृथक् कुर्वन्ति वनस्पतीन् । इत्थं मधुमत्ता इव प्रगच्छथ देवाः! **मरुतः!** सर्वैः अनुचरैः सह ।। ५ ।।

**मुद्गल–** **पर्वतान्** मेरुहिमवदादीन् **प्र वेपयन्ति** मरुतः प्रकर्षेण कम्पयन्ति । **वनस्पतीन्** वटाश्वत्थादीन् **वि विश्रन्ति** परस्परवियुक्तान् कुर्वन्ति । **हे मरुतः** । **देवासः** । देवाः! **सर्वया विशा** प्रजया सहिता यूयम् **प्रो आरत** प्रकर्षेणैव सर्वतो गच्छथ । दृष्टान्तः । **दुर्मदाः इव** यथा मदोन्मत्ताः स्वेच्छया सर्वतः क्रीडन्ति तद्वत् ।। ५ ।।

**सायण–** **पर्वतान्** मेरुहिमवदादीन् **प्र वेपयन्ति** मरुतः प्रकर्षेण कम्पयन्ति । **वनस्पतीन्** वटाश्वत्थादीन् **वि विश्रन्ति** परस्परवियुक्तान् कुर्वन्ति । हे **मरुतः देवासः** देवाः **सर्वया विशा** प्रजया सहिता यूयं **प्रो आरत** प्रकर्षेणैव सर्वतो गच्छथ । तत्र दृष्टान्तः । दुर्मदा इव । यथा मदोन्मत्ताः स्वेच्छया सर्वतः क्रीडन्ति तद्वत् । वेपयन्ति । 'टुवेपृ कम्पने' । वेपमानान् प्रयुङ्क्ते । हेतुमण्णिच् । विश्रन्ति । 'विचिर् पृथग्भावे' । रुधादित्वात् श्नम् । श्नसोरल्लोपः इति अकार-लोपः। वनस्पतीन् । वनानां पतयो वनस्पतयः । पारस्करादित्वात् सुट् । वनस्पतिशब्दा-वाद्युदात्तौ । 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वम् । आरत । 'ऋ गतौ' । लङि मध्यमबहुवचने 'बहुलं छन्दसि' इति शपो लुगभावः । यद्वा लुङ् । 'सर्तिशास्त्यर्तिभ्यश्च' (पा.सू.३.१.५६) इति अङ् । 'आडजादीनाम्' इति आडागमः । 'आटश्च' (पा.सू.६.१.९०) इति वृद्धिः । देवासः । आमन्त्रिताद्युदात्तत्वम् । सर्वया । 'सर्वस्य सुपि ! (पा.सू.६.१.१९१) इत्याद्युदात्तत्वम् । विशा । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् ।।

**सिद्धाञ्जनम्–** **पर्वतान्** पृथिवीभृतः, रहस्यपक्षे प्रागुक्तलक्षणान् **प्रवेपयन्ति** प्रकर्षेण कम्पन्ति मरुतः । तथा **वनस्पतीन्** महीरुहान् **विविश्रन्ति** वियुक्तान् सान्तरान् कुर्वन्ति । अत्रापि 'परा ह यत्' इत्यत्र व्याख्यातमनुसन्धेयम् । हे **देवासः**, देवाः, हे **मरुतः**, **सर्वया विशा** प्रजया संयुक्ताः भूत्वा यूयं **दुर्मदा इव** मदोन्मत्ताः स्वेच्छाविहारिण इव **प्रो आरत** प्रकर्षेण गच्छत । युष्माभिर्युक्तैः सर्वैरपि भक्तैः सह परिश्रमं कुरुत प्राप्तव्यं प्रति । वेपयन्ति-वेपृ कम्पने-हेतुमण्णिच् । आरत-अर्तेः छन्दसि लोडर्थे लुङ् ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये अष्टादशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः । आवो यामाय पृथिवी चिदश्रोदबीभयन्त मानुषाः ।। ६ ।।

उपो इति । रथेषु । पृषतीः । अयुग्ध्वम् । प्रष्टिः । वहति । रोहितः । आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयन्त । मानुषाः ।। ६ ।।

## ऋग्भाष्यम्

अयुङ्ध्वं पृषतीश्चैव रोहितं पृष्ठतो रथे ।
वो यामं प्रतिदार्ढ्याय शेषमश्रेत्पुनर्धरा ।
भीतिमापुर्मानुषाश्च............... ।। ६ ।।

**ऋग्भाष्यटीका– उपो** । **अयुग्ध्वम्** । हे मरुतो यूयं रथेषु पृषतीरुपायुग्ध्वम् उपयोजितवन्त एव । **रोहितश्च प्रष्टिः** पृष्ठं वहति । रोहितं रथे पृष्ठतो योजितवन्त इति यावत् । तदा **वो** युष्माकम् । **यामाय** यामं गमनं प्रति । तत्सोढुमिति यावत् । **पृथिवीचित्** धरापि । दार्ढ्यायाऽऽश्रोत् पुनरतिशयेना‍ऽऽश्रेत् शेषमिति शेषः । श्रित्र उकारो गुणो विकरणलोपश्च छान्दसः । आश्रयत् । नञा निर्दिष्टमनित्यमित्यतो न पादादाविति प्रतिषेधो न भवति । किञ्च । **मानुषा** मनुष्याश्च **अबीभयन्त** अबिभयुः भीतिमापुः ।। ६ ।।

**मन्त्रार्थमञ्जरी– हे मरुतः** रथेषु पृषतीः । **उपो अयुग्ध्वम्,** उदयोजितवन्तः । रोहितः च **प्रष्टिः,** पृष्ठम् । **वहति,** रोहितं रथे पृष्ठतो योजितवन्त इति यावत् । तदा **वः,** युष्माकम् । यामाय, यामम्, गमनं प्रति, तत्सोढुमिति यावत् । पृथिवी चित्, धरापि । दार्ढ्याय **आ अश्रोत्,** पुनरतिशयेनाश्रे(श्रो)त् । स्वाधारभूतं शेषम् इति शेषः । श्रित्रः उकारो गुणो विकरणलोपश्च च्छान्दसः, आश्रयत् । किं च, मानुषाः, मनुष्याः । च । अबीभयुः, भीतिमापुः ।। ६ ।।

**स्कन्द– उपो रथेषु** उपो इत्येष निरित्येतस्य स्थाने । आख्यातेन सम्बन्धयितव्यः । स्वरथेषु **पृषतीः** पृषद्वर्णा बडवा उपो **अयुग्ध्वम्** इति । अस्मद्यज्ञागमनार्थं रथस्यैकस्य पृषतीः

निरयुग्ध्वम् । न च केवलाः । किं तर्हि । **प्रष्टिः वहति रोहितः** चतुर्वर्गस्य रथस्यैकस्यामेव धुरि यः पार्श्वे द्वितीयो नियुज्यते स प्रष्टिरित्युच्यते । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यः प्रष्टिर्वहति रोहितः लोहितवर्णः तं च । किं पुनः कारणम्, यत्तेनोह्यामहे । उच्यते । यस्मात् **आ वः यामाय** व इति षष्ठी । यामायेति यामशब्दो रथवचनः । **'विभुर्वा यामः'** (शु.१,१४,१) इति यथा । षष्ट्यर्थे चतुर्थी । तच्छब्दश्रुतेश्च शब्दमिति वाक्यशेषः । युष्माकं स्वभूतस्य गच्छतो रथस्य शब्दम् । **पृथिवी चित्** शब्दः पदपूरणः । समस्ता पृथिवी । **आ अश्रोत्** मर्यादया शृणोति । अतस्तं वयमपि शृणुमः इत्यर्थः । **अबीभयन्त** बिभ्यति युष्मत्तः यागमकुर्वन्तः अस्मद्विधाः **मानुषाः** । अथवा आ वो यामायेति व इति प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा.१,४,४०) इत्येवं सम्प्रदानत्वात् सम्प्रदाने चतुर्थी । यान्त्यस्मिन् देवा इति यामो यज्ञः । द्वितीयार्थेऽत्र चतुर्थी । युष्मभ्यं यज्ञं समस्ता पृथिवी आ अश्रोत् आशृणोति प्रतिजानीते । यस्मात् युष्मान् यक्ष्यामीत्येतन्न कश्चिन्नाभ्युपगच्छतीत्यर्थः । अतश्चान्यत्र व्यापृता मरुत कदाचिदस्मद्यज्ञं नागच्छेषुरपीत्येवमाशङ्किता युष्मदनागमनात् अबीभयन्त बिभ्यति अस्मद्विधा मानुषाः । यस्मादन्यव्यापृतानां युष्माकं स्वयज्ञेऽनागमनात् बिभेमि तस्माद्यत्नेन ब्रवीमि– न्ययुग्ध्वं पृषतीर्बडवाः प्रष्टिं च रोहितमिति समस्तार्थः ॥ ६ ॥

**वेङ्कटमाधव–** यूयम् **रथेषु पृषद्वर्णा अश्वाः** उपायुङ्ध्वम् । **प्रष्टिः** भूत्वा **वहति** रोहितवर्णः अश्वः तं चोपायुङ्ग्ध्वम् । आशृणोति भवताम् गमनाय पृथिवी । किं मरुत आगच्छन्तीति भयेन बिभ्यति च **मानुषाः** ॥ ६ ॥

**मुद्गल–** हे मरुतः! **रथेषु** भवदीयेषु **पृषतीः** बिन्दुयुक्ता मृगीः **उपो** सामीप्यनैव **अयुग्ध्वम्** योजितवन्तः । **प्रष्टिः** एतत्सञ्ज्ञको वाहनत्रयमध्यवर्ती युग्यविशेषः **रोहितः** मृगावान्तरजातिः लोहितवर्णः **वहति** रथं नयति । **वः** युष्माकम् **यामाय** गमनाय **पृथिवी चित्** अन्तरिक्षमपि **आ अश्रोत्** आभिमुख्येन अशृणोत् । अनुजानातीत्यर्थः । **मानुषाः** भूलोकवर्तिनः पुरुषाः **अबीभयन्त** स्वयं भीताः सन्तः अन्येषामपि भीतिमुत्पादितवन्तः ॥ ६ ॥

**सायण–** हे मरुतः **रथेषु** भवदीयेषु 'पृषतीः बिन्दुयुक्ता मृगीरूपो सामीप्येनैवायुग्ध्वम् । योजितवन्तः । प्रष्टिरेतत्संज्ञको वाहनत्रयमध्यवर्ती युगविशेषो रोहितो मृगावान्तरजातिर्लोहितवर्णो वहति । रथं नयति । वो युष्माकं यामाय गमनाय पृथिवी चित् अन्तरिक्षमप्यश्रोत् ।

आभिमुख्येनाश्रृणोत् । अनुजानातीत्यर्थः । पृथिवीत्यन्तरिक्षनाम । 'पृथिवी भूः स्वयम्भु' (नि.१.३.९) इति तन्नामसु पाठात् । 'मानुषाः' भूलोकवर्तिनः पुरुषाः अबीभयन्त । स्वयं भीताः सन्तोऽन्येषामपि भीतिमुत्पादितवन्तः । उपो इति निपातद्वयसमुदायात्मकमन्यन्निपातान्तरम् । ओत् (पा.सू.१.१.१५) इति प्रगृह्यत्वम् । **अयुग्ध्वम्** । लुङि 'झलो झलि' (पा.सू.८.२.२६) इति सकारस्य लोपः । 'चोः कुः' इति कुत्वम् । रोहितः । 'रुहे रश्च लो वा' (उ.सू.३.३७४) इति इतीतन्प्रत्ययान्तः । नित्त्वादाद्युदात्तः । यामाय । यमेर्भावे घञ् । 'कर्षात्वतः' इत्यन्तोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वम् । अश्रोत् । 'श्रु श्रवणे' । 'बहुलं छन्दसि' इति विकरणस्य लुक् । अबीभयन्त । 'ञिभी भये' । अस्मात् ण्यन्तात् लुङि भीस्म्योर्हेतुभये (पा.सू.१.३.६८) इत्यात्मनेपदम् । 'बिभेतेर्हेतुभये' (पा.सू.६.१.५६) इत्यात्वस्य विकल्पितत्वात् पक्षे 'भियो हेतुभये षुक्' (पा.सू.७.३.४०) इति षुक् प्राप्नोति । तत्र क्रियते । आगमानुशासनस्यानित्यत्वात् । णौ चङ्युपधाह्रस्वत्वादि (पा.सू.७.४.१) ।। ६ ।।

**सिद्धाञ्जनम्**– हे मरुतः, **रथेषु** युष्मदीयेषु **पृषतीः** बिन्दुमृगीः वाहनभूताः **उपो** समीपमेव **अयुग्ध्वम्** यूयं योजितवन्तः । **प्रष्टिः** वाहनत्रययुगमध्यवर्ती **रोहितः** लोहितवर्णः मृगविशेषः **वहति** नयति रथम् । **वः** युष्माकं **यामाय** गमनाय **पृथिवी चित्** पृथिव्यपि पृथुला भूमिः सर्वापि (अन्तरिक्षमिति एके) **आ** आभिमुख्येन **अश्रोत्** अशृणोत् शृणोति, तव गमनं प्रतिपालयतीत्यर्थः । **मानुषाः** पृथ्वीवर्तिनः पुरुषाः **अबीभयन्त** स्वयं भीताः भीतिमन्येषां जनयन्ति, तथाविधं वः प्रचण्डगमनम् । पृषत्यो मरुद्वाहा उक्ताः । अत्र तेषां त्रित्वं शरीरप्राणमनस्तत्त्वापेक्षयेति बोध्यम् । रोहितो लोहितवर्णस्तु क्रियाभोगसमर्थप्राणतत्त्वद्योतकं ज्ञेयम् । एवं मरुतां रोहितवाहत्वे प्राधान्यम् भवति ।। उपो-निपातद्वयम् । अयुग्ध्वम्-युजिर् योगे लुङ् । यामाय-यमेर्भावे घञ् । अश्रोत्-शृणोतेः, विकरणस्य लुक् छन्दसि । अबीभयन्त-ञिभी भये, ण्यन्ताल्लुङ् । भीस्म्योर्हेतुभये इत्यात्मनेपदम् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**आ वो मक्षू तनाय कं रुद्रा (द्रा) अवो वृणीमहे । गन्ता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ।। ७ ।।**

आ । वः । मक्षु । तनाय । कम् । रुद्राः । (द्राः)ः । अवः । वृणीमहे । गन्त । नूनम् । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ।। ७ ।।

## ऋग्भाष्यम्

..................क्षिप्रं वः प्राप्तये सुखम् ।
रक्षां वृणीमहे युष्मद्वंतायापि च नोऽवसा ।
भीतियुक्ताय कण्वाय मह्यम् .............।। ७ ।।

**ऋग्भाष्यटीका–** **आवः** । क्षिप्रम् । हे रुद्राः मरुतो वयम् । **वो** युष्माकं सकाशात् । कं सुखं सुखस्य । **तनाय** तनोतिरत्र प्राप्त्यर्थः प्राप्तये । **मक्षू** क्षिप्रम् । युष्मद्युष्माकम् । **आवो** रक्षाम् । **वृणीमहे** प्रार्थयामहे । तस्माद्यथा पुरा **बिभ्युषे** भीतियुक्ताय कण्वाय । मह्यमिति यावत् । गतवन्तः । गत्यर्थकर्मणीति चतुर्थी । इत्था तथैव । **नूनं** अद्यापि च । नोऽस्मान्प्रत्यवसा रक्षणेन । रक्षणं कुर्वन्त एव । **गन्त** आगच्छत ।। ७ ।।

**मन्त्रार्थमञ्जरी–** हे रुद्रा (द्राः) **मरुतः** वयम् वः, युष्माकं सकाशात् **कम्,** सुखम्, सुखस्य । **तनाय,** तनोतिः अत्र प्राप्त्यर्थः प्राप्तये । **मक्षु,** क्षिप्रम् । वः युष्माकम् । **अवः,** रक्षाम् । **आवृणीमहे,** प्रार्थयामहे । तस्मात् यथा पुरा । **बिभ्युषे,** भीतियुक्ताय । **कण्वाय,** मह्यमिति यावत् । गतवन्तः 'गत्यर्थकर्मणि' इति चतुर्थी । इत्था, तथैव नूनम्, अद्यापि च । **नः,** अस्मान्प्रति । **अवसा,** रक्षणेन, रक्षणं कुर्वन्त एव । **गन्त,** आगच्छत, गमेः विकरणलोपेन च्छत्वाभावश्छान्दसः ।। ७ ।।

**स्कन्द–** **वः** युष्माकम् स्वभूतम् **मक्षु** क्षिप्रम् इत्यर्थः । **तनाय** तनोत्यसाविति तनः पुत्रादिसन्तानः, तदर्थम् । अथवा 'तना' (निघ.२,१०) इति धननाम । धनार्थम् । **कम्** सुखं हे रुद्राः! रुद्रपुत्राः । मरुत । **अवः** पालनम् **आ वृणीमहे** प्रार्थयामहे । युष्माभिः पाल्यमाना पुत्रादिसन्तानं धनं वा प्राप्स्याम इत्येवमर्थं युष्मदीयं पालनं क्षिप्रं प्रार्थयामहे इत्यर्थः । अत एतत् ज्ञात्वा **गन्त** गच्छत । **नूनम्** इति पदपूरणः । नः 'गत्यर्थकर्मणि द्वितीया' (पा.२.३,१२) इत्येवमेषा कर्मणि चतुर्थी । एकवचनस्य स्थाने बहुवचनम् । मह्यम् । **अवसा** इत्थम्भूतलक्षणे' (पा.२,३,२१) इत्येवमेषा तृतीया । पालनेन सम्बद्धाः । **यथा पुरा** पूर्वेषु

कालेषु **इत्था** इत्थम् अमुतोऽन्तरिक्षात् **कण्वाय बिभ्युषे** आशङ्कितयुष्मदागमनभीताय । यथैव पुरा तद्वदिदानीमपि पालनहस्ता मां कण्वमाशङ्कित युष्मदागमनभीत प्रत्यमुतोऽन्तरिक्षादागच्छतेत्यर्थः ।। ७ ।।

**वेङ्कटमाधव– आ वृणामहे** युष्माकम् रुद्रपुत्राः । रक्षणम् पुत्राय । तथा सति गच्छत सम्प्रति अस्मान् रक्षणेन । **यथा पुरा** अन्येषामाह्वाने, एवम् **बिभ्युषे कण्वाय** गच्छतेति ।।

**मुद्गल–** हे रुद्राः! रुद्रपुत्राः! मरुतः । **तनाय कम्** अस्मदीयपुत्रार्थम् **मक्षु** शीघ्रम् **वः** युष्मदीयम् **अवः** रक्षणम् **आ वृणीमहे** सर्वतः प्रार्थयामहे । **पुरा** पूर्वस्मिन् काले कर्मान्तरेषु **नः अवसा** अस्मदीयरक्षणेन निमित्तेन यूयं यथा प्राप्तवन्तः, **इत्था** अनेन प्रकारेण **बिभ्युषे** भीतियुक्ताय **कण्वाय** मेधाविने यजमानाय तदनुग्रहार्थम् **नूनम्** क्षिप्रम् **गन्त** प्राप्नुत ।। ७ ।।

**सायण– हे रुद्राः** रुद्रपुत्राः मरुतः **तनाय** 'कं अस्मदीयपुत्रार्थं 'मक्षु शीघ्रं' वः युष्मदीयम् **अवः** रक्षणम् **आ वृणीमहे** सर्वतः प्रार्थयामहे । मक्ष्विति क्षिप्रनाम । 'नु मक्ष्विति (नि.२.१५.२) तन्नामसु पठितत्वात् । **पुरा** पूर्वस्मिन् काले कर्मान्तरेषु **नः अवसा** अस्मदीयरक्षणेन निमित्तेन यूयं **यथा** प्राप्तवन्तः **इत्था** अनेन प्रकारेण **बिभ्युषे** भीतियुक्ताय **कण्वाय** मेधाविने यजमानाय तदनुग्रहार्थं '**नूनं** क्षिप्रं **गन्त** प्राप्नुत ।। मक्षु । 'ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' इति दीर्घः । तनाय । तनोतीति तनः । पचाद्यच् । वृषादित्वादाद्युदात्तत्वम् । यद्वा । तनयशब्दे अय् इत्यस्य लोपश्छान्दसः । कम् इत्येतत् पादान्ते प्रयुज्यमानं पादपूरणं 'शिशिरं जीवनाय कम्' इतिवत् । उक्तं च– 'अथापि पादपूरणाः कमीमिद्विति' (निरु.१.९) इति । रुद्राः । रोदयन्तीति रुद्राः । 'रोदेर्णिलुक्च' (उ.सू.२.१७९) इति रक्प्रत्ययः । आमन्त्रिताद्युदात्तत्वम् । पादादित्वात् निघाताभावः । गन्त । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'तप्तनप्' इत्यादिना तबादेशः । अतः पित्वात् अनुनासिकलोपाभावः । बिभ्युषे । बिभेतेर्लिटः कसुः । 'वस्वेकाजाद्धसाम्' इति नियमात् इडभावः । चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' इति सम्प्रसारणम् । परपूर्वत्वम् । 'शासिवसिघसीनां च' इति षत्वम् ।। ७ ।।

**सिद्धाञ्जनम्– हे रुद्राः** रुद्रसम्बन्धिनो रुद्रकर्माणो मरुतः, **तनाय कम्** विततये, अस्मद्विकासविसरायेत्यर्थः (स्थूलपक्षे तनयाय पुत्राय) **वः** युष्मत्सम्बन्धि **अवः** वर्धनं **आ** सर्वतः

**मक्षु** क्षिप्रं **वृणीमहे** प्रार्थयामः । **यथा** येन प्रकारेण **पुरा** पूर्वं **नः** अस्माकं **अवसा** वर्धनेन निमित्तभूतेन यूयं प्राप्तवन्तः, **इत्था** अनेन प्रकारेण **बिभ्युषे** भीतियुक्ताय **कण्वाय** मेधाविने यजमानाय, एतन्नाम्ने मह्यं, अनुग्रहार्थं **नूनं गन्त** प्राप्नुत । मक्षु संहितायां दीर्घः । तनाय-तनु विस्तारे पचाद्यच् । कम् पादपूरणः । रुद्राः रोदयन्ति शत्रून्, रोदेर्णिलुक् चेति रक्प्रत्ययः । गन्त-लोटि शपो लुक्, तबादेशः अनुनासिकलोपाभावश्च छान्दसाः । बिभ्युषे-बिभेतेर्लिटः क्वसुः ।।

## ऋक्संहिता पदपाठसहिता

**युष्मेषितो मरुतो मर्त्येषित आयो नो अभ्व ईषते । वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः ।। ८ ।।**

**युष्माऽईषितः । मरुतः । मर्त्यऽइषितः । आ । यः । नः । अभ्वः । ईषते । वि । तम् । युयोत । शवसा । वि । ओजसा । वि । युष्माकाभिः । ऊतिऽभिः ।। ८ ।।**

## ऋग्भाष्यम्

**........................युष्माभिरेव च ।**
**प्रेरितोऽथ नियंतृत्वाद्युष्माकं मानुषेण वा ।**
**बाह्यदृष्ट्या त्वभूतीर्नो य इच्छति तमोऽजसा ।**
**बलेन च द्रावयत युष्मदीयोतिभिस्तथा ।। ८,९ ।।**

**ऋग्भाष्यटीका– युष्मेषितः** । युष्माभिः । हे **मरुतो** यो दुरात्मा युष्मेषितः युष्माकं सर्वस्य नियंतृत्वान्मुख्यो युष्माभिरेव चेषितः प्रेरितः । अथवा **मर्त्येषितः** बाह्यदृष्ट्या मर्त्येन मानुषेण राजादिना प्रेरितः सन् नोऽस्माकमभ्वः अभूशब्दोऽयं द्वितीयाबहुवचनान्तः । अभूतीरैश्वर्या-भावमा **ईषते** सम्यगिच्छति । तं यूयं **शवसा** सुखेन । वियुयोत द्रावयत वियोजयत । ओजसा बलेन च वियुयोत । तथा युष्माकाभिरूतिभिः युष्मदीयोतिभिः विः **युयोत** । युयु वियोगे ।।

**मन्त्रार्थमञ्जरी–** हे **मरुतः** । यः, दुरात्मा । **युष्मेषितः**, युष्माकं सर्वस्य नियन्तृत्वा-न्मुख्यतो युष्माभिरेव चेषितः प्रेरितः । अथ वा **मर्त्येषितः**, बाह्यदृष्ट्या मर्त्येन मानुषेण राजादिनेषितः प्रेरितः सन् । **नः**, अस्माकम् । **अभ्वः**, अभूशब्दोऽयं द्वितीयाबहुवचनान्तः,

**अभूतीः,** ऐश्वर्याभावान् । **आ ईषते,** सम्यगिच्छति । तम् यूयम् शवसा, सुखेन । **वि युयोत,** द्रावयत, वियोजनथ त **ओजसा,** बलेन । चं वि **युयोत** तथा युष्माकाभिः ऊतिभिः, युष्मदीयोतिभिः । वि युयोत 'युयु वियोगे' ॥ ८ ॥

**स्कन्द–** हे मरुतः ! **युष्मेषितः मर्त्योषितः** युष्मत्प्रेषितो मर्त्यप्रेषितो वा आ यः न अभ्व महन्नामैतत् (तु.निघ.३,३) । महान् आ ईषते 'ईषति फणति' इति गतिकर्मसु पाठात् गत्यर्थोऽयम् (तृ.निघ.२,१४) । आगच्छति । कः । सामर्थ्यात् हिंसिता । **वि तम् युयोत** यौतिः पृथग्भावार्थः पृथक् कुरुत । तमस्मत्तोऽपनयतेत्यर्थः । केन । **शवसा** सेनालक्षणेन । वि तम् ओजसा युयोत । **वि युष्माकाभिः ऊतिभिः** यौष्माकीणैः पालनैश्च वियुयोत । किञ्चित् सेनालक्षणेन बलेन, किञ्चित् स्वशरीरबलेन, किञ्चित् पालनमात्रेणैवेत्यर्थः ॥ ८ ॥

**वेङ्कटमाधव–** युष्माभिः प्रेषितः **मरुतः!** मर्त्यैर्वा प्रेषित **यः** महान् अस्मान् **आ** हिनस्ति, **तम्** यूयं **शवसा** अस्मत्तः पृथक् कुरुत, **ओजसा** च । तथा यौष्माकीणैः परिरणैश्च अस्मान् अवतेति ॥ ८ ॥

**मुद्गल–** हे मरुतः! यः यः कश्चित् **अभ्वः** शत्रुः **युष्मेषितः** युष्माभिः प्रेषितः **मर्त्येषितः** मारकैरन्यैर्वा प्रेषितः सन् **नः** अस्मान् प्रति **आ ईषते** आभिमुख्येन प्राप्नोति, **तम्** शत्रुम् **शवसा** अन्ने **वि युयोत** विभक्तं कुरुत । तथा **ओजसा** बलेन **वि** युयोत, **युष्माकाभिः ऊतिभिः** युष्मत्सम्बन्धिभिः रक्षणैश्च वि युयोत ॥ ८ ॥

**सायण–** हे 'मरुतः यः यः कश्चित् **अभ्वः** शत्रुः **युष्मेषितः** युष्माभिः प्रेषितः **मर्त्योषितः** मारकैरन्यैर्वा प्रेषितः सन् **नः** अस्मान् प्रति **आ ईषते** आभिमुख्येन प्राप्नोति, **तं** शत्रुं **शवसा** अन्नेन **वि युयोत** विभक्तं कुरुत । तथा **ओजसा** बलेन **वि** युयोत । युष्माकाभिरूतिभिः युष्मत्सम्बन्धिभिः रक्षणैश्च **वि** युयोत ॥ युष्मेषितः । युष्माभिरिषितः । सुब्लुकि प्रत्ययलक्षणेन 'युष्मदस्मदोरनादेशे' इति आत्वम् । न च 'न लुमताङ्गस्य' इति प्रतिषेधः, 'इकोऽचि विभक्तौ' (पा.सू.७.१.७३) इत्यत्र अजग्रहणेन तस्य पाक्षिकत्वोकेः । 'तृतीया कर्मणि' इति पूर्वपद-प्रकृतिस्वरत्वम् । मर्तेषितः । पूर्ववत् । अभ्वः । आभवतीत्यभ्वः शत्रुः । पृषोदरादित्वादभिमत-रूपस्वरसिद्धिः । ईषते । 'ईष गतिहिंसादर्शनेषु' । अदुपदेशात् लसावधातुकानुदात्तत्वे धातुस्वरः ।

युयोत । 'यु मिश्रणामिश्रणयोः' । लोण्मध्यमबहुवचने बहुलं छन्दसि इति शपः श्लुः । तप्तनप्तनथनाश्च इति तबादेशः । पित्त्वाद्गुणः । युष्मकाभिः युष्मत्सम्बन्धिनीभिः । तस्मिन्नणि च युष्मकास्माकौ (पा.सू.४.३.२) इति युष्मच्छब्दस्य युष्माकादेशः । ङीब्वृद्धी छान्दसत्वान्न क्रियते । ऊतिभिः । अवतेः क्तिनि ज्वरत्वर इत्यादिना ऊठ् । ऊतियूति इत्यादिना क्तिन उदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्–** हे मरुतः, **यः** यः कोऽपि **अभ्वः** बलेन महान्, बलाधिकः, **युष्मेषितः** युष्माभिः इषितः प्रेरितः, **मर्त्येषितः** मर्त्यैः मनुष्यैः प्रेरितो वा **नः** अस्मान् **आ ईषते** आभिमुख्येन प्राप्नोति अभिगच्छतीत्यर्थः, **तम्** युष्मदीयबलदर्पितं मानुषबलदर्पितं वा बलिनं **शवसा** दीप्तेन विसारिणा बलेन **वि युयोत** वियुक्तं कुरुत । तथा **ओजसा** देहधारणेन प्राणवलेन **वि** युयोत । तथा **युष्माकाभिः ऊतिभिः** युष्मदीयाभिः रक्षाभिश्च **वि** युयोत ॥ सायणस्तु **अभ्वः** शत्रुः पृषोदरादित्वादभिमतरूपस्वरसिद्धिरिति मन्यते । तथा भक्तैः सह योद्धुं भक्तान् प्रत्येकमभिभवितुं वा मरुतो देवाः शत्रून् प्रेषयन्तीति द्योतितो भावो वैरस्यमावहति अतात्त्विकश्च भवति । मनुष्यतपसो बिभ्यति असूयया देवाः, मनुष्याणां परीक्षायै शत्रून् प्रेषयन्तीत्यादिपुराणकथासु तत्त्वं किमपि अस्ति वेति नेह विचार्यते । इदं त्विह वक्तव्यम् । वेदे मरुतः अन्ये वा देवाः मनुष्यस्य सखायः, न शत्रवः, नापि प्रेषयन्ति शत्रुं मनुष्याभिभूत्यै ॥ युष्मेषितः युष्माभिरिषितः सुब् लुकि प्रत्ययलक्षणेन युष्मदस्मदोरनादेशे इत्यात्वम् । अभ्वः अभ्वं महन्नाम । ईषते-ईष गतिहिंसादर्शनेषु । युयोत-यु मिश्रणे अमिश्रणे च, लोण्मध्यमबहुवचने शपः श्लुः, तबादेशश्च । युष्माकाभिः युष्मच्छब्दस्य युष्माकादेशः, डीप् वृद्धिश्च न भवतः छान्दसत्वात् ॥

## ऋक्संहिता पदपाठसहिता

**असा॑मि॒ हि प्र॑यज्यवः॒ कण्वं॑ द॒द प्र॑चेतसः । असा॑मिभि॒र्मरुत॒ आ न॑ ऊ॒तिभि॒र्गन्ता॒ वृष्टिं॒ न वि॒द्युतः॑ ॥ ९ ॥**

**असा॑मि । हि । प्र॒ऽय॒ज्य॒वः॒ । कण्व॑म् । द॒द । प्र॒चे॒त॒सः॒ । असा॑मिऽभिः । म॒रु॒तः॒ । आ । नः॒ । ऊ॒तिऽभिः॑ । गन्त॑ । वृष्टि॑म् । न । वि॒ऽद्युतः॑ ॥ ९ ॥**

**ऋग्भाष्यटीका–** ओज इत्यादिनोत्तरमृग्द्वयं सङ्कीर्णं व्याचष्टे । तत्रायं विवेकः । **असामि**

हि । हे **प्रयज्यवः** यजतेः कर्मणि युः । प्रकर्षेणेज्याः मखेज्याः । **प्रचेतसः** प्रकृष्टचित्ता मरुतो यूयम् । **कण्वं** कण्वायासामि असममनुत्तमम् । ऽभीप्सितमिति शेषः । **दद** दत्त । असमशब्दः समाभावस्य वाचकः । उत्तमाभावस्तु कथं लभ्यत इत्यत उक्तम् । सममुत्तममिति । समशब्द उत्तमस्याप्युपलक्षक इत्यर्थः । किञ्च । **असामिभिः** समैः **ऊतिभिः** अभिप्रायैः । अस्मद्रक्षा-विषयानुत्तमाभिप्रायवन्तो यूयम् । विद्युतो वृष्टिमिव । क्षिप्रं नोऽस्मानागन्तागच्छत ।। ९ ।।

**मन्त्रार्थमञ्जरी–** हे **प्रयज्यवः** यजतेः कर्मणि युच्, प्रकर्षेणेज्याः । **प्रचेतसः,** प्रकृष्टचित्ताः । मरुतः यूयम् **कण्वम्,** कण्वाय । **असामि,** असमम्, 'अनुत्तमम्' इत्युपलक्ष्यम् । हि, एव अभीप्सितम् इति शेषः । **दद,** दत्त । किं च, **असामिभिः,** असमैः । **ऊतिभिः,** अभिप्रायैः, अस्मद्रक्षाविषयानुत्तमाभिप्रायवन्तो यूयम् । विद्युतः वृष्टिम् न वृष्टिमिव । क्षिप्रम्– **नः,** अस्मान् । **आ गन्त,** आगच्छत ।। ९ ।।

**स्कन्द–** सामि अर्धम् । न सामि **असामि** समग्रम् । किं तत् । सामर्थ्यात् धनम् । **प्रयज्यवः** । प्रकर्षेण यष्टव्या मरुतः । **कण्वम्** चतुर्थ्यर्थे द्वितीयैषा । मह्यं कण्वाय । **दद** दत्त । हे **प्रचतसः** प्रवृद्धज्ञानाः । किञ्च **असामिभिः** समग्राभिः **हे मरुतः! नः** अस्मान् **ऊतिभिः** पालनैः सम्बद्धा **आ गन्त** आगच्छत । समग्रपालनहस्ता अस्मान् प्रत्यागच्छतेत्यर्थः । कथम् । **वृष्टिम् न विद्युतः** यथा वृष्टिं मरुतो व्याप्नुवत्यो विद्युत आगच्छन्ति तद्वत् ।।९।।

**वेङ्कटमाधव–** प्रकर्षेण यष्टव्याः ! प्रकृष्टज्ञानाः । **कण्वम् हि** मह्यम् असाधारणं मनुष्येभ्यः पतिं हि दत्त । असाधारणैश्च पालनैः अस्मान् **आ** गच्छत, **वृष्टिम्** इव **विद्युतः** शीघ्रम् ।।

**मुद्गल– अमामि हि** सम्पूर्णमेव यथा भवति तथा **प्रयज्यवः!** प्रकर्षेण यष्टव्या ! **प्रचेतसः** । प्रकृष्टज्ञानयुक्ताः हे **मरुतः! कण्वम्** मेधाविनं यजमानम् **दद** धारयत । **हि** यस्मात् यूयं कण्वमृषिं धारितवन्तः, तस्मात् कारणात् **असामिभिः ऊतिभिः** सम्पूर्णै रक्षणैः नः अस्मान् प्रति **आ गन्त** आगच्छत । दृष्टान्तः । **वृष्टिम् न विद्युतः** यथा विद्युतो वृष्टिं गच्छन्ति तद्वत् ।।

**सायण– असामि हि** । सम्पूर्णमेव यथा भवति तथा **प्रयज्यवः** प्रकर्षेण यष्टव्याः प्रचेतसः प्रकृष्टज्ञानयुक्ता **हे मरुतः कण्वं** मेधाविनं 'यजमानमेतन्नामकमृषिं वा **दद** धारयत । हि यस्मात् यूयं कण्वनामकमृषिं धारितवन्तस्तस्मात् कारणात् **असामिभिः ऊतिभिः** सम्पूर्णैः रक्षणैः **नः**

अस्मान् प्रति **आ गन्त** आगच्छत । तत्र दृष्टान्तः । **वृष्टिं न विद्युतः** । यथा विद्युतो वृष्टिं गच्छन्ति तद्वत् । असामि । सामि अर्धं न सामि असामि । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । प्रयज्यवः । **प्रकर्षेण** यष्टव्याः । यजिमनिशुन्धिदसिजनिभ्यो युः (उ.सू.३.३००) इति कर्मणि युप्रत्ययः । आमन्त्रितनिघातः । दद । 'डुदाञ् दाने' । लोण्मध्यमबहुवचनस्य 'तिङां तिङो भवन्ति' (पा.म.७.१.३९) इति लङात्मनेपदप्रथमपुरुषबहुवचनादेशः । श्लौ द्विर्भावे सति 'श्नाभ्यस्तयोरातः' इति आकारलोपः । लोपस्त आत्मनेपदेषु' (पा.सू.७.१.४१) इति तलोपः । 'अतो गुणः' इति पररूपत्वम् । 'छन्दस्युभयथा' इति आर्धधातुकत्वात् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वं न भवति, किंतु प्रत्ययस्वर एव । 'हि च' इति निघातप्रतिषेधः । प्रचेतसः । प्रकृष्टं चेतो येषाम् । आमन्त्रितनिघातः । गन्त । गमेर्लोण्मध्यमबहुवचनस्य तस्य तबादेशः । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । पादादित्वात् निघाताभावः । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् । विद्युतः । विद्योतते इति विद्युत् । 'भ्राजभास' (पा.सू.३.२.१७७) इत्यादिना क्विप् ।। ९ ।।

**सिद्धाञ्जनम्– असामि हि** संपूर्णमेव यथा भवति तथा **प्रयज्यवः** प्रकर्षेण यष्टव्याः **प्रचेतसः** प्रकृष्टज्ञानाः हे **मरुतः, कण्वं** मेधाविनं, एतन्नामकं वा **दद** धारयत । **असामिभिः** पूर्णाभिः **ऊतिभिः** रक्षाभिः **नः** अस्मान् प्रति **आगन्त** आगच्छत । तत्र दृष्टान्तः **विद्युतः वृष्टिम् न** विद्युतो यथावृष्टिं गच्छन्ति तथा यूयमस्मान् आगच्छत । असामि न सामि, सामि अर्धम् । प्रयज्यवः-यजेः कर्मणि युप्रत्ययः । दद- डुदाञ् दाने लोण्मध्यमबहुवचनस्य लङात्मनेपदप्रथम-पुरुषवहवचनादेशः,आकारलोपादयश्छान्दसाः । प्रचेतसः-प्रकृष्टं चेतो येषां ते । विद्युतः-विद्योतते इति विद्युत् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शर्वः । ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम् ।। १०, १९, ३९ ।।**

**असामि । ओजः । बिभृथ । सुऽदानवः । असामि । धूतयः । शर्वः । ऋषिऽद्विषे । मरुतः । परिऽमन्यवे । इषुम् । न । सृजत । द्विषम् ।। १०, १९, ३९ ।।**

**मन्त्रार्थमञ्जरी–** हे **सुदानवः,** सुष्ठु दानशीलाः । **धूतयः,** रिपूणां कम्पकाः । मरुतः (यूयम्) **असामि,** असमम् । **ओजः,** बलम् । **बिभृथ** । असामि । **शवः,** सुखम् । च बिभृथ अतः **परिमन्यवे,** परिगतकोपाय । **ऋषिद्विषे,** दैत्याय, तं हन्तुम् । **इषुम् न,** शरमिव । द्विषम् प्रतिद्विषम् । **सृजत** ।। १० ।।

**स्कन्द– असामि ओजः** शारीरं बलम् **बिभृथ** धारयथ **हे सुदानवः!** दानुशब्दो दातृवचनो दानवचनो वा । शोभनदातारः । शोभनदानाः वा । न च केवलं शरीरमेव बलम् । किं तर्हि । **असामि हे धूतयः!** कम्पयितारः । शत्रूणाम् **शवः** सेनालक्षणमपि बलम् । द्विविधेनापि बलेन उपेताः स्थेत्यर्थः । यत एवम् अतो ब्रवीमि– **ऋषिद्विषे** मत्प्रभृतीनामृषीणां द्वेष्ट्रे हे **मरुतः! परिमन्यवे** 'मन्युः' (निघ.२,१३) इति क्रोधनाम । परिगतो मन्युर्येन स परिमन्युः, तस्मै परिमन्यवे क्रुद्धायेत्यर्थः । अथवा मन्युर्मन्यतेर्दीप्तिकर्मणः दीप्तिरत्रोच्यते । परिगतदीप्तये । स्वदीप्त्या ऐश्वर्यादिकया दीप्तायाऽपीत्यर्थः । **इषुम्** न यथा कश्चित् कस्मैचिदिषुं क्रुद्धः सृजेत् तद्वत् **सृजत** विसृजत क्षिपत । **द्विषम्** सर्वलोकद्वेष्टारम् । तमृषीणां द्वेष्टारं नित्यक्रुद्धम् ऐश्वर्यादिदीप्त्या वा दीप्तमपि सर्वलोकद्वेष्यं कुरुतेत्यर्थः ।। १० ।।

**वेङ्कटमाधव–** असाधारणं बलम् **बिभृथ** शोभनदानाः । असाधारणं वेगं च कम्पयितारः! 'कण्वं मां' यो द्वेष्टि तस्मै परितो मन्यमानाय शरम् इव द्वेषं विसृजतेति ।। १० ।।

**मुद्गल–** हे **सुदानवः** । शोभनदानोपेताः मरुतः ! **असामि** सम्पूर्णम् ओजः बलम् **बिभृथ** धारयथ । **हे धूतयः!** कम्पनकारिणो मरुतः । **असामि** सम्पूर्णम् **शवः** बलम् **परिमन्यवे** कोपपरिवृताय **ऋषिद्विषे** ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थम् **द्विषम्** द्वेषकारिणं हन्तारम् **सृजत** । दृष्टान्तः । **इषुम् न** यथा शत्रोरुपरि बाणं मुञ्चन्ति तद्वत् ।। १० ।।

**सायण–** हे **सुदानवः** शोभनदानोपेताः **मरुतः असामि** संपूर्णम् **ओजः** बलं **विभृथ** धारयथ । **हे धूतयः** कम्पनकारिणो मरुतः **असामि** सम्पूर्णम् **शवः** बलं **परिमन्यवे** कोपपरिवृताय **ऋषिद्विषे** ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थं **द्विषं** द्वेषकारिणं हन्तारं **सृजत** । तत्र दृष्टान्तः । **इषुं न** । यथा शत्रोरुपरि बाणं मुञ्चन्ति तद्वत् । अत्र निरुक्तम्- असामि सामि प्रतिषिद्धं सामि स्यतेः । असाम्योजो बिभृथा सुदानवः । असुसमासं बलं बिभृथ

कल्याणदानाः (निरु.६.२३) इति ।। बिभृथ । डुभृञ् धारणपोषणयोः । जुहोत्यादित्वात् श्लुः । 'भृञामित् ' इति अभ्यासस्य इत्वम् । ऋषिद्विषे । ऋषीन् द्वेष्टीति ऋषिद्विट् । 'सत्सूद्विष' इत्यादिना क्विप् । परिमन्यवे । मन्युना परिवृतः परिमन्युः । प्रादिसमासे 'परेरभितोभावि मण्डलम्' (पा.सू.६.२.१८२) इत्युत्तरपदान्तोदात्तत्वम् । इषुम् । 'इषु गतौ' । इष्यति गच्छतीति इषुः । 'इषेः किच्च' (उ.सू.१.१३) इति उप्रत्ययः । 'धान्ये नित्' इत्यनुवृत्तेः नित्त्वादाद्युदात्तत्वम् । सृजत । 'सृज विसर्गे' । विकरणस्य ङित्त्वात् गुणाभावः । द्विषम् । 'क्विप् च' इति क्विप् । 'उत्तिष्ठ' इत्यष्टर्चं पञ्चमं सूक्तं कण्वस्य आप बार्हतम् । युजः सतोबृहत्यः । अयुजो बृहत्यः । ब्रह्मणस्पतिदेवताकम् । अनुक्रम्यते च- उत्तिष्ठाष्टौ ब्राह्मणस्पत्यम् इति । सूक्तविनियोगो लैङ्गिकः । चतुर्विंशेऽहनि मरुत्वतीये प्राकृतात् ब्राह्मणस्पत्यात् प्रगाथात् पूर्वम् 'उत्तिष्ठ ब्रह्मणस्पते' इत्ययं प्रगाथः । 'मरुत्वतीये' इति खण्डे सूत्रितं– 'प्रैतु ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यावावपते पूर्वौ नित्यात् (आश्व.श्रौ.७.३) इति । आद्या तु प्रवर्ग्येऽप्यभिष्टवे विनियुक्ता । 'उत्तिष्ठ ब्रह्मणस्पत इत्येतामुत्त्वावतिष्ठते' (आश्व.श्री.४.७) इति सूत्रितत्वात् ।।

**सिद्धाञ्जनम्– हे सुदानवः** शोभनदानयुक्ताः, **मरुतः, असामि** पूर्णं **ओजः** बलं देहे प्राणधारणसमर्थं, **बिभृथ** धारयथ । हे **धूतयः** कम्पनकारिणः, **असामि** पूर्णं **शवः** अभितो विसारि दीप्तं बलं बिभृथ । **परिमन्यवे** क्रोधपरिवृताय **ऋषिद्विषे** मन्त्रदर्शिषु द्वेषं कुर्वते राक्षसादये मानुषाय वा जनाय, तद्विघातार्थं **द्विषम्** शत्रुं प्रतिवैरिणं **सृजत** मुञ्चत क्षिपत । **इषुम् न** बाणमिव, यथा शत्रोपरि वाणं मुञ्चति कश्चित् तद्वत् । परिमन्यवे-प्रादिसमासः, मन्युना परिवृतः । इषुम्-इष गतौ, इष्यति गच्छति लक्ष्यं प्रति । सृजत-सृज विसर्गे । द्विषम्-क्विप् । अन्ये गताः ।। १० ।।

।। इति प्रथमाष्टके तृतीयाध्याये एकोनविंशो वर्गः ।।

# ऋक्संहिता पदपाठसहिता

(सूक्तम् ४०)

८ कण्वो घौरः । ब्रह्मणस्पतिः । प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः ।

**उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १ ॥**

उत् । तिष्ठ । ब्रह्मणः । पते । देवऽयन्तः । त्वा । ईमहे । उप । प्र । यन्तु । मरुतः । सुऽदानवः । इन्द्र । प्राशूः । भव । सचा ॥ १ ॥

## ऋग्भाष्यम्

देवयन्तः पूजयन्तः स्तुवंतोऽतिकृताशनः ।
प्राशूः...................................॥ १ ॥

**ऋग्भाष्यटीका– उत्तिष्ठ** । अष्टर्चमिदं ब्रह्मणस्पत्यादिदेवताकं सूक्तम् । अत्र देवयन्तः प्राशूरिति पदद्वयं व्याख्याति ॥ **देवयन्त इति** ॥ दीव्यतेर्घञ् देवः पूजा स्तुतिर्वा । ततस्तत्करोतीति णिच् । अतिशयेन कृतमशनं भोजनमनेनेत्यतिकृतशनः प्राशूरुच्यते प्राश्नातीति । **हे ब्रह्मणस्पते** विष्णो वायो वा । अस्मान्प्रत्यागन्तुम् **उत्तिष्ठ** । यतो **देवयन्तो** वयं **त्वामीमहे** शरणम् । **सुदानवो** मरुतश्चास्मान् **उपप्रयन्तु** । **हे इन्द्र त्वं च** । **सचा** सुखेनैवास्मद्यज्ञस्य प्राशूर्भव ॥ १ ॥

**मन्त्रार्थमञ्जरी–** अथ 'उत्तिष्ठ' इत्याद्यष्टर्चं वर्गद्वयात्मकं ब्रह्मणस्पत्यादिदेवताकं षट्त्रिंशसूक्तवत् प्रागाथं चत्वारिंशं सूक्तम् । तत्र आद्याया ब्रह्मणस्पतिर्मरुत इन्द्रश्च देवताः हे **ब्रह्मणः पते**, विष्णो, वायो वा । उत् तिष्ठ । देवयन्तः दीव्यतेर्घञ्, देवः पूजा, स्तुतिर्वा, ततः 'तत्करोति' इति णिच् । वयम् **त्वा** त्वाम् । **ईमहे** शरणम् **सुदानवः** मरुतः चास्मान् **उप प्र यन्तु** । हे इन्द्र त्वं च **सचा**, सुखेन एवास्मद्यज्ञस्य **प्राशूः भव**, प्रकर्षेणाश्नातीति प्राशूरत्यन्तं कृतभोजनो भव, 'अश भोजने' ऊकारः ॥ १ ॥

**स्कन्द–** 'सूक्तम् उत् ब्राह्मणस्पत्यम्' (तु.बृदे.३,१०७) । सूक्तम् उत्तिष्ठ इत्येतत् ब्रह्मणस्पतिदेवताकम् । यास्त्वत्रान्या मरुदाद्या देवताः श्रूयन्ते, ब्रह्मणस्पतिना सह यौगिकत्वमात्र-

विज्ञानेन नैघण्टुक्यस्ता बोद्धव्याः । अस्मद्यज्ञमागन्तुम् **उत्तिष्ठ हे ब्रह्मणस्पते! देवयन्तः** देवानिच्छन्तो वयं त्वाम् **ईमहे** स्वयज्ञागमनं याचामहे । स्वयज्ञागमनमभ्यर्थयामह इत्यर्थः । त्वया च सह **उप प्र यन्तु मरुतः** अपि **सुदानवः** शोभनदातारः शोभनदाना वा । त्वमपि **हे इन्द्र! प्राशः** प्रकर्षेण क्षिप्रः **भव सचा** सह ब्रह्मणस्पतिना ।। १ ।।

**वेङ्कटमाधव– उत्तिष्ठ ब्रह्मणस्पते!** देवानिच्छन्तः त्वां याचामहे । त्वत्सहायाः **मरुतः** च उपगच्छन्तु सुदानाः । इन्द्र ! त्वं च क्षिप्रकारी भव सहायः ।। १ ।।

**मुद्गल–** उत्तिष्ठ इत्यष्टर्चं पञ्चमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । बृहती छन्दः । युजः सतोबृहत्यः । अयुजो बृहत्यः । ब्रह्मणस्पतिर्देवता ।

हे **ब्रह्मणस्पते!** देव! **उत्तिष्ठ** अस्मदनुग्रहाय त्वदीयनिवासात् उत्थानं कुरु । **देवयन्तः** देवान् कामयमाना वयम् **त्वा** त्वाम् **ईमहे** याचामहे । **सुदानवः** शोभनदानयुक्ताः **मरुतः उप प्र यन्तु** समीपे प्रकर्षेण गच्छन्तु । **हे इन्द्र!** त्वम् **सचा** ब्रह्मणस्पतिना सह **प्राशूः** सोमस्य प्राशकः भव ।। १ ।।

**सायण–** हे **ब्रह्मणस्पते** एतन्नामक देव **उत्तिष्ठ** अस्मदनुग्रहाय त्वदीयनिवासादुत्थानं कुरु । **देवयन्तः** देवान् कामयमाना वयं **त्वा** त्वाम् **ईमहे** याचामहे । **सुदानवः** शोभनदानयुक्ताः **मरुतः उप प्र यन्तु** समीपे प्रकर्षेण गच्छन्तु । हे **इन्द्र** त्वं **सचा** ब्रह्मणस्पतिना सह **प्राशूः** सोमस्य प्राशको **भव** । यद्वा वृत्रस्य हिंसको भव । उत्तिष्ठ । ऊर्ध्वकर्मत्वात् आत्मनेपदाभावः (पा.सू.१.३.२५)। ब्रह्मणस्पते । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । देवयन्तः । देवानात्मन इच्छन्तः । 'सुप आत्मनः क्यच्' । 'न च्छन्दस्यपुत्रस्य' इति ईत्वस्येव दीर्घस्यापि निषेधः, 'अश्वाघस्यात्' इति पुनरात्वविधान-सामर्थ्यात् । ईमहे इत्यादयो गताः । प्राशूः । 'शॄ हिंसायाम्' । प्रकर्षेण आ समन्तात् शृणाति हिनस्तीति प्राशूः । 'बहुलं छन्दसि' (पा.सू.७.१.१०३) इति उत्वम् । 'र्वोरुपधाया दीर्घः' । कृदुत्तरपदप्रकृतिस्वरत्वम् । भव । 'द्व्यचोऽतस्तिङः' इति संहितायां दीर्घत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** अथाष्टमेऽनुवाके पञ्चमं सूक्तम् अष्टर्चं कण्वास्यार्षं बार्हतम् । ब्रह्मणस्पति-देवताकम् । युजः सतोबृहत्यः अयुजो बृहत्यः । उत्तिष्ठेत्यस्य सूक्तस्य व्याख्यानात् प्राक् सूक्ते

प्रतिपादितां देवतामधिकृत्येषद् वक्तव्यम् । यद्यपि वेदे वर्णितानां देवतानां नामानि अग्नीन्द्रादीनि पुराणेष्वपि स्मृतानि भवन्ति, तथापि उभयत्र देवतानां स्वरूपव्यापारस्थानादिष्वस्ति भेदः । पुराणेषु वेदप्रतिपादितदेवतानां नामान्यपि कानिचिन्न श्रुतानि भवन्ति, येषामेकं ब्रह्मणस्पतिनाम । ब्रह्मणस्पतेस्तत्त्वे विचार्य निर्धारिते, अयमेव देवो वेषान्तरेण तान्त्रिकयोगप्रार्थितो मूलाधार-चक्रनिलयः परस्या वाचोऽधिदैवतं गणपतिरित्याराधितो योगिभिरित्यसंशयं भवति, एष एव गजमुख ओंकारवदनो गणपतिर्बहुनामतां भजते पुराणेषु । वेदवर्णितमिमं देवमधिकृत्य बहुभ्यो मन्त्रवर्णेभ्यः उद्धृतं सारांशमत्र ब्रूमहे ।

ब्रह्मणस्पतिः बृहस्पतिः ब्रह्मेति त्रीणि नामान्येकां देवतां निर्दिशन्ति । ब्रह्मा इति पुंल्लिङ्गोऽपि शब्दः प्रयुज्यते 'यस्मिन् ब्रह्मा राजनि पूर्व एति' (४.५०.८) 'ब्रह्मणे राजा तमवन्ति देवाः' (४.५०.६)। वेदे ब्रह्म मन्त्रो मन्त्रात्मिका वाक् च भवति । ब्रह्मा तस्याधिदैवतं भवति । वाक् स्रष्ट्री विश्वस्य । नैषा आद्या तीव्रतमस्पन्दना ब्रह्माण्डस्य स्थूलजगत एव निष्पादिका भवति, अपितु पिण्डाण्डे हृदये सहजावबोधाद्वा अन्तर्दृष्टस्यार्थस्य शब्दात्मकतया आविष्की शक्तिश्च भवति । एवमाविष्कृतोऽर्थवान् नादात्मा ब्रह्मपदवेदनीयो वेदमन्त्रो भवति । सैषा मूलतश्छान्दसी वाक्, यया विश्वसृष्टिरन्तर्बहिर्वा प्रवर्तिता अनवरतं प्रवर्त्यते चेति बोध्यम् ।।

यद्यपि चिन्मयमखण्डं 'स्वधया तदेकं' वेदान्तभाषया सच्चिदानन्दं परस्मिन् धामनि स्वतः स्वस्मिंश्च विश्वं धत्त एव, तथापि इह अधस्ताद्रात्रिपदलक्षिते तमसि तमसा गूढं सर्वं प्रविश्य अचित्तिभ्यः अप्भ्यः 'अप्रकेतात् सलिलात्' जगतोऽर्थानां उद्धाराय व्यक्ततामापाद्य स्वमहिम्ना यथायथं तानूर्ध्वमुन्नेतुमाविष्कुरुते । तथा आविष्कर्तृ प्रज्ञानं 'सुप्रकेतम्' च वागात्मकं ब्रह्मशब्देन व्यवह्रियते । एवं इत ऊर्ध्वं उद्यन्नात्मा यः पुरुषो मनुष्ये वर्तते, स ब्रह्मा भवति देवस्य पुरुषस्यैव तथा ज्ञानशक्त्यात्मना आविर्भावात् । देवस्यायं विभवो यदा ब्रह्मशब्दवाच्यो भवति, तदा वाचा प्रकाशितां पुरुषगतां दिव्यशक्तिं स विशेषतो लक्षयति, न तु वाचो वैशिष्ट्यस्य प्राधान्यम् । एष एव आविष्कृतस्वात्मशक्तिः दिव्यविभवः अन्नमयादूर्ध्वभूकक्ष्याः प्रबोधवति मानुषे पुरुषे निर्मिमाणो ब्रह्माख्या छन्दोमयी वागुच्यते, अस्याः पतिः बृहस्पतिः । अनेन नाम्ना स्रष्ट्र्याः वाचः प्राधान्यं विशेषतो द्योत्यते, न तु तथा सा देवशक्तिः या प्रागुक्तलक्षणाया वाचोऽप्याधारभूता भवति । एवमेक एव देवताविशेषः अंशद्वयबोधकत्वाद्धेतोः ब्रह्मबृहस्पतिनामभ्यां निर्दिश्यते ।

यद्यप्युभयोः सूक्ष्मो विशेषस्तत्र तत्र मन्त्रार्थानुसन्धानबलाद् ग्राह्यः, तथापि उभयोः एकदेवतानिर्देशकत्वं संबन्धकत्वं समीकरणं च ब्रह्मणस्पतौ युक्तानि भवन्ति । एवं त्रीणि नामानि एकां देवतामभिदधत इत्युक्तं भवति । इदं च गार्त्समदसूक्तेभ्यः (२.२३-२६) वामदेवसूक्तात् (४.५०) अन्यतश्च स्फुटं लक्ष्यते ।

बृहस्पतिर्ज्ञानगर्भितां छन्दोमयीं वाचं उत्तमपदप्रज्ञानाविष्कारिणीं देवेभ्यो दिशति विशेषत इन्द्राय । स हि राजा त्रैलोक्यदेवानां, दैव्यस्य मनसस्पतिः । आङ्गिरसतत्वविचारे बृहस्पतेराङ्गिरसत्वं इन्द्रसाहाय्यकारित्वादीनि चोक्तानि । यथा अग्नेर्मरुतां इन्द्रस्य वा कार्येषु अङ्गिरसां मुख्यं कृत्यं वर्ण्यते वेदेषु, तथा बृहस्पतेरपीति ज्ञेयम् । अत एव मरुद्भिः इन्द्रेण वा सह ब्रह्मणस्पतिः स्तूयते । ब्रह्मणस्पतिर्मनुष्यान्तः सुप्त इव स्थितः उत्थानाय प्रार्थ्यते प्रथममस्मिन् सूक्ते, तस्य ब्रह्मणो महिम्ना मरुतः सूनृता वाक् इन्द्रो मित्रो वरुणोऽर्यमेत्यन्ये च देवा यजमाने लब्धस्थाना भवन्ति, यजमानस्यान्तः स्वयं निवासं च धत्ते स देव इत्यादि चावगम्यते ।।

तस्यास्य सूक्तस्य प्रथमामृचमाह–

हे **ब्रह्मणस्पते** एतन्नामक देव, **उत्तिष्ठ** उत्थानं कुरु, त्वदीयगुप्तिस्थानात् व्यक्तीभूयोद्गच्छ । **देवयन्तः** देवकामाः वयं **त्वा** त्वां **ईमहे** प्रार्थयामहे । **सुदानवः** शोभनदानोपेताः **मरुतः उप प्रयन्तु** समीपे प्रकर्षेण गच्छन्तु । हे **इन्द्र, प्राशूः** प्रकर्षेण शीघ्रो **भव, सचा** ब्रह्मणस्पतिना सह गमनाय । प्राशूः-(सोमस्य) प्राशको (वृत्रस्य) हिंसको वेति सायणः । प्रकर्षेण शीघ्र इति उवटः । आशुशब्दे दीर्घश्छान्दस इति महीधरः । आशु विलम्बाभावमात्रे क्लीबं, तद्विशिष्टद्रव्यपरत्वे त्रिलिङ्गम् । तस्मात् शीघ्रो भवेत्येव गृहीतमस्माभिः । दीर्घस्तु छान्दसः । सोमप्राशनवृत्रवधप्रस्तावोऽत्र नोपपद्यते । ब्रह्मणस्पतेरुत्थाने अन्येषां देवानां तेन सह गमनं भवतीति हेतोः तेषां क्षिप्रगतिः प्रार्थ्यते ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**त्वामिद्धि स॑हसस्पुत्र॒ मर्त्य॑ उपब्रू॒ते धने॑ हि॒ते । सु॒वीर्यं॑ मरु॒त आस्वश्व्यं॒ दधी॑त॒ यो व॑ आच॒के ।। २ ।।**

**त्वाम् । इत् । हि । स॒ह॒सः॒ । पु॒त्र॒ । मर्त्यः॑ । उप॑ऽब्रू॒ते । धने॑ । हि॒ते । सु॒ऽवीर्य॑म् । म॒रु॒तः॒ । आ । सु॒ऽअश्व्य॑म् । दधी॑त । यः । वः॒ । आ॒ऽच॒के ।। २ ।।**

## ऋग्भाष्यम्

वायोः सुतेत्येव सहसस्पुत्र इत्यश ।
तद्व्यंग्यत्वाद्धरिः प्रोक्तः शक्रस्तत्सुत एव च ।
युद्धं हितधनं प्रोक्तं निहितं धनमेव वा ।
स्वश्व्यं तु स्विंद्रियफलमाचकेऽपश्यदित्यपि ।। २ ।।

**ऋग्भाष्यटीका– त्वामित्** । सहसस्पुत्रेत्येतत्सामान्यतो विशेषतश्च व्याचष्टे ।। **वायोरिति** ।। सहसस्पुत्रेत्यस्य वायोः सुतेत्येवार्थः । विवक्षितस्तु सन्धिर्भवतीति पुत्र इतीत्यसंहितो निर्देशः । अत्र व्युत्पादनापेक्षातीव नास्तीत्येवशब्दः । अथ तत्रापि हरिर्वायुना व्यंग्यत्वात्तत्पुत्रः प्रोक्तः । शक्रस्तु तत्सुत एव न तु तत्रोपचारबीजं चिन्त्यम् । धनेहित इत्यस्यार्थमाह ।। **युद्धमिति** ।। प्रोक्तम् इत्यनेन निघण्टुसिद्धतामाह ।। निहितं निधिरूपं धनमेव वाहितधनम् । स्वश्व्यमिति व्याचष्टे ।। **स्वश्व्यंत्विति** ।। शोभना अश्वा इन्द्रियाणि स्वश्वाः तेषामिदं स्वश्व्यम् । तच्च ज्ञानादि । आचक इत्यस्यार्थमाह ।। **आचक इति** ।। अनेकार्थत्वाद्धातूनां चक तृप्तावित्ययं दर्शनेऽपि वर्तते । अपीति क्रियाद्वयसमुच्चयसूचनार्थम् । हे सहसस्पुत्र । यो मर्त्यः त्वामेव हे मरुतो वो युष्मांश्च । **हिते धने** विषये । **उपब्रूते** स्तौति । **आचके** अपश्यच्च । स्वश्व्यं च । आसम्यक् **दधीत** धृतवान्प्राप्तवान्हि ।। २ ।।

**मन्त्रार्थमञ्जरी–** द्वितीयस्याः सहसस्पुत्रो मरुतश्च देवताः हे **सहसः पुत्रः**, वायुनाभिव्यङ्ग्यत्वात्सहसो वायोः पुत्र विष्णो, वायुजत्वात्सहसः पुत्रेन्द्र । यः मर्त्यः त्वाम् । इत्, एव । (हे) **मरुतः । वः** युष्मान् । च हिते धने । युद्धे निहिते निधिरूपे धने वा, विषये । **उपब्रूते** अतिस्तौति । **आचके,** अपश्यत् । 'चक तृप्तौ' इत्ययं धातुरत्र दर्शने वर्तते, अनेकार्थत्वाद्धातूनाम् । सः सुवीर्यम् । **स्वश्व्यम्,** शोभनाश्च तेऽश्वाश्च स्वश्वा इन्द्रियाणि, 'इन्द्रियाणि हयानाहुः' (का०उ०१।३।४) इति श्रुतेः, तेषामिदं स्वश्व्यं ज्ञानादि । आ **दधीत,** धृतवान्, प्राप्तवान् । हि, धाञः लङ्, अडभावः, तस्येडागमः ।। २ ।।

**स्कन्द– त्वाम्** अपि इन्द्र! **मर्त्यः उपब्रूते** आत्मानमेव कण्वः परोक्षरूपेण प्रतिनिर्दिशति– अयं कण्वनामा मनुष्य उपगम्य ब्रूते । अस्मदीयं यज्ञम् ब्रह्मणस्पतिना सह आगच्छेत्येतदभ्यर्थयत इत्यर्थः । **धने** हविराख्ये **हिते** निहिते । वेद्यां हविर्निधायेत्यर्थः । अथवा **धने हिते** इति

निमित्त **एषा** सप्तमी । प्रयोजनस्य च निमित्तत्वेन विवक्षा । धने हिते निमित्तभूते । हितं घनं लब्धुमित्यर्थः । एतत् ज्ञात्वा यज्ञमागात्य **सुवीर्यम् मरुतः आ स्वश्व्यम्** मरुत इति साहचर्यादनुक्रान्ताः ब्रह्मणस्पतिः मरुतः इन्द्रः सहसस्पुत्रः इत्येते चत्वारोऽपि प्रतिनिर्दिश्यन्ते । आकारः समुच्चये । स्वश्व्यमित्यस्माच्च परो द्रष्टव्यः । हे **मरुत्प्रभृतयः** । सुवीर्यं स्वश्व्यं च शोभनेन वीर्येणाश्वैश्चोपेतम् **दधीत** दधातिः दानार्थः । लोट् मध्यमपुरुषबहुवचनं चैतत् द्रष्टव्यम् । **दत्त** । कस्मै । **यः वः आचके** कामयते । योऽस्मदादिर्युष्मान् प्रार्थयत इत्यर्थः । अथवा दधीतेति दधातिः धारणे एव । लिङश्चैतदेकवचनम् । सुवीर्यं स्वश्व्यं च धनं दधीत धारयेत्, यो वः आचके इति । न चादत्तस्य धारण सम्भवतीत्यर्थात् दानमेवानेन प्रार्थ्यते इति ।।२।।

**वेङ्कटमाधव– त्वाम्** एव **सहसः** सूनो **मर्त्यः** उपस्तौति निहिते **धने** तद्रक्षार्थम् । मरुतः! यः युष्मान् आकामयते मर्त्यः, सः **सुवीर्यम् स्वश्व्यम्** च धारयेत् ।। २ ।।

**मुद्गल– हे सहसस्पुत्र** । बलस्य बहुपालकः ब्रह्मणस्पते! **मर्त्यः** मनुष्यः **हिते** शत्रुषु प्रक्षिप्ते धने निमित्तभूते सति **त्वाम् इत्** त्वामेव **उपब्रूते हि** समीपं प्राप्य स्तौति खलु । तद्धनसम्पादनाय प्रार्थयते इत्यर्थः । द्वे मरुतः! यः धनार्थी मर्त्यः मनुष्यः वः युष्मान् ब्रह्मण-स्पतिसहितान् **आचके** स्तौति स मर्त्यः **स्वश्व्यम्** शोभनाश्वयुक्तम् **सुवीर्यम्** शोभनवीर्ययुक्तं च धनम् **दधीत** धारयेत् ।। २ ।।

**सायण– हे सहसस्पुत्र** बलस्य बहुपालक ब्रह्मणस्पते । पुत्रः पुरु त्रायते निपरणाद्वा' (निरु.२...) इति निरुक्तम् । मर्त्यः मनुष्यः हिते शत्रुपु प्रक्षिप्ते' धने निमित्तभूते सति त्वामित् त्वामेव उपब्रूते हि । समीपं प्राप्य स्तौति खलु । तद्धनसंपादनाय प्रार्थयते इत्यर्थः । हे मरुतो यो धनार्थी मर्त्यो वो युष्मान् ब्रह्मणस्पतिसहितान् **आचके** स्तौति स मर्त्यः **स्वश्व्यं** शोभनाश्वयुक्तं 'सुवीर्यं शोभनवीर्ययुक्तं च धनं **दधीत** धारयेत् । **सहसस्पुत्र** । ब्रह्मणस्पते इतिवत् षष्ठ्याः पतिपुत्र' इति विसर्जनीयस्य सत्वम् । **उपब्रूते** । 'हिच' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम् । **हिते** । निष्ठायां 'दधातेर्हिः' इति हिरादेशः । **सुवीर्यम्** । शोभनं वीर्यं यस्येति बहुव्रीहौ 'वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वम् । **स्वश्यम्** । अश्वानां समूहोऽश्वीयम् । केशाश्वाभ्यां यञ्छावन्यतरस्याम् (पा.सू.४.२.४८) इति समूहार्थे

छप्रत्ययः । छस्य ईयादेशः । शोभनमश्वीयं यस्य तत् स्वश्व्यम् । ईकारलोपः छान्दसः । परादिश्छन्दसि बहुलम् इत्युत्तरपदाद्युदात्तत्वम् । **दधीत** । सीयुटः सकारलोपे सत्यभ्यस्तानामादिरित्याद्युदात्तत्वम् । पादादित्वात् निघाताभावः । आचके । कै गै रै शब्दे । 'आदेचः' इति आत्वम् । लिटि द्विर्वचनेऽभ्यासस्य ह्रस्वचुत्वे । 'आतो लोप इटि च' इति आकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । चतुर्विंशेऽहनि मरुत्वतीय उत्तिष्ठ ब्रह्मणस्पते इत्यस्मात्प्रगाथात्पूर्वं प्रैतु ब्रह्मणस्पतिरित्ययं प्रगाथो विनियुक्तः । सूत्रं तु 'उत्तिष्ठ ब्रह्मणस्पते' इत्यत्रैवोदाहृतम् । महावीरमादाय शालां प्रतिगच्छत्सु 'प्रैतु ब्रह्मणस्पतिः' इत्येतां पठन् होतानुगच्छेत् । सूत्रं च– प्रैतु ब्रह्मणस्पतिरित्यनुव्रजेत् (आश्व.श्री.४.७) इति । एषैव अग्नीषोमीयप्रणयनेऽपि विनियुक्ता । सूत्रितं च– प्रैतु ब्रह्मणस्पतिर्होता देवो अमर्त्यः (आश्व.श्री.४.१०) इति ॥

**सिद्धाञ्जनम्–** हे **सहसस्पुत्र**, बलस्य पुत्र ब्रह्मणस्पते ! सहसस्पुत्र इति अग्ने र्विशेषणं प्रसिद्धं वेदे । अवस्थाविशेषेषु अग्निसाहचर्यात् अग्निकार्यकारित्वात् अग्निविशेषणमुपपद्यते । एवमुत्तरत्र 'वज्रिणः' इति इन्द्रकार्यकारितया इन्द्रविशेषणं ब्रह्मणस्पतेः प्रयुक्तम् । मर्त्यः मनुष्यः हिते धने निहिते गुप्तं निक्षिप्ते धने गवाश्वादिरूपे चित्प्रकाशप्राणबलादौ प्राप्तव्यतया निमित्तभूते सति, **त्वामित्** त्वामेव **उपब्रूते हि** अन्तिके वक्तव्यं वक्ति खलु, लब्धव्यं धनं लम्भय नः इति प्रार्थयते हि । हे **मरुतः**, ब्रह्मणस्पतिसहायान् **वः** युष्मान् **यः** यो मर्त्यः **आ चके** स्तौति, सः **स्वश्व्यम्** शोभनाश्वयुक्तं **सुवीर्यम्** शोभनवीर्योपेतं च धनं **दधीत** धारयेत् । हिते-दधातेर्निष्ठायां हिरादेशः । सुवीर्यम्-शोभनं वीर्य यस्य तत् । स्वश्व्यम्-अश्वानां समूहः, समूहार्थे छप्रत्ययः । आचके- कै शब्दे लडर्थे लिट् ॥ २ ॥

## ऋक्संहिता पदपाठसहिता

**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ३ ॥**

प्र । एतु ब्रह्मणः । पतिः । प्र । देवी । एतु । सूनृता । अच्छ । वीरम् । नर्यम् । पङ्क्तिराधसम् । देवाः । यज्ञम् । नयन्तु । नः ॥ ३ ॥

## ऋग्भाष्यम्

**पतिस्तु ब्रह्मणो विष्णुर्वा गीशत्वात्समीरणः ।**
**अग्रतो यात्वसावस्मत्कार्येष्वेवं सरस्वती ।**
**सूनृता वैष्णवीवाग्वायज्ञं वीरं नरं प्रति ।**
**नयन्तु देवाः सर्वेऽपि यत्पञ्चजनवर्धनः ।**
**पङ्क्तिराधा हरिस्तेन वीरो नर्यस्स एव च ।**
**देव गन्धर्वनृपितृदैत्याः पञ्चजनाभिधाः ।। ३ ।।**

**ऋग्भाष्यटीका– प्रैतु** । अत्र ब्रह्मणस्पतिशब्दार्थं स्मारयति ।। **पतिस्त्विति** ।। तस्माद् ब्रह्मणस्पतिरिति शेषः । इदानीमृचं व्याख्याति । अग्रत इति । असौ ब्रह्मणस्पतिः प्रैतु अस्मत्कार्येष्वग्रतो यातु मुख्यसाधको भवतु । एवं सूनृता सूनृतवागभिमानिनी देवी सरस्वती । वैष्णवी विष्णोः सम्बन्धिनी वा । वागाज्ञारूपा **प्रैतु** । अन्येऽपि सर्वे देवा नोऽस्मदीयं यज्ञम् । **वीरं नर्यं** स्वार्थे प्रत्ययः । **नरं** पङ्क्तिराधसम् **अच्छ** प्रतिनयन्तु । कःपङ्क्तिराधाः । कथं चेत्यत आह ।। **यदिति** ।। पङ्क्तिशब्दः पञ्चपर्यायः । पङ्क्तिविंशतीति निपातनात् । पङ्क्तिपञ्चविधान् जनान्राधयतीति पङ्क्तिराधाः । अन्तर्णीतण्यर्थाद्राध्यतेरसुन् । वर्धनं सर्जनादि । वीरो नर्यश्च किं स एवोतान्य इत्यपेक्षायामाह ।। **वीर इति** ।। शब्दार्थौ तु स्फुटौ । पञ्चजनाः क इत्यत आह ।। **देवेति** ।। ३ ।।

**मन्त्रार्थमञ्जरी–** तृतीयस्या ब्रह्मणस्पतिः सूनृता देवी देवाश्च देवताः । असौ ब्रह्मणः पतिः, विष्णुः, वायुर्वा । **प्र एतु,** अस्मत्कार्येष्वग्रतो यातु, मुख्यसाधको भवतु । **सूनृता,** सूनृतवागभिमानिनी । देवी, सरस्वती, यद्वा विष्णुसम्बन्धिनी वागाज्ञारूपा । प्र एतु । अन्येऽपि सर्वे देवाः । **नः** अस्मदीयम् । **यज्ञम्** । वीरम् । **नर्यम्,** स्वार्थे यत्प्रत्ययः, **नरम्** । **पङ्क्तिराधसम्,** पङ्क्तिशब्दः पञ्चन्पर्यायः, 'पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्' इत्यादि निपातनात्, पङ्क्तिं पञ्चविधान्देव-गन्धर्वनृपितृदैत्यरूपजनान्राधयति सर्जनादिना वर्धयतीति पङ्क्तिराधाः, अन्तर्णीतण्यर्थाद्राध्यतेरसुन्, तं हरिम् । **अच्छ,** प्रति । **नयन्तु** ।। ३ ।।

**स्कन्द– प्र** एतु प्रकर्षेणागच्छतु **ब्रह्मणस्पतिः** । तेन च सह **प्र देवी** एतु **सूनृता** वाक् ।

किमर्थम् । **अच्छ** आप्तुम् **वीरम्** वीरर्त्विकर्तृकत्वात् वीरपुत्रफलत्वाद्वा वीरोऽत्र यज्ञ उच्यते । वीरकर्तृकं वीरपुत्रफलार्थं वा अस्मद्यज्ञम् । **नर्यम्** नृभ्यो हितम् । **पङ्क्तिराधसम्** राध साध संसिद्धौ । पङ्क्तिभिः राध्यते संसाध्यत इति पङ्क्तिराधाः सोमयागः । स हि चतसृभिः पङ्क्तिभिः संसाध्यते हविष्पङ्क्त्या अक्षरपङ्क्त्या नाराशंसपङ्क्त्या सवनपङ्क्त्या च । 'धानाः करम्भः परिवापः पुरोडाशः पयस्या इत्येषां हविष्पङ्क्तिः, 'सुमत्पद्वग्दे' इत्येषाऽक्षरपङ्क्तिः, 'द्विनाराशंसं प्रातस्सवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनम् इत्येषा नराशंसपङ्क्तिः, **'पशुरुपवसथे त्रीणि सवनानि पशुरनूबन्ध्य** इत्येषा सवनपङ्क्तिः । एताश्च 'यो वै यज्ञं हविष्पङ्क्तिं वेद' इत्युपक्रम्य ऐतरेयब्राह्मणे (२,२४) दर्शिताः । एताभिः साध्यमानत्वात् सोमयागः पङ्क्तिराधाः, तं पङ्क्तिराधसं ब्रह्मणस्पतिप्रसादात् देवाः अन्येऽपि देवाः आत्मसमीपम् **यज्ञम् नयन्तु नः** अस्माकं स्वभूतम् । अन्येऽपि यज्ञमाप्नुवन्तु इत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** प्रगच्छतु **ब्रह्मणस्पतिः** । प्र एतु **देवी** वाक् । अभिनयन्तु अस्माकम् बलयुक्तं नृभ्यो **हितम्** हविष्पङ्क्त्यादिभिर्ब्राह्मणविहिताभिः पङ्क्तिभिः समृद्धम् **यज्ञम्** देवाः ।।

**मुद्गल– ब्रह्मणस्पतिः** देवः **प्र एतु** अस्मान् प्राप्नोतु । **सूनृता देवी** प्रियसत्यरूपा वाग्देवता **प्र एतु** अस्मान् प्राप्नोतु । **देवाः** ब्रह्मणस्पत्यादयो देवताः **वीरम्** शत्रुं निःशेषेण दूरे प्रेरयन्तु । तम् **नर्यम्** मनुष्येभ्यो हितम् **पङ्क्तिराधसम्** ब्राह्मणोक्तहविष्पङ्क्त्यादिभिः समृद्धम् **यज्ञम्** प्रति **नः** अस्मान् **अच्छ** आभिमुख्येन **नयन्तु** ।। ३ ।।

**सायण–** ब्रह्मणस्पतिः देवः प्रैतु । अस्मात् प्राप्नोतु । 'सूनृता देवी प्रियसत्यरूपा वाग्देवता प्रैतु । अस्मान् प्राप्नोतु । 'देवाः ब्रह्मणस्पत्यादयो देवताः 'वीरं शत्रुं निःशेषेण दूरे प्रेरयन्तु । तं नर्यं मनुष्येभ्यो हितं पङ्क्तिराधसं ब्राह्मणोक्तहविष्पङ्क्त्यादिभिः समृद्धं यज्ञं प्रति 'नोऽस्मान् अच्छाभिमुख्येन नयन्तु ।। प्रैतु । 'एङि पररूपम्' (पा.सू.६.१.९४) इति पररूपे प्राप्ते 'एत्येधत्यूठ्सु' (पा.सू.६.१.८९) इति वृद्धिः । देव्येत्वित्वत्रोदात्तस्वरितयोर्यणः स्वरितोऽनु-दात्तस्य' इति स्वरितत्वम् । नर्यम् । नरेभ्यो हितम् । प्राक्क्रीतीय उगवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः (पा.सू.५.१.२)। पङ्क्तिराधसम् । पङ्क्तिभी राध्नोति इति पङ्क्तिराधाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' (उ.४.२२६) इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । **यज्ञम्** । यजया-चेत्यादिना यजतेर्नङ् ।। ३ ।।

**सिद्धाञ्जनम्–** **ब्रह्मणस्पतिः** देवः **प्रैतु** प्राप्नोत्वस्मान् । **सूनृता देवी** शुभसत्यरूपा वाग्देवता **प्रैतु** अस्मान् प्राप्नोतु । **देवाः** ब्रह्मणस्पतिप्रमुखाः **वीरम्** वीरवन्तमिति मतुबर्थे, वीर्ययुक्तमित्यर्थः **नर्यम्** नरेभ्यो नेतृभ्यो हितम् **पङ्क्तिराधसम्** पङ्क्तिसमृद्धं राधो यस्य तम्, बहुविध-धनसन्ततियुक्तमित्यर्थः, तादृशं **यज्ञम् नः** अस्मान् **अच्छ** आभिमुख्येन **नयन्तु** प्रापयन्तु । देवानां प्रसादाद्वयं उक्तलक्षणयज्ञसमृद्धाः स्यामेत्युक्तम् । पडक्तिभी राध्नोतीति पङ्क्तिराधास्तं पङ्क्तिराधसमिति सायणः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः । तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसम् ।। ४ ।।**

यः । वाघते । ददाति । सूनरम् । वसु । सः । धत्ते । अक्षिति । श्रवः । तस्मै । इळाम् । सुऽवीराम् । आ । यजामहे । सुऽप्रतूर्तिम् । अनेहसम् ।। ४ ।।

## ऋग्भाष्यम्

**वाघते स्तुवते विष्णुर्ददाति सूनरं वसु ।**
**सुष्ठु येन नरो भूयात्सूनरं ज्ञानमुच्यते ।**
**स धत्ते चाक्षयां कीर्तिमिळामन्नं यजामहे ।**
**सुवीर्यत्वात्सुवीरं तत्सुप्रतूर्तिः सुपेशकृत् ।**
**प्राणचेष्टा निमित्तत्वात्तदनेह इतीरितम् ।। ४ ।।**

**ऋग्भाष्यटीका– यः** । वाघते । यो ब्रह्मणस्पतिर्विष्णुः । **वाघते** स्तुवते भक्ताय । स्तुतिकर्मसु पाठात् । सूनरं वसु ददाति । किं तत्सूनरं कथं चेत्यत आह ।। **सुष्ठ्विति** ।। भूयाद्भवेत् । तज्ज्ञानम् । किंच यः स विष्णुर्वाघते । अक्षिति श्रवोऽक्षयां कीर्तिं च । **धत्ते** दत्ते । **तस्मै** विष्णवे । **सुवीरां** सुप्रतूर्तिमनेहसमिलामन्नं हविः । वयम् **आयजामहे** दद्मः । अन्ने सुवीरादिशब्दान्व्याख्याति ।। **सुवीर्यत्वादिति** ।। सुवीर्यहेतुत्वात् । शोभनं वीरं वीर्यं यस्मादिति । सुपेशकृत् सुरूपकृत् । प्रतूर्तिशब्दो रूपपर्यायः । पेशो वेगो वा । इलापेक्षया भाष्ये स्त्रीलिङ्गम् । अनानामीहायस्मादिति समासान्तो सिच् ।। ४ ।।

**मन्त्रार्थमञ्जरी–** (चतुर्थ्यां पञ्चम्यां च ब्रह्मणस्पतिर्देवता) **यः, ब्रह्मणः पतिर्विष्णुः । वाघते,** स्तुवते, भक्ताय । सूनरम् वसु, सुष्ठु भवति नरो येन तत्सूनरं वसुज्ञानम् । ददाति इति । किं च, यः सः विष्णुः । वाघते अक्षिति श्रवः, अक्षयां कीर्तिम् । च धत्ते । **तस्मै,** विष्णवे । **सुवीराम्** । शोभनं वीरं वीर्यं यस्याः भवति सा, तां सुवीरां सुवीर्यकृतिम् । **सुप्रतूर्तिम्,** प्रतूर्तिशब्दो रूपपर्यायः, सुष्ठु प्रतूर्तिर्यस्याः सा सुप्रतूर्तिः, तां सुरूपकृतिम् । **अनेहसम्,** अनानां प्राणानामिन्द्रियाणामीहा चेष्टा यस्याः सा, ताम्, समासान्तोऽसुन् । **इळाम्,** अन्नम्, हविः । आ **यजामहे,** दद्मः ।। ४ ।।

**स्कन्द– यः वाघते 'वाघतः'** (निघ.३,१८) इत्यृत्विङ्नाम । सामर्थ्याच्चेहान्तर्णीतमत्वर्थो यजमाने वर्तते । यो देवः वाघते ऋत्विग्वते यजमानाय **ददाति सूनरम्** शोभनैर्नरैरुपेतम् **वसु, सः धत्ते** धारयति **अक्षिति** अक्षीणम् **श्रवः** कीर्तिम् । कीर्तिमान् भवतीत्यर्थः । वयमपि **तस्मै** एव **इळाम्** हविर्लक्षणमन्नम् **सुवीराम्** शोभनाः वीराः कर्तारो यस्यास्तां सुवीराम् । शोभनैः ऋत्विग्भिरुपकल्पितामित्यर्थः । **आ यजामहे** दद्मः **सुप्रतूर्तिम्** तूर्वतिः हिंसार्थः । **सुष्ठुः** पतूर्व्यन्ते शत्रवो यथा तां सुप्रतूर्तिम् । देवा हि हविरुपभोगाद्वीर्यमाप्नुवन्ति । तेन च वीर्येण शत्रून् घ्नन्ति । अत एवमुच्यते– सुप्रतूर्तिमिति । **अनेहसम्** अपापाम् । एतत् ज्ञात्वा ब्रह्मणस्पते! कीर्त्यर्थं हविरर्थं च धनमस्मभ्यं देहीत्यर्थः ।। ४ ।।

**वेङ्कटमाधव– यः** ऋत्विजे **ददाति** शोभननरोपेतं शोभनयानं वा धनम्, **सः** धारयति अक्षीणमन्नम् । वयं च **तस्मै** मानवीम् **इळाम्** सुपुत्राम् **आ यजामहे** शोभनप्रतरणाम् उपद्रवरहिताम् ।। ४ ।।

**मुद्गल– यः** यजमानः **वाघते** ऋत्विजे **सूनरम्** सुष्ठु नेतव्यम् **वसु** घनम् **ददाति सः** यजमानः ब्रह्मणस्पतेः प्रसादात् **अक्षिति** क्षयरहितम् **श्रवः** अन्नम् **धत्ते** धारयति । **तस्मै** तादृशाय यजमानाय **इळाम्** एतन्नामधेयां मनोः पुत्रीम् **आ यजामहे** वयम् ऋत्विजः सर्वतो यजामः । कीदृशीम् इलाम् । **सुवीरम्** शौभनैः वीरैः भटैर्युक्ताम् सुप्रतूर्तिम् सुष्ठु प्रकर्षेण हिंसाकारिणीम् **अनेहसम्** केनाप्यहिंस्याम् ।। ४ ।।

**सायण–** **यो** यजमानः **वाधते** ऋत्विजे सूनरं सुष्टु नेतव्यं **वसु** धनं ददाति **सः** यजमानो

ब्रह्मणस्पतेः प्रसादात् **अक्षिति** क्षयरहितं **श्रवो**ऽन्नं **धत्ते** धारयति । 'तस्मै तादृशयजमानाय 'इलाम् एतन्नामधेयां मनोः पुत्रीं इला वै मानवी यज्ञानुकाशिन्यासीदिति (तै.ब्रा.१.१.४.४) श्रुत्यन्तरात् । आ यजामहे । वयं ऋत्विजः सर्वतो यजामः । कीदृशीमिळाम् । सुवीरां शोभनैर्वीरैर्भटैर्युक्तां सुप्रतूर्तिं सुष्ठु प्रकर्षेण हिंसाकारिणीम् अनेहसं केनाप्यहिंस्याम् । ददाति । 'अनुदात्ते च' (पा.सू.६.१.१९०) इति अभ्यस्तस्याद्युदात्तत्वम् । यद्वृत्तयोगादनिघातः । सूनरम् । सुखेन नीयते इति सूनरम् । 'ईषद्दुःसुषु' इति खल् । 'निपातस्य च' इति चेत्युपसर्गस्य दीर्घत्वम् । **अक्षिति** । क्षयो नास्त्वस्येत्यक्षिति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । 'नञ्सुभ्याम्' इति तु सर्वे विधयश्छन्दसि विकल्प्यन्ते इति वचनात् न प्रवर्तते । **श्रवः** । श्रूयते इति श्रवः । 'श्रु श्रवणे' । असुनो नित्त्वादाद्युदात्तत्वम् । **सुवीराम्** । शोभना वीरा यस्याः सा सुवीरा । ताम् । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । **सुप्रतूर्तिम्** । तुर्वी हिंसार्थः । प्रपूर्वादस्मात् भावे क्तिन् । शोभना प्रतूर्तिः शत्रूणां हिंसनं यस्याः सा । ताम् । 'परादि छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । क्रत्वादिर्वा द्रष्टव्यः । **अनेहसम्** । न हन्यते इति अनेहाः । नञि हन एह च (उ.सू.४.२२३) इत्यसुन्प्रत्ययो धातोः एहादेशश्च । 'नलोपो नञः' (पा.सू. ६.३.७३) इति नकारस्य लोपः । तस्मान्नुडचि' (पा.सू.६.३.७४) इति नुट् ।

अग्निष्टोमे मरुत्वतीयशस्त्र इन्द्रनिवहप्रगाथानन्तरं 'प्र नूनम्' इति प्रगाथः । मरुत्वतीयेनेति खण्डे सूत्रितम् । प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः (आश्व.श्री.५.१४) इति ॥४॥

**सिद्धाञ्जनम्– यः** यो यजमान भक्तः **वाघते** मन्त्रमुच्चारयते आत्मार्थध्यानानि वाचा आविष्कुर्वते ब्रह्मणस्पतये **सूनरम्** सुष्ठु नेतव्यं **वसु** धनं (स्वीयं सत्त्वं) **ददाति** समर्पयति, **सः** अन्तर्यामी **भक्तः अक्षिति** क्षयरहितं **श्रवः** अन्तःश्रवणं दिव्यावेशवाचमित्यर्थः **धत्ते** धारयति । अत्र वाघत् ब्रह्मणस्पतिरेव भवति, 'प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदति' इति स्पष्टमुक्तमुत्तरस्यामृचि । अन्तर्यागे यदा यजमाने ब्रह्मणस्पतिरुत्थितो भवति यजमानवसु च स्वीकुरुते, तदा स एव मन्त्रवाचमुच्चारयति यजमानार्थम्, करोति च तं अक्षयान्तः श्रुतिसम्पन्नम् । **तस्मै** तादृशाय पुण्यपुरुषाय **तदनुग्रहार्थं इळाम्** एतन्नाम्नीं पश्यन्तीं वाचं **आ यजामहे** सर्वतो यजामः वयं देवकामा ऋषयः । कीदृशीं इळाम् ? **सुवीराम्** शोभनवीर्यसम्पन्नां **सुप्रतूर्तिम्** सुष्ठु प्रकर्षेण वेगवतीं हिंसाकारिणीं शत्रूणामिति शेषः । **अनेहसम्** केनाप्यहिंस्याम् । सुप्रतूर्तिम्-तुर्वी

हिंसायाम् । प्रपूर्वादस्माद्भावे क्तिन् शोभना प्रतूर्तिर्यस्याः सा । अनेहसम्- न हन्यते इत्यनेहाः धातोः एह आदेशः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ।। ५, २० ।।**

**प्र । नूनम् । ब्रह्मणः । पतिः । मन्त्रम् । वदति । उक्थ्यम् । यस्मिन् । इन्द्रः । वरुणः । मित्रः । अर्यमा । देवाः । ओकांसि । चक्रिरे ।। ५, २० ।।**

## ऋग्भाष्यम्

**स एव भगवान्विष्णुर्मन्त्रं तद्विषयं वदेत् ।**
**उक्थमुत्थापकत्वेन स एव भगवान्हरिः ।**
**तन्मन्त्रवाच्या देवाश्च......... ।। ५, २० ।।**

**ऋग्भाष्यटीका– प्र नूनम्** । स एव । **ब्रह्मणस्पतिः** । स भगवान् विष्णुरेवोक्थं तद्विषयमुक्थविषयं मन्त्रम् । **नूनं** निश्चितं प्रवदेत् । कथं भूतं मन्त्रम् । **इन्द्रो वरुणो मित्रो अर्यमा** अन्ये च देवाः । यस्मिन्मन्त्रे **ओकांसि** गृहाणि । **चक्रिरे** यस्य वाच्याः । किमुक्थं कथं चेत्यत आह ।। **उक्थमिति** ।। उत्थापकत्वेनोत्पादकत्वेन । सुपि स्थः । उदः कः । तर्ह्युत्तरार्धविरोध इत्यत आह ।। **तदिति** ।। देवाश्च भगवद्विषयस्यापि मन्त्रस्यामुख्यतो वाच्या भवन्ति । अतो न विरोधः । सर्ववेदानां प्रवर्तको वाच्यश्च स एवेति ।। ५, २० ।।

**मन्त्रार्थमञ्जरी– ब्रह्मणः पतिः,** स भगवान्विष्णुः । एव **उक्थ्यम्,** उत्थापकत्वादुक्थो विष्णुः, उद्पूर्वस्य स्थातेः तिष्ठतेः 'सुपि स्थः' इति कप्रत्ययः, 'आतो लोपः' उपपदान्त्य-दकारस्य ककारः, तद्विषयमुक्थ्यम् । **मन्त्रम्, नूनम्,** निश्चितं यथा तथा । प्र वदेत् । कथम्भूतं मन्त्रम् ? इन्द्रः वरुणः मित्रः अर्यमा । अन्ये च देवाः । **यस्मिन्,** मन्त्रे । **ओकांसि,** गृहाणि । **चक्रिरे,** यस्य मन्त्रस्यामुख्यतो वाच्याः इत्यर्थः, सर्ववेदानां प्रवर्तको वाच्यश्च विष्णुरेव मुख्य इति भावः ।। ५ ।।

**स्कन्द– प्र नूनम् ब्रह्मणस्पतिः** नूनमिति पदपूरणः । ब्रह्मणस्पतिः स्तुतिलक्षणं **मन्त्रम्** प्र **वदति** वदतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । प्रवादयति । सर्वस्तोतृभिरुच्चारयतीत्यर्थः । **उक्थ्यम्** प्रशस्यम् । कीदृशो मन्त्रः । उच्यते । **यस्मिन्** मन्त्रे **इन्द्रः वरुणः मित्रः अर्यमा** अन्ये च मरुत्प्रभृतयः देवाः नैषण्टुकवृत्त्या **ओकांसि** स्थानानि **चक्रिरे** । यत्र इन्द्रादयोऽपि नैघण्टुकवृत्या स्थिता इत्यर्थः ।। ५ ।।

**वेङ्कटमाधव– प्र वदति** इदानीम् **ब्रह्मणस्पतिः मन्त्रम्** प्रशस्तम् । **यस्मिन्** मन्त्रे इन्द्रादयः स्थानानि **चक्रिरे** श्रवणार्थं यं मन्त्रमुपासत इति ।। ५ ।।

**मुद्गल– ब्रह्मणस्पतिः** देवः **उक्थ्यम्** शस्त्रयोग्यम् **मन्त्रम् नूनम्** अवश्यम् **प्र वदति** होतृमुखे स्थितः सन् प्रब्रूते । **यस्मिन्** मन्त्रे इन्द्रादयश्च सर्वे देवाः **ओकांसि** स्थानानि **चक्रिरे**, तादृशं सर्वदेवप्रतिपादकं मन्त्रमिति पूर्वत्रान्वयः ।। ५ ।।

**सायण–** ब्रह्मणस्पतिः देवः उक्थ्यं शस्त्रयोग्यं मन्त्रं नूनमवश्यं प्र वदति । होतृमुखे स्थितः सन् प्रब्रूते । यस्मिन् मन्त्रे इन्द्रादयश्च सर्वे देवाः ओकांसि स्थानानि चक्रिरे । तादृशं सर्वदेवप्रतिपादकं मन्त्रमिति पूर्वान्वयः । मन्त्रम् । मत्रि गुप्तभाषणे । पचाद्यच् । वृषादिषु पाठादाद्युदात्तत्वम् । उक्थ्यं उक्थार्हं । 'छन्दसि च' इत्यर्हार्थे यप्रत्ययः । यद्वा । 'भवे छन्दसि' इति यत् । 'सर्वे विधयः छन्दसि विकल्प्यन्ते इति वचनात् यतोऽनावः इत्याद्युदात्तत्वाभावे व्यत्ययेन तित्स्वरितमिति स्वरितत्वम् । **ओकांसि** । उत समवाये । समवयन्त्वचेत्यधिकरणे औणादिकोऽसुन् । बहुलग्रहणात् कुत्वं द्रष्टव्यमित्योक उचः के (का.७.३.६४) इत्यत्र वृत्तावित्युक्तम् । **चक्रिरे** । इरेचश्चित्त्वादन्तोदात्तत्वम् । यद्वृत्तयोगादनिघातः ।। ५ ।।

**सिद्धाञ्जनम्– ब्रह्मणस्पतिः** देवः **उक्थ्यम्** शस्त्रयोग्यं (शस्त्र शंसनम्) **मन्त्रम् नूनम्** अवश्य **प्रवदति** प्रकर्षेण ब्रूते । **यस्मिन्** मन्त्रे ब्रह्मणस्पतिसाधितवागाविष्कारे **देवाः** इन्द्रादयः **ओकांसि** स्थानानि **चक्रिरे** कृतवन्तः । के ते देवाः ? **इन्द्रः मित्रः वरुणः अर्यमा** इत्येते । ब्रह्मणस्पतिना उदीरिते मन्त्रे देवाः स्वीयाधारस्थानानि कृत्वा यजमानं पुरुषमनुग्रहीतुं प्रसन्ना भवन्तीत्यर्थः ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**तमिद्वोचेमा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् । इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत् ॥ ६ ॥**

तम् । इत् । वोचेम । विदथेषु । शम्ऽभुवम् । मन्त्रम् । देवाः । अनेहसम् । इमाम् । च । वाचम् । प्रतिऽहर्यथ । नरः । विश्वा । इत् । वामा । वः । अश्नवत् ॥ ६ ॥

## ऋग्भाष्यम्

**....................यद्वाच्यादेवतास्तु ताः ।**
**तमेव मन्त्रं वोचेम ज्ञानार्थं सुखकारणम् ।**
**इमां वाचं स्वीकुरुत सकाशाद्वोखिलं शुभम् ।**
**अश्नवान्................................ ॥ ६ ॥**

**ऋग्भाष्यटीका– तमित्** । यद्वाच्याः । हे देवाः वयम् इन्द्राद्यास्ता देवता यस्य मन्त्रस्य वाच्या उक्तास्तमित् तमेव शंभुवं सुखकारणम् । **अनेहसम्** इन्द्रियप्रवृत्तिहेतुं मन्त्रम् । **विदथेषु** विदेरथक्प्रत्ययः । ज्ञानेषु ज्ञानार्थम् । **वोचेम** जपामहे । नरो युष्मन्मन्त्र जप्तारो वयमिति **इमां** चास्मद्वाचं **प्रतिहर्यथ** स्वीकुरुत । सत्यतयेति शेषः । तेन च **वः** सकाशाद्युष्मत्प्रसादात् **विश्वा** विश्वानि । **इत्** एव । **वामा** वामानि भद्राणि । अखिलं शुभम् **अश्नवत्** अश्नवान्यहम् ॥

**मन्त्रार्थमञ्जरी–** षष्ठीसप्तम्यौ देवदेवताके हे देवाः वयम् इन्द्राद्या देवता यस्य मन्त्रस्य वाच्या उक्ताः तम् इत्, तमेव शम्भुवम्, शं सुखं भवति यस्मात्तं सुखकारणम् । **अनेहसम्** इन्द्रियप्रवृत्तिहेतुम् । मन्त्रम् । **विदथेषु**, विदेः अथङ्प्रत्ययः, ज्ञानेषु 'ज्ञानार्थम् । **वोचेम** जपामहे, वचेः उमागमः, व्यत्ययेन शब्विकरणम्, लिङ् । हे नरः । युष्मन्मन्त्रजप्तारो वयमिति इमाम् च । वाचम् अस्मद्वाचम् । **प्रतिहर्यथ** प्रतिहरथ, सत्यतया स्वीकुरुत । तेन च वः सकाशात् युष्मत्प्रसादात् । **विश्वा** विश्वानि । **इत्**, एव । **वामा**, वामानि, **भद्राणि**, अखिलं शुभम् । अश्नवत्, अश्नवान् । अहम् प्राप्तवानहम्, 'अग्निना रयिमश्नवत्' इत्यत्र व्युत्पादितमेतत्पदम् ॥ ६ ॥

**स्कन्द–** यमीदृशं ब्रह्मणस्पतिरन्यैः स्तोतृभिः प्रवादयति वयमपि **तम् इत् वोचेम** इच्छब्दः एवार्थे । तमेव वोचेम उच्चारयेम् इत्याशास्महे । **विदथेषु** यज्ञेष्वात्मीयेषु **शंभुवम्** सुखस्य भावयितारं स्तुतिलक्षणम् **मन्त्रम्** हे ब्रह्मणस्पतिसहचारिणो मरुत्प्रभृतयो देवाः । **अनेहसम्** अपापम् । **इमाम्** च स्तुतिलक्षणाम् **वाचम् प्रतिहर्यथ** हर्यतिः कान्तिकर्मा (तु.निघ.२,६) । ब्रह्मणस्पतिना सह कामयध्वम् । हे **नरः!** मनुष्याकाराः! किञ्च **विश्वा इत्** वामा वः इच्छब्दः पदपूरणः । सर्वाणि वननीयानि धनानि वः युष्माकं स्वभूतेन प्रसादेन वा **अश्नवत्** व्यत्ययेनाय-मुत्तमस्य स्थाने प्रथमपुरुषः । **अश्नुयाम** प्राप्नुयाम ।। ६ ।।

**वेङ्कटमाधव– तम् एव वोचेम वयम्** यज्ञेषु सुखस्य भावयितारम् **मन्त्रम् देवाः** । अपापम् । ताम् च **इमाम् वाचम्** देवाः **नरः!** यूयं कामयध्वम् । अयं च स्तोता युष्माकं स्वभूतानि सर्वाणि धनानि अश्नोतु ।। ६ ।।

**मुद्गल– हे देवा!** ब्रह्मणस्पतिप्रभृतयः **तम् इत्** तमेव इन्द्रादिसर्वदेवताप्रतिपादकम् **मन्त्रम् विदथेषु** यज्ञेषु **वोचेम** वयम् **ऋत्विजो** ब्रवाम । कीदृशम् । **शम्भुवम्** सुखस्य भावयितारम् **अनेहसम्** अहिंसनीयं दोषरहितम् । **हे नरः!** नेतारो **देवाः! इमाम्** अस्माभिरुच्यमानां मन्त्ररूपाम् **वाचम् प्रतिहर्यथ च** यूयं कामयध्वे चेत् तर्हि **विश्वा इत्** सर्वापि **वामा** वननीया वाक् **वः** युष्मान् **अश्नवत्** व्याप्नुयात् ।। ६ ।।

**सायण– हे देवाः** ब्रह्मणस्पतिप्रभृतयः तमित् **तम्** इवेन्द्रादिसर्वदेवताप्रतिपादकं मन्त्रं विदथेषु यज्ञेषु **वोचेम** । वयमृत्विजो ब्रवाम । कीदृशम् । **शम्भुवं** सुखस्य भावयितारम् **अनेहसम्** अहिंसनीयं दोषरहितम् । **हे नरः** नेतारो देवाः **इमाम्** अस्माभिरुच्यमानां मन्त्ररूपां वाचं **प्रतिहर्यथ** च । यूयं कामयध्वे चेत् तर्हि विश्वेत् सर्वापि वामा वननीया वाक् **वः** युष्मान् **अश्नवत्** व्याप्नुयात् । **वोचेम** । वच परिभाषणे । आशीर्लिङि लिङ्याशिष्यङ् इति अङ् । 'वच उम्' इत्युमागमः । 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'लिङः स लोपोऽनन्त्यस्य' इति यासुटः सकारस्य लोपः । 'अतो येयः' इति इयादेशः । आद्गुणः । तिङ्ङतिङः इति निघातः। **विदथेषु** । 'विद ज्ञाने' । विद्यते फलसाधनत्वेन ज्ञायते इति विदथो यज्ञः । 'रुविदिभ्यां कित्' (उ.सू.३.३९५) इति अथप्रत्ययः । **शम्भुवम्** । भवतेः अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'ओः सुपि' (पा.सू.६.४.८३) इति यणादेशस्य 'न भूसुधियोः' (पा.सू.६.४.८५)

इति प्रतिषेधः । मन्त्रादयो गताः । प्रतिहर्यथ । 'हर्य गतिकान्त्योः' । शपः पित्त्वादनुदात्तत्वम् । तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्त्वम् । इमां च इत्यत्र चशब्दश्चेदर्थः । चणिति निपातान्तरं न च समुच्चयायर्थः । तेन 'निपातैर्यचदिहन्तकुविन्नेच्चेचण् (पा.सू.८.१.३०) इति निघातप्रतिषेधः । अभवत् । अशूव्याप्तौ । लेड्यागमः । व्यत्ययेन परस्मैपदम् । इतश्च लोप इतीकारलोपः । इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । का.६.४.७७ । इति गुणः ।।

**सिद्धाञ्जनम्–** हे **देवाः**, **तमित्** तमेव इन्द्रादिदेवानां प्रादुर्भावस्थानभूतं ब्रह्मणस्पतिविभवं **मन्त्रम् विदथेषु** ज्ञानागमेषु यजनेषु **वोचेम** ब्रवाम । कीदृशं मन्त्रम् ? **शंभुवम्** सुखस्य भावयितारम्, **अनेहसम्** अहिंसनीयम् निर्दोषमित्यर्थः । हे नरः नेतारो इमां च अस्माभिरुच्यमानां **वाचम्** स्तुतिं च **प्रतिहर्यथ** कमनीयां कान्तिमतीं कुरुत, ब्रह्मणस्पतिप्रयुक्तायाः दिव्यायाः मन्त्रवाचः प्रतिध्वनिभूतां प्रतिबिम्बवद्वा निष्पन्नां इमामस्मदीयां वाचं शोभायुक्तां विधत्तेत्यर्थः । **विश्वा इत्** सर्वापि वामा वननीया संभजनीया वाक् **वः** युष्मान् **अश्नवत्** प्राप्नोतु । वोचेम-वचधातोराशीलिङ् छान्दसम् । विदथेषु-विद ज्ञाने, गतम् । शम्भुवम्-भवतेरन्तर्भा वितण्यर्थात् क्विप् । प्रतिहर्यथ-हर्य गतिकान्त्योः । अश्नवत्-अशू व्याप्तौ, लेटि आडागमः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**को देवयन्तमश्नवज्जनं को वृक्तबर्हिषम् । प्र प्र दाश्वान् पस्त्याभिरस्थितान्तर्वावत् क्षयं दधे ।। ७ ।।**

### ऋग्भाष्यम्

...........अतिदौर्लभ्याद् देवभक्तं क आप्नुयात् ।
यजमानं वाऽनुगच्छेत् कः सम्यक् स्तृतबर्हिषम् ।।
तत्र तत्र प्रस्थितोऽसौ यजमानः सुखैः स्वयम् ।
स्वेष्टस्थानेषु चान्तर्वा विष्णुरन्तर्गतो यतः ।
तद्वत्त्वेन क्षयं स्थानं प्राप्नोति ज्ञानतो यजन् ।।

**ऋग्भाष्यटीका–** कः अतिदौर्लभ्यात् । हे देवा देवयन्तं देवान्याति भजत इति देवयन्तम् । देवभक्तं युष्मद्भक्तं जनम् । को अश्नवत् अश्नुवीत आप्नुयात् । किञ्च । युष्मानुद्दिश्य

वृक्तबर्हिषम् । सम्यक् ज्ञानादिपूर्वम् । स्तृतबर्हिषं यजमानं वा । कोऽन्वश्नवद्गच्छेत् । कुतो देवभक्तयजमानावप्राप्यौ । अतिदौर्लभ्यात् । न केवलं दुर्लभः । किन्तु । असौ दाश्वान्यजमानः । स्वयं परानपेक्षया । पस्त्याभिः सुखैर्युक्त एव । प्रप्रास्थित प्रास्थित । वीप्सायां द्विर्वचनम् । तत्र तत्र स्वेष्टस्थानेष्वेव प्रकर्षेणास्थितो भवति । किञ्च स द्वाश्वान् ज्ञानतोयजन्नन्तर्वावत्क्षयम् । अन्तर्वा विष्णुः । कुतः यतः सर्वस्यान्तर्गतः । वातेर्विच् । तद्वत्वेन तत्सादृश्येन । मतुब्वाऽयम् । तत्स्वामिकत्वेन क्षयं स्थानम् । असमर्थसमासोऽयम् । दधे धत्ते प्राप्नोति । सर्वव्यापी भवति ॥

**मन्त्रार्थमञ्जरी–** हे देवाः देवयन्तम्, देवान्यति भजतीति देवयन्, तं देवभक्तम्, युष्मद्भक्तम् । जनम् कः । **अश्नवत्,** अश्नुवीत, आप्नुयात् । किं च, युष्मानुदिश्य **वृक्तबर्हिषम्** यजमानं वा । कः नु । अश्नवत् गच्छेत्, देवभक्तौ यजमानश्चातिदुर्लभः इति भावः । न केवलं दुर्लभो यजमानः, किं तु असौ **दाश्वान्,** यजमानः । स्वयं परानपेक्षया– पस्त्याभिः, सुखैः । युक्त एव **प्रप्र** अस्थित, वीप्सया द्विर्वचनम्, तत्र तत्र स्वेष्टस्थानेष्वेव प्रकर्षेण स्थितो भवति । किंच सः दाश्वान् ज्ञानतो यजन् अन्तर्वावत् क्षयम्, सर्वस्यान्तर्गतत्वादन्तर्वा विष्णुः अन्तरुपपदाद्वातेर्विच् ततो वतिप्रत्ययः, विष्णुसादृश्येन क्षयं स्थानम्, मतुप्प्रत्ययो वा, विष्णुस्वामिकत्वेनान्तर्वावत्क्षयं विष्णुस्वामिकं स्थानम् । **दधे** प्राप्नोति, सर्वव्यापी भवति ॥ ७ ॥

**स्कन्द– कः देवयन्तम्** क इति सामर्थ्याच्छत्रोर्निर्देशः । कः शत्रुः देवयन्तं ब्रह्मणस्पतिप्रभृतीन् देवान् यष्टुमिच्छन्तम् **अश्नवत्** व्याप्नोति **जनम्** मनुष्यम् । न कश्चिदपि व्याप्तुं शक्नोतीत्यर्थः । **कः वृक्तबर्हिषम्** आस्तीर्णबर्हिष्कम् । प्रवृत्तयागमेवेत्यर्थः । **प्रप्र दाश्वान् पस्त्याभिः** अस्थितः प्रप्रेति 'प्रसमुपोदः पादपूरणे' (पा.८,१,६) इत्येवं द्विर्वचनम् । अस्थितेत्येतेन चाख्यातेन सम्बध्यते अयमुपसर्गः । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । यो दाश्वान् यजमानः पस्त्याभिः 'पस्त्यम्' (निघ.३,४) इति गृहनाम । अत्र तु तात्स्थ्यात् देवाः, तत्प्रतिपादनात् आहुतयः, पस्त्या उच्यन्ते । 'इत्थंभूतलक्षणे' (पा.२,३,२१) चैषा तृतीया । आहुतिभिः सम्बद्धः । गृहीताहुतिक इत्यर्थः । प्रास्थित प्रतिष्ठते । होमार्थमाहवनीयं प्रति गच्छतीत्यर्थः । स **अन्तर्वावत्** वातेर्गत्यर्थस्य यङ्लुगन्तस्य शतृप्रत्यये रूपमेतत् । अन्तरत्यर्थं गतं लीनम् अप्रकाशम् **क्षयम् दधे** धारयति । सर्वलोकप्रकाशं महान्तं परिक्षयं न प्राप्नोतीत्यर्थः ॥ ७ ॥

**वेङ्कटमाधव–** क यजमानम् अश्नोतु **जनम्** । **कः वा** छिन्नबर्हिषम् । **प्र अस्थित** यजमानः विड्भिः ऋत्विग्भिः तेषां मध्ये ब्रह्मणस्पतिरागच्छन् निवासं करोतीति पूर्वार्द्धर्चस्योत्तरम् ।।७।।

**मुद्गल– देवयन्तम्** देवान् कामयमानम् **जनम् कः अश्नवत्** ब्रह्मणस्पतिव्यतिरिक्तः को नाम देव व्याप्नुयात् । तथा **वृक्तबर्हिषम्** अनुष्ठानाय छिन्नबर्हिषम् **जनम्** यजमानम् **कः** नाम अन्यो देव अश्नवत् । **दाश्वान्** हविर्दत्तवान् यजमानः **पस्त्याभिः** मनुष्यैर्ऋत्विग्भिः सह **प्रप्र अस्थित** देवयजनदेशं प्रति प्रस्थितवान् । **अन्तर्वावत्** अन्तःस्थितबहुधनोपेतम् **क्षयम्** निवासस्थान गृहम् **दधे धृतवान्** भवति ।। ७ ।।

**सायण– देवयन्तं** देवान् कामयमानं **जनं** कोऽश्नवत् । ब्रह्मणस्पतिव्यतिरिक्तः को नाम देवो व्याप्नुयात् । तथा **वृक्तबर्हिषम्** अनुष्ठानाय छिन्नबर्हिषं यजमानं कः नामान्यो देवोऽश्नवत् । दाश्वान् हविर्दत्तवान् यजमानः पस्त्याभिः मनुष्यैर्ऋत्विग्भिः सह प्रप्रास्थित देवयजनदेशं प्रति प्रस्थितवान् । **अन्तर्वावत्** अन्तःस्थितबहुधनोपेतम् । यद्वा । अन्तःस्थितपुत्रपौत्रादिप्रयुक्त-बहुविधवागुपेतं क्षयं निवासस्थानं गृहं दधे धृतवान् भवति । देवयन्तम् इत्यादयो गताः । प्र प्र । 'प्रसमुपोदः पादपुरणे' (पा.सू.८.१.६) इति प्रशब्दस्य द्विर्भावः । 'अनुदात्तं च इत्याम्रेडितानुदात्तत्वम् । अस्थित । ष्ठा गतिनिवृत्तौ । लुङि समवप्रविभ्यः स्थः' (पा.सू. १.३.२२) इत्यात्मनेपदम् । 'स्थाघ्वोरिच्च' (पा.सू.१.२.१७) इति धातुसिचोरित् । कित्वे 'हस्वादङ्गात्' (पा.सू.८.२.२७) इति सलोपः । अन्तर्वावत् । 'वा गतिगन्धनयोः' अन्तर्वान्ति गच्छन्तीति अन्तर्वाः पुत्रपश्वादयः । 'आतो मनिन् इत्यादिना विच् । 'तदस्यास्ति इति मतुप् । मतुपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । यद्वा । वावदीतेः क्विप् । क्षयम् । क्षियन्ति निवसन्त्यस्मिन्निति क्षयः । 'पुंसि संज्ञायाम्' इत्यधिकरणे । 'क्षयो निवासे' इत्याद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** देवान् कामयमानं **जनम्** मनुष्यं **कः** ब्रह्मणस्पतिमन्तरा को वान्यो देवः **अश्नवत्** प्राप्नुयात् ? तथा **वृक्तबर्हिषम्** देवार्थं कृतासनसन्नाहं जनं **कः** को वान्योऽश्नवत् इति सम्बन्धः । **दाश्वान्** दत्तवान् यजमानः **पत्याभिः** गोनिवासस्थानैः द्वारा (पस्त्यं गृहनाम, गोष्ठेऽपि वर्तते) चिद्रश्मिस्थानभूमिकानां द्वारेणेति भावः, **प्रास्थित** प्रस्थितवान् । तथा प्रस्थाय **अन्तर्वावत्** अन्तर्गतवस्तुसम्पन्नं **क्षयम्** निवासस्थानं **दधे** धृतवान् । यजमानः 'पस्त्याभिः' ऋत्विग्भिः सह प्रस्थाय बहुपुत्रपौत्रादिसम्पन्नं गृहं दधे इति स्थूलं व्याचष्टे सायणः । 'पस्त्याभिः'

प्रजाभिः ऋत्विग्भिरिति चेत् ताः प्रजाः दैव्याः, न मानुष्याः इति ग्राह्यम् । अन्तर्वावत्-अन्तर्वाति गच्छतीति अन्तर्वाः, अन्तर्गतं अन्तःस्थितं वा वस्तु, ततो मतुप्, मतोर्वः । यस्मिन् क्षये अन्तरे सर्वस्वभूतं वस्तु विद्यते तं वासस्थानं 'दध्रे' धारयितुं प्रभुरभवद्यजमानः । देवयन्तमित्यादयो गताः । प्रप्रेति द्विर्भावः पादपूरणः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**उप क्षत्रं पृञ्चीत हन्ति राजभिर्भये चित्सुक्षितिं दधे ।। नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ।। ८, २१, ४ ।।**

**उप । क्षत्रम् । पृञ्चीत । हन्ति । राजऽभिः । भये । चित् । सुऽक्षितिम् । दधे । न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ।।**

## ऋग्भाष्यम्

**उपपृक्तः क्षत्रियैः स आवेशेन जनार्दनः ।**
**हन्ति शत्रूंश्च तैर्देवो भये च स्वाश्रयं ददौ ।**
**वर्ताभिगन्ता तरुता जेता चास्य न हि क्वचित् ।**
**युद्धं महाधनं त्वर्भं प्रसिद्धं धनमेव हि ।। ८, २१, ८ ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं श्रीमदृग्भाष्यं सम्पूर्णम् ।।**

**ऋग्भाष्यटीका– उपक्षत्रम्** । उपपृक्तः । स इन्द्रो जनार्दनः । **क्षत्रमुपपृंचीत** । क्षत्रियैर्मन्वादिभिरुपपृक्तो भवति । कथम् । अरिसैन्य आविष्टश्चासौ । देवस्तै राजभिः शत्रून्हन्ति । भक्तानां भये च प्राप्ते । **सुक्षितिं** स्वाश्रयं शोभनमाश्रयं भयनिवारणम् । दधे ददौ ददाति । किं चास्य वज्रिणो **वर्ता** अभिगन्ता प्रतियोद्धा । क्वचिन्नास्ति हि । **तरुता** जेता वा नास्ति । योऽभिवर्तते स वर्ता । यस्तु तरति अतिक्रामति स तर्ता । कुत्र । **महाधने चार्भे** च नास्ति । किं तन्महाधनमर्भं चेत्यत आह ।। **युद्धमिति** ।। प्रधनशब्दपर्यायो हि महाधनशब्दः । अर्भशब्दोऽल्पवाची । क्षत्रियाणां प्रसिद्धधनं युद्धापेक्षयाऽल्पधनमेवेति हेरर्थः । यद्वानेन मार्गेणोत्तरस्यापि मन्त्रजातस्य व्याख्यानं सिद्धमेवात उपरम्यत इति हिशब्देनाचष्टे भगवान्मुनिः ।। ८,२१,८ ।।

देवताः कञ्चुकायन्ते वेदो वन्दिजनायते ।
यस्य तस्मिन्रमानाथे सुदृढः प्रीतिरस्तु मे ।। १ ।।

ये भवंति जनाः सन्तः प्रज्ञासौजन्यशालिनः ।
तोषं ते मत्कृतौ यान्ति किमन्यैः पशुसन्निभैः ।। २ ।।

शब्दानां साधनं सम्यक् तत्प्रयोजनकीर्तनम् ।
नाकार्षं विस्तरभयादिह तत्क्षम्यतां बुधैः ।। ३ ।।

।। इति श्रीमदानन्दतीर्थ भगवत्पादविरचितस्य श्रीमदृग्भाष्यस्य टीका जयतीर्थभिक्षुविरचिता समाप्ता । समाप्तोऽयं तृतीयोऽध्यायः ।। ३ ।।

**मन्त्रार्थमञ्जरी–** अष्टम्यामिन्द्रो देता सः इन्द्रः जनार्दनः । **क्षत्रम् उप पृश्चीत,** क्षत्रियैर्मन्वादिभिरुपपृक्तो भवति, आवेशेन तैः संमिश्रो भवति । आविष्टश्चासौ देवः तैः राजभिः शत्रून् हन्ति । भक्तानाम् भये । चित् च । प्राप्ते । **सुक्षितिम्,** स्वाश्रयम्, शोभनमाश्रयम्, भयनिवारणम् । दधे ददौ, ददाति । किं च, अस्य वज्रिणः महाधने, युद्धाख्यमहाधनविषये । वर्ता अभिगन्ता, प्रतियोद्धा । क्वचित् न अस्ति हि तरुता, जेता । वा न अस्ति **एवम् अर्भे** अल्पधने, प्रसिद्धवित्तरूपधनविषये । च **वर्ता** तरुता वा न अस्ति । इति योज्यम् 'योऽभिवर्तते स वर्ता, यस्तु तरत्यतिक्रामति स तरुता' इति भेदः । प्रधनपर्यायो हि महाधनशब्दः, अर्भशब्दोऽल्पवाची, 'क्षत्रियाणां युद्धं महाधनम्, तदपेक्षयाल्पं हि वित्तरूपधनम्' इति **'महाधने** अर्भे अल्पधने च' इत्युक्तम् । पूर्वोत्तरार्धाभ्यां सकलानिष्टनिवृत्तिं सर्वाभीष्टप्राप्तिं च भगवतः सकाशाद्भक्तानां प्रतिपादयन् मन्त्रव्याख्यानेन समापितवान्भाष्यकारः (श्रीमदानन्दतीर्थ-भगवत्पादाचार्यः) यथान्यप्राप्त्वा ब्रह्मसूत्रभाष्यादिषु 'बळित्था' (ऋ०मं०१।१४१।१) इत्यादिस्वमहिमोक्तिपरमन्त्रार्थसंग्रहम्, 'यस्य त्रीणीतीति इत्यादिनोक्त्वा तावता समाप्ति-मप्रीयाणोऽन्तेऽपि भगवन्नत्यायुक्त्वा समापयामास, तथेहापि ऋग्भाष्ये स्वमहिमा-परमारुत-सूक्तव्याख्यानेन समाप्तिमप्रीयमाणो विष्णूत्कर्षोक्तिपरसूक्तमन्ते व्याख्याय समापितवान्भगवा-नाचार्यः (श्रीमदानन्दतीर्थभगवत्पादाचार्यः) ।। ८ ।।

।। इति (श्रीमदृक्संहितायाः प्रथमाष्टके तृतीयाध्याये) एकविंशो वर्गः ।। २१ ।।
(प्रथममण्डले चाष्टमानुवाकान्तःपाति) चत्वारिंशं सूक्तम् ।। ४० ।।

**कल्याणगुणपूर्णाय दोषदूराय विष्णवे ।**
**अनन्ताम्नायवेद्याय श्रीप्राणपतये नमः ।। ६ ।।**

**।। इति सर्वतन्त्रस्वतन्त्रश्रीसुधीन्द्रगुरुपादशिष्यश्रीराघवेन्द्रयतिविरचिता**
**श्रीमन्मन्त्रार्थमञ्जरी समाप्ता ।। ॐ श्रीकृष्णार्पणमस्तु ।।**

**स्कन्द–** **उप क्षत्रम्** 'क्षत्रम्' (निघ.२,१०) इति धननाम । धनम् **उप पृञ्चीत** आत्मना सम्पर्कं नयति । धनं च लभत इत्यर्थः । **हन्ति** च शत्रून् **राजभिः** दीप्तैः ब्रह्मणस्पतिप्रभृतिभिः । तृतीयानिर्देशादनुगृहीता इति शेषः । अथवा हन्तीति हनिरत्रान्तर्णीतण्यर्थः । घातयति शत्रून् दीप्तैर्ब्रह्मणस्पतिप्रभृतिभिः । **भये चित्** भये अपि **सुक्षितिम्** शोभनमप्रच्युतिरूपं निवासम् **दधे** धारयति । भयकालेऽपि स्वस्थानान्न प्रच्यवत इत्यर्थः । किञ्च **न अस्य वर्ता** वर्तयिता **न** अपि **तरुता** हिंसयिता **महाधने** सङ्ग्रामनामैतत् (तु.निघ.२,१७) । महति सङ्ग्रामे । **न** अपि **अर्भे** अल्पे **अस्ति** भवति कश्चित् **वज्रिणः** आयुधवतः सतः । नैनं कश्चित् स्वस्मात् स्थानादपकालयति । नाप्यल्पे महति वा सङ्ग्रामे गृहीतायुधं हिनस्तीत्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** ब्रह्मणस्पतिर्धनं स्तोतृणाम् **उप** पृञ्चति । भयमपि वरुणादिभिः सहागत्य **हन्ति** । तथा **भये** सति शोभननिवासं गृहं प्रयच्छति । ब्रह्मणस्पतेः **अस्य** आयुधवतः महति अल्पे वा सङ्ग्रामे **न अस्ति** अभिगन्ता, **न** च तारकः ।। ८ ।।

**मुद्गल–** ब्रह्मणस्पतिः देवः **क्षत्रम्** बलम् **उप पृञ्चीत** स्वात्मनि संपृक्तं कुर्यात् । ततः **राजभिः** वरुणादिभिः सह **हन्ति** शत्रून् मारयति । **भये चित्** भीतिहेतौ युद्धेऽपि **सुक्षितिम् दधे** सुष्ठुनिवासस्थैर्यं धारयति, न तु पलायते । **वज्रिणः** वज्रायुधवतः **अस्य** ब्रह्मणस्पतेः **महाधने** प्रभूतधननिमित्ते **युद्धे वर्ता** प्रवर्तयिता अन्यः कोऽपि **न अस्ति** । स्वयमेव प्रवर्तते इत्यर्थः । तथा **तरुता** तरुणस्योलुङ्घनस्य कर्ता अन्यः कोऽपि **न** अस्ति । तथैव **अर्भे** स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता **न** अस्ति ।। ८ ।।

**सायण–** ब्रह्मणस्पतिर्देवः **क्षत्रं** बलम् **उप पृञ्चीत** । स्वात्मनि संपृक्तं कुर्यात् । ततो **राजभिः** वरुणादिभिः सह **हन्ति** । शत्रून् मारयति । **भये चित्** भीतिहेतौ युद्धेऽपि **सुक्षितिं दधे** । सुष्ठु निवासस्थैर्यं धारयति । न तु पलायते । **वज्रिणो** वज्राद्यायुधवतो **अस्य** ब्रह्मणस्पतेः

**महाधने** प्रभूतधननिमित्ते युद्धे **वर्ता** प्रवर्तयिता अन्यः कोऽपि **न अस्ति** स्वयमेव प्रवर्तते इत्यर्थः । महाधने इति संग्रामनाम, 'महाधने समीके' (नि.२.१७.४१) इति तन्नामसु पाठात् । तथा **तरुता** तरणस्योल्लङ्घनस्य कर्ता अन्यः कोऽपि **न अस्ति** । तथैव **अर्भे** स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता **न अस्ति** । **पृञ्चीत** । 'पृची संपर्के' । लिङि रुधादित्वात् श्नम् । 'श्नसोरल्लोपः' इति अकारलोपः । प्रत्ययस्वरः । क्षत्रं पृञ्चीत राजभिर्हन्ति चेति समुच्चयलक्षणस्य चार्थस्य दर्शमात् 'चादिलोपे विभाषा' इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । हन्तीत्येषा द्वितीयापि तिङः परत्वात् न निहन्यते । **सुक्षितिम्** । शोभना क्षितिः सुक्षितिः । 'मन्क्तिन्' इत्यादिना उत्तरपदान्तोदात्तत्वम् । **वर्ता** । वर्ततेः वृणोतेर्वा तृचि आगमानुशासनस्यानित्यत्वात् इडभावः । **तरुता** । 'तॄ प्लवनतरणयोः' । 'ग्रसितस्कभित' (पा.सू.७.२.३४ ) इत्यादिना तृचि उडागमो निपातितः । 'चितः' इत्यन्तोदात्तत्वम् । **महाधने** । महच्च तद्धनं च महाधनम् । 'आन्महतः' (पा.सू.६.३.४६) इति आत्वम् । तेन शब्देन तद्धेतुभूतः संग्रामो लक्ष्यते । **अर्भे** । 'ऋ गतौ अर्तिगृभ्यां भन्' (उ.सू.३.४३२) इति भन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् ॥ ८ ॥

**सिद्धाञ्जनम्**– ब्रह्मणस्पतिः **क्षत्रम्** बलं **उप पृञ्चीत** स्वात्मनि संपृक्तं कुर्यात् । ततो **राजभिः** इन्द्रादिभिः सह **हन्ति** मारयति देवशत्रून् । भये चित् भीतिहेतौ वर्तमानेऽपि सुक्षितिम् सुष्ठु वासं **दधे** धारयति निवासं स्थैर्येण । **महाधने** महति **घने** लब्धव्यतया निमित्तभूते **अर्भे** अल्पे वा वस्तुनि प्राप्तव्ये **अस्य** ब्रह्मणस्पतेः **वज्रिणः** वज्रवतो दृढायुधस्य सहसस्पुत्रवत् (वज्रिविशेषणस्य तात्पर्यं प्रागुक्तं स्मार्यम्) **वर्ता** प्रवर्तयिता **न अस्ति, न तरुता** तरणस्य उल्लङ्घनस्य कर्ता नास्ति । द्विविधोऽपि **न** नास्ति । पृञ्चीत- पृची सम्पर्के, रुधादिः, लिङः । सुक्षितिः शोभना क्षितिः । वर्ता-वर्तते वृणोतेर्वा, इडभावश्छान्दसः । तरुता-तरतेः, तृचि उडागमो निपातितः । 'यं रक्षन्ति' इति नवर्चं षष्ठं सूक्तं गायनम् । घोरपुत्रः कण्व ऋषिः । यद्यपि सर्वं सूक्तं आदित्यदेवताकं भवति मित्रादीनामप्यादित्यत्वात्, तथापि पूर्वं 'आद्यान्तयोस्तृचयोः वरुण-मित्र-अर्यमणो देवताः मध्यतृचस्य 'सुगः पन्थाः' इत्यस्य आदित्या देवता इत्याहुः । सामान्यत आदित्या विशेषतो मित्रादय इति तत्र कारणं बोध्यम् ॥ ८ ॥

॥ इति प्रथमाष्टके तृतीयाध्याये एकविंशो वर्गः ॥

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ४१)

९ कण्वो घौरः । वरुणमित्रार्यमणः, ४-६ आदित्याः । गायत्री ।

**यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित् स दभ्यते जनः ।।१।।**
**यम् । रक्षंति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नु । चित् । सः । दभ्यते । जनः ।। १ ।।**

**स्कन्द– 'यं रक्षन्ति त्रयस्तृचाः । वरुणार्यमभिप्राणाम्'** (बृदे.३,१०७-१०८) 'यम् रक्षन्ति' इत्येते त्रयस्तृचा वरुणार्यममित्राणां वेदितव्याः वरुणादिदेवता इत्यर्थः । 'मध्य आदित्यदेवतः' । एतेषां यो मध्यमस्तृच द्वितीय स आदित्यदेवतः, न वरुणादिदेवतः । **यम् रक्षन्ति प्रचेतसः** प्रवृद्धज्ञानाः **वरुणः मित्रः अर्यमा, नू चित् सः दभ्यते जनः** नूचिदित्ययं सामर्थ्यादत्र नैशब्दस्यार्थे । दभ्नोतिर्वधकर्मा (तु.निघ.२,१९) । न स हन्यते केनचित् जनो मनुष्यः ।।

**वेङ्कटमाधव– यम्** वरुणादयः **प्रचेतस रक्षन्ति** क्षिप्रमेव **सः जनः** शत्रून् हिनस्ति **न हिंस्यते वा** यातयितृभिः ।। १ ।।

**मुद्गल–** 'यं रक्षन्ति' इति नवर्चं षष्ठं सूक्तम् । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । आद्यन्तयोस्तृचयोर्वरुणमित्रार्यमणो देवताः । मध्यतृचस्य आदित्या देवता । **प्रचेतस** प्रकृष्टज्ञानयुक्ता वरुणादयो देवाः **यम्** यजमानम् **रक्षन्ति सः जनः** यजमानः **नू चित्** क्षिप्रमेव **दभ्यते** दभ्नोति शत्रून् हिनस्ति ।। १ ।।

**सायण–** यं रक्षन्ति इति नवचं षष्ठं सूक्तम् । तत्रानुक्रमणं यं रक्षन्ति नव वरुणमित्रार्यम्णां मध्ये तृच आदित्येभ्यो गायत्रं हि इति । घोरपुत्रः कण्व ऋषिः । इदमादित्रीणि सूक्तानि गायत्राणि । आद्यन्तयोस्तृचयोवरुणमित्रार्यमणो देवताः । मध्यतृचस्य 'सुगः पन्थाः' इत्यस्य आदित्या देवताः । गतो विनियोगः ।

**प्रचेतसः** प्रकृष्टज्ञानयुक्ताः वरुणादयो देवाः यं यजमानं **रक्षन्ति सः जनः** यजमानः **नू चित्** क्षिप्रमेव **दभ्यते** दभ्नोति शत्रून् हिनस्ति । **प्रचेतसः** । प्रकृष्टं चेतो येषाम् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **नू चित्** । 'ऋचि तुनुघ' इत्यादिना दीर्घः । **दभ्यते** । दम्भु दम्भे । व्यत्ययेन श्यन् आत्मनेपदं च ।। १ ।।

**सिद्धाञ्जनम्– प्रचेतसः** प्रकृष्टज्ञानाः **वरुणः मित्रः अर्यमा** एते देवाः **यम् रक्षन्ति, स जनः** यजमानः **नुचित्** क्षिप्रमेव **दभ्यते** दभ्नोति हिनस्ति । दमयति वा शत्रून् । नुचित् ऋचित् नु घेत्यादिना दीर्घः । दम्यते-व्यत्ययेन श्यन् आत्मनेपदं च ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**यं बाहुतेव पिप्रति पान्ति मर्त्यं रिषः । अरिष्टः सर्व एधते ।। २ ।।**

यम् । बाहुताऽइव । पिप्रति । पान्ति । मर्त्यम् । रिषः । अरिष्टः । सर्वः । एधते ।।

**स्कन्द– यम् बाहुतेव** बाहुतेति तृतीयाद्विवचनस्यायं छान्दसस्तादेशः । यं बाहुभ्यामिव **पिप्रति** पृ पालनपूरणयोः । वरुणादयः पूरयन्ति । यथा कश्चित् गर्तं बाहुभ्यां पांसून् संहरन् पूरयेत् एवं यमन्नेव धनेन च पूरयन्तीत्यर्थः । **पान्ति** रक्षन्ति च **मर्त्यम् रिषः** हिंसितुः सकाशात् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स **अरिष्टः** शत्रुभिरहिंसित **सर्वः एधते** वर्धते सर्ववृद्धिभिः ।। २ ।।

**वेङ्कटमाधव– यम्** धनादीनाम् **बाहुतेव** वरुणादयः पूरयन्ति **पान्ति** च **मर्त्यम्** शत्रोः । **स सर्वः** अहिंसित वर्धते ।। २ ।।

**मुद्गल–** यम् यजमानम् **पिप्रति** वरुणादयो देवाः धनं पूरयन्ति । तत्र दृष्टान्तः । **बाहुतेव** स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत् । तथा **यम् मर्त्यम्** मनुष्यं यजमानम् **रिषः** हिंसकात् **पान्ति** रक्षन्ति । सः सर्वः यजमानः **अरिष्टः** केनापि अहिंसितः सन् **एधते** वर्धते ।। २ ।।

**सायण–** यं यजमानं **पिप्रति** वरुणादयो देवा धनैः पूरयन्ति । तत्र दृष्टान्तः। **बाहुतेव** । स्वकीयो बाहुवर्गोऽपेक्षितं धनमानीय यथा पूरयति तद्वत् । तथा यं **मर्त्यं** मनुष्यं यजमानं **रिषः** हिंसकात् पान्ति रक्षन्ति सः **सर्वः** यजमानः **अरिष्टः** केनाप्यहिंसितः सन् एधते वर्धते । **बाहुतेव** । बाहुता बाहुत्वम् । भाववाचिनानेन शब्देन बाहवस्तदाश्रया लक्ष्यन्ते । यद्वा । समूहार्थे तल्प्रत्ययो द्रष्टव्यः । 'लिति' इति प्रत्ययात्पूर्वस्योदात्तत्वम् । **पिप्रति** । 'पृ पालन-पूरणयोः' । पृ इत्येके । जुहोत्यादित्वात् श्लुः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् ।

अभ्यस्तानामादिः इत्याद्युदात्तत्वम् । **पान्ति** । तिङः परत्वात् पादादित्वाद्वा निघाताभावः । **रिषः** । 'रिष हिंसायाम्' । 'क्विप् च' इति क्विप् । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **अरिष्टः** । रिष हिंसायाम् । 'एकाचः' इति इट्प्रतिषेधः । व्रश्चादिना षत्वम् । नञ्समासे अव्ययपूर्वपद-प्रकृतिस्वरत्वम् ।। २ ।।

**सिद्धाञ्जनम्– यम्** यजमानं **पिप्रति** पूरयन्ति पूर्वोक्ताः देवा इति शेषः । केन पूरयन्ति ? व्याख्यातृपक्षानुसारेणाध्याहारः धनैरिति, बलेन ऐश्वर्येण वेत्युपपद्यते । देवाः स्वयं पूरयन्ति इत्युपपन्नतमम् । तत्र दृष्टान्तः- **बाहुता इव** बाहुता भावे तल्, समूहार्थे वा; यथा स्वीया बाहुशालिता मर्त्यं पूरयति स्वत्वेन स्वबलेन बलसमृद्ध्या वा, तथा वरुणादयो देवा यं **मर्त्यं** स्वयं पूरयन्ति, पान्ति तथा पूरणेन पान्ति रक्षन्ति **रिषः** हिंसकात्, **स सर्वः** तादृशः सर्वोऽपि मर्त्यो यजमानः **अरिष्टः** अहिंसितः सन् **एधते** वर्धते । पिप्रति-पिपर्तेः पूरणार्थात् प्रथमपुरुष-बहुवचनान्तः, जुहोत्यादिः । पान्ति-पा रक्षणे । रिषः रिष-हिंसायाम्, क्विप्, पञ्चम्येकवचनम् । अरिष्टः रिष हिंसायाम्, कर्मणि क्तः, एकाच इति इट्प्रतिषेधः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**वि दुर्गा वि द्विषः पुरो घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ।।३।।**
**वि । दुःऽगा । वि । द्विषः । पुरः । घ्नन्ति । राजानः । एषाम् । नयन्ति । दुःऽइताः । तिरः ।। ३ ।।**

**स्कन्द– वि दुर्गा** वीत्ययं विविधमित्यर्थे । विविधं दुर्गाणि **घ्नन्ति** । **वि द्विषः** विविधं घ्नन्ति द्वेष्टॄन् । पुरः नगराणि च विविधं घ्नन्ति **राजानः** दीप्ताः वरुणादयः **एषाम्** द्विषाम् । अयमन्वादेशः । पुरां चैतद्विशेषणम् । एषां द्विषां स्वभूताः पुर इति । **नयन्ति** शुद्धोऽप्ययं नयतिः सोपसर्गार्थे द्रष्टव्यः । अपनयन्ति **दुरिता** पापानि स्तोतॄणाम् **तिरः** तिर सत इति प्राप्तस्य नामनी (तु.गा.३,२०) । प्राप्तान्युत्पन्नानि सन्तीत्यर्थः ।। ३ ।।

**वेङ्कटमाधव–** अमी वरुणादयो यान् परिरक्षन्ति, एषां **दुर्गाणि शत्रून्** शत्रुपुराणि च **वि घ्नन्ति** । दुरितानि च **तिरः नयन्ति** ।। ३ ।।

**मुद्गल– राजानः** वरुणादयः **एषाम्** स्वकीययजमानानाम् **पुरः** पुरस्तात् **दुर्गा** गन्तुं दुःशकानि शत्रुनगराणि **वि घ्नन्ति** विशेषेण नाशयन्ति । तथा **द्विषः** शत्रूनपि वि घ्नन्ति । तथा **दुरिता** यजमानसम्बन्धीनि दुरितानि **तिरः नयन्ति** विनाशं प्रापयन्ति ।। ३ ।।

**सायण– राजानः** वरुणादयः **एषां** स्वकीययजमानानां **पुरः** पुरस्तात् **दुर्गा** गन्तुं दुःशकानि शत्रुनगराणि **वि घ्नन्ति** विशेषेण नाशयन्ति । तथा **द्विषः** शत्रूनपि **वि घ्नन्ति** । तथा **दुरिता** यजमानसम्बन्धीनि दुरितानि **तिरः नयन्ति** विनाशं प्रापयन्ति । **दुर्गा** । दुःखेन गच्छन्त्यत्रेति दुर्गाणि । 'सुदुरोरधिकरणे' (पा.सू.३.२.४८.३ वार्तिकम्) इति गमेर्डप्रत्ययः । शेश्छन्दसि बहुलम् इति शेर्लोपः । **पुरः** । कालवाचिनः पूर्वशब्दात् सप्तम्यर्थे 'पूर्वाधरावराणाम्' (पा.सू. ५.३.३९) इति असिप्रत्ययः । तत्सन्नियोगेन पूर्वशब्दस्य पुरादेशश्च । प्रत्ययस्वरः । **घ्नन्ति** । हन्तेर्लटि अदादित्वात् शपो लुक् । 'गमहन' इत्यादिना उपधालोपः । 'हो हन्तेः' (पा.सू. ७.३.५४) इति घत्वम् । अन्तादेशस्योपदेशवचनादाद्युदात्तत्वम् । पादादित्वादनिघातः ।।३।।

**सिद्धाञ्जनम्–एषाम्** पूर्वोक्तविधानां यजमानानां **पुरः** पुरस्तात् **राजानः** वरुणादयः **दुर्गा** दुःखेन गन्तुं शक्यानि शत्रूणां नगराणि **विघ्नन्ति** विशेषेण नाशयन्ति । तथा **द्विषः** शत्रूनपि **विघ्नन्ति** । **दुरिता** दुरितानि यजमानसम्बन्धीनि **तिरो नयन्ति** विनाशं प्रापयन्ति ।। दुर्गादयो गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**सुगः पन्थाँ अनृक्षर आदित्यास ऋतं यते । नात्रावखादो अस्ति वः ।।४।।**

सुऽगः । पन्थाः । अनृक्षरः । आदित्यासः । ऋतम् । यते । न । अत्र । अवऽखादः । अस्ति । वः ।। ४ ।।

**स्कन्द–** 'सुगः पन्थाः' सुखं गम्यते येन स सुगः पन्थाः । **अनृक्षरः** ऋक्षराः कण्टकाः तद्वर्जितः । हे **आदित्यासः! ऋतम् यते** षष्ठ्यर्थे एषा चतुर्थी । यज्ञं गच्छतः । एतत् ज्ञात्वाऽऽगच्छतेत्यर्थः । **न अत्र अवखादः अस्ति वः** अत्रेति यज्ञः प्रतिनिर्दिश्यते, न पन्थाः । अन्वादेशे सत्यनुदात्तत्वप्रसङ्गात् । अवखाद इति खादिः सामर्थ्याद्धिंसार्थः । न चात्र अस्मद्यज्ञे कश्चिद्धिंसिता तिष्ठति युष्माकमागतानां सतामित्यर्थः । अथवा अत्रेति प्रकृतत्वात्

पन्थाः प्रतिनिर्दिश्यते । ततोऽवखादो गर्त उच्यते । गर्तोऽप्यत्र पथि नास्ति युष्माकम्, यत्रा-गच्छन्तो यूयं प्रस्खलिष्यथ । एतत् ज्ञात्वाऽऽगच्छतेत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** शोभनगमनः **पन्थाः** आदित्याः! यज्ञं गच्छते कण्टकवर्जितः अस्तु । अस्मिन् भवताम् **अवखादः न अस्ति** चरुपुरोडाशादिकं सर्वमेव भवतां भक्ष्यम्, न किञ्चित् त्वाज्यमिति ।। ४ ।।

**मुद्गल–** हे **आदित्यासः** । आदित्याः! **ऋतम् यते यज्ञं गच्छते** भवत्समूहाय **पन्थाः** मार्गः **सुगः** सुष्ठु गन्तुं शक्यः **अनृक्षरः** कण्टकरहितश्च । **अत्र** अस्मिन् कर्मणि **वः** युष्माकम् **अवखादः** अवमन्तव्यः खादो जुगुप्सितहविर्विशेषः **न अस्ति**, तस्मादिहाऽऽगन्तव्यमित्यर्थः ।।

**सायण–** हे **आदित्यासः ऋतं यते** यज्ञं गच्छते भवत्समूहाय **पन्थाः** मार्गः **सुगः** सुष्टु गन्तुं शक्यः **अनृक्षरः** कण्टकरहितश्च । 'अत्र अस्मिन् कर्मणि **वः** युष्माकम् **अवखादः** अवमन्तव्यः खादो जुगुप्सितहविर्विशेषः **न अस्ति** । तस्मादिहागन्तव्यमित्यर्थः । **सुगः** । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्ययः । **पन्थाः** । 'पथिमथोः सर्वनामस्थाने' इत्याद्युदात्तत्वम् । **अनृक्षरः** । 'ऋषी गतौ' ऋषन्ति अन्तर्गच्छन्ति इति ऋक्षरा कण्टकाः । 'तन्यृषिभ्यां क्सरन्' (उ.सू.३.३५५) इति क्सरन्प्रत्ययः । कित्त्वाद्गुणाभावः । कत्वषत्वे । यास्कस्त्वाह-'ऋक्षरः कण्टक ऋच्छतेः' (निरु.९.३२) इति । न विद्यन्ते ऋक्षरा अस्मिन्निति अनृक्षरः। 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **आदित्यासः** । अदितेः पुत्रा आदित्याः । 'दित्यदित्यादित्य' (पा.सू. ४.१.८५) इत्यादिना ण्यप्रत्ययः । 'आज्जसेरसुक्' । आमन्त्रिताद्युदात्तत्वम् । पादादित्वा-दाष्टमिकनिघाताभावः । **यते** । 'इण् गतौ' । लटः शतृ । अदादित्वात् शपो लुक् । 'इणो यण्' (पा.सू.६.४.८१) इति यणादेशः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । **अवखादः** । 'खादृ भक्षणे' । भावे घञ् । अवमतः खादोऽवखादः । थाथादिना उत्तरपदान्तोदात्तत्वम् ।।

**सिद्धाञ्जनम्– हे आदित्यासः** आदित्याः, **ऋतम्** सत्यं प्रति **यते** गच्छते भवद्वृन्दाय **पन्थाः** मार्गः **सुगः** सुष्ठु गन्तुं शक्यः **अनृक्षरः** कण्टकवर्जितश्च भवति । अत्र अस्मदीयेऽस्मिन् यजने **वः** युष्माकं **अवस्वादो** अवमः स्वादो **नास्ति** न विद्यते, दीयमानं सर्वं भोग्यमेव भवताम्, न किमपि जघन्यरसमित्यर्थः । सुगः-सुदुरोरधिकरणे डप्रत्ययः । अनृक्षरः ऋक्षरः कण्टकः । यते-इण् गतौ, अदादिः, शतरि चतुर्थ्येकवचनम् ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यं यज्ञं नयथा नर आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥५॥**
**यम् । यज्ञम् । नयथ । नरः । आदित्याः । ऋजुना । पथा । प्र । वः । सः । धीतये । नशत् ॥ ५ ॥**

**स्कन्द– यम्** यज्ञम् **नयथ** आत्मसमीपं प्रापयथ । प्राप्त्यर्थो वा सामर्थ्यान्नियतिः । प्राप्नुथ । हे नरः! मनुष्याकाराः **आदित्याः । ऋजुना पथा** शीघ्रमत्यर्थम् । **प्र वः सः धीतये नशत्** । **'नशत्'** (निघ.२,१८) इति व्याप्तिकर्मा । प्रकर्षेण युष्माद् स व्याप्नोति धीतये यजमानस्य प्रज्ञायै । युष्मत्प्रसादेन प्रज्ञाविवृद्ध्यर्थमित्यर्थः ॥ ५ ॥

**वेङ्कटमाधव– यम्** मनुष्यम् **यज्ञम् नयथ नरः!** आदित्याः । ऋजुना पथा, प्र व्याप्नोतु **सः** भवतां कर्मणे ॥ ५ ॥

**मुद्गल–** हे **नरः!** नेतारः **आदित्याः । यम् यशम् ऋजुना पथा** अविकलेन मार्गेण **नयथ** पार प्रापयथ, **सः** यज्ञ वः **धीतये** युष्मत्पानाय उपभोगाय **प्र नशत्** प्राप्नोतु ॥ ५ ॥

**सायण– हे नरः** नेतारः **आदित्याः यं यज्ञम् ऋजुना पथा** अविकलेन मार्गेण **नयथ** पारं प्रापयथ **सः** यज्ञः **वः धीतये** युष्मत्पानायोपभोगाय **प्र नशत्** प्राप्नोतु । **नयथ** । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । **पथा** । तृतीयैकवचने 'भस्य टेर्लोपः' (पा.सू.७.१.८८) इति टिलोपः । अनुदात्तस्य च यत्रोदात्तलोपः' (पा.सू.६.१.१६१) इति विभक्तेरुदात्तत्वम् । **धीतये** । 'धेट् पाने' । 'आदेचः इति आत्वम् । क्तिचि 'घुमास्था' इति ईत्वम् । **नशत्** । नशतिर्गत्यर्थः । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः ॥ ५ ॥

**सिद्धाञ्जनम्–** हे **नरः आदित्याः, यम् यज्ञम् ऋजना पथा** अञ्जसा मार्गेण यूयं **नयथ** गन्तव्यं प्रापयथ, **सः** यज्ञः **वः** युष्माकं **धीतये** पोषणाय, भोगाय, प्रणशत् प्राप्नोति लडर्थे लेट् । धीयते-धेट् पाने क्तिच्, पानायेति सायणः, तर्हि भोगायेति ग्राह्यम् । धीरिव धीतिशब्दोऽपि दधातेः निष्पाद्यः, तर्हि धारणाय पोषणाय वेत्यर्थः । नशत्-नशतिर्गत्यर्थः, लेट् । 'ऋजुना पथा' इत्यत्र यज्ञयात्रामार्गस्य अवक्रता आञ्जस्यं आदित्यैः सम्पाद्यत इति ज्ञेयम् ॥ ५ ॥

**॥ इति प्रथमाष्टके तृतीयाध्याये द्वाविंशो वर्गः ॥**

## ऋक्संहिता पदपाठसहिता

**स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥ ६ ॥**
**सः । रत्नम् । मर्त्यः । वसु । विश्वम् । तोकम् । उत । त्मना । अच्छ । गच्छति । अस्तृतः ॥ ६ ॥**

**स्कन्द– स रत्नम्** इति तच्छब्दश्रुतेः योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यो युष्मान् स्तौति **यजते** च, स रत्नं रमणीयम् **मर्त्यः वसु** धनम् **विश्वम्** बहु च **तोकम् उत** अपत्यं च **त्मना** आत्मनैवः **अच्छ गच्छति** अच्छाभेरर्थे । अभिगच्छति । प्राप्नोति । **अस्तृतः** अहिंसितः शत्रुभिः ॥ ६ ॥

**वेङ्कटमाधव–** यो भवता कर्मण्युद्युक्तः, **सः रत्नम् मर्त्यः** वासयितृ व्याप्तं पुत्रं च आत्मनैव अभिगच्छति अहिंसितः ॥ ६ ॥

**मुद्गल–** हे आदित्याः **सः** तादृशो भवद्भिरनुगृहीतः **मर्त्यः** मनुष्यः यजमानः **अस्तृतः** केनाप्यहिंसितः सन् **रत्नम्** रमणीयम् **विश्वम् वसु** सर्वं धनम् **अच्छ** आभिमुख्येन **गच्छति** प्राप्नोति । **उत** अपि च **त्मना आत्मना** स्वेन सदृशम् तोकम् अपत्य गच्छति प्राप्नोति ॥ ६ ॥

**सायण–** हे आदित्याः **सः** तादृशो भवद्भिरनुगृहीतः **मर्त्यः** मनुष्यो यजमानः **अस्तृतः** केनाप्यहिंसितः सन् **रत्नं** रमणीयं **विश्वं वसु** सर्वं धनम् **अच्छ** आभिमुख्येन **गच्छति** प्राप्नोति । **उत अपि च त्मना** आत्मना स्वेन सदृशं **तोकम्** अपत्यं गच्छति । **त्मना** । 'मन्त्रेष्वाङ्यादेरात्मनः' (पा.सू.६.४.१४१) इति आकारलोपः । **अच्छ** । 'निपातस्य च' इति दीर्घत्वम् । **अस्तृतः** । स्तृञ् हिंसायाम् । न स्तृतोऽस्तृतः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

**सिद्धाञ्जनम्–** हे आदित्याः **सः** तादृशः **मर्त्यः** भवदनुग्रहपात्रं यजमानः **अस्तृतः** अहिंसितः **रत्नम्** रमणीयं हर्षाधायकं **विश्वं वसु** सर्वं धनं लौकिकमलौकिकं च **अच्छ** आभिमुख्येन **गच्छति** प्राप्नोति । **उत** अपि च **त्मना** आत्मना **तोकम्** अपत्यं गच्छति, स्ववैभवेन सन्ततिं प्राप्नोति । तादृशस्तस्य प्रभावः येन स्वयं विस्तृतो भूत्वा स्वं तेजोऽन्यत्र सङ्क्रमय्य स्वसदृशं सृजतीत्यर्थः ॥ त्मना-आङि आदेरात्मनः आकारलोपो मन्त्रेषु । अस्तृत-स्तृञ् हिंसायाम् ॥ ६ ॥

## ऋक्संहिता पदपाठसहिता

**कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥७॥**
**कथा । राधाम । सखायः । स्तोमम् । मित्रस्य । अर्यम्णः । महि । प्सरः । वरुणस्य ॥**

**स्कन्द– कथा** केन प्रकारेण **राधाम** राध साध संसिद्धौ । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । संसाधयेम **हे सखायः** । ऋत्विजः! मत्पुत्रादयः । वा । **स्तोमम् मित्रस्य अर्यम्णः वरुणस्य** च । कीदृशम् । **महि** महान्तम् **प्सरः** रूपनामैतत् । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थम् । रूपवन्तम् । अत्यन्तं शोभनमित्यर्थः ॥ ७ ॥

**वेङ्कटमाधव–** कथं राधयामः **सखायः** । **स्तोमम् मित्रस्य अर्यम्णः** च । कथं वा महत् रूपम् **वरुणस्य** स्तुमः ॥ ७ ॥

**मुद्गल– हे सखायः** । सखिभूता ऋत्विजः । मित्रादीनां त्रयाणाम् **महि** महत् **प्सरः** रूपम् । अतः तदनुरूपम् **स्तोमम्** स्तोत्रम् **कथा** केन प्रकारेण **राधाम** साधयामः ॥ ७ ॥

**सायण–** हे **सखायः** सखिभूता ऋत्विजः मित्रादीनां त्रयाणां **महि** महत् **प्सरः** रूपम् । अतस्तदनुरूपं **स्तोमं** स्तोत्रं **कथा** केन प्रकारेण **राधाम** साधयामः । **कथा** । 'था हेतौ च च्छन्दसि' (पा.सू.५.३.२६) इति किंशब्दात् प्रकारवचनेषु प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञायां 'किमः कः' (पा.सू.७.२.१०३) इति कादेशः । प्रत्ययस्वरः । **राधाम** । 'राध साध संसिद्धौ' । लेटि 'बहुलं छन्दसि' इति विकरणस्य लुक् । तिङतिङः इति निघातः । **स्तोमम्** । 'ष्टुञ् स्तुतौ' । 'अर्तिस्तुसु' इत्यादिना भावे मन् । नित्त्वादाद्युदात्तत्वम् । **अर्यम्णः** । षष्ठैकवचने 'अल्लोपोऽनः' इति अकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । **महि** । 'मह पूजायाम्' । औणादिक इन्प्रत्ययः । **प्सरः** । 'प्सा भक्षणे'। प्सातिभक्षयतीति प्सरो रूपम् । औणादिको डरप्रत्ययः ॥ ७ ॥

**सिद्धाञ्जनम्–** हे **सखायः** समानोद्योगाः सुहृदः, सखिभूतानां देवानामादित्यानामेव वा सम्बोधनम् । युष्मासु विशिष्टानां मित्रादीनां, **मित्रस्य अर्यम्णः वरुणस्य च महि** महत् **प्सरः** भक्षणं आहारभूतं **स्तोमम्** स्तोत्रं **कथा राधाम** कथं साधयामः? स्तोत्रं हि

देवानामाराधनम्, स्तुत्या हि देवताः वर्धन्ते । तस्माद्वर्धनहेतुं स्तोमं भक्ष्यस्थानीयमाहुः । 'देवप्सरस्तमं वचः' (१.७५.१) इत्यत्र सायणः देवानां प्रीणयितृतमं वच इति व्याचष्टे । अत्रापि प्सातेर्भक्षणार्थादेव निष्पादयति । किंतु प्सरो रूपं अतस्तदनुरूपं स्तोमं कथा राधाम इत्याह । तदनुरूपमित्यमूलम् । प्सरो रूपं चेत् स्तोमो मन्त्र एव रूपं शरीरं वरुणादीनां देवानामिति व्याख्याय, तादृशं देवानां शरीरभूतं स्तोमं कथं साधयाम इति भावो वक्तव्यः । प्सरो भक्षणमित्युक्तमेव साधीयः । कथा-था हेतौ च च्छन्दसि । राधाम-राध साध संसिद्धौ, लेटि विकरणस्य लुक् । महि मह पूजायां औणादिक इन्प्रत्ययः । प्सरः प्सा भक्षणे औणादिको डप्रत्ययः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् । सुम्नैरिद् व आ विवासे ॥**
**मा । वः । घ्नन्तम् । मा । शपन्तम् । प्रति । वोचे । देवऽयन्तम् । सुम्नैः । इत् । वः । आ । विवासे ॥ ८ ॥**

**स्कन्द– मा वः** युष्माकम् स्वभूतम् **घ्नन्तम्** अपि **मा शपन्तम्** शप आक्रोशे । आक्रोशन्तमपि **प्रति वोचे** प्रतिवोचमित्याशासे । **देवयन्तम्** देवानिच्छन्तम् । यष्टारमित्यर्थः । एतदुक्तं भवति– एवमहमत्यन्तं युष्मद्भक्तः, येन युष्माकम् स्वभूतं यष्टारमपि घ्नन्तमप्याक्रोशन्तमपि मा प्रतिवधिषं मा च प्रत्याक्रुक्षमित्येतदाशास इति । **किञ्च सुम्नैः इत्** 'सुम्नम्' (निघ.३,६) इति सुखनाम । इच्छब्दः पदपूरणः । सुखैः परिचरणैः **वः** युष्मान् **आ विवासे** परिचरेय-मित्याशासे परिचरामि वा ॥ ८ ॥

**वेङ्कटमाधव–** यो युष्मान् **देवान्** कामयमानो भवति, तम् मा **घ्नन्तम् शपन्तम्** वा नाऽहम् **प्रति** हन्मि न च प्रतिशपामि । सुखानि उद्दिश्य युष्मान् परिचराम्येव ॥ ८ ॥

**मुद्गल–** हे मित्रादयो देवा **देवयन्तम्** देवान् कामयमानं यजमानं यः शत्रुः हन्ति, **घ्नन्तम्** तादृशं शत्रुम् **वः** युष्मभ्यम् **मा प्रति वोचे** दुरुक्तकथनभीत्याहं न कथयामि । तथा यजमानं यः शत्रुः शपति तमपि **शपन्तम् मा** प्रतिवोचे । भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः । अहं **तु सुम्नैः इत्** धनैरेव **वः** युष्मान् **आ विवासे** सर्वतः परिचरामि ॥ ८ ॥

**सायण–** हे मित्रादयो देवाः **देवयन्तं** देवान् कामयमानं यजमानं यः शत्रुर्हन्ति **घ्नन्तं** तादृशं शत्रुं **वः** युष्मभ्यं **मा प्रति वोचे** दुरुक्तकथनभीत्याहं न कथयामि । तथा यजमानं यः शत्रुः शपति तमपि **शपन्तं मा प्रति वोचे** भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः । अहं तु **सुम्नैरित्** धनैरेव **वः** युष्मान् **आ विवासे** सर्वतः परिचरामि । **घ्नन्तम्** । हन्तीति घन् । 'गमहन' इत्यादिना उपधालोपः । 'हो हन्तेः' इति कुत्वे प्रत्ययस्वरः । **शपन्तम्** । 'शप आक्रोशे' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । **वोचे** । 'ब्रूञ् व्यक्तायां वाचि' । माङि लुङि इटि 'ब्रुवो वचिः' (पा.स.२.४.५३) इति वचिः । 'अस्यतिवक्ति' इत्यादिना चेः अङादेशः । 'वच उम्' इत्युमागमः । 'न माङ्योगे' इति अडभावः । **देवयन्तम्** । 'सुप आत्मनः क्यच्' । 'न छन्दस्यपुत्रस्य' इति ईत्वप्रतिषेधः । **सुम्नैः** । 'म्ना अभ्यासे' । सुष्ठु म्नायतेऽभ्यस्यते इति सुम्नम् । 'आतश्चोपसर्गे' (पा.सू.३.१.१३६) इति कप्रत्ययः । 'आतो लोप इटि च' इति आकारलोपः । **विवासे** । विवासतिः परिचरणकर्मा (नि.३.५.१०)॥८॥

**सिद्धाञ्जनम्–** हे मित्रादयो देवाः, **देवयन्तम्** देवकामं यजमानं यो हन्ति तं **घ्नन्तम्** हिंसितारं **वः** युष्मभ्यं **मा प्रति वोचे** न कथयामि प्रतीकारेच्छया । तथा **शपन्तम्** यो यजमानं देवकामं शपति शत्रुः तमपि **मा** प्रति वोचे । कुतः? नेदमावश्यकं भवति मम कर्तव्यं वा युष्मासु यजमानयोगक्षेमधुरंधरेषु परीक्षणविचारणशिक्षणाद्यधिकारिषु, जाग्रत्सु । तर्हि किं करोमि? **वः** युष्मान् **सुम्नैरित्** सुखमयैः स्तोत्रैरेव **आविवासे** प्रकाशयामि, परिचरामि वा निरुक्तानुसारतः ॥

## ऋक्संहिता पदपाठसहिता

**चतुरश्चिद् ददमानाद् बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥ ९ ॥**
**चतुरः । चित् । ददमानात् । बिभीयात् । आ । निऽधातोः । न । दुःऽउक्ताय । स्पृहयेत् ॥**

**स्कन्द–** किञ्च **चतुरः चित्** चतुर इति सङ्ख्यापदं सामर्थ्यादक्षविषयं द्रष्टव्यम् । चिच्छब्द उपमायाम् । **ददमानात्** इति ददातिर्धारयतिकर्मा । **आ निधातोः** इत्येतदप्युमानेन सम्बध्यते, नोपमेयेन । यथा चतुरोऽक्षान् ददमानात् धारयतः कितवात् आ निधातोः आ निधानात् तेषामक्षाणां प्रति कितवो बिभेति । तदयं पातयिष्यति येन मां जेष्यतीति । एवं युष्माकम् वरणादीनां प्रसादेन मादृशः सर्वः स्तोता बिभीयादित्याशासे । कुतो बिभीयात् । दुरुक्तात् ।

कुत एतत् । उत्तरस्मिन् पादे दुरुक्तस्पृहाप्रतिषेधात् । **न दुरुक्ताय स्पृहयेत्** नशब्दोऽत्र माशब्द-स्यार्थे । दुरुक्तमप्रियम् । स्पृहा अभिलाषः । माऽप्रियमभिलाषीत् । मा कश्चिदप्यप्रियं वोचदित्यर्थः ।। ९ ।।

**वेङ्कटमाधव–** प्रसङ्गाद् दुरुक्तनिन्दां करोति– चतुरश्चित् इति । चतुरः चित् अक्षान् धारयतः प्रतिकितवात् कितवो यथा **बिभीयात् आ** निधानात् । किमयं चतुरोऽक्षान् पातयति जयाय अन्यूनानिति । इहाक्षेषु निहितेषु चतुरश्चतुरः तान् विभजन्ति । तत्र यदा विभक्ते-भ्योऽधिकास्त्रयो भवन्ति द्वावेको वा न तदा जयो भवति । यदा चत्वारो भवन्ति तदा जयः । तस्मात् प्रतिकितवात् यथा विभीयादेवं दुरुक्तात् बिभीयात् । तदाह– **न दुरुक्ताय स्पृहयेत्** इति ।। ९ ।।

**मुद्गल– घ्नन्तम् शपन्तं च मा प्रतिवोचे** इति यदुक्तं तत्रोपपत्तिरुच्यते । **दुरुक्ताय न स्पृहयेत्** दुष्टं वाक्यं न कामयेत् । किन्तु दुरुक्तात् **बिभीयात्** । तत्रावशिष्टो मन्त्रभागः सर्वोऽपि **दृष्टान्तः** । चित् उपमार्थे । **अक्षद्यूतं** कुर्वतोरुभयोर्मध्ये यः पुमान् **चतुरः** चतुरः चतुःसङ्ख्याकान् कपर्दकान् **ददमानात्** ददतो हस्ते धारयतः पुरुषात् **आ निधातोः** कपर्दकनिपातपर्यन्तं बिभीयात् **अस्य** जयो भविष्यति न भविष्यतीति अन्यो भीतिं प्राप्नुयात् । अत्र यथा भयं तथा दुरुक्ताद् भेतव्यमिति धर्मरहस्यम् । तसमादहं घ्नन्तं शपन्तं मा प्रति वोचे इत्यभिप्रायः ।। ९ ।।

**सायण**–घ्नन्तं शपन्तं च मा प्रतिवोचे इति यदुक्तं तत्रोपपत्तिरुच्यते । **दुरुक्ताय न स्पृहयेत्** दुष्टं वाक्यं न कामयेत् किंतु दुरुक्तात् **बिभीयात्** । तत्रावशिष्टो मन्त्रभागः सर्वोऽपि दृष्टान्तः । **चित्** इत्युपमार्थे वर्तते । अक्षद्यूतं कुर्वतोरुभयोर्मध्ये यः पुमान् **चतुरः** चतुःसंख्याकान् कपर्दकान् **ददमानात्** ददतो हस्ते धारयतः पुरुषात् **आ निधातोः** कपर्दकनिपातपर्यन्तं बिभीयात् अस्य जयो भविष्यति न भविष्यति इत्यन्यो भीतिं प्राप्नुयात् । अत्र यथा भयं तथा दुरुक्तात् भेतव्यमिति धर्मरहस्यम् । तस्मादहं घ्नन्तं शपन्तं मा प्रतिवोचे इत्यभिप्रायः । अत्र निरुक्तं- चतुरोऽक्षान् धारयत इति तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयान् न दुरुक्ताय स्पृहयेत्' (निरु.३.१६) इति । चतुरः । 'चतुरः शसि' (पा.सू.६.१.१६७) इति विभक्तेः पूर्वस्योदात्तत्वम् । **ददमानात्** । 'दद दाने' । अत्र धारणार्थः । शपः पित्त्वादनुदात्तत्वम् । अदुपदेशात्

लसार्वधातुकानुदात्तत्वेन शानजनुदात्तः । धातुस्वर एव शिष्यते । **बिभीयात्** । 'ञिभी भये' । लिङि जुहोत्यादित्वात् शपः श्लुः । यासुट उदात्तत्वम् । पादादित्वात् निघाताभावः । **निधातोः** । निपूर्वात् दधातेः 'सितनिगमि' (उ.सू.१.६९) इत्यादिना भावे तुन्प्रत्ययः । व्यत्ययेनाद्युदातत्वम् । 'तादौ च' इति गतिस्वरो न भवति 'अतौ' इति पर्युदस्तत्वात् । **दुरुक्ताय** । 'स्पृहेरीप्सितः' (पा.सू.१.४.३६) इति संप्रदानसंज्ञायां 'चतुर्थी संप्रदाने' (पा.सू.२.३.१३) इति चतुर्थी । **स्पृहयेत्** । 'स्पृह ईप्सायाम्' । चुरादिरदन्तः । अतो लोपस्य स्थानिवद्भावात् लघूपधगुणाभावः ।। ९ ।।

**सिद्धाञ्जनम्–** प्रथमं सायणमनुसृत्य मन्त्रार्थमुक्त्वा अनन्तरं अस्मदीयमाचक्ष्महे । **दुरुक्ताय न स्पृहयेत्** दुष्टं वाक्यं न कामयेत, दुष्टं प्रतिवचो न दद्यात् । किं तु दुरुक्ताद्बिभीयात् । अवशिष्टो मन्त्रभागः सर्वोऽपि दृष्टान्तः । **चतुरः चित्** चतुःसंख्याकान् कपर्दकान् **ददमानात्** हस्ते धारयतः पुरुषात् अक्षद्यूतं कुर्वतः **आ निधातोः** कपर्दकनिपातपर्यन्तं अन्यो द्यूतवर्ती पुरुषः **बिभीयात्** अस्य जयो भविष्यति न वेति भीतो भवेत्, अत्र यथा भयं तथा दुरुक्ताद्भेतव्यमिति धर्मरहस्यम् । इदं सायणीयं तात्पर्यम्, अस्याधारः यास्कः । मूले अक्षशब्दो न श्रूयते । चित् उपमार्थीयः गृहीतः । नासाधु तथा ग्रहणम् । किं तु चिदित्येषोऽनेकार्थः । अप्यर्थे वर्तते यच्चिदित्यादौ । 'आचार्यश्चिदिदं ब्रूयात्' पूजायाम् । अथास्यां ऋचि पूर्वव्याख्यातारो यजमानस्य दुरुक्ताद् भयस्यावश्यकतां दृष्टान्तेन चमत्कृतां पश्यन्ति । नैतद्युक्तं दृश्यते । चित् इह नोपमार्थीयः । **चतुरश्चित्** चतुरो देवानपि **ददमानात्** ददतः यजमानाय तदनुग्रहार्थं, **आ निधातोः** समन्तात् नितरां धारकात् एकस्माद्देवदेवात् **बिभीयात्** उद्विजेत, इमे चत्वारो देवाः मह्यं तेनैकेन निधातुना देवदेवेन दत्ताः मां मा हासिषुः मय्येव तिष्ठन्तु, तान् मे दत्तवतो निधातोः सर्वस्वामिनः शिक्षाधिकारे सति, दुरुक्तस्य प्रतिक्रियां माऽहं कार्षमिति 'निधातोः' भयं स्यात् । एवं मा वो घ्नन्तमिति पूर्वयर्चा अर्थसङ्गतिः । तृतीयपादे न विशेषः । क इमे चत्वारो देवताः? त्रयोऽत्र सूक्ते प्रतिपादिताः मित्रो वरुणोऽर्यमा च । यद्यप्यवशिष्टो भगो नोऽक्तः, तथापीदं देवताचतुष्टयं व्यूहात्मकं वेदे प्रसिद्धम् । प्रागुपन्यस्तम् । अदर्शि गातुः.... चक्षुर्भगस्य रश्मिभिः । द्युक्षं मित्रस्य सादनं अर्यम्णो वरुणस्य च....(१.१३६.२) इति चतुर्णामेकसदनत्वं श्रूयते । ददमानात्-दद दाने शानच् । बिभीयात्-बिभेतेर्लिङ् । निधातोः-निपूर्वाद्दधातेः भावे

तुन्प्रत्ययः, तेन तस्य कर्ता लक्षितः। दुरुक्ताय स्पृहयेत्-सम्प्रदानसंज्ञायां चतुर्थी, स्पृह ईप्सायाम्, चुरादिरदन्तः ।।

अथ सं पूषन्निति दशर्चं सप्तमं सूक्तम् । ऋषिर्घोरः कण्वः, गायत्री छन्दः, पूषा देवता । आदित्यानामेकः पूषा कीर्त्यते । पृथिव्यभिमानीति सायणः तैत्तिरीयश्रुतिबलादाह । 'पूषाध्वनः पात्वित्याह, इयं वै पूषा' इयं वै पूषा इयं हीदं सर्वं पुष्यति यदिदं किञ्च इति । सर्वथा पोषकत्वात् पूषा । यद्यपि सर्वेषां देवानामूर्ध्वमायतनं भवति, तथापि तेषां मुख्यं स्थानं कार्यक्षेत्रं वा भिद्यत इति बोध्यम् । एवं देव्यस्य मनसस्पतेरिन्द्रस्य तृतीयं स्थानं स्वराख्यम् । अग्निः सन्निहितोऽस्माकं पृथिव्याम् । मरुतः प्राणभुवो मध्यमस्थानाः । एवमन्ये च देवाः तत्तत्स्थान-मधिष्ठाय स्वीयानि कृत्यानि निर्वहन्ति । पूषा त्वादित्यस्तृतीयस्थानोऽपि मातुः पृथिव्याः पतिर्दिधिषुः पोषकः, एतदर्थं पृथिवीस्थानो वक्तव्यः । यदात्र बहिः पृथिवीक्षेत्रं अन्तः पृथिवीचितिं च स्वीयादित्यविभवेन पुष्णन् स्वयं च पोषं प्राप्तः प्रादुर्भवति, तदा तदनु प्रज्ञानप्रभातलक्षणा उषोदेवी जायते । ततोऽयं अश्विनोः सूर्यायाः उषसः परिग्रहे, तो अश्विनी स्वीयस्योत्तरोत्तरपोषस्य विधायको आरोग्यप्रदौ पितृत्वेन वृणोति । पातृत्वाद्धि पिता । एवं पोषितः पूषा आदित्य इन्द्रस्य तेजोबलैश्वर्यादीनां वर्षिता भ्राता भवति । अन्ते पृथिव्याः दिवश्च सुबन्धुर्भवति । एवमुक्तमर्थं ज्ञापयन्तो मन्त्रवर्णाः सन्ति बहव ऋक्संहितायाम् । इह केचनोदाह्रियन्ते । 'मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः । भ्रातेन्द्रस्य सखा मम (६.५५.५) ।। 'पूषा सुबन्धुर्दिव आ पृथिव्या इळस्पतिर्मघवा दस्मवर्चाः । यं देवासो अददुः सूर्यायै कामेन कृतं तवसं स्वञ्चम् (६.५८.४) । 'यदश्विना पृच्छमानावयातं ... विश्वे देवा अनु तद्वामजानन् पुत्रः पितराववृणीत पूषा (१०.८५.१४) ।

वृत्रवधात्परमपि पणयोऽसुराः यजमानस्य मार्गं रुन्धन्ति, गाश्चापहरन्ति अन्ये च तादृशाः देवद्विषः ऊर्ध्वगामिनं देवभक्तं पुरुषं प्रत्यक्षमप्रत्यक्षं वा बाधन्ते तद्रोधनाद्यपहारेण मार्गतिरोधान-विधिना अमार्गदर्शनेन । अत्रैव पूष्णः कृत्यं विशिष्टं लक्ष्यते । पणीनाममुराणां वणिजामिव व्यवहारिणां व्यवहारः पूष्णि देवे न मूर्च्छति । अयं पथस्पतिः । अनष्टपशुश्च भवति । जीवत्येव यजमाने लोकान्तरमार्गं अधिगन्तुं उद्यते, पूषैव सहकारी देवो भवति । अत्रैते मन्त्रा भवन्ति । 'अदित्सन्तं चिदाघृणे पूषन् दानाय चोदय । पर्णश्चिद् वि म्रदा मनः (६.५३.३) ।। 'परि

तृन्धि पणीनामारया हृदया कवे । अथेमस्मभ्यं रन्धय (६.५३.५) ।। 'इमं च नो गवेषणं सातये सीषधो गणम् । आरात् पूषन्नसि श्रुतः (६.५६.५) ।। 'पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः (१०.१७.३) ।। मेधातिथेस्तृचस्य (१.२३.१५) व्याख्यायां यदुक्तं तदप्यवधेयम् । देवद्विड्भिः अपहृत्य रहसि निहितं देवानामन्नभूतममृतं सोममाहृत्य यजमानं पुष्णन् अवलोकविभवान् सोमरसभरितान् पदे पदे पुनः पुनः सम्पाद्य सर्वथा तं सोमसम्पन्नं विधत्ते स एप पौष्णो विभव इत्युक्तम् । 'दिवो धरुणं (सोमं) आजा नष्टं यथा पशुम्..... अपगूळ्हं गुहाहितं राजानं (सोम) अविन्दत् गोभिर्यवं न चकृषत्' (पृ.२४४.२४५) इत्यादयो मन्त्रभागा अत्र प्रमाणम् । संपूषन्नित्यस्मिन् अन्यत्र च मन्त्रेषु 'विमुचो नपात्' इति पूषा निर्दिश्यते । प्रथमं तावदस्य विवरणं कर्तव्यम् । विमुञ्चतीति विमुक् (क्विप्) मेघः तस्य नपात् पुत्रः पूषेत्याह सायणः । उपपादयति चैवम्-जलविमोचनहेतोर्मेघस्य पुत्रः पूषा, पृथिव्या एव पूषत्वात् । अद्भ्यः पृथिवीति श्रुतेः अपां सार एव पृथिवी, सैव पूषा भवतीति । अस्त्वेष स्थूलपक्षीयोऽर्थः युक्तोऽयुक्तो वा । अस्मदीयः पूषा तु पोषको यजमानस्य, पृथिव्याश्च । स ज्ञानैश्वर्यतेजोबलादीनां वर्धितुः इन्द्रात्मन आदित्यस्य सन्ततिः, पतिः पाता पृथिव्याः पूर्वज उषसः, भ्रातेन्द्रस्य, यजमानस्य पथस्पतिः मार्गरक्षी, यजमानगवेषणपरायणः, यजनोद्यमप्रचोदनपरश्चेत्यादिगुणविशिष्टो भवतीति बोध्यम् ।।

।। इति प्रथमाष्टके तृतीयाध्याये त्रयोविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ४२)

१० कण्वो घौरः । पूषा । गायत्री ।

**सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस्पुरः ।। १ ।।**

**सम् । पूषन् । अध्वनः । तिर । वि । अंहः । विऽमुचः । नपात् । सक्ष्व । देव । प्र । नः । पुरः ।। १ ।।**

**स्कन्द– 'पौष्णमेतत् सूक्तम्'** । महान्तमध्वानमेष्यतः प्रतिभयं वा जपे अस्य विनियोगः । हे **पूषन्! अध्वनः** मार्गात् **सम् तिर** तिरतिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । सन्तारय **अस्मान्** । वि अंहः वीत्युपसर्गश्रुतेस्तिर इत्याख्यातमनुषक्तव्यम् । वितर अंहः पापं च विनाशाय । पापं

चापगमयेत्यर्थः । **हे विमुचो नपात्** । संहारकाले सर्वमिदं ग्रसित्वा पुनः सृष्टिकाले विमुञ्चतीति **विमुक् प्रजापतिः**, तस्य पौत्रः । कथं पुनः पूषा प्रजापतेः पौत्रः । अभ्द्यः पूष्णः अपाञ्च प्रजापतित उत्पत्तिश्रुतिषु उत्पत्तिश्रुतेः । अपत्यमात्रनाम वा नपाच्छब्दः । प्रजापतेरपत्य । किञ्च **सक्ष्व देव प्र** सक्ष्वेति सक्षतेः सचतेर्वा गतिकर्मणो रूपम् (तु.निघ.२,१४) । प्रसक्ष्व प्रगच्छ हे देव! **नः** अस्माकम् **पुरः** अग्रतः । महति प्रतिभयेऽस्मिन् पथि अग्रतोगाम्यस्माकं भवेत्यर्थः ।। १ ।।

**वेङ्कटमाधव– हे पूषन्!** दुर्गात् मार्गात् सन्तारय पापं च विनाशय । मेघादापो जायन्ते, अभ्द्यः पृथिवीति विमुचो नपात् तदधिपतिः पूषा । प्रसक्तो भव जिगमिषूणाम् अस्माकम् अग्रतः ।। १ ।।

**मुद्गल–** 'सम् पूषन्' इति दशर्चं सप्तमं सूक्तम् । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । पूषा देवता । हे **पूषन्!** जगत्पोषक! पृथिव्यभिमानिदेव! **अध्वनः** मार्गात् **सम् तिर** अस्मान् अभीष्टस्थानं सम्यक् प्रापय । **अंहः** विघ्नहेतुं पाप्मानं **वि** तिर विनाशय । पूषा विशेष्यते– **हे विमुचो नपात्!** जलविमोचनहेतोः मेघस्य पुत्र! **हे देव!** पूषन्! **नः पुरः** अस्माकम् पुरतः **प्र सक्ष्व** प्रत्यक्षो भव पुरुतो गच्छेत्यर्थः ।। १ ।।

**सायण–** संपूषन्निति दशर्चं सप्तमं सूक्तम् । काण्वं गायत्रं पूषदेवताकम् । संपूषन् दश पौष्णमित्यनुक्रान्तम् । स्मार्ते महान्तमध्वानमेष्यन्निदं सूक्तं जपेत् । संपूषन्नध्वन इति महान्तमध्वानमेष्यन् प्रतिभयं वा । (आ.गृ-३.७.१०)इति सूत्रितत्वात् । तत्र जपेदित्यनुवर्तते ।

हे **पूषन्** जगत्पोषक पृथिव्यभिमानिदेव **अध्वनो** मार्गात् **सं तिर** अस्मानभीष्टस्थानं सम्यक् प्रापय । **अंहः** विघ्नहेतुं पाप्मानं **वि तिर** विनाशय । पूषा विशेष्यते । **विमुचो नपात्** जलविमोचकहेतोर्मेघस्य पुत्र । नपात् इति पुत्रनाम । 'नपात् प्रजा' इति तन्नामसु पाठात् । श्रुत्यन्तरेऽभ्द्यः पृथिवी इति जलात् भूम्युत्पत्तिः श्रूयते । तथा अन्यत्रापि उदकसारत्वं पृथिव्याः श्रूयते । तद्यदपां सार आसीत्तत्समहन्यत सा पृथिव्यभवत् इति । मेघस्य जलधारित्वादुदकपुत्र एव मेघपुत्रो भवति । न च पृथिव्या मेघपुत्रत्वे पूष्णः किमायातमिति वाच्यं, पृथिव्या एव पूषत्वात् । तथा च श्रुत्यन्तरे कस्यचिन्मन्त्रस्य ब्राह्मणमेवमाम्नायते पूषाध्वनः पात्वित्याहेयं

वै पूषेति । तन्निर्वचनं चान्यत्रैवमाम्नायते-'इयं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च' (श.बा. १४.४.२.२५) इति । हे देव पूषन् **नः पुरः** अस्माकं पुरतः **प्र सक्ष्व** प्रसक्तो भव । पुरतो गच्छेत्यर्थः । **विमुचो नपात्** । उदकं विमुञ्चतीति विमुङ् मेघः । 'क्विप् च' इति क्विप् । न पातयति कुलमिति नपात् पुत्रः । नञ् पूर्वात् पातयतेः क्विप् । 'नभ्राण्नपात्' इत्यादिना नञः प्रकृतिभावः । 'सुबामन्त्रिते' इति पराङ्गवद्भावात् षष्ठ्यामन्त्रितसमुदायस्य आष्टमिकं सर्वानुदात्तत्वम् । **सक्ष्व** । 'षच सेवने' । अनुदात्तेत्त्वादात्मनेपदम् । लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वे धातुस्वरः। प्र णः । 'उपसर्गाद्बहुलम्' इति नसो णत्वम् । पुरः । उक्तम् ॥ १ ॥

**सिद्धाञ्जनम्**–हे **पूषन्** देव, **अध्वनः** मार्गात् **सं तिर** सम्यक् प्रापय गन्तव्यं स्थानम् । **अंहः** दुरितं **वितिर** विनाशय । हे **विमुचो नपात्** वर्षितुरिन्द्रात्मन आदित्यस्य पुत्र **देव, नः** अस्माकं **पुरः** पुरस्तात् **प्र सक्ष्व** प्रसक्तो भव । सक्ष्व-षच सेवने, लोट्, शपो लुक्, छन्दसि बहुलम् । प्र णः नस्य णत्वं, उपसर्गाद्बहुलम् ॥ १ ॥

## ऋक्संहिता पदपाठसहिता

**यो नः॑ पूषन्न॒घो वृको॑ दुः॒शेव॑ आ॒दिदे॑शति । अप॑ स्म॒ तं प॒थो ज॑हि ॥ २ ॥**

यः । नः॒ । पू॒षन् । अ॒घः । वृकः॑ । दुः॒ऽशेवः॑ । आ॒ऽदिदे॑शति । अप॑ । स्म॒ । तम् । प॒थः । ज॒हि ॥ २ ॥

**स्कन्द– यः नः पूषन्** योऽस्मान् हे पूषन् अघः पापः **वृकः** कुक वृक आदाने इत्यस्य । स्तेननामैतत् (तु.निघ.३,२४) । परस्वादानपरश्चोरः । **दुःशेव** कुत्सितसुखः । अन्यायोपात्तेन हि धनेन यत् सुखं जन्यते कुत्सितं तत् । **आदिदेशति** सहायभूतेभ्यश्चोरेभ्यः गच्छतः कथयतीत्यर्थः । **अप स्म तम् पथः जहि** हन्तिरत्र गत्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । अपजहि अपगमय तं पथो मार्गात् । **स्म** इति पदपूरणः ॥ २ ॥

**वेङ्कटमाधव– यः** अस्माकम् **पूषन्!** आहन्ता स्तेनः दुःसुखः इहागन्तव्यमिति वदति, **तम् पथः अप जहि** इति । अस्या उत्तरा भूयसे निर्वचनाय ॥ २ ॥

**मुद्गल– हे पूषन्** । **यः** प्रतिपक्षी **नः** अस्मान् **आदिदेशति** अनेन मार्गेण न गन्तव्यम् इत्यवमाज्ञापयति । कीदृशः । **अघः** आहन्ता । **वृकः** अस्मदीयस्य धनस्यादाता । अपहर्तेत्यर्थः । दुःशेवः सेवितुं दुःशकः । **तम्** तादृशं प्रतिपक्षिणम् **पथः** मार्गात् **अप जहि स्म** अवश्यम् अपाकुरु ।। २ ।।

**सायण–** हे **पूषन् यः** प्रतिपक्षी **नः** अस्मान् **आदिदेशति** अनेन मार्गेण गन्तव्यम्' इत्येवमाज्ञापयति । कीदृशः । **अघः** आहन्ता **वृकः** अस्मदीयस्य धनस्य आदाता अपहर्तेत्यर्थः । **दुःशेवः** सेवितुं दुःशको दुष्टसुखो वा । **तं** तादृशं प्रतिपक्षिणं **पथो** मार्गात् **अप जहि स्म** अवश्यमपाकुरु । **वृकः** । 'कुक वृक आदाने' । वर्कते इति वृकः । इगुपधलक्षणः कः । वृषादित्वादाद्युदात्तत्वम् । दुःशेवः । दुष्टं शेवं यस्यासौ दुःशेवः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । यद्वा । दुःखेन सेव्यते इति दुःशेवः । वर्णव्यत्ययेन सकारस्य शकारः । 'ईषदुःसुषु' इति खल् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् । आदिदेशति । 'दिश अतिसर्जने' । लेट्यडागमः । 'बहुलं छन्दसि' इति शपः श्लुः । 'बहुलं छन्दसीति वक्तव्यम्' (पा.सू.७.३.८७. वार्तिक)इति वचनात् 'नाभ्यस्तस्याचि' (पा.सू. ७.३.८७) इति लघूपधगुणप्रतिषेधाभावः । **पथः** । उदात्तनिवृत्तिस्वरेण विभक्तरुदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे **पूषन्, यः** प्रतिपक्षी **नः** अस्मान् **आदिदेशति** आज्ञापयति इतो गन्तव्यं इतो नेति **तम् पथः** मार्गात् **अपजहि स्म** अवश्यमपाकुरु । कीदृशः सः? **अघः** आहन्ता पापः **वृकः** ईहामृग इव आच्छिद्य अपहर्ता घनस्य **दुःशेवः** दुष्टसुखः । यागयात्रायां ईदृशः पापवर्गः मार्गे बाधको वर्तते, तदपसारणं पूष्णो देवस्य सुकरम्, तस्मात्प्रार्थना । वृक-कुक वृक आदाने इत्यस्मात्, छेदनार्थाद् वृश्चतेर्वा । दुःशेवः दुःष्टं शेवं यस्य सः । आदिदेशति- दिश अतिसर्जने, लेट्, छन्दसि शपः श्लुः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अप त्यं परिपन्थिनं मुषीवाणं हुरश्चितम् । दूरमधि स्रुतेरज ।। ३ ।।**

**अप । त्यम् । परिऽपन्थिनम् । मुषीवाणम् । हुरःऽचितम् । दूरम् । अधि । स्रुतेः । रज ।। ३ ।।**

**स्कन्द– अप त्यम् परिपन्थिनम्** अपेत्युपसर्गः अन्त्येन अज इत्येतेन आख्यतेन सम्बन्धयितव्यः । यः पूर्वस्यामृचि उक्तस्तं परिपन्थिनं गमनप्रतिबन्धकरम् **मुषीवाणम्** नैतत् स्तेननाम, **हुरश्चितम्** इत्येतेन पौनरुक्त्यप्रसङ्गात् । किं तर्हि । क्रियाशब्दोऽयम् । मोषितारम् । हुरश्रितम् स्तेन नामैतत् (तु.निघ.३,२३) चोरम् । **दूरम् अधि स्रुतेः** अधिशब्दः 'अधिपरी अनर्थकौ' (पा.२,४,९३) इति कर्मप्रवचनीयः पदपूरणः । स्रूयते गम्यतेऽनयेति स्रुतिः पन्थाः । दूरमस्मात् पथः अप अज अजतिर्गत्यर्थः । सामर्थ्याच्चान्तर्णीतण्यर्थः । अपाज अपगमय ॥

**वेङ्कटमाधव–** अपगमय तं गमनप्रतिबन्धकरं परोक्षं हर्तारं प्रत्यक्षेण च हरन्तम् आहृत्य च धनानां चेतारं मार्गात् **अधि दूरम्** इति ॥ ३ ॥

**मुद्गल– त्यम्** तादृशम् पूर्वोक्तगुणयुक्तम् **स्रुतेः** मार्गात् **अधि दूरम्** अत्यन्तदूरदेशं प्रति **अप अज** अपगमय । कीदृशम् । **परिपन्थिनम्** मार्गप्रतिबन्धकम् । **मुषीवाणम्** तस्कररूपम् । **हुरश्चितम्** कौटिल्यानां सञ्चेतारम् ॥ ३ ॥

**सायण– त्यं** तादृशं पूर्वोक्तगुणयुक्तं **स्रुतेः** मार्गात् **अधि दूरम्** अत्यन्तदूरदेशं प्रति **अपाज** अपगमय । कीदृशम् । **परिपन्थिनं** मार्गप्रतिबन्धकं **मुषीवाणं** तस्कररूपम् । मुषीवेति तस्करस्य नाम, 'मुषीवान् मलिम्लुचः' (नि.३.२४.११) इति तत्रामसु पाठात् । **हुरश्चितं** कौटिल्यानां संचेतारम् ॥ **परिपन्थिनम्** । छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (पा.सू.५.२.८९) इति शत्रावभिधेये इनिप्रत्ययान्तो निपातितः । **मुषीवाणम्** । 'मुष स्तेये'। मोषणं मुषिः। औणादिको भावे किप्रत्ययः । मुषिं वनति संभजते इति मुषीवा । 'वन षण संभक्तौ'। 'अन्येभ्योऽपि दृश्यन्ते' (पा.सू.३.२.७५) इति विच्प्रत्ययः । 'सर्वनामस्थाने चासंबुद्धौ' (पा.सू. ६.४.८) इति दीर्घः। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् । **हुरश्चितम्** । 'हुर्छा कौटिल्ये'। संपदादिलक्षणो भावे क्विप् । 'राल्लोपः' इति छकारलोपः । हुरश्चिनोतीति हुरश्चित् । चिनोतेः क्विपि तुगागमः । 'तत्पुरुषे कृति बहुलम्' इति अलुक् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **स्रुतेः** । 'स्रु गतौ'। 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'चितः' इत्यन्तोदात्तत्वम् । **अज** । 'अज गतिक्षेपणयोः' ॥ ३ ॥

**सिद्धाञ्जनम्–** तं पूर्वोक्तविधं **परिपन्थिनम् मार्गे** प्रत्यवस्थातारं **मुषीवाणम्** तस्कररूपं

**हुरश्चितम्** कौटिल्यानां सञ्चेतारं **स्रुतेः** मार्गात् **अधि** अधिकं **दूरम्** दूरस्थानं प्रति **अपाज** अपगमय । परिपन्थिनम् छन्दसि परिपन्थिपरिपरिणौ प्रत्यवस्थातरि इति शत्रावभिधेये इनिप्रत्ययान्तो निपातितः । मुषीवाणम् मुषीवा इति तस्करनाम, मुष स्तेये मोषणं मुषिः औणादिको भावे किप्रत्ययः, मुषिं वनति संभजते मुषीवान्, पूर्वपददीर्घः छान्दसः । हुरश्चितम् हुर्छा कौटिल्ये, क्विप् सम्पदादिलक्षणः । राल्लोप इति छकारलोपः, हुरश्चिनोति, क्विप्, हुरश्चित्, तम् । स्रुतेः- स्रु गतौ । अज गत्यर्थे अन्तर्भावितण्यर्थः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**त्वं तस्य॑ द्वया॒विनो॒ऽघशं॑सस्य॒ कस्य॑ चित् । प॒दाभि ति॑ष्ठ॒ तपु॑षिम् ।। ४ ।।**

**त्वम् । तस्य॑ । द्व॒या॒विनः॑ । अ॒घऽशं॑सस्य । कस्य॑ । चि॒त् । प॒दा । अ॒भि । ति॒ष्ठ॒ । तपु॑षिम् ।।**

**स्कन्द–** **त्वम् तस्य द्वयाविनः** द्वयम् इह च राजभयम् परत्र चापुण्यम्, तद्वान् द्वयावी तस्य द्वयाविनः । **अघशंसस्य** स्तेननामैतत् (तु.निघ.३,२४) चोरस्य कस्य अपि स्वभूतस्य । अथवा कम् (३.६) इति सुखनाम । सुखस्यापि । त्वां परिचरतोऽपीत्यर्थः । **पदा** पदेन **अभि तिष्ठ** आक्राम **तपुषिम्** तापयित्रीम् दुःखयित्रीम् । काम् । सामर्थ्यात् इषुं शक्तिं वा । क्रोधनाम वा तपुषिशब्दः (तु.निघ.२,१३) । अस्मद्विषयं क्रोधम् ।। ४ ।।

**वेङ्कटमाधव–** प्रत्यक्षपरोक्षहरणयुक्तस्य स्तेनस्य अस्यतरस्य अपि पादेन **अभि तिष्ठ** बलम् ।। ४ ।।

**मुद्गल–** हे पूषन्! **त्वम् तस्य** चोरस्य **तपुषिम्** परसन्तापकं देहम् **पदा अभि तिष्ठ** भवदीयेन पादेनाक्रम्य तिष्ठ । कीदृशस्य । **द्वयाविनः** प्रत्यक्षापहारः परोक्षापहारश्चेति यत् द्वयं तद्युक्तस्य । **अघशंसस्य** अस्मासु अघम् अनिष्टं शंसतः **कस्य चित्** अनिर्दिष्टविशेषस्यापि ।।

**सायण–** हे पूषन् **त्वं तस्य** चोरस्य **तपुषिं** परसन्तापकं देहं **पदाभि तिष्ठ** भवदीयेन पादेनाक्रम्य तिष्ठ । कीदृशस्य । **द्वयाविनः** प्रत्यक्षापहारः परोक्षापहारश्चेति यद्द्वयं तद्युक्तस्य **अघशंसस्य** अस्मास्वघमनिष्टं शंसतः । अघशंस इति तस्करनाम, 'मलिम्लुचः अघशंसः वृकः' (नि.३.२४.१३) इति तन्नामसु पाठात् । **कस्य चित्** अनिर्दिष्टविशेषस्य कस्यापि ।।

**द्वयाविनः** । द्वयमस्यास्तीति द्वयावी । 'बहुलं छन्दसि ' (पा.सू.५.२.१२२) इति मत्वर्थीयो विनिः । 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । **अघशंसस्य** । अघे पापे शंसो मनस्यभिलाषो यस्य सोऽयमघशंसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **तपुषिम्** । तापयत्यनेन अन्यमिति तपुषिः । औणादिक उषिन्प्रत्ययः। बहुलवचनात् इकारस्य न इत् संज्ञा । नित्त्वादाद्युदात्तत्वम् ।।

**सिद्धाञ्जनम्–** हे पूषन् **त्वम् तस्य** उक्तविधस्य दुष्टस्य **तपुषिम्** अन्यतापकं देहं **पदा** त्वदीयेन पादेन **अभितिष्ठ** अभिगम्य तिष्ठ । कीदृशस्य? **द्वयाविनः** प्रत्यक्षमप्रत्यक्षं चापहरणं द्विविधम्, तद् द्वयमस्येति द्वयावी, तस्य **अघशंसस्य** अघं अस्मदनिष्टं शंसतः **कस्यचित्** कस्यापि विशेषनिर्देशरहितस्य । द्वयाविनः-मत्वर्थीयो विनिः, दीर्घः छन्दसि अन्येषामपि दृश्यते । अघशंसस्य-अघे पापे शंसोऽभिलाषोऽस्य । तपुषि-तापयत्यनेनेति तपुषिः, औणादिकः उषिन्प्रत्ययः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**आ तत् ते॑ दस्र मन्तुम॒ः पूष॒न्नवो॑ वृणीमहे । येन॑ पि॒तॄनचो॑दयः ।। ५ ।।**

**आ । तत् । ते॒ । द॒स्र॒ । म॒न्तु॒ऽम॒ः । पूष॑न् । अव॑ः । वृ॒णी॒म॒हे॒ । येन॑ । पि॒तॄन् । अचो॑दयः ।।**

**स्कन्द– आ तत् ते दस्र** मन्तुमः तत् तव स्वभूतं हे दस्र! तमसां चोराणां वोपक्षपयितः ! दर्शनीय ! वा मन्तुमः । मन्तुर्मननम्, तद्वन्! **पूषन्!** तव **अवः** पालनम् **आ वृणीमहे** प्रार्थयामहे । **येन** श्रस्मदीयान् **पितॄन्** अपि **अचोदयः** प्रेरितवान् । महत्सु प्रतिभयेषु वा अध्वनि वा प्रेरितवानसीत्यर्थः ।। ५ ।।

**वेङ्कटमाधव– आ वृणीमहे तत्** रक्षणं तव दर्शनीय! ज्ञानवन्! **येन पितॄन्** अङ्गिरसः पणिभिरपहृतासु गोषु **अचोदयः** ।। ५ ।।

**मुद्गल–** हे मन्तुमः! ज्ञानवन्! **दस्र!** दर्शनीय पूषन् । **ते** त्वदीयम् **तत् अवः** तादृशं रक्षणम् **आ वृणीमहे** सर्वतः प्रार्थयामहे । **येन** रक्षणेन **पितॄन्** अङ्गिरःप्रभृतीन् पितृदेहान् **अचोदयः** प्रेरितवानसि । तद्रक्षणमिति पूर्वत्रान्वयः ।। ५ ।।

**सायण–** हे **मन्तुमः** ज्ञानवन् **दस्र** दर्शनीय यद्वा वैर्युपक्षयकारिन् **पूषन् ते** त्वदीयं **तत्**

**अवः** तादृशं रक्षणम् **आ वृणीमहे** सर्वतः प्रार्थयामहे । **येन** रक्षणेन **पितॄन्** अङ्गिरःप्रभृतीन् पितृदेहान् **अचोदयः** प्रेरितवानसि । तद्रक्षणमिति पूर्वत्रान्वयः ।। **दस्र** । 'दसि दंसनदर्शनयोः' । 'स्फायितञ्चि' इत्यादिना रक् । आगमानुशासनस्यानित्यत्वात् नुमभावः । यद्वा 'दसु उपक्षये' इत्यस्मादन्तर्भावितण्यर्थान् पूर्ववत् रक् । **मन्तुमः** । 'मन ज्ञाने' । 'कमिमनिजनि' (उ.सू. १.७३) इत्यादिना भावे तुप्रत्ययः । मन्तुर्ज्ञानमस्यास्तीति मन्तुमान् । संबुद्धौ 'मतुवसो रुः' इति रुत्वम् । अचोदयः । 'चुद संचोदने' । चौरादिकः ।। ५ ।।

**सिद्धाञ्जनम्–** हे **मन्तुमः** ज्ञानवन्, **दस्र** शत्रूपक्षयकारिन्, **पूषन्** क्रियादक्ष, अत्र प्रसक्तौ, कर्मशूरत्वं ज्ञानवत्त्वं च पूष्णः उक्ते । (दर्शनीयेति सायणः) **ते** त्वदीयं **तत् अवः** तथाविधं रक्षणं **आ वृणीमहे** सर्वतः प्रार्थयामहे । **येन** रक्षणेन **पितॄन्** पूर्वान् ऋषीन् **अचोदयः** प्रेरितवानसि, तत् तथाविधमिति पूर्वेणान्वयः । दस्र-गतः । मन्तुमः मन ज्ञाने, भावे तुप्रत्ययः, मन्तुर्ज्ञानमस्येति मन्तुमान्, संबुद्धौ मतुवसोरिति रुत्वम् ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये चतुर्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अधा॑ नो विश्वसौभग॒ हिर॑ण्यवाशीमत्तम । धना॑नि सु॒षणा॑ कृधि ।। ६ ।।**

**अध॑ । नः॒ । वि॒श्व॒ऽसौ॒भ॒ग॒ । हिर॑ण्यवाशीमत्ऽतम । धना॑नि । सु॒ऽसना॑ । कृ॒धि॒ ।। ६ ।।**

**स्कन्द– अथ नः विश्वसौभग!** अथ शब्दः पदपूरणः । अपिचेत्यस्य वा अर्थे । अपि च नः अस्माकं हे विश्वसौभग । बहु शोभनं धनं यस्य स विश्वसौभगः, तस्य सम्बोधनं हे विश्वसौभग! **हिरण्यवाशीमत्तम** । 'वाशी' (निघ.१,११) इति वाङ्नाम । हिरण्यसदृशी प्रीतिकरो हितरमणा वाऽतिशयेन वाक् यस्य स हिरण्यवाशीमत्तमः, तस्य सम्बोधनं हे हिरण्यवाशीमत्तम! **धनानि सुषणा** सुसंभजनीयानि **कृधि** कुरु । यानि धनानि लब्धुं वयं प्रस्थिताः, तानि सुलभानि कुर्वित्यर्थः ।। ६ ।।

**वेङ्कटमाधव–** अथ अस्माकं विश्वकल्याण । अतिशयेन हिरण्यवाग्युक्त! धनानि मुदानानि कुरु ।। ६ ।।

**मुद्गल–** हे **विश्वसौभग!** कृत्स्नधनयुक्त । हिरण्यवाशीमत्तम । अतिशयेन सुवर्णमवायुधवन् पूषन् । **अध** पूर्वोक्तास्मदीयप्रार्थनानन्तरम् **नः** अस्माकम् **धनानि** सुवर्णमणिमुक्तादीनि **सुषणा सुष्ठु** दानयुक्तानि **कृधि** कुरु ।। ६ ।।

**सायण–** हे **विश्वसौभग** कृत्स्नधनयुक्त यद्वा कृत्स्नसौभाग्ययुक्त **हिरण्यवाशीमत्तम** अतिशयेन सुवर्णमयायुधवन् **पूषन् अध** पूर्वोक्तास्मदीयप्रार्थनानन्तरं **नः** अस्माकं **धनानि** सुवर्णमणिमुक्तादीनि **सुषणा** सुष्ठु दानयुक्तानि **कृधि** कुरु । **अध** । अथशब्दे धत्वं छान्दसम् । 'निपातस्य च' इति संहितायां दीर्घत्वम् । **विश्वसौभग** । 'सुभगान्मन्त्रे' इत्युद्गात्रादिषु पाठाद्भावे अञ् । (पा.सू-५.१.१२९) 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा.सू-७.३.१९) इत्युत्तरपदवृद्धौ प्राप्तायां सत्यां सर्वविधीनां छन्दसि विकल्पितत्वादुत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तम् । विश्वानि सौभगानि यस्यासौ विश्वसौभगः । आमन्त्रितनिघातः । **हिरण्यवाशीमत्तम** । हिरण्मयी वाशी । तदेषामस्तीति हिरण्यवाशीमन्तः । अतिशयेन हिरण्यवाशीमान् हिरण्यवाशीमत्तमः । आमन्त्रित-निघातः । **सुषणा** । 'वन षण संभक्तौ' । सुखेन संभज्यन्ते इति सुषणानि । 'ईषद्दुःसुषु' इति खल् । 'शेश्छन्दसि' इति शेर्लोपः । 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वम् । कृदुत्तर-पदप्रकृतिस्वरत्वम् । **कृधि** । 'डुकृञ् करणे' । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।। ६ ।।

**सिद्धाञ्जनम्–** हे विश्वसौभग, विश्वानि सौभगानि सौभाग्यानि यस्य सः सर्वसौभाग्ययुक्त, **हिरण्यवाशीमत्तम** हिरण्मयी वाशी आयुधं तदेषामस्तीति हिरण्यवाशीमन्तः, अतिशयेन हिरण्यवाशीमान्, तादृश, पूषन् **अध** अथ अस्मत्प्रार्थनानुरोधेनातः परं **नः** अस्मदीयानि घनानि भोग्यानि वस्तूनि **सुषणा** सु सनानि सुखेन संभक्तुं दातुं वा शक्यानि **कृधि** कुरु । अधसौभगादयो गताः । सुषणा-ईषदुःसुष्विति खल् ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अति॑ नः स॒श्चतो॒ नय सु॒गा नः॑ सु॒पथा॑ कृणु । पूष॑न्नि॒ह क्रतुं॑ विदः ।। ७ ।।**

अति॑ । नः॒ । स॒श्चतः॑ । न॒य॒ । सु॒ऽगा । नः॒ । सु॒ऽपथा॑ । कृ॒णु॒ । पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः॒ ।। ७ ।।

**स्कन्द– अति नः सश्चतः नय** नः अस्मान् सश्चतः गच्छतः अतिशयशोभनम् नय प्रापय अभिप्रेतं देशम् । न च येन केनचित् पथा । किं तर्हि । **सुगा** सुगमनेन । **नः** अस्मान् **सुपथा** शोभनेन पथा **कृणु** करोतिः क्रियासामान्यवचः सामर्थ्यादिह नयने वर्तते । नय । **हे पूषन्** । **इह** पथि **क्रतुम्** आत्मीयं कर्म रक्षाख्यम् **विदः** जानीहि । ज्ञानेन च अत्र करणं प्रतिपाद्यते । कुवित्यर्थः । तव ह्येतत् कर्म यत् पथि रक्षणम् ।। ७ ।।

**वेङ्कटमाधव–** चौरैः सक्तान् अस्मान् अतिशयेन **नय** । सुगमेन शोभनेन पथा च अस्मान् **कृणु** । **पूषन्** । **अध्वनि** प्रज्ञानं लम्भयेति ।। ७ ।।

**मुद्गल– सश्वतः** अस्मद्बाधनाय प्राप्नुवत शत्रून् **नः अति** अस्मान् अतिक्रम्य **नय** अन्यत्र प्रापय । **नः** अस्मान् **सुगा** सुष्ठु गन्तु शक्येन **सुपथा** शोभनमार्गेण **कृणु** गन्तॄन् कुरु । **हे पूषन्** । इह अध्वनि **क्रतुम्** प्रज्ञानम् अस्मद्रक्षणरूपम् **विदः** जानीहि ।। ७ ।।

**सायण– सश्चतः** अस्मद्बाधनाय प्राप्नुवतः शत्रून् **नः अति** अस्मान् अतिक्रम्य **नय** अन्यत्र प्रापय । **नः** अस्मान् **सुगा** सुष्टु गन्तुं शक्येन **सुपथा** शोभनमार्गेण **कृणु** गन्तॄन् कुरु । हे **पूषन् इह** अध्वनि **क्रतुं** प्रज्ञानमस्मद्रक्षणरूपं **विदः** जानीहि । **सश्चतः** । 'ग्लुश्च पस्ज गतौ' इत्यत्र सश्चिमप्येके पठन्तीति धातुवृत्तावुक्तम् । अस्माल्लटः शतृ । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्वरेण शतुरुदात्तत्वम् । 'शतुरनुमः' इति विभक्त्युदात्ताभावश्छान्दसः । **सुगा** । सुष्ठु गच्छन्त्यत्रेति सुगः । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया आकारः । **सुपथा** । शोभनेन पथा । 'न पूजनात्' (पा.सू.५.४.६९) इति समासान्तप्रतिषेधः । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वं न भवति अबहुव्रीहित्वात् । तत्र हि बहुव्रीहाविति वर्तते । **कृणु** । कृवि हिंसाकरणयोः' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'उतश्च प्रत्ययात्' इति हेर्लुक् । **विदः** । 'विद ज्ञाने' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः ।। ७ ।।

**सिद्धाञ्जनम्–सश्चतः** बाधनाय अस्मासु सक्तान् शत्रून् **नः अति** अस्मानतिक्रम्य **नय** अन्यतः प्रापय । **नः** अस्मान् **सुगा** सुष्ठु गन्तुं शक्येन **सुपथा** शोभनेन मार्गेण **कृणु** गन्तॄन् कुरु । हे **पूषन्** इह अस्मिन् मार्गे **क्रतुं** प्राज्ञं कर्म **विदः** जानीहि । सश्चतः-सश्चते गत्यर्थादिति

सायणो मन्यते । षच समवाये इत्यस्यैव शकारोपजनश्छान्दसः, एवं हि सश्चिर इत्यादिप्रयोगस्थलेषु उपपत्तिर्दृश्यते । सुगा, सुपथा उभयोस्तृतीयाया आकारः । विदः-विद ज्ञाने लेट्, अडागमः, इकारलोपः । अन्ये गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**अभि सूयवसं नय न नवज्वारो अध्वने । पूषन्निह क्रतुं विदः ॥ ८ ॥**

**अभि । सुऽयवसम् । नय । न । नवऽज्वारः । अध्वने । पूषन् । इह । क्रतुम् । विदः ॥**

**स्कन्द– अभि सूयवसम् नय** शोभनमन्नम् अभि नय प्रापयास्मान् प्रति । देह्यस्मभ्य-मित्यर्थः । यस्मात् **न नवज्वारः अध्वने** ज्वरसदृशत्वात् ज्वारोऽत्र बुभुक्षोच्यते । सा नवा यस्य स नवज्वारः, अत्यन्तबुभुक्षितः । अध्वने न समर्थः । यस्मात् बुभुक्षितो नाध्वानं गन्तुं शक्नोतीत्यर्थः । अथवा नवंनवं ज्वरयति पुनःपुनः सन्तापयतीति नवज्वारोग्निरादित्यो वा उच्यते । नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यानुपमार्थीयो द्रष्टव्यः । नवज्वारो न अग्निरिव आदित्य इव वा । यथाग्निरादित्यो **वा** प्रापयति तद्वदित्यर्थः । किमर्थम् । अध्वने मार्गार्थम् । पथ्यदनार्थ-मित्यर्थः । किञ्च **पूषन् इह क्रतुम् विदः** । अथवा एवमन्यथा अस्या ऋचोऽर्थयोजना– शोभना यवसा यस्मिन् स सूयवसः तं सूयवसं सन्तं देशं प्रापयास्मान् नवज्वार इव । किञ्च अध्वने पूषन्निह । अध्वन इति सप्तमर्थे चतुर्थी । इहेत्यनेन समानाधिकरणः । इह **अध्वनि** हे पूषन् । क्रतुं रक्षणाख्यमात्मकर्म विदः ॥ ८ ॥

**वेङ्कटमाधव–** अभिनय अस्मान्, **सूयवसम्** देशं प्रापय । न च नवज्वालो दवाग्निः **अध्वने** भवतु ॥ ८ ॥

**मुद्गल– हे पूषन् ! सुयवसम्** शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् **अभि नय** अस्मान् अभितः प्रापय । **अध्वने** मार्गाय **नवज्वारः** नूतनः सन्तापः **न** भवत्विति शेषः । मार्गे गच्छतामस्माकम् इदानींतनः क्लेशः कोऽपि मा भूदित्यर्थः । **पूषन् !** इह इत्यादि पूर्ववत् ॥

**सायण– हे पूषन् सुयवसं** शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् **अभि नय** अस्मानभितः प्रापय । **अध्वने** मार्गाय **नवज्वारः** नूतनः संतापः न भवत्विति शेषः । मार्गे गच्छतामस्माक-

**स्कन्द– अति नः सश्चतः नय** नः अस्मान् सश्चतः गच्छतः अतिशयशोभनम् नय प्रापय अभिप्रेतं देशम् । न च येन केनचित् पथा । किं तर्हि । **सुगा** सुगमनेन । **नः** अस्मान् **सुपथा** शोभनेन पथा **कृणु** करोतिः क्रियासामान्यवचः सामर्थ्यादिह नयने वर्तते । नय । **हे पूषन्** । **इह** पथि **क्रतुम्** आत्मीयं कर्म रक्षाख्यम् **विदः** जानीहि । ज्ञानेन च अत्र करणं प्रतिपाद्यते । कुवित्यर्थः । तव ह्येतत् कर्म यत् पथि रक्षणम् ।। ७ ।।

**वेङ्कटमाधव–** चौरैः सक्तान् अस्मान् अतिशयेन **नय** । सुगमेन शोभनेन पथा च अस्मान् **कृणु** । **पूषन्** । **अध्वनि** प्रज्ञानं लम्भयेति ।। ७ ।।

**मुद्गल– सश्चतः** अस्मद्बाधनाय प्राप्नुवत शत्रून् **नः अति** अस्मान् अतिक्रम्य **नय** अन्यत्र प्रापय । **नः** अस्मान् **सुगा** सुष्ठु गन्तु शक्येन **सुपथा** शोभनमार्गेण **कृणु** गन्तृन् कुरु । **हे पूषन्** । इह अध्वनि **क्रतुम्** प्रज्ञानम् अस्मद्रक्षणरूपम् **विदः** जानीहि ।। ७ ।।

**सायण– सश्चतः** अस्मद्बाधनाय प्राप्नुवतः शत्रून् **नः अति** अस्मान् अतिक्रम्य **नय** अन्यत्र प्रापय । **नः** अस्मान् **सुगा** सुष्टु गन्तुं शक्येन **सुपथा** शोभनमार्गेण **कृणु** गन्तृन् कुरु । हे **पूषन् इह** अध्वनि **क्रतुं** प्रज्ञानमस्मद्रक्षणरूपं **विदः** जानीहि । **सश्चतः** । 'ग्लुश्च पस्ज गतौ' इत्यत्र सश्चिमप्येके पठन्तीति धातुवृत्तावुक्तम् । अस्माल्लटः शतृ । 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्वरेण शतुरुदात्तत्वम् । 'शतुरनुमः' इति विभक्त्युदात्ताभावश्छान्दसः । **सुगा** । सुष्ठु गच्छन्त्यत्रेति सुगः । 'सुदुरोरधिकरणे' इति गमेर्डप्रत्ययः । 'सुपां सुलुक्' इति तृतीयाया आकारः । **सुपथा** । शोभनेन पथा । 'न पूजनात्' (पा.सू.५.४.६९) इति **समासान्तप्रतिषेधः** । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । 'क्रत्वादयश्च' इत्युत्तरपदाद्युदात्तत्वं न भवति अबहुव्रीहित्वात् । तत्र हि बहुव्रीहाविति वर्तते । **कृणु** । कृवि हिंसाकरणयोः' । 'धिन्विकृण्व्योर च' इति उप्रत्ययः । 'उतश्च प्रत्ययात्' इति हेर्लुक् । **विदः** । 'विद ज्ञाने' । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः ।। ७ ।।

**सिद्धाञ्जनम्–सश्चतः** बाधनाय अस्मासु सक्तान् शत्रून् **नः अति** अस्मानतिक्रम्य **नय** अन्यतः प्रापय । **नः** अस्मान् **सुगा** सुष्ठु गन्तुं शक्येन **सुपथा** शोभनेन मार्गेण **कृणु** गन्तृन् कुरु । हे **पूषन्** इह अस्मिन् मार्गे **क्रतुं** प्राज्ञं कर्म **विदः** जानीहि । सश्चतः-सश्चते गत्यर्थादिति

सायणो मन्यते । षच समवाये इत्यस्यैव शकारोपजनश्छान्दसः, एवं हि सश्चिर इत्यादिप्रयोगस्थलेषु उपपत्तिर्दृश्यते । सुगा, सुपथा-उभयोस्तृतीयाया आकारः । विदः-विद ज्ञाने लेट्, अडागमः, इकारलोपः । अन्ये गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**अभि सूयवसं नय न नवज्वारो अध्वने । पूषन्निह क्रतुं विदः ॥ ८ ॥**
**अभि । सुऽयवसम् । नय । न । नवऽज्वारः । अध्वने । पूषन् । इह । क्रतुम् । विदः ॥**

**स्कन्द– अभि सूयवसम् नय** शोभनमन्नम् अभि नय प्रापयास्मान् प्रति । देह्यस्मभ्यमित्यर्थः । यस्मात् **न नवज्वारः अध्वने** ज्वरसदृशत्वात् ज्वारोऽत्र बुभुक्षोच्यते । सा नवा यस्य स नवज्वारः, अत्यन्तबुभुक्षितः । अध्वने न समर्थः । यस्मात् बुभुक्षितो नाध्वानं गन्तुं शक्नोतीत्यर्थः । अथवा नवंनवं ज्वरयति पुनःपुनः सन्तापयतीति नवज्वारोग्निरादित्यो वा उच्यते । नशब्दश्च पुरस्तादुपचारोऽप्यत्र सामर्थ्यानुपमार्थीयो द्रष्टव्यः । नवज्वारो न अग्निरिव आदित्य इव वा । यथाग्निरादित्यो **वा** प्रापयति तद्वदित्यर्थः । किमर्थम् । अध्वने मार्गार्थम् । पथ्यदनार्थमित्यर्थः । किञ्च **पूषन् इह क्रतुम् विदः** । अथवा एवमन्यथा अस्या ऋचोऽर्थयोजना– शोभना यवसा यस्मिन् स सूयवसः तं सूयवसं सन्तं देशं प्रापयास्मान् नवज्वार इव । किञ्च अध्वने पूषन्निह । अध्वन इति सप्तमर्थ्ये चतुर्थी । इहेत्यनेन समानाधिकरणः । इह **अध्वनि हे** पूषन् । क्रतुं रक्षणाख्यमात्मकर्म विदः ॥ ८ ॥

**वेङ्कटमाधव–** अभिनय अस्मान्, **सूयवसम्** देशं प्रापय । न च नवज्वालो दवाग्निः **अध्वने** भवतु ॥ ८ ॥

**मुद्गल– हे पूषन् ! सुयवसम्** शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् **अभि नय** अस्मान् अभितः प्रापय । **अध्वने** मार्गाय **नवज्वारः** नूतनः सन्तापः **न** भवत्विति शेषः । मार्गे गच्छतामस्माकम् इदानींतनः क्लेशः कोऽपि मा भूदित्यर्थः । **पूषन् !** इह इत्यादि पूर्ववत् ॥

**सायण– हे पूषन् सुयवसं** शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशम् **अभि नय** अस्मानभितः प्रापय । **अध्वने** मार्गाय **नवज्वारः** नूतनः संतापः न भवत्विति शेषः । मार्गे गच्छतामस्माक-

मिदानीन्तनः क्लेशः कोऽपि मा भूदित्यर्थः । गतार्थमन्यत् । **सूयवसम्** । शोभनं यवसं यस्मिन् देशे स सूयवसो देशः । 'निपातस्य च' इति पूर्वपदस्य दीर्घत्वम् । 'परादिश्छन्दसि बहुलम्' इत्युत्तरपदाद्युदात्तत्वम् । क्रत्वादिर्वा द्रष्टव्यः । **नवज्वारः** । ज्वर रोगे । भावे घञ् । नवश्चासौ ज्वारो नवज्वारः । थाथाविनोत्तरपदान्तोदात्तत्वम् ।। ८ ।।

**सिद्धाञ्जनम्**–हे **पूषन्**, **सुयवसम्** शोभनतृणोपलक्षितं उपभोगक्षमं प्रदेशं **अभि** अभितः **नय** अस्मान् । **अध्वने** मार्गाय शोभनपवाधिगमार्थं **नवज्वारः** नूतनः संतापः अस्माकं **न** न भवतु । शिष्टं व्याख्यातम् । सूयवसम्-शोभनं यवसं यस्मिन् सः, पूर्वपदस्य दीर्घत्वम् छन्दसि । नवज्वारः-ज्वर रोगे, भावे घञ् । अन्यत् व्याख्यातम् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**श॒ग्धि पू॒र्धि प्र यं॑सि च शिशी॒हि प्रास्यु॒दर॑म् । पूष॑न्नि॒ह क्रतुं॑ विदः ।। ९ ।।**
**श॒ग्धि । पू॒र्धि । प्र । यं॒सि॒ । च॒ । शि॒शी॒हि । प्रासि॑ । उ॒दर॑म् । पूष॑न् । इ॒ह । क्रतु॑म् । वि॒दः ।। ९ ।।**

**स्कन्द– शग्धि पूर्धि** शग्धि (निघ.३,२०) इति याश्चाकर्मा । याश्चया चात्र दानं लक्ष्यते । देहीति । **पूर्धि** पूरय । बहु देहीत्यर्थः । मा च निकृष्टम् । किं तर्हि । **प्र यंसि** च यच्छति-र्दानार्थः । लोडर्थे चात्र लट् । प्रयच्छ च । प्रकृष्टं च देहीत्यर्थः । दत्त्वा च **शिशीहि** श्यतिः संस्कारार्थः । संस्कुरु । सर्वार्थयोग्यं कुर्वित्यर्थः । **प्रासि** प्रा पूरणे । लोडर्थे चात्र लट् । प्राभिपूरय चास्मदीयम् **उदरम्** । जीवनोपायं चास्माकं कल्पयेत्यर्थः । किञ्च **पूषन्! इह क्रतुम् विदः** ।। ९ ।।

**वेङ्कटमाधव–** शक्तो भव, पूरय कामान्, प्रयच्छ धनानि, संस्कुरु चास्मान्, पूरय च उदरम् ।। ९ ।।

**मुद्गल– हे पूषन् ! शग्धि** अस्माननुग्रहीतुं शक्तो भव । पूर्धि अस्मद्गृहं धनेन पूरय । किञ्च **प्र यंसि च** अन्यदपेक्षितं वसु प्रयच्छ । **शिशीहि** अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु । तेजस्विनः कुर्वित्यर्थः । उदरम् अस्मदीयम् प्रासि मृष्टान्नेन पूरय । पूषन्! इह इत्यादि पूर्ववत् ।।

**सायण–** हे **पूषन् शग्धि** अस्माननुग्रहीतुं शक्तो भव । **पूर्धि** अस्मद्गृहं धनेन पूरय । किंच **प्र यंसि** अन्यदप्यपेक्षितं वस्तु प्रयच्छ । **शिशीहि** अस्मान् सर्वेषु मध्ये तीक्ष्णीकुरु तेजस्विनः कुरु इत्यर्थः । **उदरम्** अस्मदीयं **प्रासि** मृष्टान्नेन सोमरसेन वा पूरय । अन्यत् पूर्ववत् । **शग्धि** । 'शक्लृ शक्तौ' । लोटो हिः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हुझल्भ्यो हेर्धिः' इति धिरादेशः । हेरपित्वात् प्रत्ययस्वरेणोदात्तत्वम् । **पूर्धि** । 'पॄ पालन-पूरणयोः' । 'श्रुशृणुपृकृवृभ्यश्छन्दसि' इति हेर्धिरादेशः । पूर्ववद्विकरणस्य लुक् । 'उदोष्ठ्यपूर्वस्य' इति उत्वम् । 'हलि च' इति दीर्घः । तिङः परत्वात् निघाताभावः । **यंसि** । 'यम उपरमे' । लोडर्थे लटि पूर्ववद्विकरणस्य लुक् । निघातः । **शिशीहि** । 'शो तनूकरणे' । लोटि 'बहुलं छन्दसि' (पा.सू.७.४.७८) इति अभ्यासस्य इत्वम् । 'ई हल्यघोः' इति ईत्वम् । प्रत्ययस्वरः । **प्रासि** । 'प्रा पूरणे' । अदादित्वात् शपो लुक् । सिपः पित्वादनुदात्तत्वे धातुस्वरः ।।९।।

**सिद्धाञ्जनम्– हे पूषन्, शग्धि** शक्तो भव । **पूर्धि** पूरय । **प्रयंसि** प्रयच्छ । **च** अपि च **शिशीहि** तीक्ष्णीकुरु । **उदरम्** कुक्षिं **प्रासि** पूरय । अस्मदनुग्रहे शक्तिमान् भव, अस्मान् तेजस्विनः कुरु, स्वात्मनैवास्मान् पूरय, क्षेमं नः प्रदेहि, उपभोगक्षमैराहारैरस्मदन्तरं पूरयेत्युक्तम् । शिष्टं गतम् । शग्धि-शक्लृ शक्तौ, लोटो हिः, विकरणस्य लुक्, हेर्धिरादेशः । पूर्धि-पॄ पूरणे, अन्यत् पूर्ववत् । शिशीहि-शो तनूकरणे लोट्, अन्यत् छान्दसम् । प्रासि-प्रा पूरणे अदादिः ।।

## ऋक्संहिता पदपाठसहिता

**न पूषणं॑ मेथामसि सू॒क्तैर॒भि गृ॑णीमसि । वसू॑नि द॒स्ममी॑महे ।। १० ।।**

**न । पू॒षण॑म् । मे॒था॒म॒सि॒ । सु॒ऽउ॒क्तैः । अ॒भि । गृ॒णी॒म॒सि॒ । वसू॑नि । द॒स्मम् । ई॒म॒हे॒ ।।**

**स्कन्द–** न पूषणम् मेथामसि 'मेथतिराक्रोशकर्मा' (या.४,२) । नाक्रोशामः । नायोग्याभिः स्तुतिभिः स्तुम इत्यर्थः । किं तर्हि । **सूक्तैः** शोभनैः वचनैः **अभि गृणीमसि** अभिष्टुमः । अभिष्टुत्य च **वसूनि** धनानि **दस्मम्** चोराणां तमसां चोपक्षपयितारं दर्शनीयं वा **ईमहे** याचामहे ।। १० ।।

**वेङ्कटमाधव– न** वयम् **पूषणम्** आक्रोशामः, किन्तु **सूक्तैः** अभिष्टुमः, धनानि दर्शनीयं याचामहे ।। १० ।।

**मुद्गल– पूषणम्** देवम् **न मेथामसि** वयं न निन्दामः । किन्तु **सूक्तैः** वेदगतैः **अभि गृणीमसि** स्तुमः । **दस्मम्** दर्शनीयं पूषणम् **वसूनि** घनानि **ईमहे** याचामहे ।। १० ।।

**सायण– पूषणं** देवं **न मेथामसि** वयं न तु निन्दामः । किंतु **सूक्तैः** वेदगतैः **अभि गृणीमसि** सर्वत्र स्तुमः । **दस्मं** दर्शनीयं पूषणं प्रति **वसूनि** धनानि **ईमहे** याचामहे । **मेथामसि** । 'मेथृ मेधाहिंसनयोः' । लटि 'इन्दतो मसि' इति मस इकारागमः । **सूक्तैः** । सुष्ठु स्तुवते देवताः प्रकाशयन्तीति सूक्तानि । 'क्तिच्क्तौ च संज्ञायाम्' इति कर्तरि क्तः । 'वचिस्वपि' इत्यादिना संप्रसारणम् । थाथादिस्वरः । यद्वा । कर्मणि निष्ठा । 'सूपमानात् क्तः' (पा.सू.६.२.१४५) इत्युत्तरपदान्तोदात्तत्वम् । **गृणीमसि** । 'गृ शब्दे' । 'प्वादीनां ह्रस्वः' इति ह्रस्वत्वम् । इदन्तो मसिः । **दस्मम्** । 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ.सू.१.१४२) इति मक्प्रत्ययः ।। १० ।।

**सिद्धाञ्जनम्– पूषणम्** देवं **न मेथामसि** न वयं निन्दामः । **सूक्तैः** शोभनवचनात्मकैः मन्त्रैः **अभि गृणीमसि** अभितः स्तुमः । **दस्मम्** अद्भुतकर्मकारिणं एनं बलाढयमित्यर्थः **वसूनि** सत्त्वात्मकानि धनानि **ईमहे** याचामहे ।। मेथामसि-मेथृ हिंसने, मस इकारः । गृणीमसि-गृ शब्दे, इदन्तो मसिः । दस्म-दस्यतेर्बलकर्मार्थात् मक् ।। १० ।।

।। इति प्रथमाष्टके तृतीयाध्याये पञ्चविंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

(सूक्तम् ४३)

१ कण्वो घौरः । रुद्रः, ३ रुदः, मित्रावरुणौ च, ७-९ सोमः । गायत्री, ९ अनुष्टुप् ।

**कद् रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे । वोचेम शंतमं हृदे ।। १ ।।**

**कत् । रुद्राय । प्रऽचेतसे । मीळ्हुःऽतमाय । तव्यसे । वोचेम । शम्ऽतमम् । हृदे ।।**

**स्कन्द– पौष्णं समाप्य षड् रौद्रः** (तु.बृदे.३,१०८) 'सं पूषन्' इत्येतत् पौष्णं समाप्य 'कद्रुद्राय' इत्येताः षड्चो रुद्रदेवत्याः प्रत्येतव्याः । **कत् रुद्राय प्रचेतसे** प्रवृद्धज्ञानाय मीळुष्टमाय 'मीळ्हु' (निघ.२,१०) इति धननाम । तद्वान् मीढ्वान् । अथवा मिह सेचने इत्यस्य मीढ्वान् सेक्ता मध्यमस्थानत्वाद् वर्षिता रुद्रः । अतिशयेन मीढ्वान् मीळ्हुष्टमः, तस्मै

मीळ्हुष्टमाय । **तव्यसे** तवतिर्वृद्धिकर्मा (तु.या.९,२५) । वृद्धाय । **वोचेम शन्तमम्** सुखतमम् **हृदे** हृदयस्य । मनसः प्रीतिकरमित्यर्थः । कम् । सामर्थ्यात् स्तोमम् ।। १ ।।

**वेङ्कटमाधव–** कदा वयम् **रुद्राय प्रचेतसे** सेक्तृतमाय वृद्धायां हृदयस्य **शन्तमम्** स्तोत्रम् वोचेम इति स्तोतुकामस्य वचनम् ।। १ ।।

**मुद्गल–** 'कद्रुद्राय' इति नवर्चमष्टमं सूक्तम् । धोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । 'यास्ते प्रजाः' इत्यन्त्याऽनुष्टुप् । रुद्रो देवता । 'यथा नो मित्रः' इत्येषा मित्रावरुणदेवताका च । 'अस्मे सोम' इत्यादिरन्त्यतृचस्तु सौम्य एव.।

**कत्** कदा **रुद्राय** एतन्नामकाय देवाय **शन्तमम्** अतिशयेन सुखकरं स्तोत्रम् वोचेम पटेम । कीदृशाय । **प्रचेतसे** प्रकृष्टज्ञानयुक्ताय **मीळहुष्टमाय** सेकतृतमाय । अभीष्टकामवर्षायेत्यर्थः । **तव्यसे** अतिशयेन प्रवृद्धाय **हृदे** अस्मदीयहृन्निष्ठाय ।। १ ।।

**सायण–** 'कद्रुद्राय' इति नवर्चमष्टमं सूक्तम् । अत्रानुक्रम्यते-'कद्रुद्राय नव रौद्रं तृतीया मैत्रावरुणी चान्स्यस्तृचः सौम्योऽन्यानुष्टुप्' इति । घोरपुत्रः कण्व ऋषिः । गायत्री छन्दः । 'यास्ते प्रजाः' इत्यन्त्यानुष्टुप् । रुद्रो देवता । 'यथा नो मित्रः' इत्येषा मित्रावरुणदेवताका च । 'अस्मे सोम' इत्यादिरन्त्यस्तृचस्तु सौम्य एव । सर्वेषु रुद्रदेवताकेषु कर्मसु अनेन सूक्तेन दिगुपस्थानं कर्तव्यम् । तथा च सूत्रितं- कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानम्' (आश्व.गृ.४.९.२१-२२) इति ।।

**कत्** कदा **रुद्राय** एतन्नामकाय देवाय **शंतमम्** अतिशयेन सुखकरं स्तोत्रं **वोचेम** पठेम । कीदृशाय । **प्रचेतसे** प्रकृष्टज्ञानयुक्ताय **मीळ्हुष्टमाय** सेक्तृतमाय अभीष्टकामवर्षयित्यर्थः । **तव्यसे** अतिशयेन प्रवृद्धाय **हृदे** अस्मदीयहृन्निष्ठाय । **कत** कदा । अन्त्यलोपश्चान्दसः । **रुद्राय** । रोदयति सर्वमन्तकाले इति रुद्रः । 'रोदेर्णिलुक्च' (उ.सू.२.१७९) इति रक्प्रत्ययः । **प्रचेतसे** । 'चिती संज्ञाने' । प्रकृष्टं चेततीति प्रचेताः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च इति असुन् पूर्वपदप्रकृतिस्वरत्वं च । **मीळ्हुष्टमाय** । अतिशयेन मीढ्वान् मीळ्हुष्टमः । 'दाश्वान् साह्वान् मीढांश्च' इति क्वसुप्रत्ययान्तो निपातितः । तमपि अयस्मयादित्वेन भत्वात् 'वसोः संप्रसारणम्' इति संप्रसारणम् । 'शासिवसिघसीनां च' इति षत्वम् । **तव्यसे** । नवतिर्वृद्ध्यर्थः

सौत्रो धातुः । अतिशयेन तविता तवीयान् । 'तुश्छन्दसि' इति ईयसुन्प्रत्ययः । 'तुरिष्ठेमेयःसु' इति तृलोपः । ईयसुन ईकारलोपश्छान्दसः । नित्त्वादाद्युदात्तत्वम् । **वोचेम** । 'वच परिभाषणे' । 'लिङ्याशिष्यङ्' । 'वच उम्' इति उमागमः । यासुटः स्वरेण एकार उदात्तः । **हृदे** । 'पद्दन्' इत्यादिना हृदयशब्दस्य हृदादेशः । 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् ॥ १ ॥

**सिद्धाञ्जनम्– कत्** कदा **रुद्राय** एतन्नामकाय देवाय **शंतमम्** अतिशयेन सुखकरं स्तोत्रं **वोचेम** ब्रूयाम । **हृदे** हृदयाय शंतमं हृदयस्यार्थे सुखकरं, हृद्यं इति अन्वय उपपद्यते । हृदे हृदयनिष्ठाय हृदयभूताय रुद्रायेति वा अन्वयः स्यात् । कीदृशाय रुद्राय ? **प्रचेतसे** प्रकृष्टं चेतो यस्य तस्मै प्रकृष्टज्ञानाय, **मीढुष्टमाय** सेक्तृतमाय, अतिशयेन दिव्यसम्पदां वर्षित्रे **तव्यसे** तवीयसे अतिशयेन तवित्रे प्रवृद्धाय । कत्-कदा, अन्त्यलोपः छान्दसः । रुद्राय रोदेः णिलुक् रक्, रोदयति सर्वं इति पूर्वे, पापानिति वयम् । मीढुष्टमाय अतिशयेन मीढ्वान्, क्वसुप्रत्ययान्तो निपातितः । तव्यसे- तवतिर्वृद्ध्यर्थः, तृलोपः ईयसुनः इकारलोपः छान्दसः । अन्ये गताः ॥१॥

## ऋक्संहिता पदपाठसहिता

**यथा॑ नो॒ अदि॑तिः॒ कर॑त् प॒श्वे नृभ्यो॒ यथा॒ गवे॑ । यथा॑ तो॒काय॑ रु॒द्रिय॑म् ॥२॥**

**यथा॑ । नः॒ । अदि॑तिः । कर॑त् । प॒श्वे । नृऽभ्यः॑ । यथा॑ । गवे॑ । यथा॑ । तो॒काय॑ । रु॒द्रिय॑म् ॥ २ ॥**

**स्कन्द–** कथं च पुनर्वोचेम । **यथा नः अदितिः** यथा नः अस्माकम् अदितिः अनुपक्षीणो रुद्रः **करत्** कुर्यात् । दद्यादित्यर्थः । किम् । **पश्वे** सर्वत्र द्वितीयार्थे चतुर्थी । पशुम् अश्वादि-पशुजातम् **नृभ्यः** नॄन् परिचारकांश्च मनुष्यान् । **यथा** च गवे गां गोजातम् । **यथा** च **तोकाय** तोकमपत्यम् । कीदृशम् । **रुद्रियम्** रुद्रार्हम् । यद्रुद्र एव दातुमर्हति नान्यः कश्चिदित्यर्थः । अथवा पश्व इत्याद्याः स्वार्थ एव 'तादर्थ्यचतुर्थ्यः । अदितिरिति, अदितिशब्दोऽनुपक्षयवचनः । द्वितीयार्थे चात्र प्रथमा । यथा नः अस्माकमदितिमनुपक्षयं कुर्यात् पश्वाद्यर्थमिति । यथाऽस्म-दीयानां पश्वादीनामनुपक्षयं कुर्यादित्यर्थः । अथवा अदितिरति स्वार्थं एव प्रथमा । न इत्यपि चतुर्थी । यत् क्रियमाणम् तत् सामर्थ्यात् पालनम् । यथा अस्मदीयं पश्वाद्यर्थं च पालनं कुर्यादित्यर्थः । कीदृशम् अनुपक्षयं पालनं वा । उच्यते । रुद्रियं रुद्रार्हमिति । यथा नोऽस्माकम्

अदितिः करत् पश्वाद्यनुपक्षयपालनानाम् अन्यतमं तथा कद्रुद्राय वोचेम शंतमं स्तोममित्येवमस्या ऋचो यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यता ॥ २ ॥

**वेङ्कटमाधव– यथा** अस्माकमियं पृथिवी भेषजं पश्वादिभ्यः कुर्यादिति ॥ २ ॥

**मुद्गल– अदितिः** भूमिः **नः** अस्माकम् **रुद्रियम्** रुद्रसम्बन्धि भेषजम् यथा येन प्रकारेण सिध्यति तथा **करत्** करोतु । यथा येन प्रकारेण **पश्वे** अस्मदीयमहिषादिपशवे **नृभ्यः** अस्मदीयपुरुषेभ्यः विशेषेण **गवे** गोजातये हितम् रुद्रियं सिध्यति तथा करोतु । किञ्च **तोकाय** अस्मदीयापत्याय रुद्रियं यथा सिध्यति तथा करोतु ॥ २ ॥

**सायण– अदितिः** भूमिः **नः** अस्माकं **रुद्रियं** रुद्रसम्बन्धि भेषजं **यथा** येन प्रकारेण सिद्ध्यति **करत्** तथा करोतु । किंच **यथा** येन प्रकारेण **पश्वे** अस्मदीयाश्वमहिषादिपशवे **नृभ्यः** अस्मदीयपुरुषेभ्यो विशेषेण **गवे** गोजातये हितं **रुद्रियं** सिद्ध्यति तथा करोतु । किंच **तोकाय** अस्मदीयापत्याय **रुद्रियं** यथा सिद्ध्यति तथा करोतु । भेषजस्य रुद्रसम्बन्धित्वं मन्त्रान्तरे समाम्नातं- 'या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी । शिवा रुद्रस्य भेषजी (तै.सं.४.५.१०.१) इति । गवादिविषयभेषजं चान्यत्र स्पष्टमाम्नातं 'भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजम्' (तै.सं.१.८.६.१) इति ॥ **करत्** । 'डुकृञ् करणे' । लङि व्यत्ययेन शप् । यद्वा । लेटि अडागमः । 'इतश्च लोपः' इति इकारलोपः । यद्वा । लुङि कृमृद्रुरुहिभ्यश्छन्दसि' इति च्लेः अङादेशः । 'ऋदृशोऽङि गुणः' इति गुणः । आद्ययोः पक्षयोः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । तृतीये तु व्यत्ययेन । यद्वृत्तयोगादनिघातः । पश्वे । संज्ञापूर्वकस्य विधेरनित्यत्वात् 'घेर्ङिति' (पा.सू.७.३.१११) इति गुणाभावः । यणादेशः । **नृभ्यः** । 'नृ चान्यतरस्याम्' (पा.सू.६.१.१८४) इति विभक्त्युदात्तत्वाभावः । **गवे** । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तस्य न गोश्वन्साववर्ण.....' इति प्रतिषेधः । **रुद्रियम्** । रुद्रशब्दात् तस्येदमित्यर्थे घप्रत्ययः ॥ २ ॥

**सिद्धाञ्जनम्– अदितिः** अखण्डसत्त्वक्षेत्रभूता सर्वदेवमाता अघ्न्याशब्दवाच्या देवी **नः** अस्माकं **रुद्रियम्** रुद्रसम्बन्धि यत् किमपि भवतु तत् (सत्त्वं बलं वेति ब्रूमः) **यथा** येन प्रकारेण सिध्यति तथा **करत्** करोतु । किं च अस्मदीयाय **पश्वे** अश्वादये **नृभ्यः** पुरुषेभ्यः

**यथा** गवे **तोकाय** च अपत्याय च **यथा** रुद्रियं सत्त्वं सिद्ध्यति तथा करोतु । अत्र अस्मत् संबन्धि यद्यद्वस्तु वर्तते तत्सर्वं रुद्रानुग्रहपात्रं रुद्रबलसंपन्नं भवत्विति विवक्षा । तस्मात् पशु-नृ-गो-तोकशब्दानां तत्त्वार्थदानं नावश्यम् । पश्वे-संज्ञापूर्वकविधिरनित्यः, तस्माद् गुणाभावः यणादेशः । रुद्रियम्-रुद्रस्येदम्, घप्रत्ययः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति । यथा विश्वे सजोषसः ।। ३ ।।**
**यथा । नः । मित्रः । वरुणः । यथा । रुद्रः । चिकेतति । यथा । विश्वे । सऽजोषसः ।।**

**स्कन्द– तृतीया न तु केवला । सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे । द्वितीयेऽपि विश्वैर्देवैः** । 'तृतीया इयमृङ् न रौद्र्येव केवला । किं तर्हि । सह मित्रावरुणाभ्यां रुद्रस्य संस्तवः प्रथमेऽर्धे । द्वितीयेऽपि विश्वैर्देवैः सह । कुत एतत् । ऋगक्षरेषु दर्शनात्, बृहद्देवताकारस्य च वचनात् । एवं ह्याह– **'तृतीया न तु केवला । मित्रेण वरुणेनात्र विश्वैर्देवैश्च संस्तवः'** (वृदे.३,१०८-१०९) इति । इहापि 'तृतीयायां सह मित्रावरुणाभ्यां संस्तवः प्रथमेऽर्धर्चे' इत्येतावता सिद्धे 'तृतीया न तु केवला' इति वचनं समस्तायां तृतीयायाम् अकेवलरुद्रदेवत्यप्रतिपत्त्यर्थम् । तस्मात् द्वितीये ह्यर्धर्चे विश्वैर्देवैस्सह संस्तव इति सिद्धम् । **यथा** च **नः** अस्मान् **मित्रः वरुणः** च **यथा** च **रुद्रः** एव स्वयम् **चिकेतति** जानाति **यथा** च **विश्वे** देवाः । किम् । साकाङ्क्षत्वात् चिकेतन्तीत्यनुषक्तव्यम् । चिकेतन्ति जानन्ति । कीदृशाः । **सजोषसः** सम्प्रीयमाणाः । यथा मित्रादीनां देवनानामपि प्रकाशा भवेम तथा कदा रुद्राय वोचेम स्तोममित्यर्थः । एवमनयोरप्यृचोः यथा नो अदितिः करत् पश्वाद्यनुपक्षयपालनानागन्यतमं, यथा चापि मित्रादयो देवा अपि चिकेतन्ति, तथा कदा रुद्राय वोचेम शन्तमं हृदयस्य स्तोममिति यथाशब्दश्रुतेः पूर्वयर्चैकवाक्यताभावात्, तस्याश्च रुद्रप्राधान्यादनयोरपि रुद्रप्राधान्यमेवावगम्यते, नैघण्टुकत्वं मित्रादीनाम् । तत्र यद् भगवता शौनकेनोक्तम्– **तृतीया न तु केवला । सह मित्रावरुणाभ्याम् संस्तवः प्रचमेऽर्धर्चे'** इति, तत् यथोक्तं पर्येष्यम् ।। ३ ।।

**वेङ्कटमाधव– यथा** अस्मान् मित्रावरुणौ जानीतो रुद्रस्तुतिप्रवृत्तान् **यथा** वा स्वयम् **रुद्रः**, यथा वा सर्व एव देवा एकीभूताः, तथा कदा वोचेमेति ।। ३ ।।

**मुद्गल–** मित्रः वरुणः च न अस्मान् **यथा** येन प्रकारेण **चिकेतति** अनुग्राह्यत्वेन जानाति । **रुद्रः** अपि यथा चिकेतति । **सजोषसः** समानप्रीतय **विश्वे** सर्वे देवा यथा चिकेतन्ति । तथा भवत्विति शेषः ।। ३ ।।

**सायण– मित्रो वरुणः** च **नः** अस्मान् **यथा** येन प्रकारेण **चिकेतति** अनुग्राह्यत्वेन जानाति । रुद्रः अपि **यथा चिकेतति** । **सजोषसः** समानप्रीतयः **विश्वे** सर्वे देवाः यथा चिकेतन्ति तथा भवत्विति शेषः । यद्वा । यथाशब्दोपेतमन्त्रद्वयस्य तथा कदा वोचेमेति पूर्वत्रान्वयः । **चिकेतति** । कित ज्ञाने । लेटि अडागमः । 'नाभ्यस्तस्य' (पा.सू.७.३.८७) इति गुणनिषेधो न भवति । 'बहुलं छन्दसीति वक्तव्यम्' इति वचनात् । सार्वधातुकत्वाच्च 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । **सजोषसः** । 'जुषी प्रीतिसेवनयोः' । समानं जुषन्तीति सजोषसः । 'समानस्य छन्दसि' इति सभावः । असुनो नित्त्वादुत्तरपदस्याद्युदात्तत्वम् । तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन शिष्यते ।। ३ ।।

**सिद्धाञ्जनम्– नः** अस्मान् **मित्रः यथा चिकेतति** जानाति, **वरुणः** यथा चिकेतति, **रुद्रः यथा** चिकेतति, **यथा विश्वे** देवाः **सजोषसः** समानप्रीतयः सन्तः चिकेतन्ति तथा भवत्विति शेषः । मित्रादीनां अस्मद्विषयकं ज्ञानं च अनुग्रहार्थकं ज्ञेयम् । तेषां ज्ञानमेव अनुग्रहात्मकं वा बोध्यम् । यद्वा यथाशब्दोपेतस्य मन्त्रद्वयस्य तथा कदा वोचेमेति पूर्वत्रान्वयः इति सायणीयं रमणीयम् उपपन्नं च ।। चिकेतति, सजोषसः अन्ये च गताः ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**गाथपतिं मेधपतिं रुद्रं जलाषभेषजम् । तच्छंयोः सुम्नमीमहे ।। ४ ।।**
**गाथऽपतिम् । मेधऽपतिम् । रुद्रम् । जलाषऽभेषजम् । तत् । शम्ऽयोः । सुम्नम् । ईमहे ।।**

**स्कन्द– गाथपतिम् मेधपतिम्** गाथा स्तुतिलक्षणा वाक्, तस्या अधिपतिं स्वामिनम् । स्तुतिभिः स्तुत्यमित्यर्थः । **मेधपतिम्** यज्ञानां स्वामिनम् । **रुद्रम् जलाषभेषजम्** 'जलाषम्' (निघ.३,६) इति सुखनाम । तस्य भेषजमौषधभूतम् । सुखस्योत्पादकमित्यर्थः । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छन्दोऽध्याहार्यः । यदत्यन्तोत्कृष्टम् **तत् सुम्नम् शंयोः** सुखकामस्य यजमानस्यात्मनो वा कण्वाख्यस्य ऋषेरर्थाय **ईमहे** याचामहे ।। ४ ।।

**वेङ्कटमाधव–** स्तोत्रपतिं यज्ञपतिम् रुद्रम् सुखकरभेषजं बार्हस्पत्यस्य शंयोः यत् प्रजाविषयं सुखम् **तत्** याचामहे ।। ४ ।।

**मुद्गल– रुद्रम्** अभिलक्ष्य वयम् **शंयोः** बृहस्पतिपुत्रस्य सम्बन्धि **तत्** प्रसिद्धं सर्वप्रजाभ्यो हितम् **सुम्नम्** सुखम् **ईमहे** याचामहे । कीदृश रुद्रम् । **गाथपतिम्** स्तुतिपालकम् । **मेधपतिम्** यज्ञपालकम् । **जलाषभेषजम्** सुखरूपौषधोपेतम् ।। ४ ।।

**सायण– रुद्रम्** अभिलक्ष्य वयम् **शंयोः** बृहस्पतिपुत्रस्य सम्बन्धि **तत्** प्रसिद्धं सर्वप्रजाभ्यो हितम् **सुम्नम्** सुखम् **ईमहे** याचामहे । कीदृश रुद्रम् । **गाथपतिम्** स्तुतिपालकम् । **मेधपतिम्** यज्ञपालकम् । **जलाषभेषजम्** सुखरूपौषधोपेतम् ।

**रुद्रम्** अभिलक्ष्य वयं **शंयोः** बृहस्पतिपुत्रस्य सम्बन्धि **तत्** प्रसिद्धं सर्वप्रजाभ्यो हितं **सुम्नम्** सुखम् **ईमहे** याचामहे । कीदृशं रुद्रम् । **गाथपतिं** स्तुतिपालकं **मेधपतिं** यज्ञपालकं **जलाषभेषजं** सुखरूपौषधोपेतम् । यद्वा । उदकरूपौषधोपेतम् । उदकं हि रुद्रनामाभिमन्त्रितं सत् औषधं भवति । **गाथपतिम्** । गाथा इति वाङ्नाम, 'गाथा गणः' (नि.१.११.३७) इति तन्नामसु पठितत्वात् । वायूपायाः स्तुतेः पतिर्गाथपतिः । 'कै गै रै शब्दे' । 'आदेचः' इति आत्वम् । 'उपिकुषिगार्तिभ्यस्थन्' इति थन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति पूर्वपदस्य ह्रस्वत्वम् । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरे प्राप्ते 'मरद्वृधादीनां छन्दस्युपसंख्यानम्' इति पूर्वपदान्तोदात्तत्वम् । **मेधपतिम्** । पूर्ववत् । **जलाषभेषजम्** । 'जनी प्रादुर्भावे' । जायन्ते इति जाः । 'अन्येष्वपि दृश्यते' (पा.सू. ३.२.१०१) इति दृशिग्रहणात् केवलादपि डप्रत्ययः । लाषः । 'लष कान्तौ' । कान्तिरभिलाषः । भावे घञ् । जानां लाषो यस्मिन् तज्जलाषं सुखम् । जलाषरूपं भेषजं यस्मिन् रुद्रे स जलाषभेपजः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **शंयोः** । 'कंशंभ्याम्' (पा.सू.५.२.१३८) इति मत्वर्थीयो युस्प्रत्ययः । 'सिति च' (पा. सू. १. ४. १६) इति पदसंज्ञायाम् अनुस्वारपरसवर्णौ । प्रत्ययस्वरः ।। ४ ।।

**सिद्धाञ्जनम्– शंयोः** सुखकामस्य दृष्टान्तभूतो यः शंयुर्नाम ऋषिर्बार्हस्पत्यः तस्य **तत्** प्रसिद्धं सुम्नम् सुखं ईमहे याचामहे । कमभिलक्ष्य 'ईमहे' ? **गाथपतिम्** स्तुतिरूपायाः वाचः

पतिं, **मेधपतिम्** मेधो यज्ञः तल्लक्षितः सोमसवः तस्य पतिं, **जलाषभेषजम्** जलाषं सुखरूपं भेषजं औषधं यस्य तं **रुद्रम्** प्रस्तुतं देवम् । गाथपतिम्- गै शब्दे, थन्प्रत्ययः । जलाषभेषजम्- जायन्त इति जाः, जानां लाषः अभिलाषो यस्मिन् तत् जलाषं सुखम्, जलाषरूपं सुखरूपं भेषजं यस्य तम् । रुद्रसंबन्धि औषधं अलौकिकं सुखरूपम् । जलमेव जलाषं भेषजं यस्येति प्राहुरेके, तत्र प्रक्रिया न ज्ञायते ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**यः शुक्र इ॑व॒ सूर्यो॒ हिर॑ण्यमिव॒ रोच॑ते । श्रेष्ठो॑ दे॒वानां॒ वसुः॑ ।। ५ ।।**

यः । शु॒क्रःऽइ॑व । सूर्यः॑ । हिर॑ण्यम्ऽइव । रोच॑ते । श्रेष्ठः॑ । दे॒वाना॑म् । वसुः॑ ।। ५ ।।

**स्कन्द– यः** रुद्रः **शुक्र इव सूर्यः** यथा शुक्लवर्णः सूर्यः । **हिरण्यमिव** यथा च हिरण्यम् **रोचते** तद्वद्रोचते दीप्यते । **श्रेष्ठः** च **देवानाम्** मध्ये **वसुः** धनवान् प्रशस्यो वा । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्योत्तरयर्चैकवाक्यता योज्या ।। ५ ।।

**वेङ्कटमाधव– यः** रुद्रः ज्वलन्निव **सूर्यः हिरण्यमिव रोचते श्रेष्ठः देवानाम्** वासयिता । उत्तरत्र सम्बन्धः ।। ५ ।।

**मुद्गल– यः रुद्रः सूर्य** इव **शुक्रः** सूर्यवत् दीप्तिमान् **हिरण्यमिव रोचते** । यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि । स च **देवानाम्** सर्वेषां मध्ये **श्रेष्ठः वसु** निवासहेतुश्च ।। ५ ।।

**सायण– यः** रुद्रः **सूर्यः** इव **शुक्रः** सूर्यवद्दीप्तिमान् हिरण्यमिव **रोचते** । यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि । स च **देवानां** सर्वेषां मध्ये **श्रेष्ठः वसुः** निवासहेतुश्च । **रोचते** । 'रुच दीप्तावभिप्रीत्यां च' । अदुपदेशात् लसार्वधातुकानुदात्तत्वे धातुस्वरः । **श्रेष्ठः** । प्रशस्यतरः । प्रशस्यशब्दात् इष्ठनि प्रशस्यस्य श्रः' (पा.सू.५.३.६०) इति श्रादेशः । नित्त्वा-दाद्युत्तत्वम् । **वसुः** । वासयति सर्वमिति वसुः । 'वस निवासे' । अन्तर्भावितण्यर्थात् 'शृस्वृमिहि' इत्यादिना उप्रत्ययः । 'नित्' इत्यनुवृत्तेराद्युदात्तत्वम् ।। ५ ।।

**सिद्धाञ्जनम्– यः** रुद्रः **शुक्र इव सूर्यः** सूर्य इव दीप्तिमान् **हिरण्यमिव रोचते** सुवर्णम्

इव प्रीतिकरो भवति, सः **देवानाम्** सर्वेषां मध्ये **श्रेष्ठः** प्रशस्यतमः **वसुः** वासयिता, सर्वेषां वासहेतुश्च भवति । रोचते-रुच दीप्तौ प्रीत्यां च । वसुः-वस निवासे, अन्तर्भावितण्यर्थः, उप्रत्ययः ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये षड्विंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ।। ६ ।।**

**शम् । नः । करति । अर्वते । सुऽगम् । मेषाय । मेष्यै । नृऽभ्यः । नारिऽभ्यः । गवे ।।**

**स्कन्द–** सः **शम् नः करति** शम् सुखमस्माकं स्वभूताय करति करोतु । **अर्वते 'अर्वा'** (निघ.१,१४) इत्यश्वनाम । अश्वाय । **सुगम्** स्वधिगमम् । सुप्रियमित्यर्थः । अथवा शं सुगमिति समुच्चीयमाने एते । सुखं च सुगं पन्थानं च अश्वाय करोत्वित्यर्थः । न च केवलाय अर्वते । किं तर्हि । **मेषाय मेष्ये** च **नृभ्यः नारिभ्यः** च गवे च ।। ६ ।।

**वेङ्कटमाधव–** सोऽस्माकम् अश्वादीनां शोभनगमनं सुखं करोतु ।। ६ ।।

**मुद्गल– नः** अस्माकं सम्बन्धिभ्यः अर्वदादिभ्यः **सुगम्** सुष्ठु गम्यम् **शम्** सुखम् **करति** देवः करोति । **अर्वते** अश्वाय **मेषाय** मेषजातिपुरुषाय **मेष्ये** तज्जातीयस्त्रियै **नृभ्यः** 'पुरुषेभ्यः नारिभ्यः स्त्रीभ्यः **गवे** गोजातये ।। ६ ।।

**सायण–** आग्निमारुते शं नः करति इति धाय्या । अथ यथेतम् इति खण्डे सूत्रितं- वैश्वानराय पृथुपाजसे शं नः करत्यर्वते' (आश्व.श्रौ.५.२०) इति ।

**नः** अस्माकं सम्बन्धिभ्यः अर्वदादिभ्यः **सुगं** सुष्टु गम्यं **शं** सुखं **करति** देवः करोति । **अर्वते** अश्वाय । अर्वन्शब्दोऽश्वनाम, 'अर्वा वाजी' (नि.१.१४.३) इति तन्नामसु पाठात् । **मेषाय** मेषजातिपुरुषाय **मेष्ये** तज्जातीयस्त्रियै **नृभ्यः** पुरुषेभ्यः **नारिभ्यः** स्त्रीभ्यः **गवे** गोजातये । **करति** । 'डुकृञ् करणे' । व्यत्ययेन शप् । **अर्वते** । अर्ति गच्छतीत्यर्वा । 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । चतुर्थ्येकवचने 'अर्वणस्त्रसावनञः' इति नकारस्य तृआदेशः । वनिप्सुपौ पित्वादनुदात्तौ । धातुस्वरः । **मेषाय** । 'मिष स्पर्धायाम्' । पचाद्यच् 'देवसेनमेषादयः पचादिषु

द्रष्टव्याः' इति वचनात् । **मेष्ये** । 'जातेरस्त्रीविषयादयोपधात्' (पा.सू.४.१.६३) इति ङीप्-प्रत्ययः । प्रत्ययस्वरः । चतुर्थ्येकवचने आगमानुशासनस्यानित्यत्वात् आडागमाभावः । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वम् । 'उदात्तयणो हल्पूर्वात्' इति तु न भवति' 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् । **नृभ्यः** । 'सावेकाचः' इति प्राप्तस्य विभक्त्युदात्तत्वस्य 'नृ चान्यतरस्याम्' इति प्रतिषेधः । नारिभ्यः । 'नृनरयोवृद्धिश्च' (पा.सू.४.१.७३ ग.) इति शार्ङ्गरवादिषु पाठात् डीन्प्रत्ययः । नित्त्वादायुदात्तः । **गवे** । 'न गोश्वन्सावर्वर्ण' इति विभक्त्युदात्तस्य प्रतिषेधः ।। ६ ।।

**सिद्धाञ्जनम्–** **नः** अस्माकं सम्बन्धिने अर्वदादये **सुगम्** सुष्ठु गम्यम् **शम्** सुखं देवः **करति** करोति । केभ्यः ? **अर्वते** अश्वाय **मेषाय** तज्जातिपुरुपाय **मेष्ये** मेष्यै तज्जातिस्त्रियै **नृभ्यः** पुरुषम्यः **नारिभ्यः** स्त्रीभ्यः **गवे** गोजातये, एवं अस्मदीयेभ्यः सर्वेभ्यः शं करोति रुद्रः । करति-करोति, व्यत्ययेन शप् । अर्वते-अर्ति अर्वा, वनिप्, चतुर्थ्येकवचने नकारस्य तृ आदेशः । मेष्ये-चतुर्थ्येकवचने आगमानुशासनमनित्यम् इति आडागमाभावः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**अस्मे सोम श्रियमधि नि धेहि शतस्य नृणाम् । महि श्रवस्तुविनृम्णम् ।।**
अस्मे इति । सोम । श्रियम् । अधि । नि । धेहि । शतस्य । नृणाम् । महि । श्रवः । तुविऽनृम्णम् ।। ७ ।।

**स्कन्द–** **'तिस्रः सौम्यः** (तु.वृदे.३,१११) । तिस्र एता ऋचः सोमदेवत्याः । **अस्मे** अस्मासु हे **सोम! श्रियम् अधि नि धेहि** अधिशब्द 'अधिपरी अनर्थकौ' (पा.१,४,९३) इति कर्म प्रवचनीयः पदपूरणः । निधेहि स्थापय । अस्मभ्यं देहीत्यर्थः । कियतीम् । उच्यते । **शतस्य नृणाम्** मनुष्यशतस्य योग्याम् । अत्यन्तमहतीमित्यर्थः । **महि श्रवः महश्च यश तुविनृम्णम्** बहुबलोपेतम् । बलं च बह्वित्यर्थः ।। ७ ।।

**वेङ्कटमाधव–** सौम्यस्तृच । अस्मासु **सोम! श्रियम् अधि नि धेहि** मनुष्याणाम् **शतस्य** पर्याप्ताम्, महच्च अन्नं बहुबलम् ।। ७ ।।

**मुद्गल– हे सोम! देव नृणाम्** पुरुषाणाम् **शतस्य** पर्याप्ताम् **श्रियम् अस्मे** अस्मासु **अधि नि धेहि** आधिक्येन स्थापय । तथा **महि** महत् **तुविनृम्णम्** प्रभूतबलयुक्तम् **श्रवः** अन्नम् अधि नि धेहि ॥ ७ ॥

**सायण–** हे **सोम** देव **नृणां** पुरुषाणां **शतस्य** पर्याप्तां **श्रियम् अस्मे** अस्मासु **अधि नि धेहि** आधिक्येन स्थापय । तथा **महि** महत् **तुविनृम्णं** प्रभूतबलयुक्तं **श्रवः** अन्नम् **अधि नि धेहि । अस्मे** । 'सुपां सुलुक्' इति सप्तम्याः शे आदेशः । **नृणाम्** । 'नृ च' (पा.सू. ६.४.६) इति दीर्घप्रतिषेधः । नामन्यतरस्याम् इति नाम उदात्तत्वम् । महीत्यादयो गताः ॥

**सिद्धाञ्जनम्–** हे **सोम, नृणाम् शतस्य** पुरुषशतस्य, शतं बहुवाचि, पर्याप्तां **श्रियम्** सम्पदं **अस्मे** अस्मासु **अधि निधेहि** आधिक्येन निक्षिप, बहुपुरुषसङ्घस्य समाश्रयदानसमर्थं शरणं अस्मासु निधेहि । **महि** महत् **तुविनृम्णम्** प्रभूतबलयुक्तं **श्रवः** श्रवणं च निधेहि । विपुलप्रभावाः भवेम येन बहूनां आश्रयतां प्राप्नुयाम, प्रबलं च भवतु दिव्यावेशश्रवणं नः । अस्मे-सप्तम्याः शे आदेशः । अन्ये गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**मा नः सोमपरिबाधो माऽरातयो जुहुरन्त । आ न इन्दो वाजे भज ॥८॥**

**मा । नः । सोमऽपरिबाधः । मा । अरातयः । जुहुरन्त । आ । नः । इन्दो इति । वाजे । भज ॥ ८ ॥**

**स्कन्द– मा नः** अस्मान् **सोमपरिबाधः** सोमस्य परिबाधितारः अपहर्तारो राक्षसादयः, **मा** वा **अरातयः** शत्रवः **जुहुरन्त** हूर्च्छेर्वा ह्वयतेर्वा संमोहनार्थस्यैतद्रूपम् । मा यज्ञेऽन्यत्र वा संमोहं प्रापिपन्नित्यर्थः । त्वमपि **नः** अस्मान् हे **इन्दो**! सोम **वाजे** संग्रामनामैतत् (तु.निघ.२,१७) संग्रामस्थानीये यज्ञे संग्राम एव वा **आ भज** सेवस्व ॥ ८ ॥

**वेङ्कटमाधव– मा** अस्मान् अपहर्तारः हिंसन्तु सोम, **मा** च शत्रवः । त्वम् अस्मान् इन्दो! संग्रामे सेवस्व ॥ ८ ॥

**मुद्गल– सोमपरिबाधः** सोमस्य परितो बाधका यागरहिता **नः** अस्मान् **मा जुहुरन्त**

मा हिंसन्तु । तथा **अरातयः** शत्रवः **मा** जुहुरन्त । **हे इन्दो** सोम **वाजे** बलविषये न अस्मान् **आ भज** सर्वतः सेवस्व ।। ८ ।।

**सायण– सोमपरिबाधः** । सोमस्य परितो बाधकाः यागरहिताः **नः** अस्मान् **मा जुहुरन्त** मा हिंसन्तु । तथा **अरातयः** शत्रवः **मा जुहुरन्त** । हे **इन्दो** सोम **वाजे** बलविषयेऽन्नविषये वा **नः** अस्मान् **आ भज** सर्वतः सेवस्व । **सोमपरिबाधः** । सोमं परिबाधन्ते ये ते तादृशाः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **अरातयः** । 'रा दाने' । 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्तरि क्तिन् । यद्वा । 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । नञ्समासे अव्ययपूर्वपदप्रकृतिस्वरत्वम् । **जुहुरन्त** । 'हृ्प्रसह्यकरणे' । व्यत्ययेनात्मनेपदम् । लङि जुहोत्यादित्वात् श्लुः । 'बहुलं छन्दसि' (पा.स.७.१.१०३) इति बहुलवचनात् इकार-स्यापि ? उत्वम् । द्विर्भावहलाविशेषौ । 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति वचनात् 'अदभ्यस्तात्' (पा.सू.७.१.५) इति भदादेशाभावे सति 'झोऽन्तः' इति अन्तादेशः । 'न माङ् योगे' इति अडभावः ।।**सिद्धाञ्जनम्–सोमपरिबाधः** सोमस्य सोमाभिषवस्य परिबाधकाः अयज्वानो रसनिष्पादनप्रतिबन्धकाः अदेव्या इति यावत् । **नः** अस्मान् मा जुहुरन्त मा बलात्कुर्वन्तु । तथा **अरातयः** अदातारः अन्ये शत्रवः **मा** जुहुरन्त । हे **इन्दो** क्लेदनकारितया रसेन सुखप्रद, सोम देव, वाजे बलसमृद्धौ विषये **नः** अस्मान् **आ** सर्वतः भज सेवस्व । सोमपरिबाधः-बाधन्त इति बाधः, क्विप् चेति क्विप् । जुहुरन्त- हृ प्रसह्यकरणे, लङि जुहोत्यादित्वात् श्लुः, अन्यच्च छान्दसम् ।। ८ ।।

## ऋक्संहिता पदपाठसहिता

**यास्ते॑ प्र॒जा अ॒मृत॑स्य॒ पर॑स्मि॒न् धाम॑न्नृ॒तस्य॑ । मू॒र्धा नाभा॑ सोम वेन आ॒भूष॑न्तीः सोम वेदः ।। ९ ।।**

**याः । ते॒ । प्र॒ऽजाः । अ॒मृत॑स्य । पर॑स्मि॒न् । धाम॑न् । ऋ॒तस्य॑ । मू॒र्धा । नाभा॑ । सो॒म॒ । वे॒नः । आ॒ऽभूष॑न्तीः । सो॒म॒ । वे॒दः ।। ९ ।।**

**स्कन्द– याः ते प्रजाः** षष्ठीनिर्देशात् परिचारका इति वाक्यशेषः । याः ते तव परिचारका अस्मदाद्याः प्रजाः । **अमृतस्य** अमरधर्मण । **परस्मिन् धामन्** वेद्याख्ये स्थाने । **ऋतस्य**

गतस्य प्राप्तस्य । वेदिस्थस्य सत इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । ताः **मूर्धा** मूर्धनि प्रधानभूते । **नाभा** पृथिव्या नाभिस्थानीये उत्तरवेद्यारव्ये स्थाने । **हे सोम** । **वेनः** वेनतिः कान्तिकर्मा (तु.निघ.२,५) । कामयस्व । किञ्च **आभूषन्तीः सोम!** वेदः विद्धि । अथवा आभूषन्तीरिति भू सत्तायाम् इत्यस्यैव रूपम् । मर्यादया भवन्तीः । श्रुतिस्मृत्युदितायां मर्यादायां वर्तमाना इत्यर्थः । हे सोम । वेदः । विदित्वा च मत्प्रवणा एता न्यायवृत्ताश्चेति मन्यमानः कामयस्वेत्यर्थः ।। ९ ।।

**वेङ्कटमाधव– याः ते सोम! प्रजाः अमूतस्य** तृतीये लोके स्थितस्य परिचरन्ति । तासां तद्धविः सर्वेषामुच्छ्रितस्त्वम् उत्तरवेदिनाभौ कामयस्व । त्वां परिचरन्तीश्च ता जानीहीति ।।

**मुद्गल– हे सोम! ते** तव सम्बन्धिन्य **याः** प्रजाः सन्तिः ताः प्रजाः **मूर्धा** शिरस्थानीयत्वम् **नाभा** सन्नहनयुक्ते यज्ञगृहे **वेनः** कामयस्व । कीदृशस्य ते । **अमृतस्य** मरणरहितस्य । **परस्मिन् धामन् ऋतस्य** उत्तमे स्थाने प्राप्तस्य । हे **सोम! आ भूषन्तीः** सर्वतः त्वाम् अलङ्कुर्वतीः प्रजाः वेदः जानीहि ।। ९ ।।

**सायण–** हे **सोम ते** तव सम्बन्धिन्यः **याः प्रजाः** सन्ति स्तोत्रं वा कुर्वन्ति ताः प्रजाः **मूर्धा** शिरःस्थानीयस्त्वं **नाभा** संन्नहनयुक्ते यज्ञगृहे **वेनः** कामयस्व । कीदृशस्य ते । **अमृतस्य** मरणरहितस्य **परस्मिन्धामन्नृतस्य** उत्तमे स्थाने प्राप्तस्य । है सोम **आभूषन्तीः** सर्वतस्त्वामलंकुर्वन्तीः प्रजाः **वेदः** जानीहि । **धामन्** । 'सुपां सुलुक्' इति सप्तम्या लुक् । **नाभा** । 'णह बन्धने'। 'नहो भश्च' (उ.सू.४.५६५) इति कर्मणि इन्प्रत्ययः । ञित्त्वा-द्युदात्तत्वम् । 'सुपां सुलुक्' इति सप्तम्या डादेशः । **वेनः** । 'वेनतिः कान्तिकर्मा' (नि.२.६.४)। लेटि सिपि अडागमः । 'तिङतिङः' इति निघातः । **आभूषन्तीः** । 'भूष अलंकारे' । भौवादिकः । शपः पित्त्वादनुदात्तत्वम्, शतुश्च लसार्वधातुकस्वरेण । धातुस्वरेण आद्युदात्तत्वम् । समासे कृदुत्तरपदप्रकृतिस्वरत्वम् । **वेदः** । 'विद ज्ञाने' । लेटि सिपि अडागमः ।। ९ ।।

**सिद्धाञ्जनम्– हे सोम, अमृतस्य** मरणरहितस्य नित्यस्य, **परस्मिन्** उत्तमे **धामन्** धामनि स्थाने स्थितस्य **ऋतस्य** सत्यस्य **ते** तव त्वत्सम्बन्धिन्यः, त्वत्सेविन्यः **याः प्रजाः** सन्ति ताः **वेनः** कामयस्व । कीदृशस्त्वम् ? **मूर्धा** शिरःस्थानीयस्त्वं नाभा **नाभौ** मध्ये, चक्रस्य

नाभिरिव स्थिते मुख्ये मध्ये अन्तरे स्थाने त्वदीयाः प्रजाः सुस्थिताः विधाय ताः कमनीयाः कुरु इत्यर्थः । कीदृशीस्ताः? **आभूषन्तीः** अलङ्कुर्वाणाः नाभिभूतं सर्वान्तरमन्तर्यजनस्थानं इति शेषः । सर्वतस्त्वामलङ्कुर्वाणा इति सायणो मन्यते । हे **सोम!** तथाभूताः प्रजाः **वेदः** जानीहि । धामन्-सप्तम्या लुक् । नाभासप्तम्या डादेशः । वेनः-वेनतिः कान्तिकर्मा, लेट् । वेदः-विद जाने, लेट् । उभयत्र सिप्यडागमः ॥

घौरस्य कण्वस्य रौद्रं सूक्तं समाप्तम् । इदानीं रुद्रस्य तत्त्वमधिकृत्य अवधातव्यः सारांशो वक्ष्यते । त्रिमूर्तिव्यवस्थानुरोधेन पुराणेषु शैवशाक्ताद्यागमेषु च प्रसिद्धो रुद्रः संहारकृत् शिव इत्यपि गीयते । पुराणे वर्णितानां ब्रह्मेन्द्रादीनां वेदे प्रतिपादितानां तेषामेव च विशेषो बोध्यः । प्रागेवोक्तं यदग्न्यादयो देवाः यद्यपि मुखतः पृथक्स्थिताः स्वाधिकारेषु वर्तमाना अत एव विशिष्टलिङ्गा भवन्ति, तथापि तेषामेकैकोऽपि स्वयं सर्वदेवसहायः अन्तर्निहितसर्वदेवप्रकृतिकः सर्वदेवतामूलभूतपरमपुरुषः स एकस्तदेकं च ज्योतिर्वा भवतीति । एवं एकैकस्याः देवतायाः स्वरूपगुणबोधके लिङ्गे लक्ष्यमाणेऽपि तत्रैव क्वचित् अन्यदेवतालिङ्गदर्शनेन देवतावैशिष्ट्यप्रतिपादनं न सुकरं भवति । यथा 'आ वो राजानमध्वरस्य रुद्रम्' (४.३.१) इत्याग्नेयसूक्ते रुद्रवैभवश्रवणात् सामान्यतः अग्निरुद्रयोर्लिङ्गभेदेऽप्यभेदश्रवणं स्पष्टम्, तथा रुद्रेन्द्रयोः अभेदः अन्यत्र श्रूयते । यद्यप्येवं रुद्रे अग्निगुणं इन्द्रगुणं सर्वेश्वरगुणं च तत्र तत्र मन्त्रेषु वर्णितं लक्षयामः, तथापि रुद्रतत्त्वं दाशतय्या उद्धृत्य कथञ्चिद् ग्राह्यम् । याजुषाथर्वणसंहितयोर्बहुषु रुद्रस्वरूपप्रतिपादकेषु मन्त्रेषु सत्स्वपि, ऋक्संहितायां पठितान् रुद्रमन्त्रान् समालोच्य तत्र वर्णितस्य रुद्रस्य वैशिष्ट्यमेवेह स्मारयामः । अत्रैके मन्यन्ते- यथा पुराणेषु ब्रह्मविष्णुरुद्राणां महत्त्वं, न तथा वेदे । अत एव पुराणप्रथितत्रिमूर्तिवर्णनपराणि सूक्तान्यल्पसंख्याकानि भवन्ति । इन्द्रस्याग्नेर्वा सूक्तानि भूयांसि, तेषां महत्त्वादिति । नैतद्युक्तम् । न हि सूक्तसंख्याबाहुल्यं देवताविशेषस्य महत्त्वनिर्णायकं भवति । इन्द्रसूक्तानि भूयिष्ठानि दाशतय्यां, अल्पीयांस्येव सूर्यसूक्तानि, तथापि सूर्य एव परमो देव इति निर्विवादम् । रुद्रदेवताकानि सूक्तानि त्रिचतुराण्येव ऋग्वेदे, मारुतानि त्वधिकानि, तथापि मरुतां पितेति वेदगीतो रुद्रो मरुद्भ्यो न्यून इति चेदुपहसनीयमेव भवति । न वा विष्णुरल्पसंख्याकैः सूक्तैरभिवर्णितः अत्यधिकसूक्तप्रतिपादितादिन्द्रादग्नेर्वा न्यूनो भवति । तस्मान्न सूक्तसंख्यया महत्त्वं निश्चीयते देवताविशेषस्येति बोध्यम् ।

कथं तर्हि महत्तरत्वमन्तरा भूयिष्ठानि सूक्तानीन्द्रस्य भूयांस्यग्नेर्वा वेदे गीतानि भवन्ति ? ब्रूमः । अन्तर्यागप्रवृत्तानामाद्यानामृषीणां स निष्ठामार्गः ऊर्ध्वारोहणपद्धतिः, यत्र ऋषेरुपास्ति-दशाविशेषेषु यस्य यस्य देवताविशेषस्य प्रसादोऽन्तर्याजिन आवश्यकः साहाय्यकारी भवति तस्य तस्य प्राधान्यं सूक्तैराविष्कृतं भवति । एवं रुद्रस्य विष्णोर्वा न तथा प्राधान्यं भवति यथा दशाविशेषेषु अग्नेरिन्द्रस्य वा आवश्यकतामूलकं प्राधान्यं भवति । इदं तर्हि विचारणीयम्-कीदृशं वर्णितं भवति वेदे ब्रह्मणो रुद्रस्य विष्णोर्वा स्वरूपं लक्षणं वेति? उच्यते । ब्रह्मण-स्पतेस्तत्त्वं विचारितम् । तत्र ब्रह्मणोऽधिकार उपन्यस्तः । तत्रोक्तस्य सारांश इह स्मार्यः । ब्रह्मबृहस्पत्योरधिकारस्य ब्रह्मणस्पतौ समन्वयमवोचाम । स वाचा सृजति सर्वम् । सृष्टिश्च आविष्कारात्मिका भवति । सतामेव वस्तूनां तमसि निमग्नानां उद्धरणद्वारा प्रकाशप्राप्तिः सम्पद्यते । तामेतां सृष्टिशब्दवाच्यां विश्वस्याप्याविष्कृतिं निर्वहन् ब्रह्मा ब्रह्मणस्पतिः स्रष्टेच्यते । सोऽचेतनात्तमसः सर्वाणि वस्तून्युत्थाप्य तेषां प्राणमनोज्ञानयुक्तानि रूपाणि सम्पादयति । स एष ब्रह्मा ।

रुद्रस्तु तां सृष्टिं प्रसह्योर्ध्वं नयति । तस्योन्नयनस्य ये प्रतिरोधकाः सन्तः तत्र प्रमत्ता वा प्रत्यवतिष्ठन्ते तान् प्रहरति, कशाभिस्ताडयन्निव शिक्षयति, प्रध्वंसयति च पाषान् प्रतिबन्धकान् आयुधपाणिरुग्रः शर्व इति श्रुतश्च । एवं घोरोऽपि स शिवो दयालुः प्रसादयत्यार्तान् सर्वार्तिनाशनः शिवङ्करः शिवतमभैषज्येन । विष्णुस्तु पदत्रयक्रमणेन विश्वं धारयमाणः मर्त्येष्वस्मासु इन्द्राय विततं स्थानं दधाति, येन वयं परं धाम गच्छेम । एवं वेदप्रतिपादितस्य महतो देवतात्रयस्य विवरणं सुलभं भवति तत्तत्सूक्तार्थविचारतः इत्यलं विस्तरेण ।

अथ रुद्रशब्दोऽवयवार्थानुगमेनापि घोर उग्र इत्याद्यर्थको भवति । यद्यपि प्राचीनार्यभाषा-शाखीयानां रक्तकान्त्याद्यर्थकधातूनां रुष्यतिरुशत्यादीनां परीक्षणेन रुद्रशब्दस्य रुधिरार्थकधातु-सम्बन्धो वृत्तचर इति नव्यानामूहो न्याय्य एव भवति, तथापि तेषामेव धातूनां उग्रभीषणाद्यर्थकत्वं वर्तत इति बहुमन्त्रपर्यालोचनेन सुगमं स्यात् । 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वं' इत्यादि-ब्राह्मणनिर्वचनम् वैदिकपदस्वरूपपरीक्षायां न युक्तं भवति । न वोपयुक्तं स्यात् । 'रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वेत्यादि विशृङ्खलविकल्पभूयिष्ठं शब्दरूपावतारमर्यादा-विदूरकल्पनाशबलं नैरुक्तं निर्वचनम् । उग्रो घोरो वा भवति रुद्रशब्दार्थो वेदे रूढः । तस्मादास्तां

रुद्रो रोदयतेः, उन्नयनमार्गपरिपन्थिनः रोदयति रोषणो रुद्र इति । ईदृशः प्रचण्डकर्मा प्राणबलानामखण्डनिधिरेक एव बहूनां रुद्राणां पिता, मरुतां पितेति च प्रसिद्धः, शिवं तन्वानो जगत्पितेति च ऋग्वेदे कुत्सगृत्समदवसिष्ठसूक्तान्यावेदयन्ति । अन्यत्र च 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' (६.६६.३) 'ते जज्ञिरे दिव ऋष्वास उक्षणो रुद्रस्य मर्याः असुरा अरेपसः' (१.६४-२) इत्येवं जातीयकैर्मन्त्रैः रुद्रस्य महत्त्वं बहुपुत्रत्वं पृश्निमातॄणां इन्द्रभ्रातॄणां मरुतां पितृत्वं च आर्तिहरत्वादि च प्रतिपादितानि भवन्ति । स एष रुद्रो भुवनस्य पिता सर्वस्यापि सुखकृत् अन्तःस्थितो मृत्युञ्जय इति चान्ये मन्त्रा उद्घोषयन्ति । 'भुवनस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रमक्तौ' (६.४६.१०) 'अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया' (८.७२.३) 'शं नो रुद्रो रुद्रेभिर्जलाषः (७.३५.६) 'रुद्रो रुद्रेभिर्देवो मृळयाति नः' (१०. ६६.३) इत्यन्याश्चैवंविधा ऋचः सूक्तेषु तत्र तत्र द्रष्टव्याः । 'त्र्यम्बकं यजामहे' इति (७.५६. १२) मृत्युञ्जयरुद्रमन्त्रार्थचिन्तनात् मृत्योर्विमोक्षणलक्षणं वेदोक्तमतिचिरन्तनरहस्यं विदितं भवति । तत्र उत्तरेणार्धर्चेन बन्धनान्मोक्षो येन दृष्टान्तेन निरूपितं भवति, सोऽद्यापि योगिभिर्ज्ञानिभिः भाषाभेदेनोपयुज्यते स्वानुभूतिमूलकतत्त्वोपदेशप्रसङ्गेषु । 'उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात्' इत्यस्य तात्पर्यं तु यथा उर्वारुकं नाम कर्कटीफलं परिपक्वं सत् परिवेष्टनत्वचः पृथग्भूतं अत एव मुक्तं भवति (वृन्तात् बन्धनात् फलं मुक्तं भवतीत्येके) तथा अन्तरात्मनः पुरुषस्य मृत्युग्रस्ताच्छरीरात्पृथग्भावः परिपक्वस्य मानुषस्य अनुभवात्मको मोक्षो भवतीत्याशयः । एवं मृत्योर्बन्धनान्मोचय, अमृतात् मा मोचयेति ऋषिर्ब्रूते । ईदृशमोक्षविषयकानुभव एव मूलं भवति तं स्वाच्छरीरात् प्रवृहेन्मुजादिवेषीकां धैर्येण' (कठोपनिषत् ६.१७) एवंविधस्योपनिषद्वाक्यस्य । एतावान् महिमा त्रिलोकपितुः 'त्र्यम्बकस्य' 'पुष्टिवर्धनस्य' मृत्युञ्जयस्य रुद्रस्य वेदे गीत इति शिवम् ।। ९ ।।

**।। इति प्रथमस्य तृतीये सप्तविंशो वर्गः इति प्रथमे मण्डलेऽष्टमोऽनुवाकः ।।**

अथ नवमोऽनुवाकः । तत्र सप्त सूक्तानि । कण्वपुत्रः प्रस्कण्व ऋषिः । चतुर्दशर्चं 'अग्ने विवस्वत्' इति प्रथमं सूक्तम् । कृत्स्नं सूक्तमाग्नेयम् । आद्ये द्वे अश्विदेवताके उपोदेवताके च । अयुजो बृहत्यः, युजः सतोबृहत्यः ।।

**।। इति प्रथमाष्टके तृतीयाध्याये सप्तविंशो वर्गः ।।**

**।। इति प्रथममण्डले अष्टमोऽनुवाकः ।।**

## ऋक्संहिता पदपाठसहिता

### (सूक्तम् ४४)

१४ प्रस्कण्वः काण्वः । अग्निः, १-२ अग्निः, अश्विनौ, उषाश्च ।
प्रगाथः=विषमा बृहत्यः, समाः सतोबृहत्यः ।

**अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य । आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ १ ॥**

**अग्ने । विवस्वत् । उषसः । चित्रम् । राधः । अमर्त्य । आ । दाशुषे । जातऽवेदः । वह । त्वम् । अद्य । देवान् । उषःऽबुधः ॥ १ ॥**

**स्कन्द– अग्ने विवस्वत् इति** प्रस्वण्वः काण्व उच्यते । प्रस्कण्वो नाम कण्वपुत्र ऋषिरुच्यते । **'आग्नेये प्रथमे सूक्ते'** । अग्निदेवत्ये द्वे एते सूक्ते । **'प्रागाथे प्रथमेऽश्विनौ सहोषसा लिङ्गभाजौ'** (तु.बृदे.३,१११) । यस्त्वयं प्रथमः प्रागाथः । ब्यृच इत्यर्थः । अत्राश्विनौ सहोषसा लिङ्गभाजौ । गुणत्वभाजावित्यर्थः । अश्विनौ उषाश्चाग्नेर्गुणभूता अत्र स्तूयन्त इत्यर्थः । हे अग्ने! **विवस्वत्** विवासनवत् । तमसां विवासनकरम् । किं तत् । सामर्थ्याज्ज्योतिः । कस्य । उच्यते । **उषसः** । कीदृशम् । **चित्रम्** विचित्रं पूज्यं वा । **राधः** धननामैतत् (तु. निघ.२,१०) । इह तु धनसादृश्यादौषसे ज्योतिषि वर्तते । उज्ज्वलत्वेन प्रीतिकरत्वेन धनसदृशम् । हे **अमर्त्य! आ दाशुषे** यजमानस्यार्थाय । **हे जातवेदः** । जातप्रज्ञान! **आ वह त्वम् अद्य** न च केवलमौषसज्ञोतिः । किं तर्हि । अन्यानपि **देवान्** । कीदृशान् । **उषर्बुधः** यागगमनार्थमुषःकाले ये बुध्यन्ते ते उषर्बुधः, तान् । अथवा विवस्वदित्यग्नेरेव सम्बोधनम् । छान्दसत्वात्तु नुमभावः । उषस इत्यपि द्वितीयाबहुवचनान्तमाहूयमानवचनम् । चित्रं राध इत्यपि हविर्लक्षणं धनमभिप्रेतम् । द्वितीयानिर्देशाच्च कर्मप्रवचनीयप्रतिशब्दाध्याहारः । हे अग्ने! 'विवस्वन्! विवसनवन्! तमसां विवासयितः! उषसः चित्रं हविर्लक्षणं धनं प्रति देवांश्च आ वह इति ॥

**वेङ्कटमाधव–** प्रस्कण्वः काण्वः । **अग्ने** । परिचरणवत् **उषसः** पूज्यं धनम् **अमर्त्य!** यजमानाय **आ वह** । जातधन ! **त्वम्** तथा **उषर्बुधः** च **अद्य देवान्** आ वह ॥ १ ॥

**मुद्गल–** नवमे अनुवाके सप्त सूक्तानि । तत्र 'अग्ने विवस्वत्' इति चतुर्दशर्चं प्रथमं सूक्तम् । कण्वपुत्रः प्रस्कण्व ऋषिः । द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रथमातृतीयाद्या अयुजो बृहत्यः । कृत्स्नं सूक्तम् आग्नेयम् प्रागाथम् । आद्ये द्वे अश्विदेवताके उषोदेवताके च ।

**हे अग्ने! त्वम् उषसः** उषोदेवतायाः सकाशात् **राधः** धनम् **दाशुषे** हविर्दत्तवते यजमानाय **आ वह** आनीय प्रापय । सोऽग्निः विशेष्यते । **हे अमर्त्य!** मरणरहित! **जातवेदः!** जातानां वेदितः! कीदृशं राधः । **विवस्वन्** विशिष्टनिवासोपेतम् । **चित्रम्** नानाविधम् । किञ्च **अद्य अस्मिन्** दिने **उषर्बुधः** उषःकाले प्रबुद्धान् देवान् आ वह ॥ १ ॥

**सायण–** नवमेऽनुवाके सप्त सूक्तानि । तत्र 'अग्ने विवस्वत्' इति चतुर्दशर्चं प्रथमं सूक्तम् । अत्रानुक्रमणिका– 'अग्ने षळूना प्रस्कण्वः काण्व आग्नेयं तु प्रागाथमायो द्वचोऽश्युषसां च' इति । कण्वपुत्रः प्रस्कण्व ऋषिः । अत्र द्वितीयाचतुर्थ्याद्या युजः सनोबृहत्यः । प्रथमातृतीयाद्या अयुजो बृहत्यः । कृत्स्नं सूक्तमाग्नेयमुत्तरं च । आद्ये द्वे अश्विदेवताके उषोदेवताके च । प्रातरनुवाके आग्नेये क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । 'अथैतस्यारात्रेः' इति खण्डे सूत्रितम्– 'अग्ने विवस्वत्सखायस्त्वा' (आश्व.श्री.४.१३) इति । वाजपेये अग्निमारुते आद्यैः प्रगाथोऽनुरूपः । 'वाजपेयेन' इति खण्डे सूत्रितं-'चित्रवतीषु चेत् स्तुवीरंस्त्वं नश्चित्र ऊत्यग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ' (आश्व.श्रौ.९.९) इति । पर्यायव्युष्टौ आश्विन-शस्त्रस्यायमेव प्रगाथः स्तोत्रियः । यदि पर्यायानभिव्युच्छेत्' इति खण्डे 'आश्विनायकस्तोत्रियोऽग्ने विवस्वदुषमः' (आश्व.श्री.६.६) इति सूत्रितम् ॥ हे **अग्ने** त्वं **उषसः** उषो देवतायाः सकाशात् **राधो** धनं **दाशुसे** हर्विदत्तवते यजमानाय **आ वह** आनीय प्रापय । सोऽग्निर्विशिष्यते । **अमर्त्य** मरणरहित । **जातवेदः** जातानां वेदितः । तमेतं शब्दं यास्को व्याचष्टे- जातवेदाः कस्मात् । जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्ददेतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् । तम्मात्सर्वान् ऋतून्पशवोऽग्निमभिसर्पन्तीति च' (निरु.७.१९) इति । कीदृशं राधः । **विवस्वत्** विशिष्ट-निवासोपेतं **चित्रम्** नानाविधम् । किंच **अद्य** अस्मिन् दिने **उषर्बुधः** उषःकाले प्रबुद्धान् **देवान्** आ वह । **विवस्वत्** । विवासनं विवः तद्युक्तम् । 'वस निवासे' । विपूर्वात् अन्तर्भावितण्यर्थात् संपदादिलक्षणो भावे क्विप् । 'तदस्यास्ति' इति मतुप् । 'मादुपधायाः' इति वत्वम् । 'तसौ मत्वर्थे' इति भत्वेन पदत्वाभावात् रुत्वाद्यभावः । वृषादित्वादाद्युदात्तत्वम् । **राधः** । 'राध साध संसिद्धौ' । राध्नोत्यनेनेति राधो धनम् । करणेऽसुन् । ञित्वादाद्युदात्तत्वम् । **दाशुषे** । 'दाशृ दाने' । 'दाश्वान् साह्वान्' इति क्वसुप्रत्ययान्तो निपातितः । चतुर्थ्येकवचने 'वसोः संप्रसारणम्'

इति संप्रसारणम् । 'शासिवसि' इति षत्वम् । **जातवेदः** । जातानि वेत्तीति जातवेदाः । 'गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च' इति असुन् । यद्वा । वेद इति धननाम । जातं धनं यस्य स तादृशः । आमन्त्रितनिघातः । **वह** । 'यचोऽतस्तिङः ' इति संहितायां दीर्घत्वम् । **देवान्** । 'दीर्घादटि समानपादे' इति संहितायां नकारस्य रुत्वम् । 'आतोऽटि नित्यम्' इति सानुनासिक आकारः । **उषर्बुधः** । उषसि बुध्यन्ते इत्युषर्बुधः । 'बुध अवगमने' । 'क्विप् च' इति क्विप् । रोः उत्वाभावः छान्दसः । कृदुत्तरपदप्रकृतिस्वरत्वम् ।। १ ।।

**सिद्धाञ्जनम्–** हे **अमर्त्य** मरणरहित, **जातवेदः** जातानां वेदितः, अग्ने, **त्वम् विवस्वत्** प्रकाशयुक्तं **चित्रम्** नानाविधम् **राधः** धनं **उषसः** उषोदेव्याः सकाशात् **आवह** आहर । कस्मै ? **दाशुषे** दत्तवते यजमानाय । किञ्च, **अद्य** इदानीं **उषर्बुधः** उषसि बुध्यमानान् **देवान्** आवहेति सम्बन्धः । ऋतज्योतिरुदयात्प्रागुषस आविष्कार इति पूर्वं सविस्तरमुक्तमत्र स्मार्यम् । अन्तर्यजने तस्मादुषसि सर्वदेवानयनं अग्नेः कृत्यं भवति । विवस्वदादयः सर्वे गताः । जातवेदः-अस्य बहुधा भवति यास्कीयं निर्वचनम् । अस्माकं तु, जातानि वेत्तीति जातवेदाः, असुन् । उपर्बुधः- उषसि बुध्यन्त इति उषर्बुधः, रोरुत्वाभावः छान्दसः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**जुष्टो॒ हि दू॒तो असि॑ हव्य॒वाह॒नोऽग्ने॑ र॒थीर॑ध्व॒राणा॑म् ।**
**स॒जूर॒श्विभ्या॑मु॒षसा॑ सु॒वीर्य॑म॒स्मे धे॑हि॒ श्रवो॑ बृ॒हत् ।। २ ।।**

**जुष्टः॑ । हि । दू॒तः । असि॑ । ह॒व्य॒ऽवाह॑नः । अग्ने॑ । र॒थीः । अ॒ध्व॒राणा॑म् । स॒ऽजूः । अ॒श्विऽभ्या॑म् । उ॒षसा॑ । सु॒ऽवीर्य॑म् । अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् ।। २ ।।**

**स्कन्द– जुष्टः हि** हिशब्दो यस्मादर्थे । यस्मात् **जुष्टः प्रियः दूतः** च **असि हव्यवाहनः** हविषां वोढा । **हे अग्ने! रथीः** रथो यस्यास्ति स रथी सारथिः तत्स्थानीयश्च **अध्वराणाम्** यज्ञानाम् । यस्मादिति वचनात् तस्मादित्यध्याहर्तव्यम् । तस्मात् **सजूः** सम्प्रीयमाणः **अश्विभ्याम् उषसा** च सह **सुवीर्यम्** शोभनेन वीर्येण सहितम् **अस्मे** अस्मभ्यम् **धेहि** देहि । **श्रवः** धन यशोऽन्नं वा **बृहत्** महत् ।। २ ।।

**वेङ्कटमाधव–** पर्याप्तः हि दूतः त्वम् **असि** हविषां वोढा **अग्ने! रथीः अध्वराणाम्** ।

**'रथो ह वा एष भूतो देवेभ्यो हव्यं वहति'** (तु.काश.२,३,१,६) इति ब्राह्मणम् । स त्वम् **अश्विभ्याम् उषसा** च सहितः शोभनवीर्यं महदन्नमस्मासु **धेहि** ।। २ ।।

**मुद्गल–** हे **अग्ने**! त्वम् जुष्टत्वादिविशेषगुणयुक्त **असि** । **जुष्टः** सेवितः **दूतः** देवानां वार्ताहरः **हव्यवाहनः** हविषो वोढा **अध्वराणाम्** क्रतूनाम् **रथीः** रथस्थानीयः । तादृशस्त्वम् **अश्विभ्याम्** देवताभ्याम् **उषसा** देवतया च **सजूः** सहितो भूत्वा **सुवीर्यम्** शोभनवीर्योपेतम् **बृहत्** प्रभूतम् **श्रवः** अन्नम् **अस्मे धेहि** अस्मासु प्रक्षिप ।। २ ।।

**सायण–** हे **अग्ने** त्वं जुष्टत्वादिविशेषगुणयुक्तः **असि** । **जुष्टः** सेवितः **दूतः** देवानां वार्ताहारः **हव्यवाहनः** हविषो वोढा **अध्वराणां** क्रतूनां **रथीः** रथस्थानीयः । तथा च मन्त्रान्तरं ब्राह्मणेनैव व्याख्यातम्- 'रथीरध्वराणामित्याहैष हि देवरथः' (तै.सं.२.५.९.२) इति । ब्राह्मणान्तरं च- 'रथीरध्वराणामित्याह रथो ह वा एष भूतो देवेभ्यो हव्यं वहति' इति । तादृशस्त्वम् **अश्विभ्यां** देवताभ्यां **उषसा** देवतया च **सजूः** सहितो भूत्वा **सुवीर्यं** शोभनवीर्योपेतं **बृहत्** प्रभूतं **श्रवः** अन्नम् **अस्मे धेहि** अस्मासु प्रक्षिप । **जुष्टः** । 'जुषी प्रीतिसेवनयोः' । 'नित्यं मन्त्रे' (पा.सू. ६.१.२१०) इत्याद्युदात्तत्वम् । **असि** । सिपि 'तासस्त्योर्लोपः' (पा.सू.७.४.५०) इति सलोपः । 'हिच' इति निघातप्रतिषेधः । **हव्यवाहनः** । हव्यं वहतीति हव्यवाहनः । 'हव्येऽनन्तःपादम्' (पा.सू.३.२.६६) इति न्युट् । योरनादेशः । ञित्वादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वम् । **अग्ने** । पादादित्वादाष्टमिकनिघाताभावः । **रथीः** । रथशब्दात् स्वार्थिक ईकारप्रत्ययः । **अध्वराणाम्** । ध्वरो नास्त्येष्विति बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । **सुवीर्यम्** । 'वीरवीर्यौ च' इत्युत्तरपदाद्युदात्तत्वम् । **अस्मे** । 'सुपां सुलुक्' इति सप्तम्याः शे आदेशः ।। २ ।।

**सिद्धाञ्जनम्–**हे **अग्ने**, त्वं **जुष्टः** सेवितः, **दूतः** देवानां दूतः, **हव्यवाहनः** हव्यस्य हविषः अर्पितस्य वाहनो वोढा प्रापयिता **अध्वराणां रथीः** यज्ञानां रथस्थानीयः **असि हि** । यज्ञान् गन्तव्यं स्थलं प्रापयिता चासि । तथाभूतस्त्वं **अश्विभ्याम्** उभाभ्याम् **उषसा** च **सजूः** सहितो भूत्वा **सुवीर्यम्** शोभनवीर्ययुक्तं **बृहत्** महत् दिव्यं **श्रवः** श्रवणं **अस्मे** अस्मासु **धेहि** प्रक्षिप । **रथीः** रथशब्दात् स्वार्थिक ईकारप्रत्ययः । जुष्टादयः सर्वे गताः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**अद्या दूतं वृणीमहे वसुमग्निं पुरुप्रियम् ।**
**धूमकेतुं भाऋजीकं व्युष्टिषु यज्ञानामध्वरश्रियम् ।। ३ ।।**
**अद्य । दूतम् । वृणीमहे । वसुम् । अग्निम् । पुरुऽप्रियम् । धूमकेतुम् । भाःऽऋजीकम् । विऽउष्टिषु । यज्ञानाम् । अध्वरऽश्रियम् ।। ३ ।।**

**स्कन्द– अद्य दूतम् वृणीमहे वसुम्** धनवन्तं प्रशस्यं वा **अग्निम् पुरुप्रियम्** बहूनां यजमानानां प्रियम् **धूमकेतुम्** धूमेन य केत्यते ज्ञायते स धूमकेतुः तं धूमकेतुम् । अथवा धूमस्य कर्ता धमूकेतु, तं धूमकेतुम् । **भाऋजीकम्** ऋजुका भाः दीप्तिर्यस्य स भाऋजीकः । छान्दसमृजुकशब्दस्य उकारस्य ईत्वम्, भाःशब्दस्य पूर्वनिपातः । त भाऋजीकम् ऋजुभासम् । कस्यां वेलायाम् । उच्यते । **व्युष्टिषु** उषसां व्युष्टिवेलायाम् । प्रभातकाल इत्यर्थः । **यज्ञानाम् अध्वरश्रियम्** ध्वरतिर्हिंसाकर्मा । अध्वरा अहिंसिता श्रीर्येन सोऽध्वरश्रीः तम् अध्वरश्रियम् कस्याध्वरश्रियम् । यज्ञानाम् अध्वरश्रियम् । अहिंसकमित्यर्थः ।। ३ ।।

**वेङ्कटमाधव– अद्य दूतम् वृणीमहे** वासयितारम् **अग्निम्** बहुप्रियं धुमप्रज्ञानं प्रसिद्धभासम्, उषसः **व्युष्टिषु यज्ञानाम्** योऽध्वरं श्रयति ।। ३ ।।

**मुद्गल– अद्य** अस्मिम् दिने **अग्निं वृणीमहे** प्रार्थयामहे । कीदृशम् । **दूतम्** वार्ताहरम् **वसुम्** निवासहेतुम् **पुरुप्रियम्** बहूनां प्रियम् **धूमकेतुम्** धूमरूपध्वजयुक्तम् **भाऋजीकम्** प्रसिद्धभासालंकृतम् **व्युष्टिषु** उषःकालेषु **यज्ञानाम्** यजमानानाम् अध्वरश्रियम् यागसेवितम् ।।

**सायण–अद्या** अस्मिन् दिने **अग्निं वृणीमहे** प्रार्थयामहे । कीदृशम् । दूतं वार्ताहारं **वसुं** निवासहेतुं **पुरुप्रियं** बहूनां प्रियं **धूमकेतुं** धूमरूपध्वजयुक्तं **भाऋजीकं** प्रसिद्धभासालंकृतम् । **भाऋजीकं** प्रसिद्धभाः । (निरु.६.४) इति यास्कवचनम् । व्युष्टिषु उषःकालेषु 'यज्ञानां यजमानानामध्वरश्रियं यागसेविनम् । **अद्य** । 'निपातस्य च' इति दीर्घत्वम् । पुरूणां प्रियः पुरुप्रियः । 'समासस्य' इत्यन्तोदात्तत्वम् । **धूमकेतुम्** । 'इषियुधीन्धि' (उ.सू.१.१४४) इत्यादिना धूमशब्दो मक्प्रत्ययान्तः अन्तोदात्तः । बहुव्रीही पूर्वपदप्रकृतिस्वरत्वम् । **भाऋजीकम्** । 'ऋज गतिस्थानार्जनोपार्जनेषु' । 'ऋजेश्च' (उ.सू.४.४६२) इति ईकन्प्रत्ययः । कित्त्वस्यानु-

वर्तनात् गुणाभावः । भासः प्रकाशस्य ऋजीकः प्रार्जयिता । भायुदात्तप्रकरणे 'दिवोदामादीनां छन्दस्युपसंख्यानम्' इति पूर्वपदाद्युदात्तत्वम् । यद्वा । भासोऽर्जनं यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **व्युष्टिषु** । 'उछी विवासे'। विवासो वर्जनम् । विशेषेणोच्यन्ते तमसा वर्ज्यन्ते इति व्युष्टयः उषःकालाः । कर्मणि क्तिन् । 'तितुत्रेत्यादिनेट्प्रतिषेधः' इत्यादिना प्रतिषेधः । व्रश्चादिना षत्वे ष्टुत्वम् । 'तादौ च' इति पूर्वपदप्रकृतिस्वरत्वम् । यणादेशे 'उदात्त-स्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । **अध्वरश्रियम्** । अध्वरं श्रयते इत्यध्वरश्रीः । 'क्विब्वचि' (उ.सू.२.२१५) इत्यादिना क्विप्प्रत्ययः तत्संयोगेन संप्रसारणाभावो दीर्घश्च । द्वितीयकवचने 'अचि श्नु' इत्यादिना इयङादेशः ।। ३ ।।

**सिद्धाञ्जनम्–** **अद्य** इदानीं, अस्मिन् दिने **अग्निम्** **वृणीमहे** प्रार्थयामहे । कीदृशम् ? **दूतं** देवानां दूतं **वसुम्** धनभूतं **पुरुप्रियम्** पुरूणां बहूनां प्रियं **धूमकेतुम्** धूमलक्षणं (प्रागुक्तस्वरूपं १.२७.११) **भाऋजीकम्** भासः प्रकाशस्य **ऋजीकं** प्रार्जयितारम् **व्युष्टिषु** उषःसु **यज्ञानां** यजनविशेषाणां सम्बन्धिनं **अध्वरश्रियम्** अध्वरं श्रयत इति अध्वरश्रीः तम् । अद्या-निपातस्य चेति दीर्घः । भाऋजीकम्-ऋजेश्चेति कन्प्रत्ययः, भासं ऋज्वीं करोतीत्यर्थः । व्युष्टिषु-उच्छी विवासे ।। ३ ।।

## ऋक्संहिता पदपाठसहिता

**श्रेष्ठं यविष्ठमतिथिं स्वाहुतं जुष्टं जनाय दाशुषे । देवाँ अच्छा यातवे जातवेदसमग्निमीळे व्युष्टिषु ।। ४ ।।**

**श्रेष्ठम् । यविष्ठम् । अतिथिम् । सुऽआहुतम् । जुष्टम् । जनाय । दाशुषे । देवान् । अच्छ । यातवे । जातऽवेदसम् । अग्निम् । ईळे । विऽउष्टिषु ।। ४ ।।**

**स्कन्द–** **श्रेष्ठम्** प्रशस्यतमम् । **यविष्ठम्** युवतमम् । **अतिथिम्** अतिथिस्थानीयं यजमानानाम् । **स्वाहुतम्** सुष्ठ्वभिहुतं सर्वयजमानैः । **जुष्टम्** प्रियम् । **जनाय दाशुषे** षष्ठ्यर्थे चतुर्थी । यजमानस्य । **देवान् अच्छ यातवे** अभियातुम् । **जातवेदसम् अग्निम् ईळे** स्तौमि **व्युष्टिषु** उषसाम् । प्रभातकाल इत्यर्थः ।। ४ ।।

**वेङ्कटमाधव–** प्रशस्यतमं युवतमं यजमानानाम् **अतिथिम्** सुष्टुवाहुतम् पर्याप्तम् **जनाय** यजमानाय **देवान्** प्रति गन्तुं जातप्रज्ञम् **अग्निम्** स्तौमि प्रातःकालेषु ।। ४ ।।

**मुद्गल–** **व्युष्टिषु** उषःकालेषु **देवान्** इतरान् सर्वदेवान् **अच्छ** आभिमुख्येन **यातवे** गन्तुम् **अग्निम्** देवम् **ईळे** स्तौमि । कीदृशम् । **जातवेदसम्** जातप्रज्ञम् **श्रेष्ठम्** अतिशयेन प्रशस्तम् **यविष्टम्** युवतमम् **अतिथिम्** सततगमनक्षमम् **स्वाहुतम्** सुष्ठु आ समन्तात् होमाधिकरणम् **दाशुषे** हविर्दत्तवते **जनाय** यजमानाय **जुष्टम्** प्रीतम् ।। ४ ।।

**सायण–** **व्युष्टिषु** उषःकालेषु **देवान्** इतरान् सर्वदेवान् **अच्छ** आभिमुख्येन **यातवे** गन्तुम् अग्निं देवम् **ईळे** स्तौमि । कीदृशम् । **श्रेष्ठम्** अतिशयेन प्रशस्तं **यविष्ठं** युवतमम् **अतिथिं** सततगमनक्षमं **स्वाहुतं** सुष्ठ आ समन्तात् होमाधिकरणं **दाशुषे** हविर्दत्तवते **जनाय** यजमानाय **जुष्टं** प्रीतं **जातवेदसं** जातानां वेदितारम् । **यविष्ठम्** । युवशब्दात् इष्टनि 'स्थूलदर' इत्यादिना यणादेः परस्य लोपः । पूर्वस्य च गुणः । अवादेशः । नित्त्वादाद्युदात्तत्वम् । **अतिथिम्** । 'अत सातत्यगमने'। 'ऋतन्यञ्जि' (उ.सू.४.४४२) इत्यादिना इथिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **स्वाहुतम्** । 'हु दानादनयोः' । आहूयतेऽस्मिन्निति आहूतः । 'सुः पूजायाम्' (पा.सू.१.४.९४) इति सुशब्दस्य कर्मप्रवचनीयसंज्ञायां 'स्वती पूजायाम्' (पा.म.२.२.१४.४) इति समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । न च 'गतिकारकोपपदात्कृत्' इति गतेः प्रकृतिस्वरत्वम् , अस्य सुशब्दस्य गतिसंज्ञायां बाधितत्वात् ।। ४ ।।

**सिद्धाञ्जनम्–** **श्रेष्ठम्** अतिशयेन प्रशस्तं **यविष्ठम्** युवतमं **अतिथिम्** सततगमनक्षमं सत्कारार्हं **स्वाहुतम्** सुष्ठु समन्तात् हुतं **दाशुषे** दत्तवते **जनाय** यजमानाय **जुष्टम्** प्रीतं **जातवेदसम्** जातानां सर्वेषां वेदितारं, **अग्निम्** देवम् **व्युष्टिषु** उषस्सु **देवान्** सर्वान् **अच्छ** अभिमुखं **यातवे** गन्तुं **ईळे** अध्येषे ।। अतिथिम्- अत सातत्यगमने, इथिन्प्रत्ययः । स्वाहुतम्- आहूयते अस्मिन् इत्याहुतः, हु दानादनयोः ।। ४ ।।

## ऋक्संहिता पदपाठसहिता

**स्तविष्यामि त्वामहं विश्वस्यामृत भोजन । अग्ने त्रातारममृतं मियेध्य यजिष्ठ हव्यवाहन ।। ५ ।।**

स्तविष्यामि । त्वाम् । अहम् । विश्वस्य । अमृत । भोजन । अग्ने । त्रातारम् । अमृतम् । मियेध्य । यजिष्ठम् । हव्यऽवाहन ।। ५ ।।

**स्कन्द– स्तविष्यामि** स्तोष्यामि **त्वाम् अहम्** हे **विश्वस्य अमृत भोजन!** विश्वस्येत्येतत् भोजनेत्येतेन सम्बध्यते । सर्वस्य हविर्लक्षणस्यान्नस्य भोक्तः! मरणवर्जित! **हे अग्ने!** कीदृशम् । उच्यते । सर्वस्तोतॄणाम् **त्रातारम् अमृतम्** । **हे मियेध्य!** यज्ञार्ह! यजिष्टम् यष्टृतमम् । **हे हव्यवाहन!** हविषां वोढः ।। ५ ।।

**वेङ्कटमाधव–** स्तोष्यामि **त्वाम् अहम् अमृत** । सर्वस्य पुरुषस्य भोजयितः! **अग्ने!** रक्षितारम् **अमृतम्** यज्ञार्ह! यष्टृतमं हविषां वोढः! ।। ५ ।।

**मुद्गल– हे अमृत!** मरणरहित! **विश्वस्य भोजन!** कृत्स्नस्य जगतः पालक! **हव्यवाहन!** हविषो वोढः । **मियेध्य !** यज्ञार्ह! एवंविध **हे अग्ने!** विश्वस्य **त्रातारम्** सर्वस्य जगतो रक्षकम् **अमृतम्** मरणरहितम् **यजिष्टम्** अतिशयेन यष्टारम् **त्वाम् अहम्** अनुष्ठाता **स्तविष्यामि** स्तुतिं करिष्यामि ।। ५ ।।

**सायण– हे अमृत** मरणरहित **विश्वस्य भोजन** कृत्स्नस्य जगतः पालक **हन्यवाहन** हविषो वोढः **मियेध्य** यज्ञार्ह एवंविध **हे अग्ने** विश्वस्य **त्रातारं** सर्वस्य जगतो रक्षकम् **अमृतं** मरणरहितं **यजिष्टम्** अतिशयेन यष्टारं **त्वामहम्** अनुष्ठाता **स्तविष्यामि** स्तुतिं करिष्यामि । **स्तविष्यामि** । 'टुञ् स्तुतौ' । व्यत्ययेन इडागमः । आगमानुदात्तत्वे प्रत्ययस्वरः । **भोजन** । कर्मफलं भोजयतीति भोजनः । नन्द्यादिलक्षणो ल्युः । **त्रातारम्** । 'त्रैङ् पालने' । 'आदेचः' इति आत्वम् । तृच्येकाच उपदेशे इति इट्प्रतिषेधः । **अमृतम्** । 'नञो जरमरमित्रमृताः' इत्युत्तरपदाद्युदात्तत्वम् । **मियेध्य** । इयागमछान्दसः । **यजिष्ठम्** । यष्टृशब्दात् 'तुश्छन्दसि' इति इष्टन्प्रत्ययः । 'तुरिष्ठेमेयःस्सु' इति तृलोपः ।। ५ ।।

**सिद्धाञ्जनम्– विश्वस्य** सर्वस्यापि जगतः **अमृत भोजन** अमृतत्वविशिष्टभोगसमर्थ विश्वस्य नित्यो भोक्ता भोजयिता परिपालकोऽग्निरित्यर्थः, तादृश, **हव्यवाहन**, हविषो वोढः, **मियेध्य** मेध्य यज्ञार्ह, **अग्ने, अमृतं** मरणरहितं, **त्रातारम्** विश्वस्य रक्षकं **यजिष्ठं** अतिशयेन यष्टारं **त्वाम् अहम् स्तविष्यामि** स्तोष्यामि स्तुत्या कीर्तयिष्यामि । स्तविष्यामि-इडागमव्यत्ययः

छान्दसः । भोजन-भुनक्तेः, नन्द्यादिलक्षणो ल्युः । मियेध्य-इयागमः छान्दसः । यजिष्ठम्-यष्टृशब्दात् इष्ठन् छन्दसि ।। ५ ।।

**।। इति प्रथमाष्टके तृतीयाध्याये अष्टाविंशो वर्गः ।।**

## ऋक्संहिता पदपाठसहिता

**सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः ।**
**प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनम् ।। ६ ।।**
**सुऽशंसः । बोधि । गृणते । यविष्ठ्य । मधुऽजिह्वः । सुऽआहुतः । प्रस्कण्वस्य । प्रऽतिरन् । आयुः । जीवसे । नमस्य । दैव्यम् । जनम् ।। ६ ।।**

**स्कन्द– सुशंसः बोधि** सुशस इत्येतन्नामन्त्रितम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्यैकवाक्यता नेया । यस्त्वं सुशंसः सुस्तवः स बोधि बुध्यस्व । शृण्वित्यर्थः । **गृणते** गृणतः स्तुवतो मम । हे **यविष्ठ्य!** स्वार्थिको यः । यविष्ट युवतम । **मधुजिह्वः** मधुस्वादमाज्यं मधु, तस्मिन् जिह्वा यस्य स मधुजिह्वः । नित्यमाहुतिलक्षणस्य आज्यस्य स्वादयितेत्यर्थः । अथवा जिह्वा (निघ.१,११) इति वाङ्नाम । मधुरवचनात् मधुजिह्वः । तस्य सबोधनं हे मधुजिह्वः । **स्वाहुतः** सुष्ठवभिहुतः सन् । किञ्च मम **प्रस्कण्वस्य प्रतिरन्** प्रवर्धयन् **आयुः जीवसे** चिरजीवनाय । **नमस्य** नमस्कुरु । **दैव्यम् जनम्** । सर्वदेवानित्यर्थः ।।

**वेङ्कटमाधव–** सुस्तवः बुध्यस्व स्तुवते युवतम् । मादयितृजिह्वः **स्वाहुतः** । **प्रस्कण्वस्य** मम जीवनाय **आयुः** वर्धयन् नमस्कुरु सर्वान् देवान् ।। ६ ।।

**मुद्गल–** हे **यविष्ठ्य** । युवतम । अग्रे त्वम् **गृणते** स्तुवते यजमानार्थम् **सुशंसः** सुष्ठु शंसनीयः **मधुजिह्वः** मन्दयितृज्वालः **स्वाहुतः** सुष्ठु आभिमुख्येन हुतः सन् **बोधि** अस्मदभिप्रायं बुध्यस्व । किञ्च **प्रस्कण्वस्य** एतन्नामकस्य कण्वपुत्रस्य महर्षेः **जीवसे** जीवनार्थम् **आयुः प्रतिरन्** प्रकर्षेण वर्धयन् **दैव्यम्** देवसम्बन्धिनम् **जनम् नमस्य** पूतय ।। ६ ।।

**सायण–** हे **यविष्ठ्य** युवतमाग्ने त्वं **गृणते** स्तुवते यजमानाथं **सुशंसः** सुष्टु शंसनीयः **मधुजिह्वः** मादयितृज्वालः **स्वाहुतः** सुष्ठु आभिमुख्येन हुतः मन् **बोधि** अम्मदभिप्रायं बुध्यस्व ।

किंच **प्रस्कण्वस्य** एतनामकस्य कण्वपुत्रस्य महर्षेः । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवः (निरु.३.१७) इति यास्कवचनात् । तस्य **जीवसे** जीवनार्थम् **आयुः प्रतिरन्** प्रकर्षेण वर्धयन् **दैव्यं** देवसम्बन्धिनं **जनं नमस्य** पूजय । **सुशंसः** । 'शंसु स्तुतौ' । भावे घञ् । शोभनः शंसो यस्यासौ सुशंसः । 'आद्युदात्तं व्यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **बोधि** । 'बुध अवगमने' । लोटो हिः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । 'हुझल्भ्यो हेर्धिः' इति हेधिरादेशः । 'वा छन्दसि' इति अपित्त्वस्य विकल्पितत्वात् लघूपधगुणः । धातोरन्त्य-लोपश्छान्दसः । **गृणते** । 'गृ शब्दे' । लटः शतृ । 'क्र्यादिभ्यः श्ना' । 'श्नाभ्यस्तयोरातः' इति आकारलोपः । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । यविष्ठ्य । गतम् । **प्रस्कण्वस्य** । प्रभूतिरुत्पत्तिः कण्वाद्यस्य स प्रस्कण्वः । 'प्रस्कण्वहरिश्चन्द्रावृषी' (पा.सू.६.१.१५३) इति सुडागमो निपातितः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **प्रतिरन्** । प्रपूर्वस्तिरतिर्वर्धनार्थः । **नमस्य** । नमोवरिवश्चित्रङः क्यच्' (पा.सू.३.१.१९) इति पूजार्थे क्यच् । प्रत्ययस्वरः। 'अन्येषामपि दृश्यते' इति संहितायां दीर्घत्वम् । **दैव्यम्** । 'देवाद्यञञौ' (प.सू.४.१.८५.३) इति तस्येदमित्यर्थे प्राग्दीग्यतीयो यञ्प्रत्ययः ।। ६ ।।

**सिद्धाञ्जनम्**– हे **यविष्ठ्य** युवतम अग्ने, **गृणते** स्तुवते यजमानाय त्वं **सुशंसः** शोभनः शंसः स्तुतिः यस्य सः, सुष्ठु शंसनीय इत्यर्थः, **मधुजिह्वः** मधुमयी आनन्दकरी जिह्वा ज्वाला यस्य सः, **स्वाहुतः** सुष्ठ आभिमुख्येन हुतः सन् **बोधि** बुध्यस्व यजमानगतं सर्वं जानीहि तदनुग्रहार्थमित्ययः, अपि च **प्रस्कण्वस्य** अस्य मम यजमानस्यर्षेः (ज्ञानार्थककण्वप्रभावस्य प्रकृष्टज्ञानस्येत्यवयवार्थानुगमादुपपत्तिरन्तर्यागे द्रष्टव्या) **जीवसे** जीवनाय **आयुः प्रतिरन्** वर्धयन् **दैव्यम्** देवसम्बन्धिनं **जनम् नमस्य** पूजय, प्रस्कण्वस्य शुभजीवनाय आयुर्वर्धय, तेन देववृन्दस्य पूजनं कृतवान् भवेः । कथम्? प्रस्कण्वस्यायुः देवतार्थमेव विहितं भवति । प्रस्कण्वस्य प्रभूतिरुत्पत्तिः कण्वाद्यस्य तस्य, प्रस्कण्वे हरिश्चन्द्रे च सुडागमो निपातितः । प्रतिरन्-प्रपूर्वस्तिरतिर्वर्धनार्थः । नमस्य-नमसः क्यच् पूजार्थे । दैव्यम्-देवाद्यञ् तस्येदमित्यर्थे ।।६।।

## ऋक्संहिता पदपाठसहिता

**होतारं विश्ववेदसं सं हि त्वा विश इन्धते । स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ।। ७ ।।**

**होतारम् । विश्वऽवेदसम् । सम् । हि । त्वा । विशः । इन्धते । सः । आ । वह । पुरुऽहूत । प्रऽचेतसः । अग्ने । देवान् । इह । द्रवत् ।। ७ ।।**

**स्कन्द– स आ वह** इति । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यं होतारम् **होतारम् विश्ववेदसम्** सर्वधनं सर्वप्रज्ञं वा **सम् हि त्वा विशः इन्धते** हिशब्दः पदपूरणः । त्वां विशो मनुष्याः समिन्धते सन्दीपयन्ति । स त्वम् आ वह **पुरुहूत** । बहुभिराहूत ! **प्रचेतसः** प्रवृद्ध-ज्ञानान् **हे अग्ने! देवान् इह द्रवत्** क्षिप्रम् ।। ७ ।।

**वेङ्कटमाधव– होतारम्** सर्वधनम् **सम् इन्धत हि** त्वाम् **विशः । सः** त्वम् **आ वह पुरुहूत!** प्रचेतसः अग्ने । **देवान् इह** क्षिप्रम् ।। ७ ।।

**मुद्गल– होतारम्** होमनिष्पादकम् **विश्ववेदसम्** सर्वज्ञम् **त्वा** त्वाम् **विशः** प्रजाः **सम् इन्धते हि** सम्यक् दीपयन्ति खलु । **हे पुरुहूत!** बहुभिः आहूत! **अग्ने! सः** त्वम् **प्रचेतसः** प्रकृष्टज्ञानयुक्तान् देवान् **इह** कर्मणि **द्रवत्** क्षिप्रम् **आ वह** आभिमुख्येन प्रापय ।। ७ ।।

**सायण– होतारं** होमनिष्पादकं **विश्ववेदसं** सर्वज्ञं त्वामग्निं **विशः** प्रजाः **सम् इन्धते हि** सम्यग्दीपयन्ति खलु । हे **पुरुहूत** बहुभिराहूत **अग्ने सः** त्वं **प्रचेतसः** प्रकृष्टज्ञानयुक्तान् **देवान् इह** कर्मणि **द्रवत्** क्षिप्रम् **आ वह** आभिमुख्येन प्रापय । द्रवत् इति क्षिप्रनाम, 'द्रवत् ओषम्' (नि.२.१५.३) इति तन्नामसु पाठात् । **विश्ववेदसम्** । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् । यद्वा । वेद इति धननाम । विश्वानि वेदांसि यस्यासौ विश्ववेदाः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । **इन्धते** । 'ञि इन्धी दीप्तौ' । 'श्नसोरल्लोपः' इति अकारलोपः । श्नान्नलोपः । प्रत्ययस्वरः । 'हिच' इति निघातप्रतिषेधः ।। ७ ।।

**सिद्धाञ्जनम्– विशः** प्रजाः **होतारम् विश्ववेदसम्** विश्वस्य वेदितारं सर्वज्ञं **त्वा** त्वाम् **समिन्धते हि** ज्वलयन्ति खलु । हे **पुरुहूत** बहुभिराहूत **अग्ने, सः** तादृशस्त्वं **प्रचेतसः**

प्रकृष्टचेतोयुक्तान् **देवान् इह** अस्मिन् यजने **द्रवत्** क्षिप्रं **आवह** आभिमुख्येन प्रापय ॥ होतारम् इत्यादयः सर्वे गताः ॥ ७ ॥

## ऋक्संहिता पदपाठसहिता

**सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।**
**कण्वासस्त्वा सुतसोमास इन्धते हव्यवाहं स्वध्वर ॥ ८ ॥**

सवितारम् । उषसम् । अश्विना । भगम् । अग्निम् । विऽउष्टिषु । क्षपः । कण्वासः । त्वा । सुतऽसोमासः । इन्धते । हव्यऽवाहम् । सुऽअध्वर ॥ ८ ॥

**स्कन्द–** कतमान् । उच्यते । **सवितारम् उषसम् अश्विना भगम्** आत्मानमेव च **अग्निम् व्युष्टिषु क्षपः** क्षपायाः रात्रेः । प्रभातकाल इत्यर्थः । किञ्च **कण्वासः त्वा** कण्वपुत्रा मत्प्रभृतयः त्वाम् **सुतसोमासः** कृतसोमाभिषवाः **इन्धते** दीपयन्ति **हव्यवाहम्** हे **स्वध्वर** । सुयज्ञ! ॥

**वेङ्कटमाधव–** सवितृप्रभृतीन् अग्निं च यष्टव्यं रात्र्याः **व्युष्टिषु** त्वमावह । कण्वपुत्राः अभिषुतसोमाः त्वां दीपयन्ति **हव्यवाहम् स्वध्वर**! ॥ ८ ॥

**मुद्गल–** हे **स्वध्वर**! शोभनयागयुक्त! **अग्ने**! **क्षपः** क्षपायाः **व्युष्टिषु** उषःकालेषु सवित्रादीन् देवान् आवह इत्यनुवर्तते । स्वध्वर इत्याहवनीयाग्नेः सम्बोधनम् । **अग्निम्** इति हविष **उद्देश्यं** देवतान्तरम् **उच्यते** । **सुतसोमासः** अभिषुतसोमाः **कण्वासः** मेधाविनः ऋत्विजः **हव्यवाहम्** हविषः प्रापकम् आहवनीयम् त्वा त्वाम् इन्धते दीपयन्ति ॥ ८ ॥

**सायण– हे स्वध्वर** शोभनयागयुक्ताग्ने **व्युष्टिषु** उषःकालेषु सवित्रादीन् देवान् आवह इत्यनुवर्तते । स्वध्वर इत्याहवनीयाग्नेः सम्बोधनम् । अग्निम् इति हविष उद्देश्यं देवतान्तरमुच्यते । **सुतसोमासः** अभिषुतसोमाः **कण्वासः** मेधाविन ऋत्विजः **हव्यवाहं** हविषः प्रापकं आहवनीयं त्वाम् **इन्धते** दीपयन्ति । **व्युष्टिषु** । 'उछी विवासे' । विवासो वर्जनम् । व्युच्छ्यते तमसा वर्ध्यते इति व्युष्टिः उषःकालः । कर्मणि क्तिनि 'तादौ च नितीति गतेः प्रकृतिस्वरत्वम्' । संहितायाम् 'उदात्तस्वरितयोर्यणः' इति परस्यानुदात्तस्य स्वरितत्वम् । **क्षपः** । क्षपा इति रात्रिनाम । 'ङस्यातो धातोः' (पा.सू.६.४.१४०) इत्यत्र आत इति योगविभागात्

आकारलोपः । **सुतसोमासः** । सुतः सोमो यैः । निष्ठा (पा.सू.२.२.३६) इति पूर्वनिपातः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **हव्यवाहम्** । हव्यं वहतीति हव्यवाट् । 'वहश्च' इति ण्विप्रत्ययः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे **स्वध्वर** शोभनाध्वरात्मकयज्ञयुक्ताग्ने, **व्युष्टिषु** उपःसु **क्षपः** रात्रिषु, विभक्तिव्यत्ययः सर्वदेत्यर्थः सवितृप्रभृतीनावहेति पूर्वेण सम्बन्धः । **सवितारम्, उषसम्** उषोदेवीं **अश्विना** अश्विनौ **भगम्** एतन्नामकं आदित्यं **अग्निम्** देवान् प्रति हविषः प्रापयितापि अग्निः तत्र भागमर्हति, तस्मात् देवतान्तरत्वेन तं गणयित्वा तमेव प्रार्थयते । अत्र अग्नेः सामान्यविशेष-भावो बोध्यः । सामान्याग्निर्दूतः प्रार्थितः । हविर्भागादानाय आगतानां देवानां अग्निः अप्येकः, उच्यतां सोऽग्निविशेषः । 'व्युष्टिषु' उषसमप्यावहेत्यत्रापि उपोदेवीमावह अहःसु क्षपास्वपि इति सार्वकालिकदेवतासान्निध्यसम्पादनसमर्थमग्निं याचते । अत्र 'क्षप' रात्र्यभिमानिनीं देवतां च आवहेति केचिन्मन्यन्ते । **सुतसोमासः** अभिषुतसोमाः **कण्वासः** कण्वा ऋषयो मेधाविनः **हव्यवाहं त्वा** त्वां **इन्धते** ज्वलयन्ति । क्षपः-क्षपाः, द्वितीयाबहुवचनम् । शसि आतो धातोरिति आकारलोपः । अन्ये गताः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**पतिर्ह्यध्वराणामग्ने दूतो विशामसि । उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ ९ ॥**

**पतिः । हि । अध्वराणाम् । अग्ने । दूतः । विशाम् । असि । उषःबुधः । आ । वह । सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥ ९ ॥**

**स्कन्द– पतिः हि अध्वराणाम्** हि शब्दो यस्मादर्थे । यस्मात् पतिः स्वामी त्वम् अध्वराणाम्, **हे अग्ने! दूतः विशाम्** मनुष्याणाम् **असि** । यस्मात् इति वचनात् तस्मात् इत्यध्याहार्यम् । तस्मात् **उषर्बुधः** उषःकाले ये बुध्यन्ते त उषर्बुधः, तान् **आ वह सोमपीतये** देवान् अद्य । कीदृशान् । **स्वर्दृशः** स्वः आदित्यः द्यौर्वा, तद्वद् ये दृश्यन्ते, ये तस्य द्रष्टारो वा, ते स्वर्दृशः, तान् । आदित्यस्य दिवो वा सदृशान्, तद्दर्शिनो वेत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव– पतिः हि** यज्ञानाम्, **अग्ने! दूतः विशाम् असि** । स त्वम् उपसि प्रबुद्धान् **आ वह** सोमपानाय **देवान् अद्य** सर्वस्य द्रष्टृन् ।। ९ ।।

**मुद्गल– हे अग्ने! विशाम्** प्रजानां सम्बन्धिनो ये अध्वराः यागाः तेषाम् **अध्वराणाम् पतिः** पालकस्त्वम् **दूतः असि हि** देवानां वार्ताहरो भवसि खलु । **उषर्बुधः** उषःकाले प्रबुद्धान् **स्वर्दृशः** सूर्यदर्शिनो देवान् **अद्य** अस्मिन् दिने **सोमपीतये** सोमपानार्थम् **आ वह** आभिमुख्येन प्रापय ।। ९ ।।

**सायण–** हे **अग्ने विशां** प्रजानां सम्बन्धिनो येऽध्वरा यागास्तेषां **पतिः** पालकस्त्वं **दूतः असि हि** देवानां वार्ताहारो भवसि खलु । **उषर्बुधः** उषःकाले प्रबुद्धान् **स्वदृशः** सूर्यदर्शिनो **देवान् अद्य** अस्मिन् दिने **सोमपीतये** सोमपानार्थम् **आ वह** आभिमुख्येन प्रापय । असि । 'हिच' इति निघातप्रतिषेधः । **सोमपीतये** । 'पा पाने' । 'स्थागापापचो भावे' (पा.सू.३.३.९) इति भावे क्तिन् । 'घुमास्था' इति ईत्वम् । सोमस्य पीतिः । दासीभारादित्वात् पूर्वपद-प्रकृतिस्वरत्वम् । **स्वर्दृशः** । सुष्ठु अर्ति गच्छतीति स्वरादित्यः । अर्तः 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । तं पश्यन्तीति स्वर्दिशः । 'क्विप् च' इति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वम् ।।

**सिद्धाञ्जनम्–** हे **अग्ने, विशाम्** प्रजानां **दूतः** देवान् प्रति **असि** । **अध्वराणां पतिः हि** त्वं यज्ञानां पालकः खलु । अत एव विशां क्षेमाप दूतकर्म करोषि । **अद्य** अस्मिन् दिने **उषर्बुधः** उपसि प्रबुध्यमानान् **स्वर्दृशः** स्वःशब्दवाच्यस्य सत्यज्योतिरात्मनः सूर्यस्य द्रष्टृन् **देवान्, सोमपीतये** सोमपानाय **आवह** इह प्रापय । स्वर्दृशः-सुष्ठु अति गच्छतीति स्वरादित्य इति सायणः । प्रकाशार्थात् स्वृधातोः स्वरधातोर्वा सूर्यवाची स्वरिति वयम् । स्वरव्ययम् तृतीया व्याहृतिः । स्वः पश्यन्तीति स्वदं शः, क्विप् चेति क्विप् ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

**अग्ने॒ पूर्वा॒ अनू॒षसो॑ विभावसो दी॒देथ॑ वि॒श्वद॑र्शतः । असि॒ ग्रामे॑ष्ववि॒ता पु॒रोहि॒तोऽसि॑ य॒ज्ञेषु॒ मानु॑षः ।। १० ।।**

अग्ने॑ । पूर्वाः॑ । अनु॑ । उ॒षसः॑ । वि॒भा॒व॒सो॒ इति॑ विभाऽवसो । दी॒देथ॑ । वि॒श्वऽद॑र्शतः । असि॑ । ग्रामे॑षु । अ॒वि॒ता । पु॒रःहि॑तः । असि॑ । य॒ज्ञेषु॑ । मानु॑षः ।। १० ।।

**स्कन्द–** हे अग्ने! पूर्वाः अनु **उषसः** अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । एकस्या एव चोषसः कालभेदापेक्षया पूर्वापरव्यपदेशः । अवयवापेक्षं च बहुवचनम् । पूर्वा उषसः प्रति अद्य एव । उषसः उदयकाले इत्यर्थः । **हे विभावसो!** विविधा भा **धनं** यस्य स विभावसुः, तस्य सम्बोधन हे विभावसो । **दीदेथ** दीप्यस्व: । **विश्वदर्शतः** सर्वस्य दर्शनीयः । सर्वजनप्रकाश इत्यर्थः । किं कारणम् । उच्यते । यस्मात् **असि ग्रामेषु अविता** जनपदनिवासस्थानानि ग्रामाः, तेषु रक्षिता त्वमसि । **पुरोहितः असि यज्ञेषु** च । पूर्वस्यां दिश्याहवनीयात्मना स्थापितः, पुरोहितस्थानीयो वा असि । कः । **मानुषः** मन्त्रज्ञाता । अथवा मानुष इति षष्ठी । मानुषस्य स्वभूतेषु यज्ञेषु इति ॥ १० ॥

**वेङ्कटमाधव– अग्ने** । गतासु अपि उषःसु **विभावसो!** प्राज्वलः सर्वस्य दर्शनीयः । स त्वम् ग्रामेषु **असि गृहेषु** पुरो निहितः, रक्षिता अरण्येषु च, **यज्ञेषु** पुरो निहितः मनुष्यहितः ॥

**मुद्गल– हे विभावसो** । विशिष्टप्रकाशनरूपधनवन् अग्ने **विश्वदर्शतः** सर्वैर्दर्शनीयस्त्वम् **पूर्वाः उषसः अनु** अतीतान् उषःकालान् अनुलक्ष्य **दीदेथ** दीप्तवानसि । तादृशस्त्वम् **ग्रामेषु** जननिवासस्थानेषु **अविता असि** रक्षको भवसि । **यज्ञेषु** अनुष्ठेयकर्मसु **पुरोहितः** वेदेः पूर्वस्यां दिश्यवस्थितः **मानुषः असि** ऋत्विग्यजमानानां मनुष्याणां हितोऽसि ॥ १० ॥

**सायण– हे विभावसो** विशिष्टप्रकाशनरूपधनवन् **अग्ने** विश्वदर्शतः सर्वैर्दर्शनीयस्त्वं **पूर्वाः उषसः अनु** अतीतानुषःकालाननुलक्ष्य **दीदेथ** दीप्तवानसि । तादृशस्त्वं **ग्रामेषु** जननिवासस्थानेषु **अविता असि** रक्षको भवसि । **यज्ञेषु** अनुष्ठेयकर्मसु **पुरोहितः** वेदेः पूर्वस्यां दिश्यवस्थितः **मानुषः असि** ऋत्विग्यजमानानां मनुष्याणां हितोऽसि । **दीदेथ** । दीदेति छान्दसो दीप्तिकर्मा । आगमानुशासनस्य अनित्यत्वात् इडभावः । द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् (का.६.१.८.१) इति वचनात् द्विवचनाभावः । **विश्वदर्शतः** विश्वैर्दर्शनीयः । 'भृमृदृशि' इत्यादिना दृशेः अतच् । मरुद्वृधादित्वात् पूर्वपदान्तोदात्तत्वम् (पा.सू.६.२.१०६.२) । **पुरोहितः** । 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (पा.सू.५.३.३९) इति असिप्रत्ययान्तः पुरस्शब्दः । तद्धितश्चासर्वविभक्तिः । (पा.सू.१.१.३०) इति अव्ययत्वात् 'पुरोऽव्ययम्' (पा.सू.१.४.६७) इति गतिसंज्ञायां सत्यां गतिसमासे 'गनिरनन्तरः' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ १० ॥

**सिद्धाञ्जनम्**– हे **विभावसो** विशिष्टा भा प्रकाशः विभा वसु धनं यस्य स तथाभूत **अग्ने**, **विश्वदर्शतः** विश्वं दर्शतं दर्शनीयं दर्शनक्षमं ग्स्य सः, विश्वदृष्टिः, विश्वदृष्टिगोचरमग्नेरित्यर्थः तादृशः त्वं पूर्वा उषसः अनु अतीतानि चित्प्रकाशप्रभातान्यनुलक्ष्य बौदेय दीप्तवानसि । ग्रामेषु सङ्घेषु युध्यमानेषु **अविता असि** रक्षिताऽसि । **यज्ञेषु पुरोहितः** पुरस्तान्निहितः देवः, **मानुषः** यजमानस्य मनुष्यस्य हितः **असि** भवसि । ग्रामेषु-जननिवासस्थानेषु इति सायणः । अवितेत्यस्यासत्तेः सङ्घपर्यायो युक्ततरः, एवं सायण एवान्यन्त्र 'ग्रामः भरतानां संघः' (३.३३. ११) 'अपश्यं ग्रामम् (भूत) सङ्घम्' (१०.२७.१६)। अन्तर्यजने महत ऋतस्य ज्योतिषः प्रादुर्भावात् पूर्वं वह्वय उषसो भवन्ति । तत्रैकैकस्यामुषसि प्रबुद्धोऽग्निः यजमानस्य हितः कार्यं निर्वहति पुरोहितो भूत्वा । बाह्ये कर्मणि तु प्रत्यहं उषःकाल एव भवति ।। ११ ।।

।। इति प्रथमाष्टके तृतीयाध्याये एकोनत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**नि त्वा यज्ञस्य साधनमग्ने होतारमृत्विजम् ।**
**मनुष्वद् देव धीमहि प्रचेतसं जीरं दूतममर्त्यम् ।। ११ ।।**

**नि । त्वा । यज्ञस्य । साधनम् । अग्ने । होतारम् । ऋत्विजम् । मनुष्वत् । देव । धीमहि । प्रऽचेतसम् । जीरम् । दूतम् । अमर्त्यम् ।। ११ ।।**

**स्कन्द**– त्वाम् **यज्ञस्य साधनम्** साधयितारं **हे अग्ने!** होत्राख्यम् **ऋत्विजम् मनुष्वत्** मनुष्यवत् **हे देव नि धीमहि** निदध्महे । यज्ञे स्थापयाम इत्यर्थः । **प्रचेतसम् जीरम्** (तु.निघ.२,१५) । क्षिप्रम् **दूतम् अमर्त्यम्** ।। ११ ।।

**वेङ्कटमाधव**– **नि धीमहि** त्वां यथा मनुर्निदधे क्षिप्रं तद्वदिति ।। ११ ।।

**मुद्गल**– **हे अग्ने ! देव! मनुष्वत्** यथा मनुर्यागदेशे निदधाति तद्वद् वयम् **त्वा** त्वाम् **नि धीमहि** अत्र स्थापयामः । कीदृशम् । **यज्ञस्य साधनम्** यज्ञस्य निष्पादकम् **होतारम् ऋत्विजम् ऋतौ** वसन्तादिके यष्टारम् **प्रचेतसम्** प्रकृष्टज्ञानयुक्तम् **जीरम्** शत्रूणां वयोहानिकरम् **दूतम्** देवानां दूतस्थानीयम् **अमर्त्यम्** मरणरहितम् ।। ११ ।।

**सायण–** हे अग्ने **देव** मनुष्वत् यथा मनुर्यागदेशे निदधाति तद्वद्वयं त्वां नि धीमहि । अत्र स्थापयामः । कीदृशम् । यज्ञस्य **साधनं** यज्ञनिष्पादकं **होतारमृत्विजं** ऋतौ वसन्तादिके यष्टारं **प्रचेतसं** प्रकृष्टज्ञानयुक्तं **जीरं** शत्रूणां वयोहानिकरं **दूतं** देवानां दूतस्थानीयम् **अमर्त्यं** मरणरहितम् । मनुष्वत् औणादिकोसिप्रत्ययान्तो मनुस्शब्दः । 'तेन तुल्यं क्रिया चेद्वतिः' (पा.सू.५.१.११५) इति वतिप्रत्ययः । अयस्मयादित्वेन भत्वाद्रुत्वाभावः । **धीमहि** । 'डुधाञ् धारणपोषणयोः' । लिटि अभ्यासलोपः छान्दसः । **जीरम्** । जु इति सौत्रो धातुः । 'जोरी च' (उ.सू.२.१८१) इति रक्प्रत्ययः । कात्यायनस्त्वाह । रकि ज्यः संप्रसारणे जीर इति ।।

**सिद्धाञ्जनम्–हे अग्ने, देव, त्वा** त्वां **मनुष्वत्** मनुरिव, यथा मनुः तथा वयम् **निधीमहि** स्थापयामः । कीदृशम् ? **यज्ञस्य साधनम्** यागनिष्पादकं **होतारम् ऋत्विजम्** काले यष्टारं **प्रचेतसम्** प्रकृष्टज्ञानयुक्तं **जीरम्** शीघ्रं दूतम् देवानां **दूतं अमर्त्यम्** मरणरहितम् । मनुष्वत्- ओणादिक-उसिप्रत्ययान्तो मनुस्शब्दः, गतः । प्राग्व्याख्यातम् (१.३१.१७) । जीरम्-क्षिप्रनाम, जु इति सौत्रो धातुः, जोः ई चेति रक्प्रत्ययः इति कात्यायनः, उपपन्ना चेयं रूपनिष्पत्तिः क्षिप्रार्थत्वात् । जॄ वयोहानौ इति धातोर्निष्पन्न इति कृत्वा व्याख्याय सायणः प्रक्रियादाने तु कात्यायनमुदाहरति ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**यद् देवानां मित्रमहः पुरोहितोऽन्तरो यासि दूत्यम् । सिन्धोरिव प्रस्वनितास ऊर्मयोऽग्नेर्भ्राजन्ते अर्चयः ।। १२ ।।**

**यत् । देवानाम् । मित्रऽमहः । पुरःऽहितः । अन्तरः । यासि । दूत्यम् । सिन्धोःऽइव । प्रऽस्वनितासः । ऊर्मयः । अग्नेः । भ्राजन्ते । अर्चयः ।। १२ ।।**

**स्कन्द– यत्** यदा **देवानाम्** हे **मित्रमहः** । मित्राणां पूजयितः! पूज्य! वा । **पुरोहितः** पूर्वस्यां दिश्याहवनीयात्मना स्थापितः **अन्तरः** सन्निकृष्टः । कस्य । सामर्थ्याद् देवानां यजमानानां वा । **यासि दूत्यम्** दूतकर्म । आहवनीयमास्थाय देवानां दूतकर्म करोषीत्यर्थः । यदेति वचनात् तदेत्यध्याहार्यम् । तदा **सिन्धोरिव प्रस्वनितासः ऊर्मयः** प्रकृष्टं स्वनितं येषां ते प्रस्वनितासः । शब्दवन्तः इत्यर्थः । यथा सिन्धोर्नद्याः महान्तः शब्दवन्त ऊर्मयो भ्राजेरन्, तद्वत् तव **अग्नेः भ्राजन्ते अर्चयः** ज्वालाः ।। १२ ।।

**वेङ्कटमाधव– यत् देवानाम्** मित्राणां पूजयितः! मनुष्यैः, **पुरोहितः** देवानां मनुष्याणां मध्ये वर्तमानः **यासि दूत्यम्** । तदानीं समुद्रस्येव प्रकृष्टशब्दाः वीचयस्तव अग्नेः **भ्राजन्ते** दीप्तयः ।। १२ ।।

**मुद्गल– हे मित्रमहः** । मित्राणां पूजक! अग्ने! **यत्** यदा **पुरोहितः** त्वम् वेदेः पूर्वस्यां दिशि स्थापितः **अन्तरः** देवयजनमध्ये वर्तमानः सन् **देवानाम् दूत्यम्** दूतकर्म **यासि** प्राप्नोषि । तदानीम् **अग्नेः** तव **अर्चयः** दीप्तयः **भ्राजन्ते** दीप्यन्ते । दृष्टान्तः । **सिन्धोरिव** यथा समुद्रस्य **प्रस्वनितासः** प्रकृष्टध्वनियुक्ताः **ऊर्मयः** तरङ्गाः **भ्राजन्ते** तद्वत् ।। १२ ।।

**सायण– हे मित्रमहो** मित्राणां पूजकाग्ने यद्यदा **पुरोहितः** त्वं वेदेः पूर्वस्यां दिशि स्थापितः अन्तरो देवयजनमध्ये वर्तमानः सन् **देवानां दूत्यं** दूतकर्म **यासि** प्राप्नोषि, तदानीमग्नेः तवार्चयो दीप्तयो **भ्राजन्ते** दीप्यन्ते । तत्र दृष्टान्तः । सिन्धोरिव यथा समुद्रस्य **प्रस्वनितासः** प्रकृष्टध्वनियुक्ताः ऊर्मयः तरङ्गा भ्राजन्ते तद्वत् । मित्रमहः । 'मह पूजायाम्' । मित्रैर्ऋत्विग्भिर्मह्यते पूज्यते इति मित्रमहाः । औणादिकोऽसुन् । यासि । यद्वृत्तयोगादनिघातः । **दूत्यम्** । दूतस्य कर्म दूत्यम् । 'दूतस्य भागकर्मणी (पा.सू.४.४.१२०) इति यत्प्रत्ययः । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात् 'यतोऽनावः' इत्याद्युदात्तत्वाभावे 'तित्स्वरितमिति' इति स्वरितत्वम् । प्रस्वनितासः । स्वमु स्वन ध्वन शब्दे । भावे निष्ठा । प्रकृष्टं स्वनितं येषां ते प्रस्वनिताः । असुगागमः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **ऊर्मयः** । 'अर्तेरूच' (उ.सू.४.४८४) इति मिप्रत्ययः ।। १२ ।।

**सिद्धाञ्जनम्– हे मित्रमहः** मित्रैः अन्यैर्देवैः मह्यते पूज्यते इति मित्रमहाः तथाभूतमित्राणां पूज्य अग्ने, **यत्** यदा **पुरोहितः** पुरस्तात् स्थापितस्त्वं **अन्तरः** अन्तर्यजनस्थानमध्ये वर्तमानः सन् **दूत्यम् देवानां** दूतकर्म यासि प्राप्नोषि, तदा **अग्नेः** तव **अर्चयः** दीप्तयः भ्राजन्ते दीप्यन्ते । तत्र दृष्टान्तः **सिन्धोरिव** यथा समुद्रस्य **प्रस्वनितासः** प्रकृष्टघोषयुक्ताः ऊर्मयः तरङ्गाः भ्राजन्ते तद्वत् । प्रस्वनितासः स्वनितं, स्वन शब्दे, भावे निष्ठा, प्रकृष्टं स्वनितं येषां ते, जसः असुगागमः ।। १२ ।।

## ऋक्संहिता पदपाठसहिता

**श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः । आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ॥ १३ ॥**

**श्रुधि । श्रुत्ऽकर्ण । वह्निऽभिः । देवैः । अग्ने । सयावऽभिः । आ । सीदन्तु । बर्हिषि । मित्रः । अर्यमा । प्रातःऽयावानः । अध्वरम् ॥ १३ ॥**

**स्कन्द– श्रुधि** शृणु **हे श्रुत्कर्ण!** श्रोतृकर्ण **वह्निभिः** हविषां वोढृभिः अन्यैरग्निभिः सह । कीदृशैः । **देवैः** दानादिगुणैः । **हे अग्ने! सयावभिः** हव्यं गृहीत्वा त्वया सह ये यान्ति ते सयावानः तैः सयावभिः । किं शृणवानि । उच्यते । त्वया आहूताः सन्तः **आ सीदन्तु बर्हिषि मित्रः अर्यमा** अन्ये च **प्रातर्यावाणः** प्रातर्गामिनो देवाः । **अध्वरम्** सप्तम्यर्थेऽत्र द्वितीया । बर्हिषि इत्यस्य चेदं विशेषणम् । अस्मदीयेऽध्वरे यद् बर्हिस्तत्र इति ॥ १३ ॥

**वेङ्कटमाधव–** शृणु श्रवणपरकर्ण । हविषां वोढृभिः अन्यैः त्वया सहैकगमनैः देवैः यज्ञं च प्रातर्गच्छद्भिः । तेऽस्मिन् **बर्हिषि आ सीदन्तु मित्र अर्यमा** चेति ॥ १३ ॥

**मुद्गल–** हे **श्रुत्कर्ण!** श्रवणसमर्थाभ्यां कर्णाभ्यां युक्त । **अग्ने! श्रुधि** अस्मदीयं वचनं शृणु । यः **मित्रः** देवः यश्च **अर्यमा** ये चान्ये **प्रातर्यावाणः** प्रातःकाले देवयजनं गच्छन्तो देवाः ते, सर्वैः **सयावभिः** आहवनीयाग्निना त्वया समानगतिभिरन्यैः **वह्निभिः** वोढृभिः देवैः सह **अध्वरम्** क्रतुमुद्दिश्य **वर्हिषि** दर्भे **आ सीदन्तु** उपविशन्तु ॥ १३ ॥

**सायण–** हे **श्रुत्कर्ण** श्रवणसमर्थाभ्यां कर्णाभ्यां युक्त **अग्ने श्रुधि** अस्मदीयं वचनं शृणु । यः **मित्रः** देवो यश्च **अर्यमा** ये चान्ये **प्रातर्यावाणः** प्रातःकाले देवयजनं गच्छन्तो देवास्तैः सर्वैः **सयावभिः** आहवनीयाग्निना त्वया समानगतिभिरन्यैः **वह्निभिर्देवैः** सह **अध्वरं** क्रतुमुद्दिश्य **वर्हिषि** दर्भे **आसीदन्तु** उपविशन्तु । **श्रुधि** । 'श्रु श्रवणे' श्रु श्रुणु' इत्यादिना हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् । **श्रुत्कर्ण** । शृणोतीति श्रुत् । क्विपि तुगागमः । श्रुतौ कर्णौ यस्यासौ श्रुत्कर्णः । **वह्निभिः** । 'वह प्रापणे' । 'वहिश्रियुश्रुग्लाहात्वरिभ्यो नित्' इति निप्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **सयावभिः** । समानं यान्तीति सयावानः । 'या प्रापणे'। 'आतो मनिन्' इति वनिप् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **प्रातर्यावाणः** । पूर्ववत् 'प्रातिपदिकान्तनुम्विभक्तिषु च' (पा.सू.-८-४-११) इति णत्वम् ॥ १३ ॥

**सिद्धाञ्जनम्**– हे **श्रुत्कर्ण** श्रवणशालिकर्णसम्पन्न, **अग्ने**, **श्रुधि** शृणु अस्मत्प्रार्थनामिति शेषः । **मित्रः अर्यमा प्रातर्यावानः** प्रभाते यजनं गच्छन्तो ये चान्ये देवाः सन्ति, ते **सयावभिः** त्वया सह समानगतिभिः **वह्निभिः** वोढृभिहविर्भागस्येति शेषः, अन्यैः **देवैः** सह **अध्वरम्** यजनमुद्दिश्य **बर्हिषि** आस्तीर्णे **आ सीदन्तु** उपविशन्तु । श्रुत्कण-गतम् । सयावभिः-समानं यान्तीति सयावानः, आतो मनिन्निति वनिप् । एवमेव प्रातर्यावानः ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

**शृण्वन्तु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।**
**पिबतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥ १४ ॥**
**शृण्वन्तु । स्तोमम् । मरुतः । सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः । पिबतु । सोमम् । वरुणः । धृतऽव्रतः । अश्विऽभ्याम् । उषसा । सऽजूः ॥ १४ ॥**

**स्कन्द**– त्वयैव चाहूता **शृण्वन्तु स्तोमम् मरुत सुदानवः** शोभनदातारः शोभनदाना वा । **अग्निजिह्वाः** अग्निः जिह्वास्थानीयो येषां ते अग्निजिह्वाः । सर्वेषामेव हि देवानामग्निः जिह्वास्थानीयः । **ऋतावृधः** यज्ञस्य वर्धयितारः । **पिबतु सोमम् वरुणः धृतव्रतः** धृतकर्मा अपरित्यक्तस्वव्यापारः **अश्विभ्याम् उषसा** च **सजूः** सह प्रीयमाणः ॥ १४ ॥

**वेङ्कटमाधव**– त्वयाऽऽहूयमानाः **शृण्वन्तु स्तोमम् मरुतः** शोभनदाना अग्न्यास्याः यज्ञस्य वर्धयितारः । **पिबतु** च **सोमम् वरुणः** धृतकर्मा **अश्विभ्याम् उषसा** च सहितः ॥१४॥

**मुद्गल**– **मरुतः** देवाः **स्तोमम्** अस्मदीयस्तोत्रम् **शृण्वन्तु** । कीदृशाः । **सुदानवः** सुष्ठुफलदातारः । **अग्निजिह्वाः** अग्निः जिह्वास्थानीयः मुख्यः येषु मरुत्सु तादृशाः । **ऋतावृधः** सत्यस्य वर्धकाः । तथा **धृतव्रतः** गृहीतकर्मा **वरुणो** देवः **अश्विभ्याम्** देवाभ्याम् **उषसा** देवतया सजूः सोमम् पिबतु ॥ १४ ॥

**सायण**– **मरुतः** देवाः **स्तोमम्** अस्मदीयं स्तोत्रं **शृण्वन्तु** । कीदृशाः । **सुदानवः** सुष्ठु फलस्य दातारः **अग्निजिह्वाः** अग्निर्जिह्वास्थानीयो मुख्यो येषु मरुत्सु तादृशाः **ऋतावृधः** सत्यस्य यज्ञस्य वा वर्धकाः । तथा **धृतव्रतः** गृहीतकर्मा **वरुणः** देवः **अश्विभ्यां** देवाभ्याम् **उषसा**

देवतया **सजूः** सह **सोमं पिबतु** । **सुदानवः** । 'डुदाञ् दाने' । 'दाभाभ्यां नुः' (उ.सू.३.३१२) इति भावे नुप्रत्ययः । दानुशब्द आद्युदात्तः । शोभनं दानु येषाम् । 'आद्युदात्तं यच्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **अग्निजिह्वाः** । अग्नेर्जिह्वायामवस्थिताः हविर्भाज इत्यर्थः । तास्थ्यात् ताच्छब्द्यम् । अग्निर्जिह्वास्थानीयो येषां ते । छान्दसमन्तोदात्तत्वम् । **ऋतावृधः** । ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः । वृधेः अन्तर्भावितण्यर्थात् 'क्विप् च' इति क्विप् । 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घत्वम् ॥ १४ ॥

**सिद्धाञ्जनम्– मरुतः** देवाः **स्तोमम्** इदं स्तोत्रं **शृण्वन्तु** आकर्णयन्तु । कीदृशाः ? **सुदानवः** सुष्ठु दातारः **अग्निजिह्वाः** अग्निजिह्वास्थानीयो येषां ते । **ऋतावृधः** सत्यस्य वर्धकाः । तथा **धृतव्रतः** धृतं गृहीतं व्रतं कर्म येन स **वरुणः** देवः **अश्विभ्याम्** देवाभ्यां **उषसा** देव्या च **सजूः** सहितः **सोमम् पिबतु** ॥ अग्निजिह्वाः अन्तोदात्तत्वं छान्दसम् । अन्ये गताः ।

अथ नवमेऽनुवाके द्वितीयं त्वमग्ने वसूनिति दशर्चं सूक्तम् । प्रस्कण्व ऋषिः अनुष्टुप्छन्दः अग्निर्देवता, दशम्यां 'अयं सोम' इत्यर्धर्चो देवदेवत्यः ॥ १४ ॥

**॥ इति प्रथमाष्टके तृतीयाध्याये त्रिंशो वर्गः ॥**

## ऋक्संहिता पदपाठसहिता

**(सूक्तम् ४५)**

**१० प्रस्कण्वः काण्वः । अग्निः, १० (उत्तरार्धस्य) देवाः । अनुष्टप् ।**

**त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत । यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥**
**त्वम् । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज । सुऽअध्वरम् । जनम् । मनुऽजातम् । घृतऽप्रुषम् ॥ १ ॥**

**स्कन्द– त्वम् हे अग्ने! वसून्** देवान् **इह** अस्मदीये यज्ञे **रुद्रान्** अपि **आदित्यान्** अपि **यज** । अन्यं च **स्वध्वरम्** सुयज्ञं दैव्यम् **जनम् मनुजातम्** मनोः प्रजापतेः सकाशात् जातम् **धृतप्रुषम्** 'घृतम्' (निघ.१,१२) इति उदकनाम । प्रुषिः क्षरणार्थः । उदकस्य क्षरितारम् । वर्षितारमित्यर्थः । अथवा आहुतिलक्षणं घृतं प्रति क्षरति इति घृतप्रुट्, तं घृतप्रुषम् । सर्वयजमानानामाज्याहुतिभिर्यष्टव्यमित्यर्थः ॥ १ ॥

**वेङ्कटमाधव– त्वम् अग्ने!** अस्मिन् यज्ञे वस्वादीन् **यज** । तद्व्यतिरिक्तमपि दैव्यम् **जनम्** सुयज्ञं मनुष्येषु प्रादुर्भवन्तं घृतं प्रति गन्तारन् ।। १ ।।

**मुद्गल–** 'त्वमग्ने वसून्' इति दशर्चं द्वितीयं सूक्तम् । प्रस्कण्व ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता । 'अयं सोमः' इत्यर्धर्चो देवदेवत्यः ।

हे **अग्ने! त्वम् इह** कर्मणि वस्वादीन् **यज** । **उत** अपि च **जनम्** अन्यमपि देवतारूपं प्राणिनं यज । कीदृशम् । **स्वध्वरम्** शोभनयागयुक्तम् **मनुजातम्** मनुना प्रजापतिना उत्पादितम् **घृतप्रुषम्** उदकस्य सेक्तारम् ।। १ ।।

**सायण–** 'त्वमग्ने वसून्' इति दशर्चं द्वितीयं सूक्तम् । अत्रानुक्रमणिका- 'त्वमग्ने दशानुष्टु-भमर्धऽन्त्यो दैवैः' इति । प्रस्कण्व ऋषिः । आनुष्टुभं छन्दः । इदं सूक्तमग्निदेवताकं, पूर्वत्र 'आग्नेयं तु' इत्युक्तत्वात् । 'अयं सोमः' इत्यर्धर्चो देवदेवत्यः । प्रातरनुवाके आग्नेये ऋतौ आश्विनशस्त्रे चैतत्सूक्तम् । 'अथैतस्या रात्रेः' इति खण्डे सूत्रितं- त्वमग्ने वसूंस्त्वं हि क्षैतवत् (आश्व.श्रौ.४.१३) इति । तथा गर्गत्रिरात्रस्यान्त्येऽहनि एतत्सूक्तमाज्यशस्त्रम् । 'आङ्गिरसं स्वर्गकामः' इति खण्डे सूत्रितं-'वारवन्तीयमुत्तमे त्वमग्ने वसूंरिति चाज्यम्' (आश्व.श्रौ.१०.२) इति ।

हे **अग्ने त्वम् इह** कर्मणि वस्वादीन् **यज** । **उत** अपि च **जनम्** अन्यमपि देवतारूपं प्राणिनं यज । कीदृशम् । **स्वध्वरं** शोभनयागयुक्तं **मनुजातं** मनुना प्रजापतिनोत्पादितं **घृतप्रुषम्** उदकस्य सेक्तारम् । **यज** । 'यजोऽतस्तिङः' इति संहितायां दीर्घत्वम् । **स्वध्वरम्** । शोभनोऽध्वरो यस्यासौ स्वध्वरः । 'नसुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । मनुजातम् । जनेरन्तर्भावितण्यर्थात् कर्मणि क्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । **घृतप्रुषम्** । 'प्रुष प्लुष स्नेहनसेचनपूरणेषु' । घृतेनोदकेन पुष्णाति पूरयतीति घृतप्रुट् । 'क्विप् च' इति क्विप् ।। १ ।।

**सिद्धाञ्जनम्– हे अग्ने,** त्वं **इह** अस्मिन् मदीये यजने **वसून् रुद्रान् आदित्यान् उत** अपि **यज** पूजय । अपि च **स्वध्वरम्** शोभनयज्ञसंपन्नं **मनुजातम्** मनोर्देवस्य मन्तुः प्रजापतिरूपात् जातं लब्धजन्मानं **घृतप्रुषम्** घृतेन दीप्त्यात्मकेन घरणेन सेचनेन प्रुष्णन्तं स्नेहयन्तं

अञ्जन्तम् इति यावत्, तथाभूतं **जनम्** च यजेति सम्बन्धः । न केवलं वस्वादीन् देवान् यज, शुभाध्वरसम्पन्नं धीगतदीप्त्या अग्निं तन्मुखेन देवांश्च अभ्यञ्जन्तं मानुषं जनमपि यज, तादृशस्य मनुजन्मनः देवतुल्यत्वात् देवार्थजीवित्वाच्च ।। वसुरुद्रादित्याः क्रमशः पृथिव्यादित्रिस्थानाः प्रसिद्धाः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः । तान् रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ।। २ ।।**

**श्रुष्टीऽवानः । हि । दाशुषे । देवाः । अग्ने । विऽचेतसः । तान् । रोहित्ऽअश्व । गिर्वणः । त्रयःऽत्रिंशतम् । आ । वह ।। २ ।।**

**स्कन्द–** **हि शब्दः** पदपूरणः । **तान् रोहिदश्व** इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । **दाशुषे** यजमानस्यार्थाय । ये **श्रुष्टीवानः** 'श्रुष्टीति क्षिप्रनाम' (या.६,१२) । वन षण सम्भक्तौ । क्षिप्रं यजमानं सम्भक्तारः । अथवा श्रुष्टिशब्दोऽत्र श्रुतवचनः । श्रुतवन्तः श्रुष्टीवानः । बहुश्रुता इत्यर्थः । देवाः **हे अग्ने! विचेतसः** विविधप्रज्ञाः ऊहापोहसमर्थाः । तान् रोहिदश्व! रोहितवर्णा अश्वा यस्य स रोहिदश्वः, तस्य सम्बोधनं हे रोहिदश्व! गिर्वणः! स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्तः! **त्रयस्त्रिंशतम् आ वह, 'अष्टौ वसवः एकादश रुद्राः द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्च'** (ऐब्रा.१,१०) इत्येते त्रयस्त्रिंशद्देवाः, तान् त्रयस्त्रिंशतमावह ।।

**वेङ्कटमाधव–** क्षिप्रसम्भक्तारः **हि दाशुषे देवाः अग्ने!** सुमतयः । **तान् रोहिदश्व!** गीर्भिर्वननीय! इह **आ वह** त्रयस्त्रिंशत्सङ्ख्याकान् ।। २ ।।

**मुद्गल–** हे अग्ने! विचेतस विशिष्टप्रज्ञानाः देवा दाशुषे हविर्दत्तवते यजमानाय श्रष्टीवानः हि श्रुष्टि फलस्य दान तद्भाजः खलु । हे रोहिदश्व! रोहिन्नामकैरश्वैरपेत गिर्वणः! गीर्भिः स्तुतिभिः वननीय! अग्ने जयस्त्रिंशतम् अनया सख्यया सख्यातान् तान् देवान् आ वह इहानय ।।

**सायण–** हे अग्ने विचेतसो विशिष्टप्रज्ञाना देवा दाशुषे हविर्दत्तवत यजमानाय श्रुष्टीऽवानो हि । श्रुष्टिः फलस्य दानम् । तज्जाजः खलु । हे रोहिदश्व रोहिन्नामकैरश्वैरुपेत गिर्वणा देवो

भवति गीर्भिरेनं वनयन्ति । इति यास्कः । त्रयस्त्रिंशतमनया संख्यया संख्यातांस्तान्देवाना वह । इहानय । श्रुष्टीवानः । अन्येभ्योऽपि दृश्यन्ते (नि.६.१४) इति विच् । छान्दसं दीर्घत्वम् । विचेतसः । विशिष्टं चेतो येषां ते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । गिर्वणः । गीर्भिर्वननीयो गिर्वणः । गीर्भिर्वननीयो गिर्वणाः । वनतेरसुन् । पूर्वपदस्य ह्रस्वत्वं छान्दसम् । चयश्च त्रिंशच्च त्रयस्त्रिंशत् । त्रेस्त्रयः । इति त्रिशब्दस्य त्रयसादेशः । संख्या । पा.६.२.३५ । इति पूर्वपदप्रकृतिस्वरत्वम् ।। २ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, विचेतसः** विशिष्टज्ञानसम्पन्नाः देवाः, **दाशुषे** दत्तवते यजमानाय **श्रुष्टीवानो हि** श्रवणानुरोधेन साहाय्यकारिणः खलु । हे **रोहिदश्व** रोहिन्नामकैः लोहितवर्णैरश्वैर्युक्त, **गिर्वणः** गीर्भिः स्तुतिभिर्वननीय अग्ने, **त्रयस्त्रिशतं** अनया संख्यया संख्यातान् **तान्** देवान् **आवह** इहानय । त्रयश्च त्रिंशच्च देवाः प्रागुपन्यस्ताः (१.३४.११) ।। श्रुष्टीवानः- श्रुष्टी क्षिप्रार्थकः सर्वत्र, प्रेरणार्थकः इत्यत्र सायणः । शृणोतेरानुषङ्गिकात् श्रुषधातोर्निष्पन्न इति प्रयोगबलादूह्यः । श्रुष्टिं श्रवणं वनन्ति संभजन्ते अनन्तरकर्तव्यायेति श्रुष्टीवानः, दीर्घश्छान्दसः । अन्ये गताः ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**प्रियमेधवदत्रिवज्जातवेदो विरूपवत् । अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ।। ३ ।।**

**प्रियमेधऽवत् । अत्रिऽवत् । जातऽवेदः । विरूपऽवत् । अङ्गिरस्वत् । महिऽव्रत । प्रस्कण्वस्य । श्रुधि । हवम् ।। ३ ।।**

**स्कन्द– प्रियमेधवत्** प्रियमेधस्येव, **अत्रिवत्** अत्रेरिव, हे **जातवेदः**! जातप्रज्ञ अग्ने! **विरूपवत्** विरूपस्येव च **अङ्गिरस्वत्** अङ्गिरस इव हे **महिव्रत** । महाकर्मन् मम **प्रस्कण्वस्य** श्रुधि हवम् ।। ३ ।।

**सायण–** हे **महिव्रत** प्रभूतकर्मन् **जातवेदो**ऽग्ने **प्रस्कण्वस्य** कण्वपुत्रस्य महर्षेः देवमाह्वानं **श्रुधि** । शृणु । तत्र चत्वारो दृष्टान्ताः । प्रियमेधात्रिविरूपाङ्गिरोनामका एतेषामाह्वानं यथा शृणोषि तद्वत् । अत्र निरुक्तं । **प्रियमेधः** प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य

शृणु ह्वानम् । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्रायमिति । **विरूपो** नानारूपो महिवतो महाव्रतः (निरु.३.१७) इति च । प्रियमेधवन प्रियमेधस्येव । 'तत्र तस्येव' (पा.सू.५.१.११६) इति षष्ठ्यर्थे वतिः। एवम् अत्रिवत् इत्यादावपि । प्रस्कण्वादयो गताः ।। ३ ।।

**सिद्धाञ्जनम्–** हे **महिव्रत**, महाव्रत प्रभूतकर्मन्, **जातवेदः** अग्ने, **प्रस्कण्वस्य** कण्वपुत्रस्य महर्षेः **हवं** आह्वानं **श्रुधि** शृणु । तत्र चत्वारो दृष्टान्ताः । **प्रियमेधात्रिविरूपाङ्गिरो नामका** एतेषामाह्वनं यथा श्रुणोषि तद्वत् । अत्र निरुक्तम् । प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य ह्वानम् । प्रस्कण्वः कण्वस्य पुत्रः । कण्वप्रभवो यथा प्राग्रमिति । विरूपो नानारूपो महीव्रतो महाव्रत इति च । प्रियमेधवत् । प्रियमेधस्येव । तत्र तस्यैव पा.५.१.११६ । इति षष्ठ्यर्थे वतिः । एवमत्रिवदित्यादावपि । प्रस्कण्वादयो गताः ।। ३ ।।

**नीतिमञ्जरी–** कया प्रजया प्रजावान् भवतीति प्रश्न आह–

**अन्य इच्छन्ति यत्साम्यं प्रजावान् प्रजया तया ।**
**व्रह्मा स्वसूनुसाम्येष्टेः काण्वस्यातः प्रजापतिः ।। १६ ।।**

यस्याः प्रजायाः साम्यं यत्साम्यं अन्ये जना इच्छन्ति तया प्रजावान् भवति । नान्यया । ब्रह्मप्रजादृष्टान्तेन दृढयति । ब्रह्मा अतः प्रजापतिर्बभूव । कुतः काण्वस्य कण्वपुत्रस्य प्रस्कण्वस्य स्वसूनोः साम्येष्टौ । अग्नौ । प्रस्कण्वः ब्रह्मपुत्रसाम्यमैच्छत् ।

तदर्थेयमृक्–

**प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।**
**अङ्गिरस्वन् महिव्रत प्रस्कण्वस्य श्रुधी हवम् ।। (ऋ.१.४५.३)**

तृतीयेऽह्नि आज्ये विनियुक्तम् त्वमग्ने वसूनिति (ऋ०१.४५) समूह्ळ इति सूत्रे । प्रस्कण्वोऽनुष्टुभाग्निं तुष्टाव । हे महिव्रत प्रभूतकर्मन् । हे **जातवेदः** अग्ने **प्रस्कण्वस्य** कण्वपुत्रस्य मम **हवं** आह्वानं **श्रुधि** श्रृणु । श्रुशृणुपृकृवृभ्यश्छन्दसि (पा०६.४.१०२) इति हेर्धिः । तत्र चत्वारो दृष्टान्ताः । प्रियमेधात्रिविरूपाङ्गिरोनामका ब्रह्मपुत्राः एतेषामाह्वानं यथा श्रृणोषि । तद्वन्मम श्रृणु इत्यन्वयः । **प्रियमेधाः** । प्रिया अस्य मेधा इति यास्कः (नि०३.१७)। श्रुधी हवं 'षष्ठं चाष्टाक्षरेऽक्षरम्' (ऋ०प्रा०८.३९) इति दीर्घः ।

## ऋक्संहिता पदपाठसहिता

**महिकेरव ऊतये प्रियमेधा अहूषत । राजन्तमध्वराणामग्निं शुक्रेण शोचिषा ॥**
**महिऽकेरवः । ऊतये । प्रियऽमेधाः । अहूषत । राजन्तम् । अध्वराणाम् । अग्निम् । शुक्रेण । शोचिषा ॥ ४ ॥**

**स्कन्द– महिकेरवः** महतः स्तोमस्य कर्तारः । **ऊतये** पालनाय तर्पणाय वा आत्मनः । **प्रियमेधाः** प्रिययशाः । **अहूषत** आहूतवन्तः आह्वयन्ति वा । **राजन्तम्** राजतिरैश्वर्यकर्मा (तु.निघ.२,२१) । ईशानम् । **अध्वराणाम्** यज्ञानाम् । **अग्निम् शुक्रेण शोचिषा** इत्थंभूतलक्षणे एषा तृतीया । शुक्लवर्णया **दीप्त्या सम्बद्धम्** । शुक्लवर्णया दीप्त्या दीप्तमित्यर्थः । अथवा शुक्रेण शोचिषा इत्येतत् **राजन्तमध्वराणां** मित्येतेन सम्बध्यते । राजतिश्च दीप्त्यर्थः । शुक्रेण शोचिषा राजन्तं दीप्यमानम् । क्व । अध्वराणाम् । षष्ठीनिर्देशात् मध्य इति वाक्यशेषः । यज्ञानां मध्ये । वेदिस्थमित्यर्थः ॥ ४ ॥

**वेङ्कटमाधव–** महाकर्माण उतये **प्रियमेधाः** त्वाम् **अहूषत** ईशानं यज्ञानाम् **अग्निम् शुक्रेण** तेजसा ॥ ४ ॥

**मुद्गल– महिकेरवः** प्रौढकर्माणः **प्रियमेधाः** प्रियेण यज्ञेनोपेता ऋषयः **ऊतये** रक्षार्थम् **अग्निम् अहूषत** आहूतवन्तः । कीदृशम् । **अध्वराणाम्** यज्ञानां मध्ये **शुक्रेण शोचिषा** शुद्धेन प्रकाशेन **राजन्तम्** दीप्यमानम् ॥ ४ ॥

**सायण– महिकेरवः** प्रौढकर्माणः **प्रियमेधाः** प्रियेण यज्ञेनोपेता ऋषयः ऊतये रक्षार्थम् **अग्निम् अहूषत** आहूतवन्तः । कीदृशम् । **अध्वराणां** यज्ञानां मध्ये **शुक्रेण शोचिषा** शुद्धेन प्रकाशेन **राजन्तं** दीप्यमानम् । **महिकेरवः** । 'मह पूजायाम्' । औणादिक इन्प्रत्ययः । 'डुकृञ् करणे' । 'कृवापाजि' इत्युण् । महयो महान्तः कारवो येषां ते । तथोक्ताः । आकारस्य एकारादेशश्छान्दसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **प्रियमेधाः** । प्रियो मेधो येषां ते । **अहूषत** । 'ह्वेञ् स्पर्धायां शब्दे च' । लुङि सिचि 'बहुलं छन्दसि' इति संप्रसारणम् । परपूर्वत्वम् । 'हल' (पा.सू.६.४.२) इति दीर्घत्वम् । 'आदेशप्रत्यययोः' इति षत्वम् ॥४॥

**सिद्धाञ्जनम्– महिकेरवः** महाकारवः प्रभूतस्तोत्रकर्माणः **प्रियमेधाः** प्रिययज्ञसम्पन्नाः **ऋषयः ऊतये** वृद्धये **अग्निम्** देवं **अहूषत** आहूतवन्तः । कीदृशम् ? **शुक्रेण** शुभ्रेण **शोचिषा** रोचिषा **अध्वराणाम्** यज्ञानां मध्ये **राजन्तं** भ्राजमानम् । शुभ्रप्रकाशस्य तिमिरापहत्वात् 'शुक्रेण शोचिषा' स्वर्गाध्वगामिनां अध्वरपदवाच्यानां यज्ञानां ईशानमित्यर्थः । महिकेरवः-मह पूजायां, महयो महान्तः, औणादिक इन्प्रत्ययः, केरवः, आकारस्य एकारादेशः छान्दसः, महयो कारवो येषां ते । अन्ये गताः ॥ ४ ॥

## ऋक्संहिता पदपाठसहिता

**घृताहवन सन्त्येमा उ षु श्रुधी गिरः । याभिः कण्वस्य सूनवो हवन्तेऽवसे त्वा ॥ ५ ॥**

**घृतऽआहवन । सन्त्य । इमाः । ऊँ इति । सु । श्रुधि । गिरः । याभिः । कण्वस्य । सूनवः । हवन्ते । अवसे । त्वा ॥ ५ ॥**

**स्कन्द–** घृतमाहूयते यस्मिन् स घृताहवनः, तस्य सम्बोधनं हे **घृताहवन! सन्त्य!** षणु दाने । दातः । **इमाः** उ **सु** उशब्दः पदपूरणः । इमा सुष्ठु **श्रुधि गिरः, याभिः कण्वस्य सूनवः** पुत्राः **हवन्ते** । आत्मन एव वा अयं परोक्षरूपेण प्रतिनिर्देशः । वयं कण्वपुत्रा आह्वयाम इत्यर्थः । **अवसे** पालनाय तर्पणाय वा **त्वा** त्वाम् ॥ ५ ॥

**वेङ्कटमाधव–** प्रियघृतहविष्क भजनशील **इमाः** स्तुतीः शृणु, **याभिः** कण्वपुत्राः रक्षणाय त्वाम् **हवन्ते** ॥ ५ ॥

**मुद्गल– हे घृताहवन!** घृतेनाहूयमान **सन्त्य** । फलप्रद अग्रे **इमा** उ **गिरः** अस्माभिः प्रयुज्यमाना अपि स्तोत्ररूपा वाचः **सु श्रुधि** सुष्ठु शृणु । कण्वस्य महर्षे सूनवः पुत्राः याभि गीर्भि अवसे स्वरक्षार्थम् त्वा हवन्ते त्वाम् आह्वन्ति ॥ ५ ॥

**सायण–** हे **घृताहवन** घृतेनाहूयमान **सन्त्य** फलप्रदाग्ने **इमा उ गिरः** अस्माभिः प्रयुज्यमाना अपि स्तोत्ररूपा वाचः **सु श्रुधि** सुष्ठु शृणु । **कण्वस्य** महर्षेः **सूनवः** पुत्राः **याभिः** गीर्भिः **अवसे** स्वरक्षार्थं **त्वा हवन्ते** त्वामाह्वयन्ति । **घृताहवन** । घृतेनाहूयतेऽस्मिन्निति घृताहवनः ।

अधिकरणे ल्युट् । आमन्त्रिताद्युदात्तत्वम् । **श्रुधि** । 'श्रुशृणुपृकृवृभ्यः छन्दसि' इति हेर्धिरादेशः । 'बहुलं छन्दसि' इति विकरणस्य लुक् ।। ५ ।।

**सिद्धाञ्जनम्– घृताहवन** घृतेन दीप्तिसेचनेन आहूयमान, (दीप्तया धिया आहूयते अग्निरन्तर्यजने १.१२.५) सन्त्य दातः, इमा उ गिरः अस्माभिः प्रयुज्यमानाः । स्तुतीरपि **सु श्रुधि** सुष्ठु शृणु । **याभिः** गीभिः कण्वस्य ऋषेः **सूनवः** सुताः **त्वा** त्वां **अवसे** स्वीयवर्धनाय **हवन्ते** आह्वयन्ति । घृतावन-घृतेन आहूयतेऽस्मिन्, अधिकरणे ल्युट् । सन्त्य-षणु दाने, गतः ।। ५ ।।

।। इति प्रथमाष्टके तृतीयाध्याये एकत्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**त्वां चि॑त्रश्रवस्तम ह॑वन्ते वि॒क्षु ज॒न्तव॑ः । शो॒चिष्के॑शं पुरुप्रि॒याऽग्ने॑ ह॒व्याय॒ वोळ्ह॑वे ।। ६ ।।**

त्वाम् । चि॒त्र॒श्र॒व॒ः॒ऽत॒म॒ । ह॒व॑न्ते । वि॒क्षु । ज॒न्तव॑ः । शो॒चिः॒ऽके॑शम् । पु॒रु॒ऽप्रि॒य॒ । अग्ने॑ । ह॒व्याय॑ । वोळ्ह॑वे ।।

**स्कन्द– त्वाम्** हे **चित्रश्रवस्तम** अतिशयेन पूज्यं चित्रं वा अन्नं वा धनं वा यशो वा यस्य स चित्रश्रवस्तमः, तस्य सम्बोधनं हे चित्रश्रवस्तम । **हवन्ते विक्षु** मनुष्यनामैतत् (तु.निघ.२,३) । तेन तल्लोका अत्र लक्ष्यन्ते । मनुष्यलोकेषु । **जन्तवः** मनुष्याः । कीदृशम् । **शोचिष्कशम्** शोचिर्दीप्तिः ज्वालाख्या, सा केशस्थानीया यस्य स शोचिष्केशः, तं शोचिष्केशम् । **हे पुरुप्रिय! अग्ने** । किमर्थम् **हव्याय वोळ्हवे** हवींषि वोढुम् ।। ६ ।।

**वेङ्कटमाधव–** चित्रेण श्रवसा श्रुतेन योऽतिशेते तम् **त्वाम्** स्तुतिभिः मनुष्येषु जाता **हवन्ते** ज्वालाकेशं बहुप्रिय **अग्ने** हविषः वहनाय ।। ६ ।।

**मुद्गल–** हे **चित्रश्रवस्तम** ! अतिशयेन विविधहवीरूपान्नयुक्त **पुरुप्रिय** । बहूनां यजमानानां प्रीतिकरः **अग्ने त्वाम् हव्याय वोळ्हवे** हविर्वोढुम् विशु जन्तव प्रजासूत्पन्ना यजमाना हवन्त आह्वयन्ति । कीदृशम् । शोभिष्केशम् दीप्तिरूपकेशोपेतम् ।। ६ ।।

**सायण–** अश्वमेधे पौष्ण्यामिष्टौ स्विष्टकृतोऽनुवाक्या 'त्वां चित्रश्रवस्तम' इत्येषा । 'सर्वान् कामानाप्स्यन्' इति खण्डे सूत्रितं- 'स्वां चित्रश्रवस्तम यद्वाहिष्टं तदग्नये' (आश्व.श्रौ.१०.६) इति ।

**हे चित्रश्रवस्तम** अतिशयेन विविधहवीरूपान्नयुक **पुरुप्रिय** बहूनां यजमानानां प्रीतिकर **अग्ने** त्वां हव्याय **वोळ्हवे** हविर्वोढुं **विक्षु** जन्तवः प्रजासूत्पन्ना यजमानाः **हवन्ते** आह्वयन्ति । कीदृशम् । **शोचिष्केशं** दीप्तिरूपकेशोपेतम् । तथा च वाजसनेयिन आमनन्ति । **शोचन्त** इव ह्येतस्य ममिन्द्धस्य रश्मयः केशाः इति ।। **चित्रश्रवस्तम** । श्रव इत्यन्ननाम । चित्रं श्रवो यस्यासौ चित्रश्रवाः । अतिशयेन चित्रश्रवाः चित्रश्रवस्तमः । आमन्त्रितानुदात्तत्वम् । **शोचिष्केशम्** । 'शुच दीप्तौ' । 'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः' (उ.सू.२.१०९) इतीसिः । प्रत्ययस्वरः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । इत्याह । हवनक्रियया प्राप्यत्वात् क्रियाग्रहणं कर्तव्यम्' इति संप्रदानवाच्चतुर्थी । **वोळ्हवे** । 'वह प्रापणे' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । ढत्वधत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्य (पा.सू.६.३.११२) इत्याकारस्यौकारः । नित्वादाद्युदात्तत्वम् ।। ६ ।।

**सिद्धाञ्जनम्– हे चित्रश्रवस्तम** अतिशयेन विविधश्रुतियुक्त (व्याख्यातम् १.१.५) **पुरुप्रिय** पुरूणां बहूनां प्रिय प्रीतिकर, **अग्ने, त्वाम् हव्याय** हवनस्य प्राप्यत्वात् तदर्थं **वोढवे** वोढुं **विक्षु** प्रजासु **जन्तवः** उत्पन्नाः यजमानाः **हवन्ते** आह्वयन्ति । कीदृशम् ? **शोचिष्केशम्** शोचींषि केशा यस्य तं, ज्वाला एव ह्यग्नेः केशा उच्यन्ते । सर्वे गताः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**नि त्वा होतारमृत्विजं दधिरे वसुवित्तमम् । श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु ।। ७ ।।**

**नि । त्वा । होतारम् । ऋत्विजम् । दधिरे । वसुवित्ऽतमम् । श्रुत्ऽकर्णम् । सप्रथःऽतमम् । विप्राः । अग्ने । दिविष्टिषु ।। ७ ।।**

**स्कन्द– नि त्वा होतारम्** ऋत्विजम् **दधिरे** दधति स्थापयन्ति । **वसुवित्तमम्** धनानां लब्धृतमम् । **श्रुत्कर्णम्** श्रुतिशीलः कर्णः यस्य तं श्रुत्कर्णम् । **सप्रथस्तमम्** 'आर्चन्नत्र मरुतः

सस्मिन्नाजौ' (ऋ१,५२,१५) इत्यादिप्रयोगदर्शनात् सशब्दः सर्वशब्दपर्यायः । सर्वतः पृथुः सप्रथाः । अतिशयेन सर्वतः पृथुं सप्रथस्तमम् । **विप्राः** मेधाविनः । हे **अग्ने ! दिविष्टिषु** दिवमिष्यते याभिर्गन्तुं ता दिविष्टयः तासु । यागेष्वित्यर्थः ।। ७ ।।

**वेङ्कटमाधव– नि दधिरे** त्वाम् **होतारम्** । **ऋत्विजम्** अतिशयेन धनानां लम्भयितारम् **श्रुत्कर्णम्** सर्वतः पृथुतमं मधाविनः **अग्ने!** दिवसागमनेष्वहर्मुखेषु ।। ७ ।।

**मुद्गल–** हे **अग्ने! विप्राः** मेधाविनः **दिविष्टिषु** यागेषु **त्वा** त्वाम् **नि दधिरे** स्थापितवन्तः । कीदृशम् । **होतारम्** आह्वातारम् **ऋत्विजम्** ऋतुषु यजनशीलम् **वसुवित्तमम्** अतिशयेन धनस्य लम्भयितारम् **श्रुत्कर्णम्** श्रवणयोग्यकर्णोपेतम् **सप्रथस्तमम्** अतिशयेन प्रख्यातम् ।। ७ ।।

**सायण–** हे **अग्ने विप्रा** मेधाविनो **दिविष्टिषु** यागेषु त्वां **नि दधिरे** । स्थापितवन्तः । कीदृशम् । **होतारम्** आह्वातारम् । **ऋत्विजम्** ऋतुषु यजनशीलं वसुवित्तममतिशयेन धनस्य लम्भयितारं **श्रुत्कर्णं** श्रवणयोग्यकर्णोपेतं सप्रथस्तममतिशयेन प्रख्यातम् । **दधिरे** । दूरे च चित्वा-दन्तोदात्तत्वम् । पादादित्वाविघाताभावः । **दिविष्टिषु** । इष्टय एषणानि । दिवः स्वर्गस्यैषणानि येषु यागेषु ते दिविष्टयः । सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनादिव उत् । पा.६.१. १३१ । इत्युत्वं न क्रियते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ।। ७ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, विप्राः** मेधाविनः **दिविष्टिषु** दिवः द्युलोकस्य इष्टयः एषणानि येषु तेषु यागेषु त्वा त्वां **निदधिरे** स्थापितवन्तः । कीदृशम् ? **होतारम् ऋत्विजम्** ऋतुषु यष्टारम्, **वसुवित्तमम्** अतिशयेन वसोः धनस्य सारभूतस्य द्रव्यस्य वेदितारं ज्ञातारं वेदयितारं लम्भयितारं वा, **श्रुत्कर्णम्** श्रवणसमर्थकर्णयुक्तं **सप्रथस्तमम्** अतिशयेन प्रथितम् । दिविष्टिषु-अत्र दिव उत् इति उत्वं न क्रियते, छन्दसि विधयो विकल्प्यन्ते । अन्ये गताः ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**आ त्वा विप्रा॑ अचुच्यवुः सुतसो॑मा अभि प्रय॑ः । बृहद् भा बिभ्र॑तो हविरग्ने॒ मर्ता॑य दाशुषे॑ ।। ८ ।।**

आ । त्वा । विप्रा॑ः । अचुच्यवुः । सुतऽसो॑माः । अभि । प्रय॑ः । बृहत् । भाः । बिभ्र॑तः । हविः । अग्ने॑ । मर्ता॑य । दाशुषे॑ ।। ८ ।।

**स्कन्द–** त्वाम् **विप्राः** मेधाविन ऋत्विजः **आ अचुच्यवुः** आच्यावयन्ति । आह्वयन्तीत्यर्थः । **सुतसोमाः** कृतसोमाभिषवाः । **अभि प्रयः** सोमलक्षणमन्नं प्रति । **बृहद्भाः** बृहती भा दीप्तिर्यस्य तत् बृहद्भाः तत् । स्वदीप्त्या अत्यन्तदीप्तम् । **बिभ्रतो** धारयन्तः सोमलक्षणम् हविः । हे अग्ने! मताय दाशुषे मनुष्यस्य यजमानस्यार्थाय ।। ८ ।।

**वेङ्कटमाधव–** **आ** गमयन्ति त्वाम् अभिषुतसोमाः मेधाविनः सोमलक्षणमन्नम् **अभि** बृहतीः दीप्तीः **हविः** च धारयन्तः अग्ने! **मर्ताय** यजमानाय होतारः ।। ८ ।।

**मुद्गल–** हे अग्ने! **सुतसोमाः** अभिषुतसोमयुक्ताः **विप्राः** मेधाविन ऋत्विजः **प्रयः अभि** हविर्लक्षणमन्नम् अभिलक्ष्य त्वा त्वाम् **आ अचुच्यवुः** आगमयन्ति । कीदृशम् । **बृहत्** महान्तम् **भाः** भासमानम् । कीदृशा विप्राः । **दाशुषे मर्ताय** हविष्प्रदस्य यजमानस्य सम्बन्धि हविः **बिभ्रतः** धारयन्तः ।। ८ ।।

**सायण– हे अग्ने सुतसोमाः** अभिषुतसोमयुक्ताः विप्राः मेधाविन ऋत्विजः **प्रयो अभि** हविर्लक्षणमन्नमभिलक्ष्य त्वा **आचुच्यवुः** । त्वामागमयन्ति । कीदृशं त्वाम् । बृहन्महान्तं **भा** भासमानम् । कीदृशा विप्राः । **दाशुषे** मर्ताय हविष्प्रदस्य यजमानस्य सम्बन्धि **हविर्बिभ्रतः** धारयन्तः । **अचुच्यवुः** । 'च्युङ् गतौ' । अस्मात् अन्तर्भावितण्यर्थात् लङि व्यत्ययेन परस्मैपदम् । 'बहुलं छन्दसि' इति शपः श्लुः । 'सिजभ्यस्तविदिभ्यश्च' (पा.सू.३.४.१०९) इति झे र्जुसादेशः जुसि च' (पा.मू.७.३.८३) इति गुणः । **बृहत्** । भाः । उभयत्र 'सुपां सुलुक्' इति विभक्तेर्लुक् । **बिभ्रतः** । 'दुभृञ् धारणपोषणयोः' । शतरि 'नाभ्यस्ताच्छतुः' इति नुमागमप्रतिषेधः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । मर्ताय दाशुषे । उभयत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्या' (पा.सू.२.३.६२.१) इति चतुर्थी ।। ८ ।।

**सिद्धाञ्जनम्–** हे **अग्ने, सुतसोमाः** सोमाभिषवं कृतवन्तो यजमानाः **विप्राः** मेधाविनः **प्रयः अभि** प्रियं (वस्तु किमपि, व्याख्यातम् १.२.४) अभिलक्ष्य **त्वा** त्वां **आ अचुच्यवुः** आगमयन्ति । कीदृशम् त्वाम् ? **बृहत्** महान्तं, लिङ्गव्यत्ययः, **भाः** भासमानं च । कीदृशा विप्राः? **दाशुषे** दत्तवते यजमानाय **मर्ताय** मनुष्याय **हविः** हव्यं **बिभ्रतः** वारयन्तः । यजमानस्य ऋषेः साहाय्यं कृत्वा महान्तं भान्तं अग्निं ये आगमयन्ति ते न साधारणमनुष्या ऋत्विजः,

किं तु स्वयं सुतसोमाः विप्राः अत एव अन्तर्यजनरहस्यविदः सिद्धाः मार्त्यानामुपकुर्वते । गुरवः शिष्याणां भारं यथेदानीमपि वहन्तो तेषां कृत्यं निर्वहन्ति तथेति बोध्यम् । अचुच्यवुः च्युङ् गतौ, अन्तर्भावितण्यर्थः, व्यत्ययेन परस्मैपदम्, लङ, शपः श्लुः । अन्ये गताः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**प्रातर्याव्णः सहस्कृत सोमपेयाय सन्त्य । इहाद्य दैव्यं जनं बर्हिरा सादया वसो ॥ ९ ॥**

**प्रातःयाव्नः । सहःऽकृत । सोमऽपेयाय । सन्त्य । इह । अद्य । दैव्यम् । जनम् । बर्हिः । आ । सादय । वसो इति ॥ ९ ॥**

**स्कन्द–** प्रातर्ये यज्ञान् प्रति यान्ति गच्छन्ति ते देवा प्रातर्यावाणः तान् **प्रातर्याव्णः** । हे **सहस्कृत!** सहसः कृत बलादुत्पादितः । प्राणाद्धि बलात् मध्यमानोऽयं जायते, तेनैवमामन्त्र्यत सहस्कृतेति । **सोमपेयाय** सोमपानार्थम् । **हे सन्त्य!** षणु दाने । दातः । **इह** अस्मदीये यज्ञे **अद्य दैव्यम् जनम्** देवजनं चान्यमपि । ये प्रातर्यावाणो देवाः, ये च इतरे देवाः, सर्वान् तानित्यर्थः । **बर्हिः आ सादय हे वसो !** प्रशस्य! धनवन् वा ॥ ९ ॥

**वेङ्कटमाधव– प्रातर्याव्ण** देवान् मथनबलेन कृत सोमपानार्थं भजनीय अस्मिन् यज्ञे **बर्हिः आ सादय दैव्यम् जनम्** वासयितः । पूर्वार्धस्य संग्रह उत्तरः ॥ ९ ॥

**मुद्गल– हे सहस्कृत** बलेन मथित **सन्त्य** फलदातः **वसो** निवासहेतुभूत अग्ने इह देवयजनदेशे **अद्य** अस्मिन् दिने **सोमपेयाय** सोमपानार्थम् **प्रातर्याव्ण** प्रातरागच्छतः देवान् **दैव्यम् जनम्** अन्यमपि देवताजनम् **बर्हि आ सादय** यज्ञं प्रापय ॥ ९ ॥

**सायण–** हे **सहस्कृत** बलेन मथित सन्त्य फलदातः वसो निवासहेतुभूताग्ने **इह** देवयजनदेशे **अद्य** अस्मिन् दिने **सोमपेयाय** सोमपानार्थं **प्रातर्याव्णः** प्रातरागच्छतो देवान् दैव्यं जनम् अन्यमपि देवताजनं **बर्हिः आ सादय** यज्ञं प्रापय ॥ **प्रातर्याव्णः** । शसि 'अल्लोपोऽनः' इति अकारलोपः । **सहस्कृतः** । चोत्रः सहोऽभस्तमसस्तृतीयायाः (पा.सू.६.३.३) इत्यलुगभावः छान्दसः ॥ ९ ॥

**सिद्धाञ्जनम्– हे सहस्कृत** सहसा बलेन कृत मथित, (सहसः सूनुरग्निः वेदे विश्रुतः) **सन्त्य** दातः, **वसो** धनभूत, अग्ने, **इह** अस्मिन्नस्मदन्तर्यजनस्थाने **अद्य** इदानीं **सोमपेयाय** सोमपानार्थं **प्रातर्याव्णः** प्रातरागन्तॄन् देवान् **दैव्यम् जनम्** अन्य देवताजनमपि **बर्हिरासादय** आस्तीर्णं प्रापय, सिद्धे आसने उपवेशयेत्यर्थः । सहस्कृत-तृतीया, अलुगभावश्छान्दसः । अन्ये गताः ।। ९ ।।

## ऋक्संहिता पदपाठसहिता

## अर्वाञ्चं दैव्यं जनमग्ने यक्ष्व सहूतिभिः । अयं सोमः सुदानवस्तं पात तिरोअह्न्यम् ।। १० ।।

**अर्वाञ्चम् । दैव्यम् । जनम् । अग्ने । यक्ष्व । सहूतिऽभिः । अयम् । सोमः । सुऽदानवः । तम् । पात । तिरःऽअह्न्यम् ।। १० ।।**

**स्कन्द– अर्वाञ्चम्** इति कर्मश्रुतेर्योग्यक्रियाध्याहारः । अर्वाञ्चम् अस्मदभिमुखम् आहूय **दैव्यम् जनम्** हे अग्ने! **यक्ष्व** यज । कथमाहूय । **सहूतिभिः** साह्वानैः । युगपदाहूयेत्यर्थः । अथवा सहाह्वातारः सहूतयः । सहयोगलक्षणा चैषा तृतीया । सहाह्वातृभिरन्यैरग्निभिः सहाहू-येत्यर्थः । **अयम् सोमः सुदानवः** ! 'अर्धर्चो देवदेवत्यः' (तु.बृदे.३,१,१२) 'अयं सोम इत्ययम् अर्धर्चो देवदेवत्यः प्रत्येतव्यः । अयम् सोमः हे सुदानवः । शोभनदातार! शोभनदानाः वा । **तम् पात** पिबत । **तिरो अह्न्यम्** तार्तीयसवनिकः सोमविशेषः तिरोअह्न्य उच्यते, त तिरोअह्न्यम् । अथवा तिरः सत इति प्राप्तस्य नामनी (तु.या.३,२०) । प्राप्ते वर्तमाने यागाहे भव तिरोह्न्यः, तं तिरोअह्न्यम् इति ।। १० ।।

**वेङ्कटमाधव– अस्मदभिमुखम् दैव्यम् जनम् अग्ने!** यज समानाह्वानैस्तत्तदनुचरैः सह । अथ देवानाह– **अयम् सोमः** अभिषुतः शोभनदानाः, **तम्** पिबत पूर्वस्मिन्नहनि तिरोभूते जातम् अथवा प्राप्तेऽहनि प्रादुर्भूतमिति ।। १० ।।

**मुद्गल– हे अग्ने अर्वाञ्चम्** अभिमुखम् **दैव्यम्** जनम् देवतारूपं प्राणिनम् **सहूतिभिः** समानाह्वानैः देवान्तरैः सह **यक्ष्व** यज । **हे सुदानवः** । सुष्ठुफलदातारो देवाः **अयम् सोमः**

युष्मदर्थे सोमः पुरतो वर्तते, **तम्** सोमम् **पात** पिबत । कीदृशम् । **तिरोअह्न्यम्** एतन्नामकम् । पूर्वस्मिन्नह्नि अभिषुतो यः सोम उत्तरेऽहनि हूयते तस्यैतन्नामधेयम् ।। १० ।।

**सायण–** हे **अग्ने अर्वांचम्** अभिमुखं **दैव्यं जनं** देवतारूपं प्राणिनं **सहूतिभिः** समानाह्वानैर्देवान्तरैः मह यक्ष्व । यज । हे सुदानवः सुष्ठु फलदातारो देवाः अयं सोमो युष्मदर्थं सोमः पुरतो वर्तते । तं सोमं **पात** । पिबत । कीदृशम् । तिरो अह्न्यमेतन्नामकम् । पूर्वस्मिन्नह्यभिषुतो यः सोमः उत्तरेऽहनि ह्वयते तस्यैतन्नामधेयम् ।। **दैव्यम्** । 'देवाद्यञञौ' इति प्राग्दीव्यतीयो यञ् । **यक्ष्व** । लोटि 'बहुलं छन्दसि' इति शपो लुक् । प्रत्ययस्वराभावः छान्दसः । अग्ने इत्यस्य पादादौ वर्तमानस्यामन्त्रितं पूर्वमविद्यमानवत् इत्यविद्यमानवत्त्वान् 'तिङ्ङःतिङ' इति निघाताभावः । **सहूतिभिः** । समानाहूतिराह्वानं येषां ते सहूतयः । 'समानस्य च्छन्दसि' इति सभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् । **पात** । 'पा पाने'। 'बहुलं छन्दसि' इति शपो लुक् । तिरो अह्यम् । अहनि भवम् अह्नयम् । 'भवे छन्दसि ' इति यत् । 'नस्तद्धिते' इति टिलोपो न भवति, 'अहष्टखोरेव' (पा.सू.६.४.१४५) इति नियमात् । भसंज्ञायाम् 'अल्लोपोऽनः' इति अकारलोपः । ये चाभावकर्मणोः' (पा.सू.६.४.१६८) इति प्रकृतिभावस्तु सर्वविधीनां छन्दसि विकल्पितत्वात् न क्रियते । तिरोहितोऽह्यस्तिरो अह्यः । 'प्रकृत्यान्तःपादम्' इति प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वम् ।। १० ।।

**सिद्धाञ्जनम्–** हे **अग्ने, अर्वाश्चम्** समीपवर्तिनं (अभिमुखमिति सायणः) **दैव्यम् जनम्** देवसम्बन्धिनं दिव्यभावमापन्नं वा जनम् **सहूतिभिः** समानाह्वानैः अन्यैर्देवैः सह, **यक्ष्व** यज । हे **सुदानवः** सुष्ठु दातारः देवाः, **अयम् सोमः** वर्तते, युष्माकं स्वीकाराय सुतः सिद्धो भवति । **तम् पात** पिबत । कीदृशम् ? **तिरोअह्न्यम्** पूर्वस्मिन्नहनि अभिषुतो यः सोमः उत्तरेऽहनि हूयते स तिरोअह्न्य उच्यते यज्ञकर्मसु । अन्तर्यजने तु पूर्वं अभिषुतोऽपि यः सोमः सविलम्बं देवानामागमनं अनुपालयता यजमानेन हूयते स भवति । अह्न्यः-अह्नि भवः, भवे छन्दसीति यत्, तिरोहितः अह्न्यः तिरोअह्न्यः, प्रकृत्या अन्तःपादमिति प्रकृतिभावः ।। १० ।।

।। इति प्रथमाष्टक तृतीयाध्याये द्वात्रिंशो वर्गः ।।

# ऋक्संहिता पदपाठसहिता

## (सूक्तम् ४६)

१९ प्रस्कण्वः काण्वः । अश्विनौ । गायत्री ।

**एषो उषा अपूर्व्या व्युंच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥ १ ॥**

**एषो इतिं । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥ १ ॥**

**स्कन्द–** 'एषो आश्विनमुत्तमम्' (तु.वृदे.३,११२) । 'एषो उषाः' इत्येतदाश्विनं सूक्तम् अध्यायस्योत्तमम् । **एषो उषा अपूर्व्या** यतः पूर्वा अन्या नास्ति सा अपूर्वा । सर्वप्रथमेत्यर्थः । अपूर्वैवापूर्व्या । स्वार्थिको यत् प्रत्ययः । **वि उच्छति** तमांसि विवासयति । उदितेत्यर्थः । **प्रिया दिवः** अत्यन्तसाहचर्यात् दिवः प्रिया उषा इत्यभिधीयते । एतदुक्तं भवति– उदितेयमुषाः उषस उदयकालश्चाश्विनोः स्तुतिकालः । अतः स्तुषे व्यत्ययेनायमुत्तमस्य स्थाने मध्यमः । स्तुषे स्तौमि । **वाम्** युवाम् **हे अश्विनौ ! बृहत्** महत्, सुष्टुवित्यर्थः ॥ १ ॥

**वेङ्कटमाधव–** यतः पूर्वमन्यो न प्रादुर्भवति सा एषा **अपूर्व्या** प्रादुर्भवति । **दिवः** दुहितृत्वात् प्रिया । तत्राहं बृहता स्तोत्रेण वाम् अश्विनौ स्तौमि भवतोः काले ॥ १ ॥

**मुद्गल–** 'एषो उषाः' इति पञ्चदशर्चं तृतीयं सूक्तम् । प्रस्कण्व ऋषिः । गायत्री छन्दः । अश्विनौ देवते । एषो एषैव अस्माभिः परिदृश्यमाना **प्रिया** सर्वेषां प्रीतिहेतुः **अपूर्व्या** पूर्वेषु मध्यरात्रादि कालेषु विद्यमाना न भवति, किन्तु इदानीन्तनी **उषाः** उषोदेवता **दिवः** द्युलोकस्य सकाशात् आगत्य **वि उच्छति** तमो वर्जयति । **हे अश्विना!** अश्विनौ । **वाम्** युवाम् **बृहत्** प्रभूतं यथा भवति तथा **स्तुषे** स्तौमि ॥ १ ॥

**सायण–** 'एषो उषा' इति पञ्चदशर्चं तृतीयं सूक्तं प्रस्कण्वस्यार्षम् । इदमुत्तरं चाश्विनं गायत्रीच्छन्दस्कम् । अत्रानुक्रमणिका- 'एषो पञ्चोनाश्विनं तु गायत्रम्' इति । प्रातरनुवाके आश्विने क्रतौ गायत्रीछन्दस्याश्विनशस्त्रे चेदं सूक्तम् । अथाश्विन एषो उषाः' (आश्व.श्रौ. ४.१५) इति सूत्रितम् ।

**एषो** एषैवास्माभिः परिदृश्यमाना प्रिया सर्वेषां प्रीतिहेतुः **अपूर्व्या** पूर्व्येषु मध्यरात्रादिकालेषु

विद्यमाना न भवति, किंतु इदानींतनी **उषाः** उषोदेवता **दिवः** द्युलोकस्य सकाशादागत्य व्युच्छति । तमो वर्जयति । हे अश्विनौ **वां** युवां बृहत् प्रभूतं यथा भवति तथा **स्तुषे** स्तौमि । **स्तुषे** । 'टुञ् स्तुतौ' । 'तिङां तिङो भवन्ति' इति उत्तमैकवचनस्य मध्यमैकवचनादेशः । यद्वा । लेटि उत्तमैकवचने 'सिम्बहुलं लेटि' इति सिप् ।। १ ।।

**सिद्धाञ्जनम्–** **एषो** एषव इतो दृश्यमानास्माभिः **अपूर्व्या** इतः पूर्वमविद्यमाना इदानीमेव प्रादुर्भूता **दिवः** **प्रिया** द्युलोकस्य प्रीतिकरी **उषाः** **व्युच्छति** व्युष्टा, प्रभाता भवति । हे **अश्विना** अश्विनौ **वाम्** युवां **बृहत्** प्रभूतं यथा तथा स्तुषे स्तौमि ।। उषसि अश्विनोः रतिः प्रसिद्धा, दिवो दुहिता ह्यश्विनोर्भार्या ।। उच्छति-उच्छी विवासे, प्रभातप्रकाशार्थोऽयं धातुः, प्रायेण विपूर्वो वेदे प्रयुक्तः ।। १ ।।

## ऋक्संहिता पदपाठसहिता

**या द॒स्रा सिन्धु॑मातरा मनो॒तरा॑ रयी॒णाम् । धि॒या दे॒वा व॑सु॒विदा॑ ।। २ ।।**

**या । द॒स्रा । सिन्धु॑ऽमातरा । म॒नो॒तरा॑ । र॒यी॒णाम् । धि॒या । दे॒वा । व॒सु॒ऽविदा॑ ।।२।।**

**स्कन्द–** यौ कीदृशौ अत उच्यते । **या दस्रा** यौ दस्रौ दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा नासत्यनामाऽपरः, तथापि साहचर्यादन्यतरनाम्नाऽपि सर्वत्र उभयोर्व्यपदेशः । अथवा दसि दर्शनदंशनयोः । दर्शनीयौ । अथवा तसु उपक्षये, दसु च । शत्रूणामुपक्षपयितारौ । **सिन्धुमातरा** सिन्धवो नद्यः, तासा वृष्टिद्वारेण मातरौ निर्मातारौ । **मनोतरा** मन ज्ञाने । ज्ञातृतरौ । कस्य । **रयीणाम्** धनानाम् । अथवा मनोतराविति मन्मह इत्यस्य याञ्चाकर्मणो रूपम् (तु.निघ.३,१९) । याचितारौ हविर्लक्षणानां धनानाम् । अथवा याञ्चयाऽत्र पूर्वं दानं लक्ष्यते । दातृतरौ धनानामित्यर्थः । **धिया देवा वसुविदा** धियेत्येतत् वसुविदेत्येतेन सम्बध्यते । प्रज्ञया धनानां लब्धारौ । देवा देवौ दानादिगुणौ ।। २ ।।

**वेङ्कटमाधव–** यौ दर्शनीयौ नदीनां निर्मातारौ धनानाम् अनुमन्तारौ कर्मणा देवौ वसूनां लम्भयितारौ तौ स्तोमि ।। २ ।।

**मुद्गल–** **या देवा** यौ उभौ अश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुषे इति पूर्वत्रान्वयः ।

कीदृशौ । **दस्रा** दर्शनीयौ, सिन्धुमातरा समुद्रमातृकौ **रयीणाम्** धनानाम् **मनोतरा** मनसा तारयितारौ, **धिया** कर्मणा **वसुविदा** निवासस्थानस्य लम्भयितारौ ।। २ ।।

**सायण–** या देवा यावुभावश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुषे इति पूर्वत्रान्वयः। कीदृशौ । **दस्रा** दस्रौ दर्शनीयौ **सिन्धुमातरा** समुद्रमातृकौ । यद्यपि सूर्याचन्द्रमसावेव समुद्रजौ तथाप्यश्विनोः केषांचिन्मते तद्रूपत्वात् तथात्वम् । **रयीणां** धनानां **मनोतरा** मनसा तारयितारौ धिया कर्मणा वसुविदा निवासस्थानस्य लम्भयितारौ । मनोतरा । मनसा तरतः इति मनोतरौ । तरतेः अन्तर्भावितण्यर्थात् 'ऋदोरबित्यप्' इति अप् । पूर्वपदान्तस्य सकारस्य रुत्वे सति छान्दससुत्वम् । **रयीणाम्** । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **धिया** । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **वसुविदौ** । क्विप् चेति क्विप् ।

**सिद्धाञ्जनम्–** या देवा यावुभौ देवौ **दस्रा** कर्मनिष्पादकौ **सिन्धुमातरौ** समुद्रमातृकौ, अखण्डसत्त्वात् समुद्भूतौ हि क्रियादक्षविभवौ तो देवौ **रयीणाम्** धनानां **मनोतरा** मनसा तारयितारौ, मनोऽतीतानां उत्तमानां धनानां दिव्यसम्पद्रूपाणां मनोमयतां मनोगोचरतां च आपादयितारौ इत्यर्थः, तथाकर्तुं करणभूता काचिद्धीर्भवति, तदाह- **धिया** कीदृश्या? **वसुविदा** वसोर्मूलद्रव्यस्य सर्वसत्त्वस्य वेदित्र्या लम्भयित्र्या वा । तादृश्या धारणात्मिकया बुद्ध्या 'रयीणां' उक्तलक्षणानां मनोगोचरतां आपादयन्तौ अश्विनौ 'स्तुषे' इति पूर्वेण सम्बन्धः । अश्विना-वधिकृत्य प्राग्विचारितम्, विशेषतः प्रथमेऽनुवाके । मनोतरा-मनसा तरत इति मनोतरौ, अन्तर्भावितण्यर्थः, तरतेः अप्, पूर्वपदान्तस्य सकारस्य रुत्वे सति उत्वं छान्दसम् ।। २ ।।

## ऋक्संहिता पदपाठसहिता

**वच्यन्ते॑ वां ककु॒हासो॑ जू॒र्णाया॒मधि॑ वि॒ष्टपि॑ । यद् वां॒ रथो॑ वि॒भिष्पता॑त् ।।**

वच्यन्ते॑ । वा॒म् । क॒कु॒हासः॑ । जू॒र्णाया॑म् । अधि॑ । वि॒ष्टपि॑ । यत् । वा॒म् । रथः॑ । विऽभिः॑ । पता॑त् ।। ३ ।।

**स्कन्द– वच्यन्ते** वच्यतिर्गत्यर्थः । गच्छन्ति **वाम्** युवयोः स्वभूताः ककुहासः 'ककुहः' (निघ.३,३) इति महन्नाम । महान्तोऽश्वाः । **जूर्णायाम् अधि विष्टपि** आदिसृष्टावुत्पन्नत्वात् अत्यन्तचिरन्तनी द्यौः जूर्णे त्युच्यते । अधीत्युपरिभावे । विष्टपि इति दिवोऽभिधानम् । जीर्णायाः

दिव उपरि । कदा । उच्यते । **यत्** यदा **वाम्** युवयोः स्वभूतः **रथः विभिः** पक्षिसदृशैरश्वैः **पतात्** पतति ।। ३ ।।

**वेङ्कटमाधव–** उच्यन्ते युवयो स्तोत्राणि जीर्णायां रात्रौ, अपररात्रे । विष्टप् रात्रिः, विष्टम्भनात् । यस्मिन् काले युवयोः **रथः** अश्वैः पतति ।। ३ ।।

**मुद्गल–** हे अश्विनौ **वाम्** युवयोः सम्बन्धी **रथः जूर्णायाम्** नानाशास्त्रैः स्तुतायाम् **अधि विष्टपि** स्वर्गलोके **यत्** यदा **विभिः** अश्वैः **पतात्** पतति गच्छति तदानीम् **वाम्** युवयोः **कुकहासः** स्तुतयः **वच्यन्ते** अस्माभिरुच्यन्ते ।। ३ ।।

**सायण– हे अश्विनौ वां** युवयोः सम्बन्धी **रथो जूर्णायां** नानाशास्त्रैः स्तुतायाम् अधि विष्टपि स्वर्गलोके **यत्** यदा **विभिः** अश्वैः **पतात्** पतति गच्छति तदानीं **वां** युवयोः **ककुहासः** स्तुतयः **वच्यन्ते** । अस्माभिरुच्यन्ते । वच्यन्ते । ब्रवीतिर्यकि 'ब्रुवो वचिः' (पा.सू.२.४.५३) इति वच्यादेशः । 'वचिस्वपि' इत्यादिना सम्प्रसारणम् । 'संप्रसारणाच्च' इत्यत्र 'वा छन्दसि' इत्यनुवृत्तेः परपूर्वत्वस्य पाक्षिकत्वात् यणादेशः । प्रत्ययस्वरः । **ककुहासः** । 'ककुभं शृङ्गे विदुः प्रधाने च' इत्यभिधानात् प्राधान्याभिधायिना ककुप्शब्देन तत्प्रतिपादिकाः स्तुतयो लक्ष्यन्ते । हत्वं छान्दसम् । 'आज्जसेरसुगित्यसुक्' इति असुक् । **जूर्णायाम्** । 'जृष् वयोहानौ' । अत्र स्तुत्यर्थो धातूनामनेकार्थत्वात् । निष्ठायां श्युकः कितीतीट् इति इट्प्रतिषेधः । 'बहुलं छन्दसि' इति उत्वम् । 'हलि च' इति दीर्घः । 'रदाभ्याम्' (पा.सू.८.२.४२) इति निष्ठानत्वम् । प्रत्ययस्वरः । **विभिः** । वी गत्यादौ । वियन्ति गच्छन्तीति वयः अश्वाः । औणादिको डिप्रत्ययः । **पतात्** । 'पत्लृ गतौ' । लेट्याडागमः । 'इतश्च लोपः' इति इकारलोपः ।।

**सिद्धाञ्जनम्–** हे अश्विनौ, **वाम्** युवयोः **रथः जूर्णायाम्** स्तुतायां तत्त्ववेदिभिर्ऋषिभिरिति शेषः, **अधिविष्टपि** स्वर्लोके **यत्** यदा **विभिः** अश्वैः **पतात्** पतति गच्छति, तदा **वाम्** युवयोः **ककुहासः** ककुभः महिमानः **वच्यन्ते** उच्यन्ते उक्ताः स्तुताः भवन्ति । स्तुत्ये द्युलोके यदा अश्विनोः रथो गच्छति तदैव अश्विनोत्कर्षाः स्पष्टाः लक्ष्यन्ते, ततः स्तुता भवन्ति । न चेत् स्तोत्रस्य वैय्यर्थ्यं, स्तोत्रस्य याथार्थ्यं तु अश्विरथस्य विष्टपादूर्ध्वयाने दृश्यमानेषु अश्विनोरुत्कर्षेषु उक्तं भवति ।।

वच्यन्ते- वचेः संप्रसारणाभावः छन्दसि विकल्पितः । ककुहास-ककुहः महन्नाम, श्रैष्ठ्ये शृङ्गे उत्कर्षे वा प्रयुक्तो वेदे । ककुभं शृङ्गे विदुरिति सायणः, (अत्र लक्षणया स्तुतय इति व्याचष्टे) भस्य हः छान्दसः । जूर्णायाम्-स्तुत्यर्थात् जरतेः जूर्यतेर्वा 'अग्ने रेभो न जरत ऋषूणां जूर्णिः' (१.१२७.१०) इत्यादौ प्रयोगः स्पष्टः । विभिः-विशब्दो वेदे पक्षिषु शरेषु अश्वेषु मरुत्सु च वर्तते, वियन्ति गच्छन्तीति वयः । पतात्-लेटि आडागमः ॥ ३ ॥

## ऋक्संहिता पदपाठसहिता

**ह॒विषा॑ जा॒रो अ॒पां पिप॑र्ति॒ पपु॑रिर्नरा । पि॒ता कु॒ट॑स्य च॒र्ष॒णिः ॥ ४ ॥**

**ह॒विषा॑ । जा॒रः । अ॒पाम् । पिप॑र्ति । पपु॑रिः । न॒रा॒ । पि॒ता । कु॒ट॑स्य । च॒र्ष॒णिः ॥**

**स्कन्द– हविषा** सोमलक्षणेन । **जारः** जरयिता । कस्य । **अपाम्** । कोऽसौ । अग्निः । कुत एतत् । हविषाऽश्विनोः पूरणवचनादपां च जरयितृत्वात् इह हविषा **पिपर्ति पपुरिः** इति हविषाऽश्विनोः पूरणमुच्यते । होतृत्वाच्च हविषां देवतापूरणमग्नेः कर्म, नान्यस्य । अपाञ्च जरयिताऽग्निः । कथम् । जाठरावस्थस्तावदशितपीतं जरयंस्तदन्तर्गता अपो जरयति बाह्योऽपि सन्तापयन्नपो जरयति अतोऽग्निर्भवत्यपां जारः । अथवा अपामित्येतत् हविषेत्येतेन सम्बध्यते । वसतीवर्यैकधनालक्षणानामपां सम्बन्धिना सोमलक्षणेन । वसतीवर्यैकथनामिश्रेण सोमेनेत्यर्थः । जारः आहारस्य जरयिता अग्निः पिपर्ति । पृ पालनपूरणयोः । पूरयति । कम् । प्रकरणसामर्थ्यात् युवामश्विनौ । बहुसोमं युवाभ्यामश्विभ्यां ददातीत्यर्थः । कीदृशोऽग्निः । उच्यते । पपुरिः पूरयिता सोमेन देवानाम् होतृत्वात् हि सर्वदेवानामग्निः सोमेन पूरयिता । हे नरा मनुष्याकारौ । अश्विनौ **पिता** पालयिता यज्ञस्य कृत्स्नस्य वा जगतः । **कुटस्य चर्षणिः** कुट कौटिल्ये इत्यस्य कुटः यत्तविभ्रंश उच्यते । स हि श्रुतिविहितात् ऋजोर्मार्गादपेतश्च । तस्य चर्षणि द्रष्टाः । अथवा कुटिलचित्तः कुट शठः पुमान्, तस्य द्रष्टा । भक्ताभक्तयोः पुंसोर्विशेषज्ञ इत्यर्थः । अथवा कुटशब्दः कृतशब्दपर्यायः । कृतस्य पुण्यस्य पापस्य च द्रष्टेत्यर्थः । यास्कस्तु 'जारो अपाम्' इत्यादिभिः आदित्यः उच्यते इति मन्यते । एवं ह्याह– 'पिता कृतस्य' कर्मणश्चायिताऽऽदित्य' (या.५,५४) इति । तदनुपपन्नम् । हविषा पिपर्ति पपुरिरिति सोमलक्षणेन हविषाऽश्विपूरण-स्यादित्ये असम्भवात् । होतृत्वाद्धि हविषा देवतापूरणमग्नेः कर्म, नाऽऽदित्यस्य । स्यादेतत् ।

'हविः' (निघ.१.१२) इत्युदकनाम । हविषा उदकेन जारोऽपाम् आदित्यः पिपर्तीति । तन्नोपपद्यते । वृष्टिकर्मणो ह्यादित्ये असम्भवात् । रसानुप्रदानान्मध्यमस्य अनाश्विनत्वप्रसङ्गाच्च । हविषोदकेन अपां जार इत्यादिगुणयुक्तः आदित्यः पिपर्तीत्यादित्यव्यापारप्रधानत्वादस्या ऋचः सत्यपि नरेत्यश्विनोः सम्बोधने 'अथापि प्रत्यक्षकृता हि स्तोतारोः भवन्ति परोक्षकृतानि स्तोतव्यानि' (या.७२) इत्येवमादित्यदेवतेयमृक् प्राप्नोति, नाश्विनी । आश्विनं चैतत् सूक्तम् । न च यथाऽग्न्यभिधानपक्षे सोमलक्षणेन हविषा अग्निः हे नरौ युवां पूरयति इत्येवमश्विनोः प्राधान्यश्रवणादाश्विनत्वम् एवमादित्याभिधाने सम्भवति, उदकेनाश्विनोरपूर्यमाणत्वात् । आदित्यो हि मध्यमं वोदकेन पूरयेत् भूमिं वा, नाश्विनौ । तस्मात् यथाव्याख्यातमपां जारः इत्यादिभिरग्निरेव उच्यते नादित्य इति । अपोह्यमेतद् यास्कवचनम् ॥ ४ ॥

**वेङ्कटमाधव– हविषा अपाम्** जरयिता, तेजसा द्यावापृथिवी नेतारौ पूरयति पूरयिता कृतस्य कर्मणः पालयिता द्रष्टाऽऽदित्यः, तत्र वां स्तौमीति ॥ ४ ॥

**मुद्गल–** हे नरा । अश्विनौ दस्रौ । **अपां जार** स्वकीयतापेनोदकानां जरयिता सूर्यः **हविषा** अस्मद्दत्तेन **पिपर्ति** देवान् पूरयति । उदिते सूर्ये हविष्प्रदानात् सूर्यस्य पूरकत्वं द्रष्टव्यम् । अतः सूर्योदयकाले युवाभ्याम् आगन्तव्यमित्यर्थः । कीदृशो जारः । पपुरि उक्तक्रमेण पूरणश्भाव पिता पालकः कुटस्य चर्षणि कर्मणो द्रष्टा ॥ ४ ॥

**सायण–** हे अश्विनौ देवौ **अपां जारः** स्वकीयतापेनोदकानां जरयिता सूर्यः हविषास्मद्दत्तेन **पिपर्ति** देवान् पूरयति । उदिते सूर्ये हविष्प्रदानात् सूर्यस्य पूरकत्वं द्रष्टव्यम् । अतः सूर्योदयकाले युवाभ्यामागन्तव्यमित्यर्थः । कीदृशो जारः । पपुरुक्तक्रमेण पूरणस्वभावः **पिता** पालकः **कुटस्य चर्षणिः** कर्मणो द्रष्टा । अत्र निरुक्तं । हविषापां जरयिता **पिपर्ति** पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः (निरु.५.२४) इति । **जारः** । जरयतीति जारः आदित्यः । 'दारजारी कर्तरि णिलुक् च' (पा.सू.३.३.२०.४) इति घञन्तो निपातितः । 'कर्षात्वतः' इत्यन्तोदात्तत्वम् । **अपाम्** । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **पिपर्ति** । 'पॄ पालनपूरणयोः' । तिपि जुहोत्यादित्वात् शपः श्लुः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । 'अनुदात्ते च' इति अभ्यस्तस्याद्युदात्तत्वम् । पपुरिः । 'आदृगमहनेति

किन्प्रत्ययः' इति किन्प्रत्ययः । लिङ्गवद्भावात् कित्वे सिद्धेऽपि पुनः कित्करणसामर्थ्यादृच्छत्यृताम् (पा.सू.७.४.११) इति गुणाभावः । उदोष्ठ्यपूर्वस्येत्युत्वम् । नित्वादाद्युदात्तत्वम् ।। ४ ।।

**सिद्धाञ्जनम्–** हे **नरा** नरौ देवौ अश्विनौ, **अपाम्** विश्वसर्जनधारणादिसमर्थानां अपछब्दलक्षितानां शक्तीनां **जारः** गूढोपभोक्ता, गुप्तरतिकामः अग्निः **हविषा** यजमानदत्तेन हन्यते पिपर्ति पूरयति देवानिति शेषः । अत्र जारो जरयिता जलानां आदित्य इति सायणः । हविषा पूरणं अग्नेः कृत्यं, न तु सूर्यस्य । जारी रहोरत इति युक्तः, 'जारः कनीनां' 'उषो न जारः' इत्यादौ युक्तिर्द्रष्टव्या । कीदृशोऽसौ अपां जारः ? **पपुरिः** उक्तप्रकारेण पूरणशीलः, **पिता** पालकः **कुटस्य** कृतस्य कर्मणः **चर्षणिः** द्रष्टा । कुटस्येति सकृदेव प्रयोगः ऋक्संहितायाम् । यास्कमनमृत्य सायणः 'कृतस्य' इति व्याचष्टे । कुटः कुटी इव वासस्थाने गृहे भवति । तर्हि गृहमपि कृतमेव भवति, एवं मङ्गच्छत कुटस्य पिता गृहस्य पालकः अग्नि र्गृहपतिरिति, चर्षणिर्द्रष्टेति अन्यद्विशेषणं बोध्यम् । पिपर्ति- पृ पूरणे, जुहोत्यादिः । पपुरिः-पृधातोः किन् ।।

## ऋक्संहिता पदपाठसहिता

**आदारो वां मतीनां नासत्या मतवचसा । पातं सोमस्य धृष्णुया ।। ५ ।।**
**आऽदारः । वाम् । मतीनाम् । नासत्या । मतऽवचसा । पातम् । सोमस्य । धृष्णुऽया ।।**

**स्कन्द–** किमेतावन्मात्रगुण एवाग्निः । न, इत्युच्यते । किं तर्हि । **आदारो वाम्** । आदार इति ण्यन्तस्य आद्रितय रूपम् । वाम् **मतीनाम्** इति मन्यतेरर्चतिकर्मणः । मतयः स्तुतय इहोच्यन्ते । षष्ठी च कर्तृकर्मणो कृति (पा.२.३,६५) इत्येवं कर्मणि द्रष्टव्या । प्रकृत्यर्थस्य चेदमादरणस्य कर्म ण्यन्तस्य । ओदनपाचयितेति यथा । आदरयिता युवयोः स्तुतीनाम् । युष्मत्स्तुतीराद्रि यमाणानामृत्विजां प्रयोजक इत्यर्थः । अग्निर्हि दैव्यो होता तदधिष्ठितास्तु मानुषाः स्तुवन्तीत्यग्नेः स्तुतीराद्रियमाणान् ऋत्विजः प्रति प्रयोजकत्वम् । अथवा आदार इति त्वण्यन्तस्यैव चाद्रियते रूपम् । वां मतीनामित्यपि मतयो बुद्धयः । आदरिता युवयोर्बुद्धीनाम् । अत्यन्तं युष्मत्परिचर्या परत्वात् यत् युवां मनसा चिन्तयथः तस्याप्यादरितेत्यर्थः । हे नासत्या नासत्यनामानौ । अथवा सत्यावेव नासत्यौ । द्वौ प्रतिषेधौ प्रकृतिं गमयतः । सत्यावेव । **मतवचसा** । अभिमतवचनेन एवंरूपोऽग्निरावां सोमेन पूरयतीत्येतत् ज्ञात्वा **पातम्**

पिबतम् **सोमस्य** सोमं सोमस्य वैकदेशं स्वांशलक्षणम् । **धृष्णुया** प्रथमाया अथ यादेशः । क्रियाविशेषणञ्चैतद् द्रष्टव्यम् । धृष्णु धृष्टं प्रगल्भम् । निःशङ्कौ सर्वलोकप्रकाशं पिबतमित्यर्थः ।।

**वेङ्कटमाधव–** तीव्रत्वादादारक युवयोः बुद्धीनां सोमः नासत्यौ प्रियस्तोत्रौ, तं सोमं पिबतं मनसो धर्षणम् ।। ५ ।।

**मुद्गल–** हे **मतवचसा!** अभिमतस्तोत्रौ **नासत्या** अश्विनौ **वाम्** युवयोः **मतीनाम्** बुद्धीनाम् **आदारः** प्रेरको यः सोमोऽस्ति, **सोमस्य** तं सोमम् **पातम्** युवा पिबतम् । कीदृशं सोमम् । **धृष्णुया** धर्षणशीलम् । मदकरत्वेन तीव्रमित्यर्थः ।। ५ ।।

**सायण–** हे **मतवचसा** अभिमतस्तोत्रौ नासत्याश्विनौ **वां** युवयोः मतीनां बुद्धीनाम् आदारः प्रेरको यः सोमोऽस्ति सोमस्य तं सोमं पातम् । युवां पिबतम् । कीदृशं सीमम् । **धृष्णुया** धर्षणशीलम् । मदकरत्वेन तीव्रमित्यर्थः । **आदारः** । 'दृङ् आदरे' । आदारयतीति आदारः । 'दारजारौ कर्तरि णिलुक्च' इति धन्प्रत्ययः । थाथादिना उत्तरपदान्तोदात्तत्वम् । **मतीनाम्** । 'नामन्यतरस्याम्' इति नाम उदात्तत्वम् । **मतवचसा** । मतमभिमनं स्तोत्ररूपं वचो ययोस्तौ । 'सुपां सुलुक्' इति विभक्तेः आकारः । **पातम्** । 'पा पाने' । 'बहुलं छन्दसि' इति शपो लुकि सति 'पाघ्रा' इत्यादिना पिबादेशो न भवति । **सोमस्य** । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । धृष्णुया । 'सुपां सुलुगिति' इति विभक्तेः यात्रादेशः ।।

**सिद्धाञ्जनम्–** हे **मतवचसा** मतं अभिमतं वचः स्तोत्रात्मकं ययोस्तौ, **नासत्या** नासत्यौ अश्विनौ, **वाम्** युवयोः **मतीनाम्** बुद्धीनां **आदारः** आदरप्रदः उत्तेजकः यः सोमो भवति, तस्य **सोमस्य पातम्** तं सोमं पिबतम् । कीदृशम् ? **घृष्णया** घर्षणशीलं मदकरत्वात् तीव्रम् । आदारः-दृङ् आदरे, आदरयतीत्यादारः, दारजारौ कर्तरि, णिलुक्, घञ् । घृष्णुया-विभक्ते-र्याजादेशः ।। ५ ।।

।। इति **प्रथमाष्टके** तृतीयाध्याये त्रयस्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**या नः॑ पीप॑रदश्विना ज्योति॑ष्मती तम॑स्तिरः । ताम॒स्मे रा॑साथा॒मिष॑म् ॥६॥**
**या । न॒ः । पीप॑रत् । अ॒श्वि॒ना । ज्योति॑ष्मती । तम॑ः । ति॒रः । ताम् । अ॒स्मे इति॑ । रा॒सा॒था॒म् । इष॑म् ॥ ६ ॥**

**स्कन्द– या नः** अस्माकम् **पीपरत्** पॄ पालनपूरणयोः इत्यस्यैतत् ण्यन्तस्य रूपम् । पालयति । रक्षतीत्यर्थः । **हे अश्विनौ । ज्योतिष्मती** ज्योतिषां सारवती सर्वलोकप्रकाशा वा । किं पीपरत् । उच्यते **तमः तिरः** तिरः सत इति प्राप्तस्य नामनी (तु.या.३,२०) । प्राप्तं मानसं तमः । येनानेन पुत्रदारपोषणाशक्तिप्रतिघातजेन मानसेन व्याप्ताः स्म, तस्यापनयने समर्थेत्यर्थः । अथवा न इति द्वितीया । या अस्मान् पीपरत् पूरयति । तर्पयतीत्यर्थः । ज्योतिष्मती च तमस्तिरः । कर्मोपसर्गश्रुतेरत्र योग्यक्रियाध्याहारः । तमस्तिरस्करोति । तिरस्कारेण चात्र प्रकाशो लक्ष्यते । सर्वलोकप्रकाशा भवतीत्यर्थः । **ताम् अस्मे रासाथाम्** इषम् रासाथां दत्तम् इषमन्नम् ॥ ६ ॥

**वेङ्कटमाधव–** यदन्नम् अस्मान् उज्ज्वलम् अश्विनौ । दारिद्र्यलक्षणात् तमसः अन्यत्र पारयति तत् अन्नम् अस्मभ्यं दत्तम् ॥ ६ ॥

**मुद्गल– हे अश्विना!** अश्विनौ । **ज्योतिष्मती** रसवीर्यादिरूपज्योतिर्युक्ता **या इट्** अन्नम् अस्मान् **पीपरत्** पारयेत् तृप्तिं प्रापयेत् । किं कृत्वा । **तमः** दारिद्र्यरूपम् अन्धकारम् **तिरः** अन्तर्हितं विनष्टं कृत्वा । **ताम् इषम्** तादृशमन्नम् **अस्मे** अस्मभ्यम् **रासाथाम्** युवां दत्तम् ॥

**सायण–** हे **अश्विना ज्योतिष्मती** रसवीर्यादिरूपज्योतिर्युक्ता येऽन्नं **नो** अस्मान् **पीपरत्** पारयेत् तृप्तिं प्रापयेत् । किं कृत्वा । तमः दारिद्र्यरूपमन्धकारं तिरोऽन्तर्हितं विनष्टं कृत्वा । **ताम्** इषं तादृशमन्नम् **अस्मे** अस्मभ्यं रासाथां । युवां दत्तम् । **पीपरत्** । 'पॄपालनपूरणयोः । ण्यन्तात् लुङि चङि णिलोपः । उपधाह्रस्वत्वद्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः । 'बहुलं छन्दस्यमाङ्योगेऽपि' इति अडभावः । 'चङ्यन्यतरस्याम्' (पा.सू.६.१.२१८) इति उपोत्तमस्य धात्वकारस्योदात्तत्वे प्राप्ते व्यत्ययेन अभ्यासस्योदात्तत्वम् । 'यद्वृत्तान्नित्यं इति निघातप्रतिषेधः । **अस्मे** । 'सुपां सुलुक्' इति चतुर्थीबहुवचनस्य शे आदेशः । **रासाथाम्** । 'रा दाने' । छान्दसे

प्रार्थनायां लुङि व्यत्ययेनात्मनेपदम् । च्लेः सिच् । 'एकाचः' इति इट्प्रतिषेधः । पूर्ववत् अडभावः । 'तिङ्ङतिङः' इति निघातः ।। ६ ।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ, **ज्योतिष्मती** सारसम्पन्नसत्यात्मकज्योतिर्युक्ता **या** इट् एषणा **तमः** अन्धकारं **तिरः** अन्तर्हितं कृत्वा **नः** अस्मान् **पीपरत्** पारयेत् गन्तव्यं प्रापयेदित्यर्थः, **ताम् इषम्** एषणात्मिकां प्रेरणाशक्तिं **अस्मे** अस्मभ्यं **रासाथाम्** युवां दत्तम् । अत्र 'इषं' अन्नमिति सायणः, तदनुसारेण 'तमः' दारिद्र्यरूपं अन्धकारं इति व्याख्यातव्यमनिवार्यमभवत् । अस्माकं तु, तमः प्रकाशप्रतिद्वन्द्वि, तत् तिरस्कृत्य गन्तुमावश्यकी प्रेरणाशक्तिर्ज्योतिष्मती, सा अश्विभ्यां लब्धव्या । पीपरदादयो गताः ।। ६ ।।

## ऋक्संहिता पदपाठसहिता

**आ नौ नावा मतीनां यातं पाराय गन्तवे । युञ्जाथामश्विना रथम् ।। ७ ।।**

**आ । नः । नावा । मतीनाम् । यातम् । पाराय । गन्तवे । युञ्जाथाम् । अश्विना । रथम् ।। ७ ।।**

**स्कन्द– नः** अस्मान् **नावा आ यातम्** । किमर्थम् । **मतीनाम् पाराय गन्तवे** पारमन्तम् । गत्यर्थ कर्मणि (पा.२,३,१२) इत्येवमेषा कर्मणि चतुर्थी । अश्विनावागमिष्यतः, तावागतौ यक्ष्यामहे, ताविष्टौ कामान् नः सम्पादयिष्यतः– इत्येवमादिकामानामभिलाषलक्षणानामस्मन्मतीनां पारमन्तं गन्तुम् । युष्मदागमनसम्बद्धानस्मदभिलाषान् फलप्राप्तिपर्यन्तान् कर्तुमित्यर्थः । फलप्राप्त्यन्ता हि सर्वाभिलाषाः । किञ्च अस्मान् प्रत्यागन्तुम् **युञ्जाथाम्** हे अश्विनौ । **रथम्** । यत्र नावाऽऽगन्तव्यं जले तत्र नावा आयातम्, यत्र रथेन **स्थले** तत्र रथेनत्यर्थः ।। ७ ।।

**वेङ्कटमाधव– आ यातम्** अस्माकं भवतोः **नावा** स्तोत्राणां पारं गन्तुम् । जलमुत्तीर्य अश्विनौ आगच्छतः तत ऊर्ध्वं गमनार्थम् रथं च **युञ्जाथाम्** इति ।। ७ ।।

**मुद्गल–** हे **अश्विना** । अश्विनौ । **मतीनाम्** स्तुतीनाम् **पाराय गन्तवे** पारं गन्तुम् **नावा** नौरूपेण गमनसाधनेन **नः** अस्मान् प्रति **आ यातम्** समुद्रमध्यादागच्छतम् । भूमावागन्तुम् **रथम्** भवदीयम् **युञ्जाथाम्** साश्वं कुरुतम् ।। ७ ।।

**सायण–** हे **अश्विना मतीनां** स्तुतीनां **पाराय गन्तवे** पारं गन्तुं **नावा** नौरूपेण गमनसाधनेन **नः** अस्मान् प्रति **आ यातं** समुद्रमध्यादागच्छतम् । भूनावागन्तुं **रथं** भवदीयं **युञ्जाथां** साश्वं कुरुतम् । **नावा** । 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । **गन्तवे** । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वम् । **युञ्जाथाम्** । 'युजिर् योगे' । लोटि आथामि रुधादित्वात् श्नम् । 'श्नसोरल्लोपः' इति अकारलोपः । प्रत्ययस्वरः ।। ७ ।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ, **मतीनाम्** मनोमयीनां धीवृत्तीनां **पाराय गन्तवे** मनोमयं प्रपञ्चमतीत्य वर्तमानं पारं गन्तुं **नावा** नौरूपेण यानसाधनेन **नः** अस्मदर्थं **आयातम्** आगच्छतम् । अश्विनौ सिन्धुमातरौ ह्युक्तौ, तद्युक्तं नौरूपं यात्रासाधनम् । **रथम्** भवदीयं **युञ्जाथाम्** अश्वयुक्तं कुरुताम् ।। ७ ।।

## ऋक्संहिता पदपाठसहिता

**अरित्रं वां दिवस्पृथु तीर्थे सिन्धूनां रथः । धिया युयुज्र इन्दवः ।। ८ ।।**

**अरित्रम् । वाम् । दिवः । पृथु । तीर्थे । सिन्धूनाम् । रथः । धिया । युयुज्रे । इन्दवः ।।**

**स्कन्द–** **अरित्रम्** अर्तिर्गत्यर्थः । गच्छति येन नौः तत् अरित्रम् । अपल्लपक इत्यपभ्रंशेन यन्नाविकानां प्रसिद्धं तत् । **वाम्** युवयोः स्वभूतम् । **दिवः** अपि सकाशात् **पृथु** विस्तीर्णतरम् । **तीर्थे** उत्तरणप्रदशे **सिन्धूनाम्** नदीनाम् **रथः** जले स्थले च गमनसाधन युवयोरस्तीत्यर्थः । **धिया** 'धीः (निघ.२,१) इति कर्मनाम । अभिषवादिसंस्कारकर्मणा । **युयुज्रे** युक्ताः । **इन्दवः** सोमाः । अभिषवादिभिः संस्कारैः संस्कृता इत्यर्थः । एतत् ज्ञात्वा गमनसाधनानां गमन-प्रयोजनस्य पिपासितस्य सोमस्य च विद्यमानत्वात् आगच्छतमित्यर्थः ।। ८ ।।

**वेङ्कटमाधव–** समुद्रगमनसाधनं जलपात्रम् **वाम्** **दिवः** अपि **पृथु** भवति । अथ जलानाम् उत्तरणदेशे रथ उपतिष्ठति । कर्मणा नानाविधेन यज्ञे सोमाश्च भवद्भ्यां युज्यन्ते ।। ८ ।।

**मुद्गल–** हे अश्विनौ **वाम्** युवयोः **दिवः पृथु** द्युलोकादपि विस्तीर्णम् **अरित्रम्** गमनसाधनं नौरुपम् **सिन्धूनाम्** समुद्राणाम् तीर्थे अवतरणप्रदेशे विद्यत इति शेषः । रथः च भूमौ गन्तुं विद्यते । **इन्दवः** सोमाः **धिया** भवद्विषयेण कर्मणा **युयुज्रे** युक्ता बभूवुः ।। ८ ।।

**सायण–** हे अश्विनौ **वां** युवयोः **दिवस्पृथु** द्युलोकादपि विस्तीर्णम् **अरित्रं** गमनसाधनं नौरूपं **सिन्धूनां** समुद्राणां **तीर्थे** अवतरणप्रदेशे विद्यते इति शेषः । **रथः** च भूमौ गन्तुं विद्यते । **इन्दवः** सोमाः **धिया** भवद्विषयेण कर्मणा **युयुज्रे** युक्ता बभूवुः । **अरित्रम्** । 'ऋगतो' । 'अर्तिलूधूसूखनसहचर इत्रः' (पा.सू.३.२.१८४) इति करणे इत्रप्रत्ययः । प्रत्ययस्वरः । **दिवः** । 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । **तीर्थे** । 'तॄ प्लवनतरणयोः' । पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ.सू.२.१६४) इति थक् । 'ऋत इद्धातोः' इति इत्वम् । 'हलि च' इति दीर्घः । **युयुज्रे** । लिटि 'इरयो रे' (पा.सू.६.४.७६) इति इरेचो रेआदेशः ॥ ८ ॥

**सिद्धाञ्जनम्–** हे अश्विनौ, **वाम्** युवयोः **अरित्रम्** नौरूपं साधनं **दिवः** धुलोकादपि **पृथु** विस्तीर्णं भवति । किञ्च **रथः** भवदीयः **सिन्धूनां** समुद्राणां **तीर्थे** तीरे अवतरणप्रदेशे विद्यते । **इन्दवः** सोमाः **धिया** धारणसमर्थया बुद्ध्या **युयुज्रे** युक्ता भवन्ति । अरित्रम्-ऋ गतौ, अर्तेः इत्रप्रत्ययः । तीर्थे तरतेः थक् । युयुज्रे लडर्थे लिट्, एचो रे आदेशः ॥ ८ ॥

## ऋक्संहिता पदपाठसहिता

**दिवस्कण्वास इन्दवो वसु सिन्धूनां पदे । स्वं वव्रिं कुह धित्सथः ॥ ९ ॥**
**दिवः । कण्वासः । इन्दवः । वसु । सिन्धूनाम् । पदे । स्वम् । वव्रिम् । कुह । धित्सथः ॥**

**स्कन्द–** दिव इत्यपादानपञ्चमोनिर्देशाद् योग्यक्रियाध्याहारः । दिव आगतयोरश्विनो हे कण्वास । मत्पितुकण्वस्यापत्यभूता मत्पुप्रादय । अथवा 'कण्व' (निघ.३,१५) इति मेधाविनाम् । मेधाविन । ऋत्विज । मत्पुत्रादय वा । इन्दव वसु सोमधनम् । धनतया चात्र तद्गत स्वामित्व प्रतिपाद्यते । दिव आगतावश्विनौ सोमाना स्वामिनौ भविष्यतः । दिव आगतान्यामश्विभ्या वय सोम दास्याम इत्यर्थः । क । सिन्धूनाम् पदे सिन्धवोऽत्र स्यन्दनादाहुतय उच्यन्ते, तासा पद स्थान यज्ञ तत्र । सर्वाहुतीना स्थानभूते यज्ञे इत्यर्थः । अथवा सिन्धवोऽत्र आप उच्यन्ते । 'नाभावस्य प्रशस्तिभिर्य सिन्धूनामुपोदये' (ऋ.८,४१,२) इति यथा । तासा पदे अन्तरिक्षेः । पञ्चम्यर्थे सप्तमी । अपा स्थानादन्तरिक्षात् दिवो वा आगतयोरित्यर्थः । परपाद प्रत्यक्षकृतो भिन्न वाक्यम् । हे अश्विनौ स्वम् आत्मीयम् वव्रिम् रूपम् कुह क स्थाने धित्सथ धारयितुमिच्छथः । का स्वशरीरेण वर्तेथे येनास्मद्यज्ञ नागच्छय इत्यर्थः ॥ ९ ॥

**वेङ्कटमाधव–** दिव पतन्ति द्वे कण्वा दीप्ता रश्मय । वासकमादित्याख्य तेजश्च अपा स्थाने प्रादुर्भवति । तत्र युवाम् अश्विनौ स्वम् रूप कस्मिन् निधातुमिच्छयः ।। ९ ।।

**मुद्गल–** हे कण्वास कण्वपुत्रा अश्विनाधित्य पृच्छतेति शेषः । कथमिति तदुच्यते । दिव द्युलोक सकाशात् इन्दवः सूर्यरश्मय प्रादुर्भूता । सिन्धूनाम् अपाम् वृष्टिरूपाणा स्वन्दनस्वभावानाम् पदे स्थाने अन्तरिक्षे वसु अस्मदादिनिवासहेतुभूतम् उषःकालीन ज्योतिराविर्भूतमिति शेषः। अस्मिन्नवसरे युवाम् स्वम् वव्रिम् स्वकीय रूपम् कुह् धित्सथ कुत्र स्थापयितुमिच्छथः । अत्रागत्य प्रदर्शयतमिति तात्पर्यार्थः ।। ९ ।।

**सायण–** है **कण्वासः** कण्वपुत्राः । यद्वा । मेधाविन ऋत्विजः । अश्विनावित्थं पृच्छतेति शेषः । कथमिति तदुच्यते । **दिवः** लोकसकाशात् **इन्दवः** सूर्यरश्मयः प्रादुर्भूताः । **सिन्धूनाम्** अपां वृष्टिरूपाणां स्यन्दनस्वभावानां **पदे** स्थानेऽन्तरिक्षे **वसु** अस्मदादिनिवासहेतुभूतमुषःकालीनं ज्योतिराविर्भूतमिति शेषः । अस्मिन्नवसरे युवां **स्वं वव्रिं** स्वकीयं रूपं **कुह धित्सथः** । कुत्र स्थापयितुमिच्छथः । अत्रागत्य प्रदर्शनीयमिति तात्पर्यार्थः । **कुह** । 'वा ह च छन्दसि' (पा.सू. ५.३.१३) इति किंशब्दात् सप्तम्यर्थे हप्रत्ययः । 'कु तिहोः' (पा.सू.७.२.१०४) इति किमः कुः । **धित्सथः** । 'डुधाञ् धारणपोषणयोः' । 'सनि मीमाधुरभलभशकपतपदामच इस्' (पा.सू. ७.४.५४) इति आकारस्य इसादेशः । 'अत्र लोपोऽभ्यासस्य' (पा.मु.७.४.५८) इति अभ्यासलोपः । 'सः स्यार्धधातुके' (पा.सू.७.४.४९) इति सकारस्य तकारः ।। ९ ।।

**सिद्धाञ्जनम्–** हे **कण्वासः** कण्वाः ऋषयः मेधाविनो वा, 'अश्विनावित्थं पृच्छतेति शेषः इति सायणः । यद्यपि चिन्त्यमेवेदं, केनाप्यध्याहारेण विना दुर्घटमेव तात्पर्यमिति नव्याः । मैवम्, पुरस्तात् ब्रूमः । **इन्दवः** सोमाः **दिवः** द्युलोकात् प्रादुर्भूताः विद्यन्ते, **वसु** सत्त्वात्मकं धनं **सिन्धूनाम्** समुद्राणां **पदे** स्थाने विद्यते । हे अश्विनौ युवां **स्वम्** स्वीयं **वव्रिम्** रूपं **कुह** कुत्र **धित्सथः** धातुं स्थापयितुमिच्छथः ? द्युस्थानः सोमः प्रसिद्धः । उच्चा ते जातमन्धसः दिवि सत्' । (६.६१.१०) इत्यादयो मन्त्रवर्णाः प्रमाणम् । अखण्डसत्त्वसमृद्धः समुद्रः प्रथितः, तत्र वसु विद्यते । सिन्धुमातरौ अश्विनौ वसुविदौ, सोमस्य पातारौ च भवतः, अतः पृच्छति स्तोता यजमानः 'हे अश्विनौ युवां किं वसुस्थाने समुद्रे उत सोमजन्मस्थाने दिवि वा स्वीयं

रूपं शरीरं आविष्कृत्य प्रतिष्ठापययः इत्यत्र, कण्वास इति अश्विनोरेव सम्बोधनं गृहीतं चेत् क्लेशः शिथिलितः स्यात्, अध्याहारोप्यनावश्यकः ।

कथमेवं सम्बोधनमश्विनोरुपपद्यते? ऋषयः स्वनाम्ना देवतामाह्वयन्ति, तत्र युक्तिश्चास्माभिः प्राक् प्रदर्शिता । पूजायां बहुवचनं कण्वास इति । कण्वासः कण्वपुत्राः । प्रस्कण्व ऋषिरपि कण्वपुत्र इति स्मार्यम् । इयमृषेर्विवक्षासिन्धुपदे युवयोरुद्धवस्थाने वसु सिद्धमेव भवति, दिवि सोमश्च भवदर्थं सिद्धो वर्तते । शीघ्रं प्रयातं, युवयोः रूपं च प्रकट्यताम् इति । पूर्वं अरित्रं सिन्धुपदे वर्तते प्रयाणायेत्युक्तम्, उत्तरासु ऋक्षु सोमस्य पानं उषस आगमश्च कीर्त्यते, तस्मादिदं तात्पर्यं सङ्गच्छते । वव्रिम्-वृञ् वरणे, आवरणार्थे वव्रिः, रूपमप्यावरकं भवति रूपिणः, तस्य प्रतिष्ठापकं आविष्कर्तुं च भवति ॥ ९ ॥

## ऋक्संहिता पदपाठसहिता

**अभू॑दु भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ । व्य॑ख्यज्जि॒ह्वयाऽसि॑तः ॥ १० ॥**

**अभू॑त् । ऊँ इति॑ । भाः । ऊँ इति॑ । अं॒शवे॑ । हिर॑ण्यम् । प्रति॑ । सूर्यः॑ । वि । अ॒ख्य॒त् । जि॒ह्वया॑ । असि॑तः ॥ १० ॥**

**स्कन्द–** स्वादेतत्, किमेवमतिस्वरितोऽसि इत्यत आह । अभूत् भा उ उकारावुभावपि पदपूरणौ । अभूत् भा प्रभा । कस्य । अंशव अंशवो रश्मय । षष्ठीबहुवचनस्य स्थान इद चतुर्थ्येकवचनम् । अंशूनाम् आदित्यरश्मीनाम् । हिरण्यम् प्रति सूर्य प्रतिशब्दोऽत्र सामर्थ्यादुपमाया द्रष्टव्यः । सूर्योऽपि हिरण्यमिव । सूर्योऽप्युदयाभिमुखीभूत इत्यर्थः । उदयवेलायां हिरण्यसदृश सूर्यो भवति, हिरण्य सदृशी च भा । भूयश्च वि अख्यत् विविध प्रकाशितवान् । किम् । सामर्थ्यात् त्रैलोक्य वा दिशो वा । केन । जिह्वया जिह्वास्तानीयत्वादत्र जिह्वा आदित्य-दीप्तिरुच्यते । उद्यन् ह्यादित्यो रसानादत्ते जिह्वास्थानीयया दीप्त्येत्यर्थः । असित पिञ् बन्धने इत्यस्यैतद्रूपम् । तथाहि वामदेवोऽपि वक्ष्यति– 'अनायतो अनिबद्ध कथाय न्यङ्ङुतानोऽव पद्यते न' (ऋ.४.१३,५) इति । क्वचिदप्यनिबद्ध इत्यर्थः ॥ १० ॥

**वेङ्कटमाधव–** अभूत् दीप्तिः रश्मेरनन्तरमुदयवेलायाम् । हिरण्यम् प्रति आसीत् सूर्य । तत्सदृशोऽभवद् इत्यर्थः । तदनन्तरम् जिह्वया ज्वालया अबद्ध प्रकाशयति सर्वे जगत् ॥ १० ॥

**मुद्गल–** मा उ सूर्यस्य दीप्तिस्तु अशवे उष कालीनरश्मिसिद्ध्यर्थम् अभूत् उ प्रादुर्भूतैव । सूर्यं च हिरण्यम् प्रति स्वकीयोदयेन हिरण्यसदृशोऽभूत् । अग्नि च असित स्वकीयदीप्ते सूर्यप्रदेशेन स्वयं कृष्णो भूत्वा जिह्वया स्वकीयया ज्वालया वि अख्यत् प्रकाशितवान् । तस्मादय युवयोरागमनकाल इत्यर्थः ।। १० ।।

**सायण– भा** उ सूर्यस्य दीप्तिस्तु **अंशवे** उषःकालीनरश्मिसिद्ध्यर्थम् **अभूत्** उ प्रादुर्भूतैव । **सूर्यः** च **हिरण्यं प्रति** स्वकीयोदयेन हिरण्यसदृशोऽभूत् । अग्निश्च **असितः** स्वकीयदीप्तेः सूर्यप्रवेशेन स्वयं कृष्णो भूत्वा **जिह्वया** स्वकीयया ज्वालया **व्यख्यत्** प्रकाशितवान् । तस्मादयमश्विनोर्युवयोरागमनकाल इत्यर्थः । **अभूत्** । 'भूसुवोस्तिङि' इति गुणप्रतिषेधः । **हिरण्यं प्रति** । 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा.सू.१.४.९२) इति प्रतेः कर्मप्रवचनीयत्वम् । 'कर्मप्रवचनीययुक्ते द्वितीया' (पा.सू.२.३.८) इति द्वितीया । **अख्यत्** । 'चक्षिङ् व्यक्तायां वाचि' । लुङि 'चक्षिङः ख्यात्र्' इति ख्यात्रादेशः ।। १० ।।

**सिद्धाञ्जनम्–** ऋतज्योतिष उदय आसन्नः, अतः अश्विनौ प्रयाणाय सन्नद्धौ पदं दधानामिति उदयं वर्णयति, **भा** उ दीप्तिस्तु अपरिच्छिन्ना एतावत्पर्यन्तं अनुदिता अगोचरा, इदानीं **अंशवे** अंशुभूताय परिच्छिन्नाय दृग्गोचराय किरणाय सिद्ध्यर्थं **अभूत्** उ प्रादुर्भूतैव । **सूर्यः** सत्यज्योतिरात्मा **हिरण्यम् प्रति** हिरण्यसदृशः अभूत् । अग्निश्च **असितः** कृष्णो भूत्वा **जिह्वया** ज्वालया **व्यख्यत्** प्रकाशितवान्, सूर्यस्य पुरस्तात् ज्वलनस्य अग्नेः कृष्णत्वम् । हिरण्यं प्रति प्रतिः प्रतिनिधी, कर्मप्रवचनीयः, तद्युक्ते द्वितीया । अख्यत्-चक्षेर्लुङः, चक्षेः ख्यात्रादेशः ।।

।। इति प्रथमाष्टके तृतीयाध्याये चतुस्त्रिंशो वर्गः ।।

## ऋक्संहिता पदपाठसहिता

**अभूदु पारमेतवे पन्था ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवः ।। ११ ।।**

अभूत् । ऊँ इति । पारम् । एतवे । पन्थाः । ऋतस्य । साधुऽया । अदर्शि । वि । स्रुतिः । दिवः ।। ११ ।।

**स्कन्द–** किञ्च **अभूत् उ पारम् एतवे** गन्तुम् । पन्था पथिस्थानीयत्वात् आपतत्यनेन यज्ञ इति वा पन्था अहरत्राभिप्रेतः । अहरपि प्रवृत्तमित्यर्थः । कस्य पारमेतवे । ऋतस्य यज्ञस्य । वीदृशमह । साधुया साधु शोभनम् । कथ ज्ञायते । यत अदर्शि विविध स्रुति दृश्यते सूर्यालोकस्य । एतदुक्त भवति– अभूत् प्रभा आदित्यरश्मीनाम् । सूर्यं अपि हिरण्यसदृश उदयाभिमुखोऽभूत् । यज्ञपरिसमास्यर्थम् अहरपि प्रवृत्तम् । अत पर भवतोर्यागकालोऽतिवर्तते । तेन त्वरमाणो ब्रवीमि– 'स्व वत्रि कुह वित्सथ' (ऋ.१,४६,९) इति, येनास्मद्यत नागच्छय इत्यर्थः ।। ११ ।।

**वेङ्कटमाधव–** अपरा दिश प्रति गन्तुमुद्युक्तस्य आदित्यस्य साधु अभवत् पन्थाः । दिव मध्ये कश्चन मागः वि अदार्श, येन सूर्यो गच्छति ।। ११ ।।

**मुद्गल–** ऋतस्य सूर्यस्य पारम् एतवे रात्रे पारभूतमुदयादि गन्तुम् पन्था मार्गं साधुया समीचीन अभूत् उ निष्पन्न एव । देव द्योतनात्मकस्य सूर्यस्य द्युति प्रसृता दीप्ति वि अदर्शि विशेषेण दृष्टा । तस्माद् अश्विना युवाभ्याम् आगन्तव्यम् ।। ११ ।।

**सायण– ऋतस्य** सूर्यस्य **पारमेतवे** रात्रेः पारभूतमुदयाद्रिं गन्तुं **पन्थाः** मार्गः **साधुया** समीचीनः **अभूत्** निष्पन्न एव । दिवो द्योतनात्मकस्य सूर्यस्य **स्रुतिः** प्रसृता दीप्तिः व्यदर्शि । विशेषण दृष्टा । तस्मादश्विनौ युवाभ्यामागन्तव्यम् । एतवे । 'इण् गतौ' । 'तुमर्थे सेसेन्' इति तवेन्प्रत्ययः । साधुया । 'सुपां सुलुक्' इति विभक्तेः याजादेशः । **अदर्शि** । कर्मणि लुङि च्लेः चिणादेशः । 'चिणो लुक्' (पा.सू.६.४.१०४) इति तशब्दस्य लुक् । **स्रुतिः** । 'स्रु गतौ' । 'क्तिच् क्तौ' च संज्ञायाम् इति क्तिच् ।। ११ ।।

**सिद्धाञ्जनम्– ऋतस्य** सत्यस्य ज्योतिषः **पारम् एतवे** तमसस्पारं गन्तुं **साधुया** समीचीनः **पन्थाः** मार्गः **अभूत्** उ निष्पन्न एव । **दिवः** द्युलोकात् **स्रुतिः** स्रवः, दीप्तिप्रसरः **व्यदर्शि** विशेषेण दृष्टो भवति । तस्मादश्विनोरागमनदशा प्रत्यासन्ना । एतवे एतैः तुमर्थे तवेन्प्रत्ययः । साधुया-सुपां सुलुक्, विभक्तेर्याच् आदेशः । अदर्शि कर्मणि लुङ् । स्रुतिः स्रु गतौ, क्तिच् ।। ११ ।।

## ऋक्संहिता पदपाठसहिता

**तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतोः ॥ १२ ॥**
**तत्ऽर्तत् । इत् । अश्विनोः । अवः । जरिता । भूषति । मदे । सोमस्य । पिप्रतोः ॥**

**स्कन्द– तत्तत् इत्** तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । **प्रति** इत्ययं च कर्मप्रवचनीयः अवः इत्येतेन सम्बन्धयितव्यः । यद्यदुत्कृष्टम् तत्तत् **अश्विनोः** अवः पालनं प्रति **जरिता** स्तोता **भूषति** भवति । **मदे सोमस्य** सोममदे सति । सोमेन मत्तयोः सतोरित्यर्थः । **पिप्रतोः** पूरयतोः । कम् । सामर्थ्यात् स्तोतारमेव । एतदुक्तं भवति– यदीयेन सोमेनाश्विनौ आत्मानं तर्पयतः तं यद्यदुत्कृष्टं पालनं तेनतेन पालयत इति ॥ १२ ॥

**वेङ्कटमाधव–** उषसि **तत्तत्** एव **अश्विनोः** आश्रितविषयं रक्षणं स्तोता अलङ्करोति प्रकाशयति, यद् रक्षणम् **सोमस्य मदे** पूरयतोरभूदिति ॥ १२ ॥

**मुद्गल– जरिता** स्तोता **अश्विनोः** सम्बन्धि **तत्तत् इत्** पुनःपुनः कृतं सर्वमपि **अवः** अस्मद्विषयं रक्षणम् **प्रति भूषति** प्रत्येकमलङ्करोति । तदातदा प्रशंसतीत्यर्थः । कीदृशयोः अश्विनोः । **मदे** हर्षे निमित्तभूते सति **सोमस्य पिप्रतोः** सोमस्य पालकयोः ॥ १२ ॥

**सायण– जरिता** स्तोता **अश्विनोः** सम्बन्धि तत्तदित् पुनःपुनः कृतं सर्वमपि **अवः** अस्मद्विषयं रक्षणं **प्रति भूषति** । प्रत्येकमलङ्करोति । तदा तदा प्रशंसतीत्यर्थः । कीदृशयो-रश्विनोः । **मदे** हर्षे निमित्तभूते सति सोमस्य पिप्रतोः सोमं पूरयतोः । **भूषति** । 'भूष अलङ्कारे' । भौवादिकः । पिप्रतोः । 'पॄपालनपूरणयोः' । पृ इत्येके । अस्माल्लटः शतृ । जुहोत्यादित्वात् शपः श्लुः । द्विर्भावोरदत्वहलादिशेषाः । 'अर्तिपिपर्त्योश्च' इति अभ्यासस्य इत्वम् । शतुर्ङित्वाद्गुणाभावे यणादेशः । 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ १२ ॥

**सिद्धाञ्जनम्– सोमस्य मदे** सोमपानजन्ये हर्षे सति **पिप्रतोः** पूरयतोः यजमानमिति शेषः (सोमं पूरयतोरिति सायणः) **अश्विनोः** सम्बन्धि **तत् तत् इत्** तत्तत् कृतं सर्वं अपि, यजमानकृते अश्विनोः प्रसादात् विविधं यद्यद्वैभवं निष्पन्नं तत् सर्वमपि **अवः** वर्धनं **प्रति भूषति** प्रत्येकं तदा तदा अलङ्करोति, कृतज्ञतया वर्णयतीत्यर्थः, कः? **जरिता** स्तोता यजमानः । पिप्रतोः-पॄ पालनपूरणयोः, जुहोत्यादिः, लटः शतृ ॥ १२ ॥

## ऋक्संहिता पदपाठसहिता

**वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्छंभू आ गतम् ।।१३।।**
**ववसाना । विवस्वति । सोमस्य । पीत्या । गिरा । मनुष्वत् । शंभू इति शम्ऽभू । आ । गतम् ।। १३ ।।**

**स्कन्द– वावसाना** नेदमामन्त्रितम् । प्रत्यक्षकृतश्चायं मन्त्रः । अतो यत्तच्छब्दावध्याहृत्य एकवाक्यता नेया । येन युवां वावसाना । ताच्छील्येऽयं चानश् । अत्यर्थं वसनशीलौ व्यवस्थानशीलौ । क । **विवस्वति** यजमाननामधेयमेतत् शाकपूणिना पठितम् । तेन चात्र स्वगृहं प्रतिपाद्यते । यजमानगृह इत्यर्थः । केन हेतुना । **सोमस्य पीत्या** पानेन **गिरा** वाचा च स्तुतिलक्षणया । सोमपानार्थं स्तुत्यर्थं चेत्यर्थः । तेन **मनुष्वत्** मनुष्यवत् **शम्भू!** सुखस्य भावयितारौ! अस्मद्गृहम् **आ गतम्** आगच्छतम् ।। १३ ।।

**वेङ्कटमाधव–** वसनशीलौ यजमाने सोमपानेन स्तोत्रेण च हेतुना सुखस्य भावयितारौ! नरवदिह आ गतम्, अपि वा मनोरिव यज्ञे ।। १३ ।।

**मुद्गल– हे शम्भू!** सुखस्य भावयितारौ! अश्विनौ ! **मनुष्वत्** मनौ इव **विवस्वति** परिचरणयति यजमाने **वावसाना** निवासशीलौ युवाम् **सोमस्य पीत्या** सोमपाननिमित्तम् **गिरा** स्तुतिनिमित्तं च **आ गतम्** आगच्छतम् ।। १३ ।।

**सायण–** हे **शंभू** सुखस्य भावयितारावश्विनौ **मनुष्वत्** मनाविव **विवस्वति** परिचरणवति यजमाने **वावसाना** निवासशीलौ युवां सोमस्य पीत्या सोमस्य पाननिमित्तं **गिरा** स्तुतिनिमित्तं च **आ गतम्** । आगच्छतम् । **वावसाना** । 'वस निवासे' । 'ताच्छील्यवयोवचन' (पा.सू. ३.२.१२९) इति ताछीलिकश्चानश् । 'बहुलं छन्दसि' इति शपः श्लुः । 'अन्येषामपि दृश्यते' इति संहितायामभ्यासस्य दीर्घत्वम् । 'सुपां सुलुक्' इति विभक्तेराकारः । 'चितः' इत्यन्तोदात्तत्वम् । **पीत्या** । 'पा पाने' । 'स्थागापापचो भावे' इति भावे क्तिन् । 'घुमास्था' इति ईत्वम् । व्यत्ययेनान्तोदात्तत्वम् । तृतीयैकवचने यणादेशे 'उदात्तयणो हल्पूर्वात्' इति विभक्तेरुदात्तत्वम् । **मनुष्वत्** । 'मन ज्ञाने' । मन्यते जानातीति मनुः । बहुलवचनादौणादिक उसिप्रत्ययः । 'तत्र तस्येव' इति सप्तम्यर्थे वतिः । प्रत्ययस्वरः । **गतम्** । गमेर्लोटि 'बहुलं छन्दसि' इति शपो लुक् । 'अनुदात्तोपदेश' इत्यादिना अनुनासिकलोपः ।। १३ ।।

**सिद्धाञ्जनम्–** **शम्भू** सुखस्य भावयितारौ, **विवस्वति** प्रकाशवति सूर्ये **ववसानौ** निवासशीलौ हे अश्विनौ, **मनुष्वत्** मनौ इव मयि कृपया **सोमस्य पीत्या** सोमपानाय चतुर्थ्यर्थे तृतीया, **गिरा** स्तुत्यै, विभक्तिव्यत्ययः, अस्मदीयस्तोत्राङ्गीकाराय **आगतम्** आगच्छतम् । 'विवस्वति' परिचरणवति यजमाने 'मनुष्वत्' मनाविव 'ववसाना' निवासशीलौ इति सायणः । ववसाना-वस निवासे, ताच्छीलिकः चानश्, शपः श्लुः बहुलं छन्दसि, संहितायां अभ्यासस्य दीर्घत्वम् । मनुष्वत् सप्तम्यर्थे वतिः ॥ १३ ॥

## ऋक्संहिता पदपाठसहिता

**युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ॥ १४ ॥**

**युवोः । उषाः । अनु । श्रियम् । परिऽज्मनोः । उपऽआचरत् । ऋता । वनथः । अक्तुऽभिः ॥ १४ ॥**

**स्कन्द–** युवोः इत्येतत् अनु इत्येतेन सम्बध्यते । अनुशब्दश्च पश्चाद्भावे । युवयोः पश्चात् । कीदृशयोः । **परिज्मनोः** अजतेर्गत्यर्थस्येदं रूपम् । सर्वतोगामिनोः । **उषाः श्रियम्** ज्योतिर्लक्षणम् **उपाचरत्** उपागच्छति प्रतिपद्यते । अश्विनोर्ह्यूर्ध्वं मध्यरात्रात् कालः । ततः परः उषसः । अथवा युवोरित्येतत् श्रियम् इत्येतेन सम्बध्यते । युवयोः श्रियमुषाः अनूपाचरत् अनुगच्छति । युवयोः श्रिया सदृशीत्यर्थः । किञ्च **ऋता** यज्ञान् युवाम् **वनथः** सम्भजथः । कीदृशान् । **अक्तुभिः** 'अक्तुः' (निघ.१,७) इति रात्रिनाम । रात्र्या च तस्याः पर्याया लक्ष्यन्ते । इत्थंभूतलक्षणा एषा तृतीया । रात्रिपर्यायैः सम्बद्धानित्यर्थः । अथवा अक्तुशब्दोऽत्र सोमवचनः । 'होतारमक्तोरतिथिविभावसुम्' (ऋ.१०,९२,९) इति यथा । सोमैः सम्बद्धान् । सोमयागानित्यर्थः ॥ १४ ॥

**वेङ्कटमाधव–** युवयोः **श्रियम्** उषाः **अनु** उपाचरत् पश्चाद् युवयोरागच्छति परितो गन्त्रोः । यज्ञान् युवां रात्रिभिर्गच्छन्तीभिः सह सम्भजथः ॥ १४ ॥

**मुद्गल–** हे अश्विनौ! **परिज्मनोः** परितो गन्त्रोः **युवोः** युवयोरुभयोः **श्रियम् अनु** आगमनरूपां शोभामनुसृत्य उषाः उपाचरत् उषःकालदेवता इहागच्छतु । युवयोरागतयोः सतोः पश्चादागतेत्यर्थः । युवाश्च **अक्तुभिः** रात्रिभिः **ऋता** यज्ञगतानि हवींषि **वनथः** कामयेथे सम्भजेथे ॥ १४ ॥

**सायण– हे अश्विनौ** परिज्मनोः परितो गन्त्रोः **युवोः** युवयोरुभयोः **श्रियम् अनु** आगमन-रूपां शोभामनुसृत्य **उषा उपाचरत्** उषःकालदेवता इहागच्छतु । युवयोरागतयोः सतोः पश्चादागतेत्यर्थः । युवां च 'अक्तुभी रात्रिभिः ऋता यज्ञगतानि हवींषि **वनथः** । कामयेथे । सम्भजेथे । **युवोः** । युष्मच्छब्दात् षष्ठीद्विवचनस्य सुपां सुपो भवन्ति' इति षष्ठीद्विवचनादेशः । अत आदेशविषयत्वाद्योऽचि इति यत्वाभावः। 'शेषे लोपः' । **परिज्मनोः** । परितः अजतो गच्छत इति परिज्मानौ । 'श्वनुक्षन् इत्यादिना अजतेः मनिन्प्रत्ययान्तो निपातितः । **ऋता** । 'शेश्छन्दसि' इति शेर्लोपः । **वनथः** । 'वन पण संभक्तौ' । 'तिङ्ङतिङः' इति निघातः ।।

**सिद्धाञ्जनम्–** हे अश्विनौ, **परिज्मनोः** परितो गन्त्रोः **युवोः** युवयोः **श्रियम्** शोभां **अनु** अनुसृत्य **उषाः** उषोदेवी **उपाचरत्** उपागता, प्रादुर्भूता युष्मदुपचारायेत्यर्थः । युवां **ऋता** ऋतानि सत्यानि सत्यसंबन्धीनि वैभवानि **अक्तुभिः** रात्रिभिः **वनथः** सम्भजेथे । कथं ऋतवननं रात्रिभिः उपपद्यते? अप्रकाशावस्थाः रात्रयः, तदीयानां रात्रिगर्भेऽवस्थितानां सर्वेषां वस्तूनां अनुभवानां च ऋतप्रकाशं प्रति प्रापणं आश्विनं कृत्यं भवति, तस्मात् अश्विनोः ऋतवैभवसंमदभरो तदन्तवर्तीभिः रात्रिर्भिभवति । तेन यजमानः कृतार्थो भवत्याश्विनेन ऋतवैभवसंभजनेनेति बोध्यम् । परिज्मनोः- परितः अजतो गच्छत इति परिज्मानौ, अजतेर्मनिन् । युवोरित्यादयो गताः ।।१४।।

## ऋक्संहिता पदपाठसहिता

**उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ।। १५ ।।**

**उभा । पिबतम् । अश्विना । उभा । नः । शर्म । यच्छतम् । अविद्रियाभिः । ऊतिऽभिः ।।**

**स्कन्द– उभा पिबतम्** उभौ युवां पिबतं सोमं हे अश्विनौ! । पीत्वा उभौ नः अस्मभ्यम् **शर्म** सुखं गृहं वा **यच्छतम्** । दत्तमित्यर्थः । **अविद्रियाभिः** दृ विदारणे । सहयोगलक्षणा चैषा तृतीया । अविदारणीभिः अविनाशिनीभिः **ऊतिभिः** पालनैस्सह । स्थिराणि च पालना-नीत्यर्थः ।। १५ ।।

**वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।**
**भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ।।**

।। इति भर्तृध्रुवसुतस्य स्कन्दस्वामिनः कृतौ ऋग्वेदभाष्ये तृतीयोऽध्यायः ।।

**वेङ्कटमाधव–** उभौ सोमम् अश्विनौ! **पिबतम्** । उभौ च अस्मभ्यं सुखम् **यच्छतम्** रक्षणपरैः गमनैः इति ।। १५ ।।

**इत्थं तृतीयमध्यायं व्याकरोत् प्रथमेऽष्टके ।**
**विश्वामित्रकुले जातो माधवः सुन्दरीसुतः ।।**

**।। इति वेङ्कटमाधवाचार्याविरचिते ऋक्संहिताव्याख्याने प्रथमाष्टके तृतीयोऽध्यायः ।।**

**मुद्गल– हे अश्विना !** अश्विनौ! **युवाम्** उभा उभौ **पिबतम्** सोमपानं **कुरुतम्** । तत ऊर्ध्वम् **उभा** युवामुभौ **अविद्रियाभिः** प्रशस्ताभिः **ऊतिभिः** रक्षाभिः **नः** अस्मभ्यम् **शर्म सुखम्** यच्छतम् ।। १५ ।।

**।। इति प्रथमाष्टके तृतीयेऽध्याये पञ्चत्रिंशो वर्गः ।।**
**।। इति ऋग्वेदे सभाष्ये प्रथमाष्टके तृतीयोऽध्यायः समाप्तः ।।**

**सायण–** प्रवर्ग्ये पौर्वाह्णिके धर्मस्य हविषो द्वितीया याज्या उभा पिबतम् इत्येषा । 'अथोत्तरम्' इति खण्डे सूत्रिनम् । उभा पिबतमश्विनेति चोभाभ्यामनवानम् (आश्व.श्रौ.४.७) इति । आश्विनशस्त्रेऽप्येषा द्वितीया याज्या । सूत्रितं च । प्र वामन्धांसि मद्यान्यस्थुरुभा पिबतमश्विनेति याज्ये (आश्व.श्रौ.६.५) इति ।

हे अश्विना **उभा** युवामुभौ पिबतम् । सोमपानं कुरुतम् । तत ऊर्ध्वम् उभा युवामुभां **अविद्रियाभिः** प्रशस्ताभिः । **ऊतिभिः** रक्षाभिः **नः** अस्मभ्यं **शर्म** सुखं यच्छतम् । **पिबतम्** । पा पाने । लोटि शपि 'पाघ्रा...' इत्यादिना पिबादेशः । अङ्गवृत्ते पुनर्वृत्तावविधिनिष्ठितस्य (म.७.३.७८.२; परिभा.९२) इति वचनाल्लघूपधगुणाभावः । यद्वा । आद्युदात्तोऽदन्तः पिबादेशः । 'तिङ्ङतिङः' इति निघातः । **यच्छतम्** । 'दाण् दाने' । लोटि शपि 'पाघ्रा' इत्यादिना यच्छादेशः । **अविद्रियाभिः** । 'द्रा कुत्सायां गतौ' । विपूर्वादस्माद्भावे औणादिकः किः । 'आतो लोप इटि च ' इति आकारलोपः । विद्रिर्निद्रा । तद्विरोधिन्यविद्रिः स्तुतिः । तां यान्तीत्यविद्रियाः । 'अन्येभ्योऽपि दृश्यन्ते' इति विच् । कृदुत्तरपदप्रकृतिस्वरत्वम् । **ऊतिभिः** । अवतेः क्तिनि ज्वरत्वर इत्यादिना ऊठ् । 'ऊतियूति' इत्यादिना क्तिन उदात्तत्वम् ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।।

।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके तृतीयोऽध्यायः समाप्तः ।।

**सिद्धाञ्जनम्–** हे **अश्विना** अश्विनौ, **उभा** उभौ युवां **पिबतम्** सोमं पिबतम् । ततः पर **उभा** उभौ युवां **अविद्रियाभिः** अविदार्याभिः अत एव दृढाभिः **ऊतिभिः** रक्षाभिः **नः** अस्मभ्यं **शर्म** सुखं शरणं वा **यच्छतम्** दत्तम् । अविद्रियाभिः दृ विदारणे इत्यस्मात् विपूर्वात् भावे किः, विद्रिः, तद्विरोधिनी अविद्रिः अविदार्यता अभेद्यतेत्यर्थः, तां यान्तीति अविद्रियाः, ताभिरूतिभिः । द्रा कुत्सायां गतौ इत्यस्मान्निष्पादयति रूपं सायणः, प्रक्रिया तु समाना ।।

(५५६ मन्त्राः)

।। इति प्रथमस्य तृतीये पञ्चविंशो वर्गः ।।

'यो हि सात्विकप्रकृतिर्लोकप्रवादात् कार्यत्वादिलिङ्गानुसन्धानाद्वा स्वतनुभवनादेः कर्तारं सामान्यतो जानन् स्नेहमाहात्म्यज्ञानाभ्यां तद्विशेषज्ञानार्थमुत्कण्ठितमानसस्तत्संस्कारवशाच्चान्यदगणयन् वर्तते तं प्रत्याप्तो बन्धुरिवायं समस्तो वेदस्तत्स्वरूपं स्वप्राधानमेव प्रतिपादयति । ततो वाक्यार्थज्ञानादवाप्तपरमानन्दस्तत्साक्षात्कारं कामयते । तं प्रति तदुपासना विधीयते । सा च प्रक्षीणान्तःकरणमलस्यैव सम्भवतीति तदर्थं कर्मविधयः । अथवा यः सांसारिकविविधदुःखं जिहासुः परमानन्दं च प्रेप्सुस्तत्साधनं जिज्ञासते, तं प्रति परमेश्वर एव प्रसन्नः परमेष्टसाधनतयोपदिश्यते । ततः कथमसौ प्रतीदतीत्यपेक्षायां तत्साक्षात्कारस्तदङ्गतया कर्माणीत्युभयथा स्वप्रधान एव परमेश्वरो वेदार्थः' ।

तदेतद्वैदिकं महातात्पर्यं श्रीमदानन्दतीर्थकृतभाष्याधीत्यैव ज्ञायते । भाष्यश्चानन्दतीर्थीयं श्रीमज्जयतीर्थकृतटीकासहायेनैव परिज्ञाततात्पर्यं भवतीति विदितमेव विपश्चिदपश्चिमानाम् ।